चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम् ।
प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम् ॥ २ ॥

विद्याद् भेषजनामानि भेषजं द्विविधं च तत् ।
स्वस्थस्योर्जस्करं किंचित् किंचिदार्तस्य रोगनुत् ॥ ३ ॥

अभेषजं च द्विविधं वाधनं सानुवाधनम् ।
स्वस्थस्योर्जस्करं यत् तु तद्वृष्यं तद्रसायनम् ॥४॥

निदानस्थाने हेत्वादीनां पर्य्याया अभिहिताः । तद्वत् इहापि शास्त्रे व्यवहारार्थं आदौ स्थानाभिधेयस्य भेषजस्य पर्य्यायानाह—चिकित्सितमिति । चिकित्सितं व्याधि-प्रतिकारसाधनं । कित् रोगापनयने । व्याधिं हरति यत् तत् व्याधिहरं । हरतेरनुद्य-मनेऽच् ( पाणिनि, ३ । २ । ९ ) इत्यच् । पथिषु स्रोतःसु हितं पथ्यं । साध्यन्ते निवर्त्यन्ते रोगा अनेन इति साधनं । औषधं ओषधीभिर्निष्पन्नं । प्रायश्चित्तमिति । प्रयतत्वाद्व वोपचितमशुभं नाशयति इति प्रायश्चित्तं तपःप्रभृतिकं कर्म्म । इति स्मृति-शास्त्रे हारीतः । उपचितं सञ्चितं । इहापि अशुभस्य विकारसंज्ञकस्य नाशकतया भेषजस्य प्रायश्चित्तमिति संज्ञा । प्रशमनं रोगाणां । प्रकृतौ स्वास्थ्ये धातुसाम्यलक्ष स्थापयति यत् तत् प्रकृतिस्थापनं । चिकित्सितादिहितान्तानि भेषजनामानि विद्य भेषजस्य पर्य्यायानुक्त्वा विभागमाह—भेषजमिति । द्वैविध्यं विवृणोति—स्वस्थ जस्करमित्यादि । ऊर्जस्करं वलवर्णाद्युपचयकृत् । रोगनुत् रोगघ्नं ॥ २ । ३ ॥

भेषजप्रसङ्गादभेषजमप्याह—अभेषजमिति । अभेषजं भेषजविपरीतं । अभेषज-मिति ज्ञेयं विपरीतं यदौषधादिति । अनुवाधनेन सह वर्त्तमानं सानुवाधनं । सहशब्दः समुच्चयार्थः । वाधनमनुवाधनं चेति द्विविधमभेषजमनौषधं । तथा च—अनौषधं पुन-र्द्विविधं वाधनमनुवाधनं चेति वृद्धवाग्भटः ( अ० सं० सू० १२ ) । अनु पश्चाद्वाधनं अनुवाधनं । सद्यःप्राणहरं वाधनं । कालान्तरेण प्राणहरं अनुवाधनं । सानुवाधनमिति चक्रपाणिगङ्गाधरौ । तच्चिन्त्यं ॥ ४ ॥

---

३ । स्वस्थस्यौजस्करं इति क पुस्तके ।

प्रायः प्रायेण रोगाणां द्वितीयं प्रशमे मतम् ।
प्रायशब्दो विशेषार्थो ह्युभयं ह्युभयार्थकृत् ॥ ५ ॥
दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।
प्रभावर्णस्वरौदार्यं देहेन्द्रियबलं परम् ॥ ६ ॥
वाक्सिद्धिं वृषतां कान्तिं लभते ना रसायनात् ।
लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥ ७ ॥

स्वस्थस्योर्ज्जस्करं आर्त्तस्य रोगनुदिति द्विविधं भेषजमुक्तं । तत्राद्यं विभजते—स्वस्थस्योर्जस्करमिति । प्रायः इति छेदः । यत् आद्यं स्वस्थस्य ऊर्जस्करं तत्प्रायः बाहुल्येन वृष्यं शुक्रकरं वाजीकरणं । तथा तत्प्रायः रसायनं । इत्थं च आद्यमूर्जस्कराख्यं वाजीकरणं रसायनञ्च इति द्विविधमुक्तं भवति । द्वितीयमाह—प्रायेणेति । द्वितीयं यत् आर्त्तस्य रोगनुत् तत्प्रायेण बाहुल्येन रोगाणां प्रशमे मतं । यदूर्जस्करं तत्प्रायः वृष्यं रसायनञ्च । तत्कदाचित् व्याधिहरमपि भवति । एवं द्वितीयं यत् व्याधिहरं तत्प्रायेण व्याधिप्रशमकरं । तत् पुनः कदाचित् ऊर्जस्करमपि भवति । इति ऊर्जस्करस्य व्याधिहरत्वं व्याधिहरस्य च ऊर्जस्करत्वं उभयोरुभयार्थकारित्वं ख्यापयितुं उभयत्र प्रायशब्दग्रहणं । स्वयमेव एतद् विवक्षुः आदौ प्रायशब्दस्य तात्पर्यं विवृणोति—प्रायशब्द इति । उभयत्र प्रायशब्दो विशेषार्थः बाहुल्यवचनः । वस्तुतस्तु उभयं उभयकृत् ऊर्जस्करं व्याधिहरं भवति । व्याधिहरं चापि ऊर्जस्करं । तथा च ऊर्जस्करेऽपि धातुसाम्यकरणशक्तत्वाद् व्याध्युपशमः संभवति । व्याध्युपशमे तु बलवर्णाद्युपचयो नियत एव । एवमुभयमपि उभयात्मकं । तत्तद्व्यपदेशस्तु बाहुल्याद् भवति ॥ ५ ॥

रसायनवाजीकरणविधीन् विवक्षुः लोकप्रवृत्तये आदौ तयोः कार्य्यमाह । तत्र रसायनकार्य्यं—दीर्घमायुरित्यादि । प्रभा वर्णः स्वरश्च ते । तेषां औदार्य्यं उदारता उत्कर्षः । तत् । परमुत्तमं देहस्य इन्द्रियाणाञ्च बलं । वाक्सिद्धिः वाग्मिता । अथवा वाचः सिद्धिः साफल्यं । तेन यदुच्यते तदवश्यं भवति । तां । वृषः वृष इव मैथुनाति-

५ । प्रशमे हितं इति ख ग घ पुस्तकेषु । ६ । दीर्घमायुर्मतिं मेधां इति ख ग घ पुस्तकेषु ।
७ । वाक्सिद्धि प्रणतिं कान्तिमिति क पुस्तके ।

(अपत्यसंतानकरं यत् सद्यः संप्रहर्षणम् ।
वाजीवातिबलो येन यात्यप्रतिहतः स्त्रियः ॥ ८ ॥
भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते ।
जीर्यतोऽप्यक्षयं शुक्रं फलवद् येन दृश्यते ॥ ९ ॥
प्रभूतशाखः शाखीव येन चैत्यो यथा महान् ।
भवत्यसौ बहुमतः प्रजानां सुबहुप्रजः ॥ १० ॥
संतानमूलं येनेह प्रेत्य चानन्त्यमश्नुते ।
यशः श्रियं बलं पुष्टिं वाजीकरणमेव तत् )॥११॥

शयसमर्थः । तस्य भावः वृषता । तां वृषतां । एतेन रसायनमात्रस्यैव वृष्यत्वमुक्तं भवति । वृषतामित्यत्र प्रणतिमिति पाठान्तरं । प्रणतिं लोकैर्वन्द्यतां । कान्तिः छाया । सा वर्णस्य स्वरूपं प्रकाशयति । प्रभा तु वर्णं प्रकाशयति । वर्णमाक्रामति च्छाया प्रभा वर्णप्रकाशनी । इति ( च० इ० ७ ) । छाया पञ्चभूतात्मिका । प्रभा पुनस्तैजसी । ना पुमान् रसायनात् दीर्घायुरादिकं लभते । ननु कुतोऽस्य रसायनसंज्ञेति ? अत आह—लाभोपाय इति । हि यतः शस्तानां प्रशस्तानां । शस्तानामित्यत्र सतानामिति वृद्धवाग्भटः ( उ० ४९ ) । रसादीनां शुक्रान्तानां धातूनां लाभोपायः प्राप्त्युपायः । दीर्घायुःस्मृत्यादीनां लाभस्तु तद्द्वारेण । अतः रसायनमित्युच्यते । रसानामयनं आप्यायनं रसायनं । रस इति धात्वाद्युपलक्षणं ॥ ६ । ७ ॥

रसायनकार्य्यमुक्त्वा वाजीकरणकार्यमाह—अपत्यसन्तानकरमित्यादि । यत् औषधं अपत्यसन्तानकरं पुत्रपौत्रकरं । वाजीकरणजनिताच्छुक्रात् जातः पुत्रोऽपि पुत्रजननसमर्थो भवतीत्यर्थः । अपत्यानां सन्तानः समूहः । तत्करं वा । सद्यः सम्प्रहर्षणं मेढ्रोच्छ्रायकृत् । पुमान् येन अतिबलः वाजीव अश्व इव अप्रतिहतः अव्याहतमैथुनः सन् स्त्रियः बह्वीः याति । येन स्त्रीणां अतिप्रियः भवति । येन च उपचीयते पुष्टिं प्राप्नोति । येन जीर्यतः वृद्धस्यापि । अक्षयं अक्षयमिव । प्रभूतमित्यर्थः । फलवत् गर्भजनकं शुक्रं दृश्यते । असौ पुमान् येन वाजीकरणेन सुबहुप्रजः अतिबहुसन्तानः भवति । तत्र दृष्टान्तमाह—प्रभूतशाखः शाखीव । तत एव प्रजानां लोकानां । प्रजा स्यात्

८ । प्रयत्नसंतानकरं इति ख ग पुस्तकयोः ।
१० । स्वल्पस्यौजस्करं इति क पुस्तके ॥ १२ । दृश्यते तद्विनिर्दिष्टं इति ग पुस्तके ।

स्वस्थस्योर्जस्करं त्वेतद् द्विविधं प्रोक्तमौषधम् ।
यद् व्याधिनिर्घातकरं वक्ष्यते तच्चिकित्सिते ॥१२॥
चिकित्सितार्थ एतावान् विकाराणां यदौषधम् ।
रसायनविधिश्चाग्रे वाजीकरणमेव च ॥ १३ ॥
अभेषजमिति ज्ञेयं विपरीतं यदौषधात् ।
तदसेव्यं निषेव्यंतु प्रवक्ष्यामि यदौषधम् ॥१४॥

सन्ततौ जने इति । बहुमतः लोकैः पूजितः भवति । अत्रापि दृष्टान्तमाह—चैत्यो यथा महानिति । चैत्यो देवायतनं । पुमान् येन इह अस्मिन् लोके प्रेत्य मृत्वा परस्मिन् लोके चापि सन्तानमूलं सन्तानहेतुकं आनन्त्यं अक्षयत्वं अश्नुते प्राप्नोति । वंशस्य पिंडस्य च अविच्छेदात् । तदुक्तं मनुना—पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपं ॥ इति । तथा यशः श्रियंबलं पुष्टिं च अश्नुते । तदेव वाजीकरणं । अवाजी वाजीक्रियते अनेन । येन पुमान् स्त्रीषु वाजीव अप्रतिहतमैथुनः क्रियते । अतस्तद्वाजीकरणमुच्यते । तदुक्तं सुश्रुतेनापि—सेवमानो यदौचित्याद् वाजीवात्यर्थवेगवान् । नारीस्तर्पयते तेन वाजीकरणमुच्यते ॥ इति ( सु० चि० २६ ) ॥ ८ । ११ ॥

चिकित्सितस्थानार्थं संग्रहीतुमाह—स्वस्थस्येत्यादि । द्विविधं प्रोक्तं रसायनवाजीकरणभेदेन द्विधाविभक्तं यत् एतत् स्वस्थस्य ऊर्जस्करं औषधं तत् । व्याधिनिर्घातकरं आर्त्तस्य रोगनुत् यत् औषधं तच्च । एतदुभयं चिकित्सिते अस्मिन् चिकित्सितस्थाने वक्ष्यते । इत्थञ्च विकाराणां यत् औषधं यद्व्याधिहरं औषधं ज्वरादिचिकित्सासु पश्चात् वक्ष्यमाणं तत् । तथा अग्रे वक्ष्यमाणः रसायनविधिः वाजीकरणं च । एतत् द्विविधं स्वस्थस्य ऊर्जस्करं यच्च औषधं । एतावान् एतन्मात्रः तदुभयभेषजमेव चिकित्सितार्थः समासतः अस्य चिकित्सितस्थानस्य प्रतिपाद्यः अर्थः ॥१२॥१३॥

पूर्व्वोद्दिष्टमभेषजं विवृणोति—अभेषजमितीति । यत् औषधात् भेषजात् विपरीतं रोगजननार्थकारि तत् अभेषजमिति ज्ञेयं । तत् असेव्यं । यत् पुनः औषधं तत् निषेव्यं । निषेव्यत्वात् तत् इह प्रवक्ष्यामि ॥ १४ ॥

रसायनानां द्विविधं प्रयोगमृषयो विदुः ।
कुटीप्रावेशिकं चैव वातातपिकमेव च ॥ १५ ॥
कुटीप्रावेशिकस्यादौ विधिः समुपदेक्ष्यते ।
नृपवैद्यद्विजातीनां साधूनां पुण्यकर्मणाम् ॥१६॥
निवासे निर्भये शस्ते प्राप्योपकरणे पुरे ।
दिशि पूर्वोत्तरस्यां च सुभूमौ कारयेत् कुटीम् ॥१७॥
विस्तारोत्सेधसंपन्नां त्रिगर्भां सूक्ष्मलोचनाम् ।
घनभित्तिमृतुसुखां सुस्पष्टां मनसः प्रियाम् ॥१८॥
शब्दादीनामशस्तानामगम्यां स्त्रीविवर्जिताम् ।
इष्टोपकरणोपेतां सज्जवैद्यौषधद्विजाम् ॥१९॥

तत्रादौ रसायनाख्यं उर्ज्जस्करभेदमाह—रसायनानामिति । कुटीप्रावेशिको वातातपिकश्च इति द्विविधो रसायनानां प्रयोगः । कुटीप्रवेशेन यः क्रियते स कुटी-प्रावेशिकः । वातातपाभ्यां वातातपसेवया यः क्रियते स वातातपिकः ॥ १५ ॥

तत्र वीर्यप्रभावप्रयोगपरिहारगुरुत्वात् महाफलतरतया आदौ कुटीप्रावेशिक-विधिमुपदिशति—कुटीप्रावेशिकस्येत्यादि । नृपादीनां निवासे । प्राप्याणि उपकरणानि तदुपयोगिद्रव्याणि यत्र तस्मिन् । तथाविधे पुरे । विस्तारः । उत्सेधः उन्नतिश्च तौ । ताभ्यां सम्पन्ना । तां । त्रयो गर्भा यस्याः सा त्रिगर्भा । प्रथममेकं गृहं । तस्याभ्यन्तरे द्वितीयं । तस्याभ्यन्तरे च तृतीयमिति कृत्वा त्रिगर्भा । तां । सूक्ष्मलोचनां क्षुद्रगवाक्षां । घनभित्तिं दृढभित्तिं । ऋतुसुखां सर्वेषु ऋतुषु सुखां सुखकरां । यथा उष्णे हिमगृहादिना शीतां । शीते अग्न्याधारादिना उष्णां । सुस्पष्टां प्रविशदालोकतया अन्तःप्रकाशरूपां । अश-स्तानां शब्दादीनां अगम्यां । स्त्रीविवर्जितां । स्त्रीसंनिकर्षे इन्द्रियक्षोभो भवेच्चेत् । अतः स्त्रीजनरहितां । इष्टैरुपकरणैरुपेतां युक्तां । सज्जाः सन्निहिताः वैद्यादयो यत्र सा । तां । तथाविधां कुटीमगारं कारयेत् ॥ १६—१९ ॥

---

१७ । निवाते निर्भये शस्ते इति ग पुस्तके ॥ १८ ।
१८ । सुस्पष्टां मनसः प्रियां इति ग पुस्तके ॥
१९ । सज्जवैद्योषधद्विजां इति क ख ग घ ङ च ग पुस्तकेषु ॥

अथोदगयने शुक्ले तिथिनक्षत्रपूजिते ।
मुहूर्त्तकरणोपेते प्रशस्ते कृतवापनः ॥२०॥
धृतिस्मृतिबलं कृत्वा श्रद्दधानः समाहितः ।
विधूय मानसान् दोषान् मैत्रीं भूतेषु चिन्तयन् ॥२१॥
देवताः पूजयित्वाग्रे द्विजातींश्च प्रदक्षिणम् ।
देवगोब्राह्मणान् कृत्वा ततस्तां प्रविशेत् कुटीम् ॥२२॥
तस्यां संशोधनैः शुद्धः सुखी जातबलः पुनः ।
रसायनं प्रयुञ्जीत ततो वक्ष्यामि शोधनम् ॥२३॥
(हरीतकीनां चूर्णानि सैन्धवामलके गुडम् ।
वचां विडङ्गं रजनीं पिप्पलीं विश्वभेषजम् ॥२४॥

अथेत्यादि । उदगयने उत्तरायणे । शुक्ले पक्षे । तिथिनक्षत्रपूजिते शुभतिथि-नक्षत्रयुक्ते । मूहूर्त्तकरणाभ्यां शस्ताभ्यामुपेते । प्रशस्ते अहनि । कृतवापनः कृतक्षौरः । धृतिस्मृतिबलं कृत्वा । धृतिः धैर्यं । संतोषो वा । स्मृतिश्च । तयोर्बलं कृत्वा । धृतिमान् स्मृतिमांश्च सन्नित्यर्थः । श्रद्दधानः श्रद्धान्वितः । समाहितःएकाग्रचित्तः सन् । मानसान् दोषान् कामक्रोधादीन् विधूय त्यक्त्वा । भूतेषु सर्व्वेषु मैत्रीं चिन्तयन् । अग्रे देवताः द्विजातींश्च पूजयित्वा । देवगोब्राह्मणान् प्रदक्षिणं कृत्वा च । ततः तां कुटीं प्रविशेत् रसायनार्थी नरः ॥ २०—२२ ॥

तस्यामिति । तस्यां कुट्यां । संशोधनैः वक्ष्यमाणैः । बहुवचनमविवक्षितं । शुद्धः । सुखी अरोगः । पुनर्जातबलः संसर्ज्जनादिक्रमेण । रसायनं प्रयुंजीत । सुश्रुतेनाप्युक्तं —नाविशुद्धशरीरस्य युक्तो रासायनो विधिः । न भाति वाससि क्लिन्ने रङ्गयोग इवाहितः । इति (सु० चि० २७) ततः तस्मात् रसायनात् प्राक् शोधनस्य कर्त्तव्यतया शोधनं वक्ष्यामि ॥ २३ ॥

शोधनमाह—हरीतकीनामित्यादि । जन्तुः रसायनार्थी नरः । स्नेहस्वेदाभ्यामुपपादितः पूर्व्वं स्निग्धः ततः स्विन्नः सन् । हरीतकीनां चूर्णानि । सैन्धवामलके सैन्धवमामलकं च । ते । गुडं । वचां । विडङ्गं । रजनीं हरिद्रां । पिप्पलीं विश्वभेषजं शुण्ठीं च । उष्णाम्बुना

२१ । धृतिस्मृतिबलोपेतः इति ख पुस्तके ॥ २३ ॥ तस्मात् संशोधनैः इति क पुस्तके ।

पिबेदुष्णाम्बुना जन्तुः स्नेहस्वेदोपपादितः ।
तेन शुद्धशरीराय कृतसंसर्जनाय च ॥२५॥
त्रिरात्रं यावकं दद्यात् पञ्चाहं वापि सर्पिषा ।
सप्ताहं वा पुराणस्य यावच्छुद्धेस्तु वर्चसः ॥२६॥
शुद्धकोष्ठं तु तं ज्ञात्वा रसायनमुपाचरेत् ।
वयःप्रकृतिसात्म्यज्ञो यौगिकं यस्य यद्भवेत् ॥२७॥
हरीतकीं पञ्चरसामुष्णामलवणां शिवाम् ॥
दोषानुलोमनीं लघ्वीं विद्याद्दीपनपाचनीम् ॥२८॥
आयुष्यां पौष्टिकीं धन्यां वयसः स्थापनीं परम् ।
सर्वरोगप्रशमनीं बुद्धीन्द्रियबलप्रदाम् ॥२९॥

उष्णोदकेन पिबेत्। अत्र सैन्धवादिभिरष्टाभिस्तुल्यं हरीतकीचूर्णं। बहुवचननिर्दे-शात्। विरेचनेऽपि धत्वाद्यारया इति मतान्तरणाः। तेन शुद्धशरीराय कृतसंसर्जनाय कृतपेयादिक्रमाय तस्मै। त्रिरात्रं पञ्चाहं सप्ताहं वा। विफलत्रयं हीनमध्योत्तम-शुद्धिविषयं। सर्पिषा सह यावकं घृतान्वितं यवान्नं दद्यात्। अथवा पुराणस्य वर्चसः शकृतः यावत् शुद्धेः आ शुद्धेः सर्पिषा सह यावकं घृतान्वितं यवान्नं भोजनार्थं दद्यात् ॥ २४—२६ ॥

शुद्धकोष्ठमिति। तं पुरुषं इत्थं शुद्धकोष्ठं ज्ञात्वा वयःप्रकृतिसात्म्यज्ञो भिषक् यत् रसायनं यस्य पुंसः यौगिकं प्रयोगार्हं भवेत् तस्य तथाविधं रसायनं उपाचरेत्। वयः-प्रकृत्यादिकं सर्व्वमालोच्य ॥ २७ ॥

हरीतक्यामलकयोर्योगानभिधास्यन् प्राक् तयोर्गुणकर्म्माण्याह। तत्र हरीतक्या गुणकर्म्माणि—हरीतकीमित्यादि। अलवणां पञ्चरसां लवणवर्ज्यैः पञ्चभिः रसैः मधुराम्ल-कटुतिक्तकषायैः युक्तां। उष्णां उष्णवीर्य्यां। शिवां शुभां कल्याणकारित्वात्। उक्तं च —हरणात् सर्व्वरोगाणां यासावुक्ता हरीतकी। पथ्यत्वात् सर्व्वधातूनां पथ्या शिवतया शिवा॥ यस्माद् विजयते व्याधीन् समग्रान् विजया मता। अभयं सर्व्वरोगेभ्यो

कुष्ठं गुल्ममुदावर्त्तं शोषं पाण्ड्वामयं मदम् ।
अर्शांसि ग्रहणीदोषं पुराणं विषमज्वरम् ॥३०॥
हृद्रोगं सशिरोरोगमतीसारमरोचकम् ।
कासं प्रमेहमानाहं प्लीहानमुदरं नवम् ॥३१॥
कफप्रसेकं वैस्वर्यं वैवर्ण्यं कामलां क्रिमीन् ।
श्वयथुं तमकं छर्दिं क्लैब्यमङ्गावसादनम् ॥३२॥
स्रोतोविबन्धान् विविधान् प्रलेपं हृदयोरसोः ।
स्मृतिबुद्धिप्रमोहं च जयेच्छीघ्रं हरीतकी ॥३३॥
अजीर्णिनो रूक्षभुजः स्त्रीमद्यविषकर्शिताः ।
सेवेरन्नाभयामेते क्षुत्तृष्णोष्णार्दिताश्च ये ॥३४॥

भवत्यायुश्च शाश्वतं ॥ यतः शीलयतामेनां तेनेयमभया मता ॥ इति ( अ० सं० उ० ४९ )। दोषानुलोमनीं दोषाणामानुलोम्यकरीं । लघ्वीं । दीपनपाचनीं दीपनीं पाचनीं च । आयुषे हितां आयुष्यां आयुर्वर्धनीं । पौष्टिकीं पुष्टिकरीं । धन्यां प्रशस्तां । परं अत्यर्थं वयसः स्थापनीं । सर्वरोगप्रशमनीं । बुद्धीन्द्रियबलप्रदां च । हरीतकीमेवं-गुणां विद्यात् ॥ २८ । २९ ॥

सर्व्वरोगप्रशमनीमित्युक्तं । तदेव विवृत्य दर्शयति—कुष्ठमित्यादि । शोषं राजयक्ष्माणं । पुराणं विषमज्वरं । नवं कफप्रसेकं । तमकः श्वासभेदः । छर्दिर्वमि विविधान् । स्रोतसां विबन्धाः । तान् । हृदयोरसोः हृदयस्य उरसश्च प्रलेपमुपलेपं । स्मृतिबुद्धि-प्रमोहं स्मृतेर्बुद्धेश्च प्रमोहं । हरीतकी कुष्ठादिकान् रोगान् शीघ्रं जयेत् ॥ ३०–३३ ॥

अजीर्ण्यादिषु हरीतकीप्रतिषेधमाह—अजीर्णिन इति । अजीर्णिनः अजीर्णवन्तः । रूक्षभुजः रूक्षान्नभोजिनः । स्त्री मद्यं विषं च । तैः कर्शिताः । ये क्षुत् तृष्णा उष्णञ्च । तैः अर्दिताः पीड़िताः । एते चापि अभयां हरीतकीं न सेवेरन् ॥ ३४ ॥

---

३४ । सेवेरन्नभयामेते इति क पुस्तके ॥ ३४ ॥ अयं श्लोकः ख ग ङ पुस्तकेषु न पठ्यते।

तान् गुणांस्तानि कर्माणि विद्यादामलकेष्वपि ।
यान्युक्तानि हरीतक्या वीर्यस्य तु विपर्ययः ॥३५॥
अतश्चामृतकल्पानि विद्यात् कर्मभिरीदृशैः ।
हरीतकीनां शस्यानि भिषगामलकस्य च ॥३६॥
ओषधीनां परा भूमिर्हिमवाञ् शैलसत्तमः ।
तस्मात् फलानि तज्जानि ग्राहयेत् कालजानि च ॥३७॥
आपूर्णरसवीर्याणि काले काले यथाविधि ।
आदित्यसलिलच्छायापवनप्रीणितानि च ॥३८॥
यान्यजग्धान्यपूतीनि निर्व्रणान्यगदानि च ।
तेषां प्रयोगं वक्ष्यामि फलानां कर्म्म चोत्तमम् ॥३९॥

हरीतक्या गुणकर्म्माण्युक्त्वा आमलके नान्यनिदिशति—तान् गुणानिति । हरीतक्याः यानि गुणकर्माणि उक्तानि आमलकेष्वपि तान् गुणान् तानि च कर्माणि विद्यात् । वीर्यस्य तु विपर्ययः । केवलं वीर्यस्य विपर्ययः । हरीतक्या वीर्यमुष्णं । आमलकस्य तु शीतं । अयं विशेषः ॥ ३५ ॥

अतश्चेति । अतः ईदृशः प्रागुक्तदोषानुलोमनत्वादिभिः कर्मभिः । हरीतकीनां तथा आमलकस्य च शस्यानि अस्थिरहितानि फलानि अमृतकल्पानि विद्यात् भिषक् ॥ ३६ ॥

प्रयोगं विवक्षुः फलानि यद्देशजानि यद्विधानि यथा च ग्राह्याणि आदौ तदाह—ओषधीनामिति । शैलेषु पर्वतेषु सत्तमः श्रेष्ठः हिमवान्। ओषधीनां परा अन्यभूमिभ्यः श्रेष्ठा भूमिरुत्पत्तिस्थानं । प्राक् यज्जःपुरुषीयेऽप्युक्तं—हिमवानोषधिभूमीनामिति । तज्जानि हिमवच्छैलजातानि । कालजानि यथास्वकालजातानि । आपूर्णरसवीर्याणि सम्पूर्णरसवीर्याणि । सम्पूर्णप्रमाणानि च । आदित्यपवनच्छायासलिलैः छायातपवातवृष्टिभिः प्रीणितानि । यानि अजग्धानि कीटैरभक्षितानि । अपूतीनि । निर्व्रणानि क्षतरहितानि । अगदानि निरामयाणि । पवनदहनादिभिरदुष्टानीत्यर्थः । एवंविधानि

३९ । यान्यदग्धानि इति ख ग पुस्तकयोः ॥

पञ्चानां पञ्चमूलानां भागान् दशपलोन्मितान् ।
हरीतकीसहस्रञ्च त्रिगुणामलकं नवम् ॥४०॥
विदारिगन्धां बृहतीं पृश्निपर्णीं निदिग्धिकाम् ।
विद्याद्विदारिगन्धाद्यं श्वदंष्ट्रापञ्चमं गणम् ॥४१॥
बिल्वाग्निमन्थश्योणाकं काश्मर्य्यमथ पाटलाम् ।
पुनर्नवां सूर्प्यपर्ण्यौ बलामेरण्डमेव च ॥४२॥
जीवकर्षभकौ मेदां जीवन्तीं सशतावरीम् ।
शरेक्षुदर्भकाशानां शालीनां मूलमेव च ॥४३॥
इत्येषां पञ्चमूलानां पञ्चानामुपकल्पयेत् ।
भागान् यथोक्तांस्तत् सर्वं साध्यं दशगुणेऽम्भसि ॥४४॥

फलानि काले काले यथाविधि मङ्गलाचारदेवतार्च्चनादिपूर्व्वकं ग्राहयेत् । भेषजग्रहण-विधिः पश्चात् कल्पस्थाने इह चापि वक्ष्यमाणः । तेषां तथाविधानां फलानां उत्तमं प्रयोगं कर्म्म च वक्ष्यामि ॥ ३७-३९ ॥

प्रयोगमाह—पञ्चानामित्यादि । पञ्चानां पञ्चविधानां पञ्चमूलानां वक्ष्यमाणानां दशपलोन्मितान् भागान् । उपकल्पयेत् इति परेणान्वयः । त्रिगुणमामलकं यत्र तत् त्रिगुणामलकं आमलकसहस्रत्रितययुतं । नवं हरीतकीनां सहस्रं च । संख्यायाः नवत्वानवत्वासंभवात् नवत्वं हरीतकीनामेव ज्ञेयं । नवं हरीतकीसहस्रं नवानां हरीतकीनां एकं सहस्रं । आमलकफलान्यपि नवानि ग्राह्याणि । ननु कानि तानि पञ्च पञ्चमूलानि ? इत्याकाङ्क्षायामादौ पञ्च पञ्चमूलानि विवृणोति—विदारिगन्धामित्यादि । विदारिगन्धां शालपर्णीं । निदिग्धिकां कण्टकारिकां । श्वदंष्ट्रा गोक्षुरः । सा पञ्चमी यत्र तं गणं विदारिगन्धाद्यं लघु पञ्चमूलं विद्यात् । विद्यादिति परत्रापि योज्यं । इत्येकं पञ्चमूलं । बिल्वाग्निमन्थेत्यादि । एतत् बृहत् पञ्चमूलं । इति द्वितीयं । पुनर्नवामित्यादि । सूर्प्यपर्ण्यौ मुद्गपर्णी माषपर्णी च । एतत् बलादि पञ्चमूलं । इति तृतीयं । जीवकर्षभकावित्यादि । एतत् जीवनपञ्चमूलं । इतिचतुर्थः । शरेक्षुदर्भेत्यादि । दर्भः

४३ । जीवकर्षभको वीरां जीवन्तीं इति ग ण पुस्तकयोः ।

दशभागावशेषं तु पूतं तं ग्राहयेद्रसम् ।
हरीतकीश्च ताः सर्वाः सर्वाण्यामलकानि च ॥४५॥
तानि सर्वाण्यनस्थीनि फलान्यापोथ्य कूर्चनैः ।
विनीय तस्मिन्निर्य्यूहे चूर्णानीमानि दापयेत् ॥४६॥
मण्डूकपर्ण्याः पिप्पल्याः शङ्खपुष्प्याः प्लवस्य च ।
मुस्तानां सविडङ्गानां चन्दनागुरुणोस्तथा ॥४७॥
मधुकस्य हरिद्राया वचायाः कनकस्य च ।
भागांश्चतुष्पलान् कृत्वा सूक्ष्मैलायास्त्वचस्तथा ॥४८॥

कुशः । मूलमेव चेति । विदारिगन्धाद्यादिषु चतुर्षु अनुक्तमपि मूलमेव ग्राह्यं । तेषां अपि पञ्चमूलत्वात् । शरेक्षुदर्भकाशानां शालीनां च मूलं । एतत् तृणपञ्चमूलं । इति पञ्चमं । इति पञ्च पञ्चमूलान्युक्तानि । इत्युक्तानां एषां विदारिगन्धाद्यादीनां पञ्चानां पञ्चमूलानां पञ्चविंशतेः द्रव्याणां यथोक्तान् दशपलोन्मितान् भागान् उपकल्पयेत् । दशपलोन्मितानिति प्रतिद्रव्यं । तदुक्तं जतूकर्णेन—तेषां प्रतिद्रव्यं दश पलानि । इति । तेन सार्द्धं पलशतद्वयं भवति । यदाह वृद्धवाग्भटः—पथ्यासहस्रं त्रिगुणधात्रीफलसमन्वितं । पञ्चानां पञ्चमूलानां सार्द्धं पलशतद्वयं ॥ इति (अ० सं० उ० ४६) । इत्थं च प्रतिपञ्चमूलं दशपलाभिप्रायेण समुदायेन पञ्चाशत्पलोन्मितानिति गङ्गाधरेण जल्पकल्पतरौ यदुक्तं तत् हेयं । तत् सर्वमिति । पञ्चानां पञ्चमूलानां सार्द्धं पलशतद्वयं । हरीतकीनां सहस्रं । आमलकानां त्रीणि सहस्राणि च । तत् सर्वं एकीकृत्य ततो दशगुणे दशभागाधिके अम्भसि सलिले साध्यं पाच्यं । ततः तत्कथितं जलं । दशभागावशेषं दशांशस्थितं । पूतं वस्त्रेण गालितं । कृत्वा रसं ग्राहयेत् । ताः स्विन्नाः सर्वाः सहस्रं हरीतकीः । सर्वाणि त्रीणि सहस्राणि आमलकानि च । तानि सर्वाणि फलानि अनस्थीनि व्यस्थीनि अस्थिरहितानि कृत्वा । कूर्चनैः आपोथ्य मृदित्वा । कूर्चनं जर्जरीकरणसाधनं शिलापुत्रमुपलादि । तस्मिन् निर्यूहे क्वाथे रसे विनीय प्रक्षिप्य इमानि वक्ष्यमाणमण्डूकपर्ण्यादिसम्बन्धीनि चूर्णानि दापयेत् । येषां चूर्णानि यावन्ति च देयानि तदाह—मण्डूकपर्ण्या इत्यादि । मण्डूक-

---

४७ । शंखपुष्प्याः फलस्य च इति ख ग पुस्तकयोः । ४८ । मधुकस्य हरिद्रायाः इति ग पुस्तके ।
४८ । वार्तायाः कनकस्य इति ख पुस्तके ॥ ४८ । अयं श्लोकः ध पुस्तके न पठ्यते ॥

सितोपलासहस्रञ्च चूर्णितं तुलयाधिकम् ।
तैलस्य द्व्याढकं तत्र दद्यात् त्रीणि च सर्पिषः ॥४९॥
साध्यमौदुम्बरे पात्रे तत् सर्वं मृदुनाग्निना ।
ज्ञात्वा लेहमदग्धञ्च शीतं क्षौद्रेण संसृजेत् ॥५०॥
क्षौद्रप्रमाणं स्नेहार्द्धं तत् सर्वं घृतभाजने ।
तिष्ठेत् संमूर्च्छितं तस्य मात्रां काले प्रयोजयेत् ॥५१॥

पर्ण्याः । पिप्पल्याः । शङ्खपुष्प्याः । प्लवस्य । प्लवः कैवर्त्तमुस्तः । मुस्तानां सविडङ्गानां विडङ्गानां च । चन्दनागुरुणोः चन्दनस्य अगुरुणश्च । मधुकस्य यष्टीमधुकस्य । हरिद्रायाः । वचायाः । कनकस्य कनकं नागकेशरं । सूक्ष्मैलायाः । त्वचः गुड़त्वचश्च । चतुष्पलान् भागान् । मण्डूकपर्ण्यादित्वगन्तानां चतुर्द्दशानां द्रव्याणां चूर्णितानां प्रतिद्रव्यं चतुष्पलान् भागान् कुड़वप्रमाणं कृत्वा । दद्यादिति परेणान्वयः । तथा चूर्णितं तुला पलशतं । तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः । इत्यमरः । तया अधिकं शतपलाधिकं सितोपलायाः शर्करायाः सहस्रं पलसहस्रं अर्द्धभारमित्यर्थः । तथा तैलस्य द्व्याढकं द्वे आढ़के । सर्पिषः घृतस्य च त्रीणि आढ़कानि । तत्र प्रागुक्ते निर्यूहे दद्यात् । तत् सर्वं औदुम्बरे ताम्रमये पात्रे मृदुना अग्निना साध्यं । ततः तत् लेहं लेहतां गतं ज्ञात्वा अदग्धं यावत् न दग्धं स्यात् तावत् अवतार्य यदा शीतं भवति तदा क्षौद्रेण स्नेहार्द्धमानेन संसृजेत् युञ्ज्यात् । क्षौद्रस्य परिमाणमाह—क्षौद्रप्रमाणमिति । क्षौद्रस्य प्रमाणं स्नेहार्द्धं तैलघृतयोः अर्धं । तैलस्य द्वे आढ़के त्रीणि च सर्पिषः इति मिलित्वा पञ्च आढ़कानि भवन्ति । तदर्द्धं सार्द्धमाढ़कद्वयं । ततः तत्सर्वं संमूर्च्छितं दर्व्या आलोड़ितं घृतभाजने तिष्ठेत् घृतभाण्डे स्थापयेत् । वृद्धवाग्भटेनाप्युक्तं—पथ्यासहस्रं त्रिगुणधात्रीफलसमन्वितं । पञ्चानां पञ्चमूलानां सार्द्धं पलशतद्वयं ॥ जले दशगुणे पक्त्वा दशभागस्थिते रसे । आपोथ्य कृत्वा व्यस्थीनि विजयामलकान्यथ ॥ विनीय तस्मिन् निर्यूहे योजयेत् कुड़वांशकं । त्वगेलामुस्तरजनीपिप्पल्यगुरुचन्दनं ॥ मण्डूकपर्णीकनकशङ्खपुष्पीवचाप्लवं । यष्ट्याह्वयं विडङ्गं च चूर्णितं तुलयाधिकं ॥ सितोपलार्द्धभारञ्च पात्राणि त्रीणि सर्पिषः । द्वे च तैलात् पचेत्सर्वं तदग्नौ लेहतां गतं ॥ अवतीर्णं हिमं युञ्ज्याद् विंशैः क्षौद्रशतैस्त्रिभिः । ततः खजेन मथितं निदध्याद् घृतभाजने ॥ इति ( अ० सं० उ० ४९ ) । तस्य तथा साधितस्य रसायनस्य मात्रां वक्ष्यमाणां काले प्रत्यहं प्रातः प्रयोजयेत् ।

या नोपरुन्ध्याद्दाहारमेवं मात्रा जरां प्रति ।
षष्टिकः पयसा चात्र जीर्णे भोजनमिष्यते ॥५२॥
वैखानसा वालखिल्यास्तथा चान्ये तपोधनाः ।
रसायनमिदं प्राश्य वभूवुरमितायुषः ॥५३॥
मुक्त्वा जीर्णं वयश्चाग्र्यमवापुस्तरुणं वयः ।
वीततन्द्राक्लमश्वासा निरातङ्काः समाहिताः ॥५४॥
मेधास्मृतिवलोपेताश्चिररात्रं तपोधनाः ।
ब्राह्मं तपो ब्रह्मचर्यं चेरुश्चात्यन्तनिष्ठया ॥५५॥
रसायनमिदं ब्राह्ममायुष्कामः प्रयोजयन् ।
दीर्घमायुर्वयश्चाग्र्यं कामांश्चेष्टान् समश्नुते ॥५६॥

इति ब्राह्मरसायनम् ।

मात्रां विवृणोति—या नोपरुन्ध्यादिति । या मात्रा आहारं यथाकाले भोजनं न उपरुन्ध्यात् । ततः प्रागेव जीर्य्येत । जरां प्रति जरणापेक्षया एवं मात्रा आहारानुपरोधिनी मात्रा स्मृता । योपरुन्ध्यान्न भोजनमिति पश्चादपि वक्ष्यते । अत्र काले मात्रया आहारानुपरोधिन्या प्रयुक्ते रसायने जीर्णे सति पयसा सह षष्टिकः भोजनमिष्यते । पयसा सह शालिषष्टिकान्नं भुञ्जीत ॥४०—५२॥

रसायनप्रयोगमुक्त्वा तत्फलमाह वैखानसा इति । वैखानसाः वानप्रस्थाः । वालखिल्याः तदाख्याः स्वल्पप्रमाणा ऋषयः । अन्ये तपोधनाः मुनयश्चापि । इदमुक्तं रसायनं प्राश्य अमितायुषः वभूवुः । जीर्णं वयः त्यक्त्वा अग्र्यं श्रेष्ठं तरुणं वयश्च अवापुः प्राप्तवन्तः । ते तपोधनाः । वीताः विगताः तन्द्राक्लमश्वासाः येषां ते तथोक्ताः निरातङ्काः नीरोगाः । समाहिताः सन्तः । अत्यन्तनिष्ठया चिररात्रं चिरं ब्राह्मं तपः ब्रह्मचर्य्यं च चेरुः आचरितवन्तः ॥ ५३—५५ ॥

रसायनमिति । आयुष्कामः पुमान् । इदं । ब्राह्मं ब्राह्मतपश्चरणहेतुत्वात् । रसायनं प्रयोजयन् । तेन दीर्घमायुः । अग्र्यं श्रेष्ठं । तरुणमित्यर्थः । वयः । इष्टान् ईप्सितान् कामांश्च । समश्नुते प्राप्नोति ॥ ५६ ॥

इति ब्राह्मरसायनाख्य आद्यो योगः ॥

---

५२ । आहारमेकं मात्रा इति क ख ग घ ग्य पुस्तकेषु ॥

यथोक्तगुणानामामलकानां सहस्रं पिष्टस्वेदनविधिना पयस ऊष्मणा सुस्विन्नमनातपशुष्कमनस्थि चूर्णयेत्। तदामलकसहस्रस्वरसपरिपीतं स्थिरा पुनर्नवाजीवन्तीनागबलाब्रह्मसुवर्चलामण्डूकपर्णीशतावरीशङ्खपुष्पीऽपिप्पलीवचा विडङ्गस्वयंगुप्ताऽमृताचन्दनागुरुमधुकमधूकपुष्पोत्पल पद्ममालतीयुवतीयूथिकाचूर्णाष्टभागसंयुक्तं पुनर्नागबलासहस्रपलस्वरसपरिपीतमनातपशुष्कं द्विगुणितसर्पिषा क्षौद्रसर्पिषा वा क्षुद्रगुडाकृतिं कृत्वा शुचौ दृढे घृतभाविते कुम्भे भस्मराशेरधः स्थापयेदन्तर्भूमेः पक्षं कृतरक्षाविधानमथर्ववेदविदा। पक्षात्ययेचोद्धृत्य कनकरजतताम्रप्रवालकालायसचूर्णाष्टभागसंयुक्तमर्द्धकर्षवृद्ध्या यथोक्तेन विधिना प्रातः प्रातः प्रयुञ्जानोऽग्निबलमभिसमीक्ष्य। जीर्णे च षष्टिकं पयसा ससर्पिष्कमुपसेवमानो यथोक्तान् गुणान् समश्नुत इति ॥५७॥

ब्राह्मरसायनान्तरमाह—यथोक्तगुणानामिति। हिमवति जातानां। तथा आपूर्ण रसवीर्याणि इत्यादयो ये गुणाः हरीतक्या उक्ताः तद्गुणवतां आमलकानां सहस्रं। पिष्टस्वेदनविधिनेति। यथा पिष्टकं सजलपात्रस्योपरि पोट्टलिकाबद्धं शरावादिनाछादितं जलोष्मणा स्विद्यते। एवं पिष्टस्वेदनविधिना पयसः दुग्धस्य ऊष्मणा सुस्विन्नं। अनातपे छायायां शुष्कं। अनस्थि अस्थिरहितं कृत्वा। चूर्णयेत्। ततः चूर्णतस्तत् आमलक सहस्रं आमलकसहस्रस्य अन्यस्य स्वरसेन परिपीतं भावितं। स्थिरा शालपर्णी। पुनर्नवा जीवन्ती। नागबला। ब्रह्मसुवर्चला। आयुर्वेद समुत्थानीये पश्चाद् वक्ष्यमाणलक्षणा। मण्डूपर्णी। शतावरी। शंखपुष्पी। पिप्पली वचा। विड़ङ्ग। स्वयं गुप्ता शूकशिम्बी। अमृता गुडूची। चन्दनं। अगुरु। मधुकं यष्टीमधु। मधूकपुष्पं गुड़पुष्पस्य पुष्पं। उत्पलं नीलोत्पलं। मालती युवती नवमालिका। यूथिका च। स्थिरादि यूथिकान्तानां द्वाविंशतेः द्रव्याणां प्रत्येकं चूर्णस्य अष्टमो भागः अष्टभागः। तेन संयुक्तं सम्पृक्तं। पुनर्नागबलासहस्रपलस्वरसपरिपीतं। प्राक् आमलकसहस्र-

५७। चन्दनागुरु मधूकपुष्प इति ख पुस्तके ॥ ५७। पद्मोत्पलमालती इति पुस्तके ॥

भवन्ति चात्र।

इदं रसायनं ब्राह्मं महर्षिगणसेवितम्।
भवत्यरोगो दीर्घायुः प्रयुञ्जानो महाबलः ॥५८॥
कान्तः प्रजानां सिद्धार्थश्चन्द्रादित्यसमद्युतिः।
श्रुतं धारयते सत्त्वमार्षश्चास्य प्रवर्त्तते ॥५९॥
धरणीधरसारश्च वायुना समविक्रमः।
स भवत्यविषश्चास्य गात्रं संपद्यते विषम् ॥६०॥

इति ब्राह्म-रसायनं द्वितीययोगः।

स्वरसेन भावना उक्ता। ततः—पुनरिति। नागपलापलसहस्रस्य स्वरसेन भावितं। अनातपे शुष्कं। द्विगुणितं क्षौद्रात् द्विगुणं सर्पिर्यत्र तत्। तेन तथाविधेन। क्षौद्रं सर्पिश्चतयोः समाहारः। तेन क्षौद्र सर्पिषा। द्विगुणितसर्पिषा क्षौद्रेण। इति वृद्धवाग्भटः। (अ० सं० उ० ४९) क्षुद्रगुडाकृतिं कृत्वा। क्षुद्रगुडः फाणितं। शुचौ शुद्धे। दृढे घृतभाविते कुम्भे भस्मराशेरधः भूमेः अन्तः पक्षं पञ्चदश अहाणि यावत् अथर्ववेदविदा कृतरक्षाविधानं यथातथा स्थापयेत् ततः पक्षात्यये च उद्धृत्य कनकरजतताम्र प्रवालकालायसां पञ्चानां एकैकस्य चूर्णस्य। अष्टमो-भागः अष्टभागः। तेन संयुक्तं कृत्वा। तत् यथोक्तेन विधिना कुटीप्रावेशिकेन विधिना प्रातः प्रातः प्रत्यहं प्रातः अग्निबलं अभिसमीक्ष्य अर्द्धकर्षवृद्ध्या प्रयुञ्जानः। अग्निबलापेक्षया मात्रया मात्रया आहारानुपरोधिन्या प्रवृत्तिः। ततः प्रत्यह मर्द्धकर्ष वृद्धिः। ततः भुक्ते च औषधे जीर्णे सति पयसासह ससर्पिष्कं षष्टिकं उपसेव(मानः। यथोक्तान् श्लोकैः पश्चादुक्तान् प्राक् आद्य योगे पठितांश्चापि गुणान् समश्नुते ॥५७॥

भवन्ति चात्रेति। महर्षिगणसेवितं इदं ब्राह्मं रसायनं प्रयुञ्जानः पुमान्। अरोगः। दीर्घायुः। महाबलः। प्रजानां लोकानां कान्तः प्रियः। सिद्धार्थः सफलकामः। चन्द्रादित्यसमद्युतिः चन्द्रसूर्य्यतुल्यकान्तिश्च। भवति। स च श्रुतं धारयते। अस्य आर्षं सत्वं ज्ञानं प्रवर्त्तते। स भवतीति च्छेदः। स धरणीधरस्य पर्व्वतस्य सारइव सारो यस्य स तथोक्तः। वायुना समविक्रमः तुल्यबलश्च भवति। विषं अस्य गात्रे अविषं सम्पद्यते। ५८। ५९। ६०। ॥ इति द्वितीयो योगः ॥

---

६०। स भवत्यपिपन्वास्यगात्रे संपद्यते विषं इति खग पुस्तकयोः॥

बिल्वाग्निमन्थौ श्योणाकः काश्मर्य्यः पाटलिर्बला ।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम् ॥ ६१ ॥
शृंगी तामलकी द्राक्षा जीवन्ती पुष्करागुरु ।
अभया चामृता ऋद्धिर्जीवकर्षभकौ शटी ॥ ६२ ॥
मुस्तं पुनर्नवा मेदा सैला चंदनमुत्पलम् ।
विदारीवृषमूलानि काकोली काकनासिका ॥ ६३ ॥
एषां पलोन्मितान् भागान् शतान्यामलकस्य च ।
पञ्च दद्यात् तदैकध्यं जलद्रोणे विपाचयेत् ॥ ६४ ॥
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम् ।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः ॥ ६५ ॥

च्यवनप्राशाख्यं तृतीयं योगमाह — बिल्वाग्निमन्थावित्यादि । चतस्रः पर्ण्यः शालपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी च । बृहतीद्वयं बृहती कण्टकारी च । शृङ्गी कर्कटशृङ्गी । तामलकी भूम्यामलकी । पुष्करागुरु पुष्करं अगुरु च । ऋद्धिः स्वनामख्याता । सिद्धयोगचक्रदत्तयोः ऋद्धिरित्येव पाठः । वाग्भटद्वये तु ऋद्धिर्न पठिता । तत्र द्विकाकोलीतिवचनात् ऋद्धिस्थाने क्षीरकाकोलीत्यवगम्यते । मेदा । सह एलया वर्त्तमाना सैला । मेदा एला च । एला सूक्ष्मैला । वृषमूलं वासामूलं । काकनासिका काकनासा काउयाठोंटीति वंगेषु । एषां बिल्वादि-काकनासिकान्तानां षट्त्रिंशतो द्रव्याणां प्रत्येकं पलोन्मितान् भागान् । तथा आमलकस्य आकृतिमानेन पञ्च शतानि दद्यात् । तत् सर्वं ऐकध्यं एकत्र जलद्रोणे विपाचयेत् । यावत् क्वाथः पादावशेषः न स्यात् । पादशेषमिति वक्ष्यमाणवृद्ध-वाग्भटवचनात् । अथ एतानि औषधानि गतरसानि तावत्पाकेन निर्गतरसानि ज्ञात्वा । तं पादशेषं रसं क्वाथं तच्च आमलकं पञ्चशतसंख्यकं उद्धृत्य निष्कुलं निरस्थि कृत्वा । तैलसर्पिषोः तुल्यमानयोः पलद्वादशके । तैलस्य षट् । सर्पिषश्च षट् । मिलित्वा द्वादश पलानि । तयोः समयोरपि द्रव्यान्तरयुक्तत्वेनाविरुद्धत्वं । भृष्ट्वा । पूतायाः शुद्धायाः मत्स्यण्डिकायाः शर्करायाः । मत्स्यण्डिका मिछरीति केचित् । अर्द्धतुलां पञ्चाशत् पलानि दत्त्वा लेहवत् साधु साधयेत्

पलद्वादशके भृष्ट्वा दत्त्वा चार्द्धतुलां भिषक् ।
मत्स्यंडिकायाः पूताया लेहवत् साधु साधयेत् ॥ ६६ ॥
षट्पलं मधुनश्चात्र सिद्धशीते समावपेत् ।
चतुष्पलं तुगाक्षीर्य्याः पिप्पलीद्विपलं तथा ॥ ६७ ॥
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात् ।
इत्ययं च्यवनप्राशः परमुक्तो रसायनः ॥ ६८ ॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते ।
क्षीणक्षतानां वृद्धानां बालानाञ्चाङ्गवर्द्धनः ॥ ६९ ॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम् ।
पिपासां मूत्रशुक्रस्थान् दोषांश्चाप्यपकर्षति ॥७०॥
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्न भोजनम् ।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा ॥७१॥

भिषक् । अत्र सिद्धशीते आदौ सिद्धे पश्चात् शीते च सति । तत्र मधुनः षट्पलं प्रदापयेत् प्रक्षिपेत् । तथा तुगाक्षीर्याः वंशलोचनायाः चतुष्पलं । पिप्पलीद्विपलं पिप्पल्याः द्वे पले । तथा त्वक् गुड़त्वक् । एला सूक्ष्मैला । पत्रं तेजपत्रं । केशरः नागकेशरश्च । तान् च प्रत्येकं एकं पलं । निदध्याच्च । इति अयं च्यवनप्राशो नाम परं रसायनः उक्तः । स च विशेषेण कासश्वासहरः । तथा क्षीणक्षतानां क्षीणानां क्षतानां उरसि क्षतानां च वृद्धानां बालानां च अङ्गवर्द्धनः उपदिश्यते । अयं च्यवनप्राशः स्वरक्षयं उरोरोगं हृद्रोगं वातशोणितं पिपासां मूत्रशुक्रस्थान् दोषान् शुक्रदोषांश्च अपकर्षति । या मात्रा भोजनं आहारं न उपरुन्ध्यात् अस्य औषधस्य तथाविधां मात्रां आहारानुपरोधिनीं प्रयुंजीत । अस्य औषधस्य प्रयोगात् च्यवनो महर्षिः सुवृद्धोपि पुनर्युवा अभूत् । नरः कुटीप्रवेशात् कुटीप्रावेशिकविधिना अस्य रसायनस्य प्रयोगात् मेधां स्मृतिं कान्तिं अनामयत्वं आरोग्यं आयुषः प्रकर्षं इन्द्रियाणां बलं स्त्रीषु परं प्रहर्षं अग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यं च लभेत । स च जीर्णोऽपि जराकृतं रूपं वलीपलितादिकं अपास्य त्यक्त्वा नवयौवनस्य सर्वं रूपं बिभर्ति धारयति च । वृद्धवाग्भटेनाप्युक्तं—दशमूलबलामुस्तजीवकर्षभकोत्-

मेधां स्मृतिं कान्तिमनामयत्वमायुःप्रकर्षं बलमिन्द्रियाणाम् ।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम् ॥७२॥
रसायनस्यास्य नरः प्रयोगाल्लभेत जीर्णोऽपि कुटीप्रवेशात् ।
जराकृतं रूपमपास्य सर्वं बिभर्त्ति रूपं नवयौवनस्य ॥७३॥

इति च्यवनप्राशः ।

अथामलकहरीतकीनामामलकविभीतकानां हरीकतीविभीतकानामामलकहरीतकीविभीतकानां वा पलाशत्वगवनद्धानां मृदाऽवलिप्तानां कुकूलस्विन्नानामकुलकानां पलसहस्रमुदूखले संपोथ्य दधिघृतमधु-पलल-तैलशर्करासंयुक्तं भक्षयेदन्नभुग् यथोक्तेन विधिना। तस्यान्ते यवाग्वादिभिः प्रकृत्यवस्थापनम्। अभ्यङ्गोत्सा-

पलं। पर्णिन्यो पिप्पली शृङ्गी मेदा तामलकी त्रुटिः॥ जीवन्ती जोङ्गकं द्राक्षा पौष्करं चन्दनं शटी। पुनर्नवा द्विकाकोली काकनासाऽमृताह्वये। विदारी वृषमूलञ्च तदैकध्यं पलोन्मितं। जलद्रोणे पचेत् पञ्च धात्रीफलशतानि च॥ पादशेषं रसं तस्माद् व्यस्थीन्यामलकानि च। गृहीत्वा भर्जयेत् तैलघृताद्‌द्वादशभिः पलैः॥ मत्स्यण्डिकातुलार्द्धेन युक्तस्तल्लेहवत् पचेत्। स्नेहार्द्धं मधु सिद्धे च तुगाक्षीर्य्याश्चतुष्पलं॥ पिप्पल्या द्वे पले दद्याच्चतुर्जातं कणार्धितं। अतोऽवलेह्येन्मात्रां कुटीस्थः पथ्यभोजनः॥ इत्येष च्यवनप्राशः यं प्राश्य च्यवनो मुनिः। जराजर्ज्जरितोऽप्यासीन्नारीनयननन्दकः॥ इति (अ० सं० उ० ४६)। जोंगकमगुरु। काकनासाऽमृताह्वये इति। अमृताह्वये हरीतकी गुडूची च। चतुर्जातं गुड़त्वक् एला पत्रं नागकेशरञ्च। इति चतुष्टयं। कणार्द्धितमिति। कणा पिप्पली। तदर्द्धितं तदर्द्धमितं। इह एकं पलं। पिप्पल्या द्वे पले॥ ६१—७३॥

॥ इति तृतीयो योगः॥

चतुर्थं योगमाह—अथामलकहरीतकीनामित्यादि। आमलकहरीतकीविभीतकानां द्विशस्त्रिशो वा संयोजितानां। तद्यथा। आमलकहरीतकीनां। आमलकविभीतकानां। हरीतकीविभीतकानां। आमलकहरीतकीविभीतकानां वा। त्रयाणां विकल्पनात् चत्वारः कल्पाः। पलाशत्वचा अवनद्धानां। मृदा अवलिप्तानां। कुकूले करीषाग्नौ

द्नं सर्पिषा यवचूर्णैश्च। अयञ्च रसायनप्रयोगप्रकर्षो द्विस्ताव-द्ग्निबलमभिसमीक्ष्य। प्रतिभोजनं यूषेण पयसा वा षष्टिकः ससर्पिष्कान्नम् अतः परं यथासुखविहारः कामभक्ष्यः स्यात्। अनेन प्रयोगेणर्षयः पुनर्युवत्वमवापुः बभूवुश्चानेकवर्षशतजीविनः। निर्विकाराः। परं शरीरबुद्धीन्द्रिय-बलसमुदिताः। चेरुश्चात्यन्त-निष्ठया तपः ॥ ७४ ॥

इति चतुर्थामलकरसायनम्।

हरीतक्यामलकविभीतकपञ्चपञ्चमूलनिर्य्यूहेण पिप्पली-मधुमधूक-काकोली-क्षीरकाकोल्यात्मगुप्ता-जीवकर्षभक- क्षीर-शुक्लाकल्कसंप्रयुक्तेन विदारीस्वरसेन क्षीराष्टगुणसंप्रयुक्तेन च सर्पिषः कुम्भं साधयित्वा प्रयुञ्जीताग्निबलं समवेक्ष्य। जीर्णे च

स्विन्नानां। ततः अकुलकानां निरस्थीकृतानां पलसहस्रं उदूखले संपोथ्य संक्षुद्य। तत् दधिघृतमधुपललं। पललं तिलचूर्णं। तैलं तिलतैलं। शर्करा च। ताभिः संयुक्तं कृत्वा दध्यादीनां प्रधानचूर्णेन समानमानत्वं बोद्धव्यं रसायनार्थी अनन्नभुक् किञ्चिदाहारकृत्वा यथो-क्तेन कुटीप्रावेशिकेन विधिना भक्षयेत्। तस्यान्ते प्रयोगान्ते यवाग्वादिभिः यवाग्वादि-क्रमेण प्रकृत्यवस्थापनं। अस्यैव विवरणं—द्विस्तावदित्यादि। द्विः प्रयोगकालात् द्विगुण-कालं प्रतिभोजनं यवागूः यूषेण पयसा वा। ससर्पिष्कः षष्टिकः षष्टिकान्नं। सर्पिषा अभ्यङ्गः। यवचूर्णैः उत्सादनञ्च। अतः परं यथासुखविहारः कामभक्ष्यः यथेच्छ-भोजनः स्यात् ॥७४॥ इति चतुर्थो योगः ॥

पञ्चमं योगमाह हरीतक्यामलकेत्यादि। हरीतकी आमलकी विभीतकः। पंच पञ्च-मूलानि च। तेषां निर्यूहः क्वाथः। तेन पिप्पल्यादिकल्कसम्प्रयुक्तेन। क्षीरशुक्ला क्षीरविदारी। तथा विदारीस्वरसेन। क्षीरस्य अष्टौ गुणाः भागाः। तैः सम्प्रयुक्तः। तेन च सर्पिषः घृतस्य कुम्भं द्रोणद्वयं साधयित्वा तत् अग्निबलं समवेक्ष्य यथाग्निबलं प्रयुञ्जीत। तस्मिन् जीर्णे च सति क्षीरसर्पिर्भ्यां शालिषष्टिकमन्नं उष्णोदकानुपानं यथा तथा अश्नन्। जरादिभ्यः अपगतभयः अतुलंशरीरबुद्धीन्द्रियबलं उपलभ्य। अप्रतिहताः सर्वे आरम्भाः यस्य स तथोक्तः सन्। परं आयुः अवाप्नुयात्। वृद्धवाग्भटेनाप्युक्तं—अभया-

क्षीरसर्पिर्भ्यां शालिषष्टिकमुष्णोदकानुपानमश्नञ्जराऽव्याधि-पापाभिचारापगतभयः शरीरबुद्धीन्द्रियबलमतुलमुपलभ्याप्रति-हतसर्वारम्भः परमायुरवाप्नुयात् ॥७५॥

इति पञ्चमो हरीतकीयोगः ।

हरीतक्यामलकविभीतकहरिद्रास्थिरावचाविडङ्गामृतवल्ली-विश्वभेषजमधुकपिप्पलीसोमवल्कसिद्धेन क्षीरसर्पिषा मधुशर्क-राभ्यामपि च सन्नीयामलकस्वरसपरिपीतमामलकचूर्णमय-श्चूर्णचतुर्भागसम्प्रयुक्तं पाणितलमात्रं प्रातः प्रातः प्राश्य यथो-क्तेन विधिना सायं मुद्गयूषेण पयसा वा ससर्पिष्कं शालिषष्टि-कान्नमश्नीयात् ॥ त्रिवर्षप्रयोगादस्य वर्षशतमजरं वयस्तिष्ठति । श्रुतमवतिष्ठते । सर्वामयाः प्रशाम्यन्ति । विषमविषं भवति गात्रे । गात्रमश्मवत् स्थिरीभवति । अधृष्यो भूतानां भवतीति ॥७६॥

भवन्ति चात्र ।

मलकविभीतकपञ्चात्मकपञ्चमूलनिर्यूहे । वल्लीपलाशकरसे क्षीरेऽष्टगुणे च विपचेत् ॥ घृतस्य कुम्भं मधुकं मधूकं काकोलियुग्मं च बलां स्वगुप्तां । सक्षीरशुक्लामृषभं सुजीवं सुखाम्बुपस्तच्च वेद्गु गुणाढ्यं ॥ इति (अ० सं० उ० ४६ ) ॥७५॥ इति पञ्चमो योगः ॥

षष्ठं योगमाह—हरीतक्यामलकेत्यादि । अमृतवल्ली गुडूची । विश्वभेषजं शुण्ठी । सोमवल्कः विट्खदिरः । हरीत्यक्यादिसोमवल्कान्तैः द्वादशभिर्द्रव्यैः सिद्धेन क्षीर-सर्पिषा क्षीरोत्थेन सर्पिषा मधुशर्कराभ्यां चापि सन्नीय मिश्रयित्वा। आमलकस्वरसेन परिपीतं भावितं । आमलकचूर्णं अयश्चूर्णचतुर्भागप्रयुक्तं तच्चतुर्थांशपरिमितलोहचूर्ण-युक्तं कृत्वा तत् पाणितलमात्रं कर्षप्रमाणं प्रातः प्रातः प्रतिदिनं प्रातः यथोक्तेन कुटी-प्रावेशिकेन विधिना प्राश्य सायं मुद्गयूषेण पयसा वा ससर्पिष्कं शालिषष्टिकान्नम-श्नीयात् । अस्य रसायनस्य त्रिवर्षप्रयोगात् अस्य पुंसः आयुः वर्षशतं अजरं जरा-

---

७५ । विभीतकपञ्चमूलनिर्यूहेषु इति ख ग पुस्तकयोः ॥

७६ । यमृतवल्लीमधुकपिप्पली...इति ग पुस्तके । विस्वभेषजमधूकपिप्पली...इति ग पुस्तके ॥

यथामराणाममृतं यथा भोगवतां सुधा।
तथाऽभवन्महर्षीणां रसायनविधिः पुरा॥ ७७॥
न जरां न च दौर्बल्यं नातुर्यं निधनं न च।
जग्मुर्वर्षसहस्राणि रसायनपराः पुरा॥ ७८॥
न केवलं दीर्घमिहायुरश्नुते रसायनं यो विधिवन्निषेवते।
गतिं सदेवर्षिनिषेवितां शुभां प्रपद्यते ब्रह्मतथैति चाक्षरम्॥७९

तत्र श्लोकः।

अभयामलकीयेऽस्मिन् योगाः षट् परिकीर्त्तिताः।
रसायनानां सिद्धानामायुर्यैरनुवर्त्तते॥ ८०॥
इति चिकित्सितेऽभयामलकीयो रसायनपादः प्रथमः।

रहितं सत् तिष्ठति। श्रुतं अवतिष्ठते। विषं अस्य गात्रे अविषं भवति। अस्य गात्रं अश्मवत् प्रस्तरवत् स्थिरीभवति दृढीभवति। स च भूतानां सर्वेषां प्राणिनां अधृष्यः अनभिभवनीयो भवति॥७९॥ इति षष्ठो योगः॥

रसायनं प्रशंसति—यथामराणां इति। यथा मराणां देवानां अमृतं जरामरणहरं। यथा वा भोगवतां भोगिनां नागानां सुधा जरामरणहरी। तथा पुरा महर्षीणां रसायनविधिः जरामरणादिहरः आसीत्॥ ७७॥

तदेवविवृत्य दर्शयति—न जरामित्यादि। पुरा महर्षयः रसायनपराः सन्तः वर्षसहस्राणि न जरादिकं जग्मुः प्राप्तवन्तः॥ ७८॥

सम्प्रति रसायनस्य स्वर्गापवर्गसाधनत्वमाह—न केवलमिति। यो रसायनं विधिवत् निषेवते स न केवलमिह अस्मिन् लोके दीर्घमायुः अश्नुते। किन्तु स प्रेत्य देवर्षिनिषेवितां शुभां गतिं स्वर्गं प्रपद्यते। तथा अक्षरं ब्रह्म मोक्षं च एति लभते। इह रसायनस्य स्वर्गापवर्गसाधनत्वं विशुद्धसत्वकर्त्तृत्वात्॥ ७९॥

प्रथमपादार्थसंग्रहमाह—अभयेति। अस्मिन् अभयामलकीये आद्ये रसायनपादे सिद्धानां निश्चितफलानां रसायनानां षट् योगाः परिकीर्तिताः। यैः आयुः अनुवर्त्तते वर्द्धते तथाविधाः आयुष्कराः षट् योगाः परिकीर्तिताः॥८०॥

इति चरकोपस्कारे चिकित्सितस्थाने प्रथमेऽध्याये प्रथमः पादः॥

---

द्वितीयः पादः ।

अथातः प्राणकामीयं रसायनपादं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ॥१॥

प्राणकामाः शुश्रूषध्वमिदमुच्यमानममृतमिवापरमदितिसुतहितकरमचिन्त्याद्भुतप्रभावमायुष्यमारोग्यकरं वयसः स्थापनं निद्रातन्द्राश्रमक्लमालस्यदौर्बल्यापहरमनिलकफपित्त- साम्यकरं स्थैर्य्यकरमवद्धमांसहरमन्तरग्निसन्धुक्षणं प्रभावर्णस्वरकरं रसायनविधानम् ॥ अनेन च्यवनादयो महर्षयः पुनर्युवत्वमापुः । नारीणां चेष्टतमा बभूवुः । स्थिरसमसुविभक्तमांसाः । सुसंहतस्थिरशरीराः । सुप्रसन्नबलवर्णेन्द्रियाः । सर्वत्राप्रतिहतपराक्रमाः । सर्वक्लेशसहाश्च ॥ २ ॥

अभयामलकीयपादानन्तरं प्राणकामीयं द्वितीयं रसायनपादमारभते—अथात इति । प्राणकामा इत्यधिकृत्य कृतः प्राणकामीयः । तम् ॥ १ ॥

प्राणकामा इति । भोः प्राणकामाः । मया उच्यमानं अदितिसुतानां देवानां हितकरं अपरममृतमिव इदं रसायनविधानं शुश्रुषध्वं यूयं । रसायनविधानं विपिनष्टि-अचिन्त्येत्यादि । अचिन्त्यः अचिन्तनीयः अद्भुतश्च प्रभावो यस्य तत् । निद्रा । निद्रा इह वैकारिकी । तन्द्रा निद्रार्त्तस्यैव विषयाग्रहणं । श्रमः आयासकृतः । अनायासकृतस्तु क्लमः । आलस्यं कर्मणि अनुत्साहः । दौर्वल्यं च । तानि अपहरति यत् तत् । अनिलादीनां साम्यकरं । स्थैर्य्यकरं दार्ढ्यकरं शरीरस्य । अवद्धमनिविड़ं मांसं हरति घनत्वापादनेन यत् तत् । अन्तरग्निसंधुक्षणं जठराग्नेरुद्दीपनं । प्रभावर्णस्वरकरं प्रभाद्युत्कर्षकरं । अनेन रसायनविधानेन च्यवनादयो महर्षयः पुनर्युवत्वं यौवनं आपुः । तथा नारीणां इष्टतमाः अतिशयेन प्रियाः वभूवुः । स्थिराणि अश्लक्ष्णानि समानि सुविभक्तानि च मांसानि येषां ते तथोक्ताः । सुसंहतं सुश्लिष्टावयवं स्थिरं दृढं च शरीरं येषां ते तथोक्ताः । सुप्रसन्नानि वलं वर्णः इन्द्रियाणि च येषां ते । सर्वत्र अप्रतिहतपराक्रमाः । सर्वक्लेशसहाश्च वभूवुः ॥ २ ॥

सर्वे शरीरदोषा भवन्ति ग्राम्यदाहारात्। अम्ललवणकटुकक्षार-शुष्कशाकमाष-तिलपललपिष्टान्नभोजिनां। विरूढनवशूकशमीधान्यविरुद्धासात्म्यरूक्षक्षाराभिष्यन्दिभोजिनां। क्लिन्नगुरुपूतिपर्युषितभोजिनां। विषमाशनाध्यशनप्रायाणां। दिवास्वप्नस्त्रीमद्यनित्यानां विषमातिमात्रव्यायामसंक्षोभितशरीराणां। भयक्रोधशोकलोभमोहायासबहुलानाम्। अतो निमित्ताद्धि शिथिलीभवन्ति मांसानि। विमुच्यन्ते सन्धयः। विदह्यते रक्तं। विष्यन्दते चानल्पं मेदः। न सन्धीयतेऽस्थिषु मज्जा। शुक्रं न प्रवर्त्तते। क्षयमुपैत्योजः। स एवंभूतो ग्लायति। सीदति। निद्रातन्द्रालस्यसमन्वितो निरुत्साहः श्वसिति। असमर्थश्चेष्टानां शारीरमानसीनां। नष्टस्मृतिबुद्धिच्छायो रोगाणामधिष्ठानभूतो न सर्वमायुरवाप्नोति। तस्मादेतान् दोषानवेक्षमाणः सर्वान् यथोक्तानहितानपास्याहारविहारान् रसायनानि प्रयोक्तुमर्हति ॥ ३ ॥

सर्वे शरीरदोषा इत्यादि। ग्रामे भवः ग्राम्यः। तस्मात् तथाविधादपथ्यप्रायादाहारात्। अष्टांगसंग्रहेतु ग्राम्यादित्यत्र प्राज्यादिति पाठः (अ० सं० उ० ४६)। प्राज्यात् प्रभूतात्। बहुभोजनस्य सर्वदोषकरत्वं। तथा अम्लः लवणः कटुकः क्षारः शुष्कशाकः माषः तिलपललं तिलचूर्णं पिष्टान्नं च। तानि भोक्तुं शीलं येषां ते तथोक्ताः। तेषां। विरूढं अंकुरितधान्यं। नवं शूकधान्यं शमीधान्यं च। विरुद्धं असात्म्यं रूक्षं च यत् अन्नं तत्। क्षारः। अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदप्राप्तिजननं यदन्नं तच्च तद्भोजिनां। क्लिन्नं क्लेदीभूतं क्लेदबहुलं। गुरु प्रकृत्या मात्रया च। पूति पर्युषितं च यदन्नं तद्भोजिनां। विषमाशनं बहु अल्पं वा यद्भुक्तं। काले अप्राप्ते अतीते वापि यद्भुक्तं। अध्यशनं प्राग्भुक्ते सावशेषे यत् पुनर्भुज्यते। तथा च ग्रहणीचिकित्सिते—विषमं बहुचाल्पं वाप्यप्राप्तातीतकालयोः। भुक्तं पूर्वान्नशेषे तु पुनरध्यशनं मतं। इति। तत्प्रायाणां प्रायेण विषमाध्यशनशीलानां। दिवास्वप्नादिनित्यानां। विषमव्यायामेन विषमाङ्गचेष्टया अतिमात्रव्यायामेन वा। व्यायामः

इत्युक्त्वा भगवान् पुनर्वसुरात्रेयः पुनरुवाच। आमलकानां सुभूमिजानां कालजानामनुपहतगन्धवर्णरसानामापूर्णरसप्रमाणवीर्याणां स्वरसेन पुनर्नवाकल्कपादसंप्रयुक्तेन सर्पिषः साधयेयेदाढकम्। अतः परं विदारीस्वरसेन जीवन्तीकल्कसंप्रयुक्तेन। अतः परं चतुर्गुणेन पयसा बलातिबलाकषायेण शतावरीकल्कसंप्रयुक्तेन। अनेन क्रमेणैकं शतपाकं सहस्रपाकं वा। शर्कराक्षौद्रचतुर्भागसंप्रयुक्तं सौवर्णे राजते मार्त्तिके वा शुचौ दृढे घृतभाविते कुम्भे स्थापयेत्। तद्द यथोक्तेन विधिना यथाग्नि प्रातः प्रातः प्रयोजयेत्। जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमश्नीयात्। अस्य प्रयोगाद्वर्षशतं वयोऽजरं तिष्ठति। श्रुतमवतिष्ठते। सर्वामयाः प्रशाम्यन्ति। अप्रतिहतगतिः स्त्रीषु। अपत्यवान् भवति ॥४॥

शरीरायासजननं कर्म्म। संक्षोभितं शरीरं येषां ते तथोक्ताः। तेषां। भयक्रोधादिबहुलानां। पापर्मणां चापि। तथाविधानां पुंसां सर्वे शरीरदोषाः। भवन्ति जायन्ते। सर्वे शरीरदोषा भवन्तीत्युक्तं। तदेव विवृत्याह—अतो निमित्तादिति। अतः एतस्मात् प्रागुक्तात् निमित्तात् ग्राम्याहारादिनिमित्तात्। रसस्याविशुद्ध्याः रक्तं विदह्यते। मांसानि शिथिलीभवन्ति। सन्धयः विमुच्यन्ते। अनल्पं बहु मेदः विष्यन्दते। अस्थिषु मज्जा न सन्धीयते। न शुक्रं प्रवर्त्तते आप्यायते। ओजश्च क्षयम् एति प्राप्नोति। ग्राम्याहारादिनिमित्तात् अविशुद्धो रसो जायते। आद्यधातोरविशुद्ध्या रक्तादिषु अन्येषु धातुषु दुष्टिर्जायते। एवंभूतः शिथिलमांसः विमुक्तसन्धिरित्यादि। एवंभूतः स पुमान् ग्लायति खिद्यते। सीदति अवसीदति। निद्रा तन्द्रालस्यैः समन्वितः। निरुत्साहश्च सन् श्वसिति। शारीरमानसीनां। चेष्टानां कर्म्मणां। असमर्थः। नष्टाः स्मृतिः बुद्धिः छाया कान्तिश्च ताः यस्य स तथोक्तः। रोगाणां अधिष्ठानभूतः आश्रयभूतः। न सर्वं पूर्णमायुः पुरुषायुषं वर्षशतं अवाप्नोति। अकाले म्रियते इत्यर्थः। तस्मात् एतान् सर्वान् दोषान् शिथिलीभूतमांसत्वादीन् अवेक्षमाणः यथोक्तान् अहितान् आहारविहारान् अपास्य वर्जयित्वा रसायनानि वक्ष्यमाणानि प्रयोक्तुमर्हति ॥ ३ ॥

भवतश्चात्र।

बृहच्छरीरं गिरिसारसारं स्थिरेन्द्रियञ्चातिबलेन्द्रियञ्च।
अधृष्यमन्यैरतिकान्तरूपं प्रशस्तपूजासुखचित्तभाक् च ॥५॥
बलं महद्वर्णविशुद्धिरग्र्या स्वरो घनौघस्तनितानुकारी।
भवत्यपत्यं विपुलं स्थिरञ्च समश्नतो योगमिमं नरस्य ॥६॥
इत्यामलकघृतम्।

इत्युक्त्वेत्यादि। आद्यं योगमाह—आमलकानामिति। सुभूमिजानां यथोक्तगुणायां भूमौ जातानां। अनुपहताः गन्धाद्यो येषां तेषां तथोक्तानां। आ सम्यक् पूर्णानि। रसः। प्रमाणमाकृतिः। वीर्य्यञ्च। तानि येषां। तथाविधानां आमलकानां स्वरसेन स्नेहात् चतुर्गुणेन। जलस्नेहौषधानां तु प्रमाणं यत्र नेरितं। तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणं ॥ इति (च० क० १२)। पुनर्नवाकल्कपादेन स्नेहचतुर्थांशमितपुनर्नवा-कल्केन सम्प्रयुक्तः। तेन तथाविधेन आमलकस्वरसेन पुनर्नवाकल्केन च सर्पिषः गव्यस्य घृतस्य आढकं साधयेत् पाचयेत्। अतः परं पुनः तत् पक्वं घृतं विदारीस्वरसेन स्नेहाच्चतुर्गुणेन जीवन्तीकल्केन स्नेहपादिकेन संप्रयुक्तं। तेन साधयेत्। अतः परं पुनः तत्स्नेहात् चतुर्गुणेन पयसा गव्येन दुग्धेन बलातिबलाकषायेण च स्नेहसमेन शतावरीकल्केन स्नेहपादिकेन सम्प्रयुक्तं। तेन साधयेत्। अनेन क्रमेण एकं एकैकं शतपाकं शतवारपाकं। एकैकस्य शतपाकेन त्रिशतधा पाको भवति। सहस्रपाकं वा। तत् घृतं शर्कराक्षौद्रयोः चतुर्भागेन चतुर्थभागेन सम्प्रयुक्तं घृतचतुर्थांशमितशर्करा-क्षौद्राभ्यां युक्तं कृत्वा। सौवर्णे राजते मार्त्तिके मृन्मये वा शुचौ दृढे घृतभाविते कुम्भे स्थापयेत्। सौवर्णादिपात्रेषु यथापूर्वं गुणोत्कर्षः। तत् घृतं यथोक्तेन कुटी-प्रावेशिकेन विधिना प्रयुञ्जानः पुमान्। स्त्रीषु बह्वीषु अप्रतिहतगतिः अव्याहतमैथुनः भवति ॥ ४ ॥

भवतश्चात्रेति। बृहदिति। इमं रसायनं समश्नतो नरस्य शरीरं बृहत् गिरिसारसारं। गिरिसारो लौहः। स्थिरेन्द्रियं। अतिबलेन्द्रियं। च अन्यैरधृष्यं प्रशस्तानि पूजासुखं चित्तं च। तानि भजते यत् तत् एवंविधं भवति। तस्य नरस्य महत् बलं। अग्र्या श्रेष्ठा वर्णस्य विशुद्धिः। स्वरः। घनौघस्य घनघटायाः स्तनितं शब्दं। तदनुकरोति यः स तथोक्तः। अपत्यं विपुलं महत् स्थिरं दृढं दीर्घायुर्वा भवति ॥ ५।६ ॥ इति आद्यो योगः ॥

आमलकसहस्रं पिप्पलीसहस्रसंप्रयुक्तं पलाशतरुभस्मनः क्षारोदकोत्तरं तिष्ठेत्। तदनुगतक्षारोदकमनातपशुष्कमनस्थि चूर्णीकृतं चतुर्गुणाभ्यां मधुसर्पिर्भ्यां सन्नीय शर्कराचूर्णचतुर्भागसम्प्रयुक्तं घृतभाजनस्थं षण्मासान् स्थापयेदन्तर्भूमेः। तस्योत्तरकालमग्निबलसमां मात्रां खादेत्। पौर्वाह्णिकः प्रयोगः। नापराह्णिकः। सात्म्यापेक्षश्चाहारविधिः। अस्य प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समं पूर्वेण ॥ ७ ॥ इत्यामलकावलेहः।

आमलकचूर्णाढकमेकविंशतिरात्रमामलकसहस्रस्वरसपरिपीतं मधुघृताढकाभ्यां द्वाभ्यामेकीकृतमष्टभागपिप्पलीकं शर्कराचूर्ण-

द्वितीयं योगमाह—आमलकसहस्रमित्यादि। आमलकानां सहस्रं आमलकसहस्रं। पिप्पलीनां सहस्रेण संप्रयुक्तं संयुक्तं। पलाशतरुभस्मनः पलाशक्षारस्य। क्षारार्थं तरुणः पलाशतरुर्ग्राह्यः। तरुणपलाशक्षारोदकेनाप्लाव्येति वृद्धवाग्भटवचनात् (अ० सं० उ० ४६)। तरुणपलाश इति असंजातफलः। किन्तु प्राप्तयौवनः पलाशतरुः। न तु शिशुस्तरुः। शिशौ गुणसम्पत्तेरजननात्, वृद्धे च गुणक्षयसंभवात् तरुण इति। क्षारोदकोत्तरं कृत्वा तिष्ठेत्। क्षारोदकेन आप्लाव्य शुचौ भाण्डे स्थापयेत्। ततः अनुगतक्षारोदकं तत् पिप्पलीसहस्रयुक्तं आमलकसहस्रं अनातपे छायायां शुष्कं अनस्थि अस्थिरहितं कृत्वा चूर्णीकृतं। तत्सर्वं यावत्परिमाणं भवति ततश्चतुर्गुणाभ्यां मधुसर्पिर्भ्यां घृतमाक्षिकाभ्यां मिलिताभ्यां सन्नीय मिश्रयित्वा शर्करायाः चतुर्भागेन पादेन संप्रयुक्तं तत् चतुर्थांशमितशर्करया संयुक्तं कृत्वा घृतभाजनस्थं भूमेः अन्तः षण्मासान् स्थापयेत्। उत्तरकालं ततः परं उद्धृत्य तस्य अग्निबलसमां मात्रां खादेत्। प्रयोगः पौर्वाह्णिकः। न तु आपराह्णिकः। प्रातरेव यथाग्निबलं मात्रामुपयुञ्जीत। तस्मिन् जीर्णे च सात्म्यापेक्षः आहारविधिः सात्म्यमन्नमश्नीयात्। अस्य रसायनस्य प्रयोगात् वयः वर्षशतं अजरं तिष्ठति। अनुक्तफलसंग्रहार्थमाह—समानं पूर्वेणेति। पूर्वयोगफलवत् इहापि सर्वं बोद्धव्यं ॥ ७ ॥ इति द्वितीयो योगः ॥

चतुर्भागसंप्रयुक्तं घृतभाजनस्थं प्रावृषि भस्मराशौ निदध्यात्। तद्वर्षान्ते सात्म्यपथ्याशी प्रयोजयेत्॥ अस्य प्रयोगाद्वर्षशतमजरमायुस्तिष्ठतीति समानं पूर्वेण ॥ ८ ॥ इत्यामलकचूर्णम्।

विडङ्गतण्डुलचूर्णानामाढकमाढकं पिप्पलीतण्डुलानामध्यर्द्धाढकं सितोपलायाः सर्पिस्तैलमध्वाढकैः षड्भिरेकीकृतं घृतभाजनस्थं प्रावृषि भस्मराशाविति सर्वं समानं पूर्वेण ॥९ ॥

इति विडङ्गावलेहः।

यथोक्तगुणानामामलकानां सहस्रमार्द्रपलाशद्रोण्यां सपिधानायां बाष्पमनुद्वमन्त्यामारण्यगोमयाग्निभिरुपस्वेदयेत्। तानि

तृतीयं योगमाह—आमलकचूर्णाढकमित्यादि। आमलकचूर्णानां आढकं एकविंशतिरात्रं आमलकसहस्रस्य स्वरसेन परिपीतं परिभावितं कृत्वा। मिलितयोः मधुघृतयोराढकाभ्यां द्वाभ्यां। मधुघृतयोः समयोरपि इह द्रव्यान्तरयुक्तत्वेनाविरोधः। एकीकृतं मिश्रितं। अष्टभागमिताः पिप्पल्यो यत्र तत् अष्टभागपिप्पलीकं। आमलकचूर्णस्य अष्टमभागपरिमितेन पिप्पलीचूर्णेन युक्तं। शर्कराचूर्णस्य चतुर्भागेन चतुर्थभागेन सम्प्रयुक्तं आमलकचूर्णपादिकेन शर्कराचूर्णेन युक्तं घृतभाजनस्थं प्रावृषि वर्षासु भस्मराशौ करीषभस्मराशेरभ्यन्तरे स्थापयेत गृहात् बहिः। येन तदुपरि वारिवर्षणं स्यात्। चतुरोमासानित्थं संस्थाप्य वर्षान्ते च तदुद्धृत्य सात्म्यपथ्याशी सात्म्यं पथ्यमश्नन् प्रयोजयेत् अग्निबलापेक्षिण्या मात्रया ॥ ८ ॥ इति तृतीयो योगः ॥

चतुर्थं योगमाह—विडङ्गेत्यादि। विडङ्गतण्डुलानां विडङ्गानि उदूखले किञ्चिदाहत्य तण्डुलीकृतानि। तेषां आढकमेकं। पिप्पलीतण्डुलानां आढकमेकं। सितोपलायाः शर्करायाः। अध्यर्द्धं अधिकार्द्धं। सार्धमित्यर्थः। आढकमेकं। तेन शर्करायाः सार्द्धमाढकं। तत् सर्वं सर्पिस्तैलमधूनां आढकैः षड्भिः। सर्पिरादीनां एकैकस्य आढकद्वयं। एकीकृतं घृतभाजनस्थं पूर्वयोगवत् प्रावृषि भस्मराशौ निदध्यात्। वर्षान्ते च तदुद्धृत्य सात्म्यपथ्याशी प्रयोजयेत्॥ ९ ॥ इति चतुर्थो योगः ॥

सुस्विन्नशीतान्युद्धृतकुलकान्यापोथ्याढकेन पिप्पलीचूर्णाना-माढकेन च विडंगतण्डुलचूर्णानामध्यर्धेन चाढकेन शर्कराचूर्णानां द्वाभ्यां द्वाभ्यामाढकाभ्यां तैलस्य मधुनः सर्पिषश्च संयोज्य शुचौ दृढे घृतभाविते कुम्भे स्थापयेदेकविंशतिरात्रम् । अत ऊर्ध्वं प्रयोगः ॥ अस्य प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समं पूर्वेण ॥ १० ॥ इत्यामलकावलेहोऽपरः ॥

धन्वनि कुशास्तीर्णे स्निग्धकृष्णमधुरमृत्तिके सुवर्णवर्णमृत्तिके वा व्यपगतविषश्वापदपवनसलिलाग्निदोषे कर्षणवल्मीकश्मशानचैत्योषरावसथवर्जिते देशे यथर्त्तु सुखपवनसलिलादित्यसेविते जातान्यनुपहतान्यनध्यारूढान्यबालान्यजीर्णान्यविगतवीर्य्याणि शीर्ण-पुराण-पर्णान्यसञ्जातफलानि तपसि तप-

पञ्चमं योगमाह—यथोक्तगुणानामित्यादि । यथोक्तगुणानां आमलकानां सहस्रं आर्द्रपलाशद्रोण्यां अशुष्कपलाशकाष्ठमयद्रोण्यां सपिधानायां मुखाच्छादनसहितायां । अत एव वाष्पं अनुद्वमन्त्यां । तथाविधायां आर्द्रपलाशद्रोण्यां आमलकसहस्रं आरण्यगोमयाग्निभिः उपस्वेदयेत् स्विन्नं कारयेत् । तानि सहस्रमामलकानि सुस्विन्नशीतानि सम्यक् स्वेदयित्वा शीतीकृतानि उद्धृतकुलकानि निरस्थीकृतानि आपोथ्य संक्षुद्य पिप्पलीचूर्णानां आढकेन विड़ङ्गतण्डुलचूर्णानां आढकेन शर्कराचूर्णानां अध्यर्द्धेन सार्द्धेन आढकेन तैलस्य मधुनः सर्पिषश्च एकैकस्य द्वाभ्यां द्वाभ्यां आढकाभ्यां च संयोज्य शुचौ दृढे घृतभाविते कुम्भे एकविंशतिरात्रं स्थापयेत् । अत ऊर्द्ध्वं प्रयोजयेत् ॥ १० ॥ इति पञ्चमो योगः ॥

अथ षष्ठो योगः । यद्विधे देशे जातमौषधं यस्मिन् काले यथा च ग्राह्यं आदौ तदाह—धन्वनीति । कुशैरास्तीर्णे व्याप्ते । स्निग्धा कृष्णा मधुरा च मृत्तिका यत्र तस्मिन् सुवर्णवर्णा मृत्तिका यत्र तस्मिन् वा । व्यपगतविषश्वापदादिदोषे । कर्षणं हलादिना । वल्मीकः वामलूरः । श्मशानं । चैत्यः देवायतनं । ऊषरः क्षारभूमिः । आवसथं गृहं च । तैः वर्जिते विरहिते । यथर्त्तु यथाकालं सुखैः सुखकरैः पवनसलिलादित्यैः वातातपसलिलैः सेवि-

स्ये वा मासे शुचिः प्रयतः कृतदेवार्च्चनः स्वस्ति वाचयित्वा द्विजातीन् सुमुहूर्त्ते नागबलामूलान्युद्धरेत्। तेषां सुप्रक्षालितानां त्वक्पिण्डमाम्रमात्रमक्षमात्रं वा श्लक्ष्णपिष्टमालोड्य पयसा प्रातः प्रातः प्रयोजयेत्। चूर्णीकृतानि वा पिबेत् पयसा। मधुसर्पिर्भ्यां वा संयोज्य भक्षयेत्। जीर्णे च पयसा ससर्पिष्कं शालिषष्टिकमश्नीयात्॥ संवत्सरप्रयोगादस्य वर्षशतमजरं वयस्तिष्ठतीति सर्वं समानं पूर्वेण ॥११॥ इति नागबलारसायनम्।

बलातिबलाचन्दनागुरुधवतिनिशखदिरशिंशपासनसुरसाः पुनर्नवान्ताश्चौषधयो दश या वयःस्थापना व्याख्यातास्तासां स्वरसा नागबलावत् ॥ १२ ॥

ते। एवंभूते धन्वनि जांगले देशे जातानि। अनुपहतानि कीटादिभिरजग्धानि। अनुपहतगन्धवर्णरसादीनि वा। अनध्यारूढानि न पार्श्वस्थेन महता वृक्षेण आक्रान्तानि। अबालानि न अतिनवानि। अजीर्णानि नातिपुरातनानि। बालेषु गुणसम्पत्तेरजननात्। अतिपुरातनेषु च गुणक्षयसंभवात्। अविगतवीर्याणि। शीर्णानि विगलितानि पुराणपर्णानि वृक्षसम्बन्धीनि येषां तानि शीर्णपुराणपर्णानि। किन्तु असंजातनूतनपर्णानि। असंजातफलानि च। एवंविधानि नागबलामूलानि तपसि माघे तपस्ये फाल्गुने वा मासि। शुचिः प्रयतः कृतदेवार्चनः। द्विजातीन् स्वस्ति वाचयित्वा। सुमुहूर्त्ते शुभे मुहूर्त्ते नागबलाया मूलानि उद्धरेत् भिषक्। तेषां नागबलामूलानां सुप्रक्षालितानां त्वक्पिण्डं त्वचं पिष्ट्वा पिण्डीकृत्य श्लक्ष्णपिष्टं तत्। आम्रमात्रं पलप्रमाणं। अक्षमात्रं कर्षमात्रं वा। श्लक्ष्णपिष्टं सुपिष्टं पयसा गोदुग्धेन आलोड्य प्रातः प्रातः प्रयोजयेत्। तानि नागबलामूलानि चूर्णीकृतानि पयसा वा पिबेत्। मधुसर्पिर्भ्यां संयोज्य वा भक्षयेत् लिहात्। तस्मिन् जीर्णे च पयसा ससर्पिष्कं शालिषष्टिकमन्नं अश्नीयात्॥ ११॥ इति षष्ठो योगः॥

नागबलाविधिमुक्त्वा तं बलातिबलादिष्वतिदिशति—बलातिबलेत्यादि। असनस्तदाख्यः शालभेदः। बलादिसुरसान्ताः दश ओषधयः प्राक् षड्विरेचनशती-

स्वरसानामलाभे त्वयं स्वरसविधिः। चूर्णानामाढ़कम्। आढकमुदकस्य। अहोरात्रस्थितं मृदितपूतं स्वरसवत् प्रयोज्यम् ॥१३॥

भल्लातकान्यनुपहतान्यनामयान्यापूर्णरसप्रमाणवीर्य्याणि पक्वजाम्बवप्रकाशानि शुचौ शुक्रे वा मासे संगृह्य यवपल्ले माषपल्ले वा निधापयेत्। तानि चतुर्म्मासस्थितानि सहसि सहस्ये वा मासे प्रयोक्तुमारभेत शीतस्निग्धमधुरोपस्कृत शरीरः॥ १४ ॥

ये वयः स्थापना उक्ताः। अमृताभयाधात्रीमुक्ताश्रेयसीजीवन्त्यतिरसामण्डूकपर्णीस्थिरापुनर्नवा इति अमृतादिपुनर्नवान्ता दश ओषधयश्च। नागबलया व्याख्याताः नागबलावत् तेषामपि प्रयोगः कार्यः। अन्यासामप्योषधीनां नागबलावत् प्रयोगमाह वृद्धवाग्भटः। तथाच — विदारीश्वदंष्ट्राश्वगन्धावाराहीशतावर्य्यश्चापि नागबलया व्याख्याताः इति। ( उ० ४१ )॥

तेषां स्वरसविधानं सप्तमं योगमाह—नासमिति। तेषां बलादीनां स्वरसाः प्रयोज्याः। स्वरसः—यन्त्रनिष्पीडिताद् द्रव्याद् रसः स्वरस उच्यते। इति। नागबलावदिति। नागबलावत् भोजनादिकं ज्ञेयं। इति सप्तमो योगः॥ १२ ॥

स्वरसालाभे अनुकल्पमाह—स्वरसानामलाभे इति। आर्द्रासम्भवे शुष्काणां चूर्णानां चूर्णीकृतानां आढकं उदकस्य च आढकं अहोरात्रस्थितं मृदितपूतं आदौ मर्द्दितं पश्चात् पूतं वस्त्रेण गालितं कृत्वा तत् स्वरसवत् प्रयोज्यं। सारवृक्षाणां तु सारशकलानि द्व्यङ्गुलत्र्यङ्गुलानि चतुर्गुणाम्भसा आप्लाव्य आतपे दिनत्रयं स्थापयेत्। ततस्तान्युद्धृत्य अन्यानि तत्र प्रक्षिपेत्। त्रिरात्रात् परं पुनरन्यानि। एवं नवरात्रेण त्रिः प्रक्षेपेण उद्धारेण च स्वरसः परिकल्पितो भवति॥ १३ ॥

अथभल्लातकविधिः। तत्रादौ भल्लातकसंग्रहविधिमाह—भल्लातकानीति। अनुपहतानि अनुपहतगन्धवर्णरसादीनि। अनामयानि कीटादिभिरजग्धानि पक्वजाम्बवप्रकाशानि पक्वजम्बूफलतुल्यानि कृष्णानि। एवंविधानि भल्लातकानि शुचौ ज्यैष्ठे शुक्रे आषाढ़े वा मासे संगृह्य। यवपल्ले यवराशौ माषपल्ले माषराशौ वा। निधापयेत् स्थापयेत्। तानि चतुर्मासस्थितानि। ज्यैष्ठे स्थापितानि आश्विने उद्धरेत्। आषाढ़े स्थापितानि

पूर्वं दश भल्लातकान्यापोथ्याष्टगुणेनाम्भसा साधु साधयेत्। तेषां रसमष्टभागावशेषं पूतं सपयस्कं पिबेत् सर्पिषान्तर्मुखमभ्यज्य। तान्येकैकभल्लातकोत्कर्षापकर्षेण दश भल्लातकान्यात्रिंशतः प्रयोज्यानि। नातः परमुत्कर्षः। प्रयोगविधानेन सहस्रपर एव भल्लातकप्रयोगः। जीर्णे च सर्पिषा पयसा शालिषष्टिकाशनमुपचारः। प्रयोगान्ते च द्विस्तावत् पयसैवोपचारः। तत्प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण॥ १५॥ इति भल्लातकक्षीरम्॥

च कार्त्तिके। उद्धृत्य च रक्षेत्। न तु उद्धृत्यैव प्रयोजयेत्। प्रयोगस्तु शीतले एव काले। शीतगुणयुक्ते च शरीरे। तदेवाह—सहे इति। सहे मार्गशीर्षे। सहस्ये पौषे वा मासि प्रयोक्तुमारभेत। आश्विने उद्धृतानि यानि तानि मार्गशीर्षे प्रयोजयेत्। कार्त्तिकोद्धृतानि च पौषे। तानि भल्लातकानि यथा प्रयोज्यानि तदाह—शीतस्निग्धेत्यादि। शीतस्निग्धमधुरैः उपस्कृतशरीरः सन्॥ १४॥

भल्लातकक्षीरमाह—पूर्वमिति। पूर्वं प्रथमं दश भल्लातकानि आपोथ्य संक्षुद्य ततोऽष्टगुणेन अम्भसा साधु साधयेत् सम्यक् पचेत्। तेषां रसं क्वाथं अष्टभागावशिष्टं पूतं वस्त्रेण गालितं अनुष्णं सपयस्कं पयसा सह सर्पिषा मुखमन्तः अभ्यज्य दाहपरिहारार्थं सर्पिर्गण्डूषाभ्यक्तोष्ठतालुजिह्वः सन् पिबेत्। तानि दश भल्लातकानि एकैकस्य उत्कर्षेण वृद्ध्या अपकर्षेण ह्रासेन च आ त्रिंशतः त्रिंशत्पर्यन्तानि प्रयोज्यानि। उत्कर्षेण त्रिंशत्। ततः अपकर्षः। यथा चात्र क्वाथ्यानां भल्लातकानां परिवृद्धिः तथा क्वाथोदकस्यापि वृद्धिः बुद्ध्या परिकल्पनीया। न अतः परं त्रिंशतः ऊर्ध्वं उत्कर्षः कार्यः। प्रयोगविधानेन अनेन विधिना सहस्रपर एव प्रयोगः। तथा च प्रथमं दश भल्लातकानि संक्षुद्य अष्टगुणेन सलिलेन क्वाथं कृत्वा अष्टभागावशिष्टं सदुग्धं सर्पिषा अभ्यक्ततालुजिह्वोष्ठः सन् पिबेत्। ततः प्रतिदिनं एकैकं भल्लातकं वर्द्धयेत् यावत् त्रिंशत्। त्रिंशत्प्राप्तौ तु सप्तरात्रं त्रिंशत्प्रयोगः कार्यः। ततः प्रति-

१५। सहस्रपर एव भल्लातकप्रयोगः इति न पठ्यते ग पुस्तके।

भल्लातकानां जर्ज्जरीकृतानां पिष्टस्वेदनं पूरयित्वा भूमावाकण्ठं निखातस्य स्नेहभावितस्य दृढ़स्योपरि कुम्भस्यारोप्योडुपेन पिधाय कृष्णमृत्तिकावलिप्तं गोमयाग्निभिरुपस्वेदयेत्। तेषां यः स्वरसः कुम्भं प्रपद्यते तमष्टभागमधुसम्प्रयुक्तं द्विगुणघृतमद्यात्। तत्प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण ॥ १६ ॥ इति भल्लातकक्षौद्रम् ॥

दिनमेकैकमपकर्षयेत् यावत् दश। पुनरन्यस्मिन्नपि दिने दश। एवं कृत्वा हि सहस्रप्रयोगो घटते। सुश्रुते अर्शश्चिकित्सिते च—भल्लातकानि परिपक्कानि अनुपहतान्याहृत्य तत एकमादाय द्विधा त्रिधा चतुर्धा वा स्वेदयित्वा कषायकल्पेन विपाच्य तस्य कषायस्य शुक्तिमनुष्णं घृताभ्यक्तताल्वुजिह्वोष्ठः प्रातः प्रातरुपसेवेत। ततोऽपराह्णे क्षीरं सर्पिरोदन इत्याहारः। एवमेकैकं वर्द्धयेद् यावत् पञ्चेति। ततः पञ्च पञ्चाभिवर्धयेत् यावत्सप्ततिरिति। प्राप्य च सप्ततिमपकर्षयेद् भूयः पञ्च पञ्च यावत पञ्चेति। पञ्चभ्यश्चैकैकं यावदेकमिति। एवं भल्लातकसहस्रमुपयुज्य सर्वकुष्ठार्शोभिर्विमुक्तो बलवानरोगः शतायुर्भवति। इति। द्विरिति। द्विः द्विगुणः कालः। समानं पूर्वेणेति अन्यत् सर्वं पूर्ववत् ज्ञेयं ॥ १५ ॥

भल्लातकक्षौद्रमाह—भल्लातकानामिति। भल्लातकानां जर्ज्जरीकृतानां भल्लातकानि जर्जरीकृत्य। तैः। पिष्टस्वेदनं पिष्टं स्विद्यते अस्मिन् इति पिष्टस्वेदनं यन्त्रस्य पिष्टं स्विद्यते। पिष्टस्वेदनं भाण्डं पूरयित्वा तत् भूमौ आकण्ठं निखातस्य स्नेहभावितस्य दृढस्य कुम्भस्य उपरि आरोप्य। तत् उडुपेन पिधानेन पिधाय आच्छाद्य कृष्णमृत्तिकया अवलिप्तं कृत्वा। गोमयाग्निभिः उपस्वेदयेत्। तेषां भल्लातकानां यः स्वरसः कुम्भं प्रपद्यते तं कुम्भस्थं स्वरसं अष्टभागमधुसंप्रयुक्तं तदष्टमभागमितक्षौद्रेण संयुक्तं द्विगुणघृतं च कृत्वा अद्यात् भक्षयेत् ॥ १६ ॥

१६। अयं प्रबन्धः न पठ्यते ट पुस्तके।

भल्लातकतैलपात्रं सपयस्कं मधुकेन कल्केनाक्षमात्रेण शतपाकं कुर्य्यादिति समानं पूर्वेण ॥ १७ ॥ इति भल्लातकतैलम् ।

एवं गुड़भल्लातकं भल्लातकयूषो भल्लातकसर्पिर्भल्लातकपललं भल्लातकसक्तवो भल्लातकलवणं भल्लातकतर्पणमिति भल्लातकविधानमुक्तम् ॥ १८ ॥

भवन्ति चात्र ।

भल्लातकानि तीक्ष्णानि पाकीन्यग्निसमानि च ।
भवन्त्यमृतकल्पानि प्रयुक्तानि यथाविधि ॥ १९ ॥

भल्लातकतैलमाह—भल्लातकतैलपात्रमिति । भल्लातकानां तैलं निष्पाद्य तस्य पात्रमाढकं सपयस्कं सदुग्धं चतुर्गुणेन दुग्धेन मधुकेन कल्केन यष्टिमधुकल्केन अक्षमात्रेण कर्षप्रमाणेन शतपाकं कुर्यात् ॥ १७ ॥

भल्लातकानां क्षीरादिभिः योगत्रयमुक्त्वा गुडादिभिः पुनरन्यान् सप्त योगान् दर्शयति—एवमिति । एवं भल्लातकक्षीरादिवत् गुडभल्लातकं भल्लातकयूषः भल्लातकसर्पिः भल्लातकपललं भल्लातकसक्तवः भल्लातकलवणं भल्लातकतर्पणमिति सप्त योगा भवन्ति । पललं तिलचूर्णं । सक्तवो यवसक्तवः । अत्र च यथायोग्यतया भल्लातकगुडादीनां संयोगः संस्कारश्च ज्ञेयः । यदुक्तं जतूकर्णे—भल्लातकसंयुक्तसंस्कृतानि च घृतक्षीरक्षौद्रगुडपिष्टयूपतैलसक्तुलवणतर्पणानि । इति । अत्र च गुडयूपसर्पिर्लवणानां भल्लातकेन यथाविधि संस्कारः । सक्तुपललतर्पणानाञ्च संयोगः । लवणसंस्कारपक्षे लवणसमं भल्लातकमन्तर्धूमदग्धं ग्राह्यं । गुडादीनां सर्वेषामेव भल्लातकेन संस्कारः इत्यन्ये ॥ १८ ॥

भवन्ति चात्रेति । भल्लातकानि । तीक्ष्णानि । पाकीनि पक्वानि । पाककराणि वा । अग्निसमानि अग्नितुल्यानि दाहस्फोटककर्तृत्वात् । तानि पुनः यथाविधि प्रयुक्तानि चेत् अमृतकल्पानि भवन्ति ॥ १९ ॥

एते दशविधास्त्वेषां प्रयोगाः परिकीर्त्तिताः ।
रोगप्रकृतिसात्म्यज्ञस्तान् प्रयोगान् प्रकल्पयेत् ॥ २० ॥

कफजो न स रोगोऽस्ति न विबन्धोऽस्ति कश्चन ।
यं न भल्लातकं हन्याच्छीघ्रं मेधाग्निवर्द्धनम् ॥ २१ ॥

इति भल्लातकविधिः ॥

प्राणकामाः पुरा जीर्णाश्च्यवनाद्या महर्षयः ।
रसायनैः शिवैरेतैर्बभूवुरमितायुषः ॥ २२ ॥

ज्ञानं तपो ब्रह्मचर्य्यमध्यात्म्यं ध्यानमेव च ।
दीर्घायुषो यथाकामं संभृत्य त्रिदिवं गताः ॥ २३ ॥

तस्मादायुःप्रकर्षार्थं प्राणकामैः सुखार्थिभिः ।
रसायनविधिः सेव्यो विधिवत् सुसमाहितैः ॥ २४ ॥

एते इति । एषां भल्लातकानां एते दशविधाः क्षीरादिभिः त्रयः गुडादिभिश्च सप्त इति दशविधाः प्रयोगाः परिकीर्त्तिताः । रोगप्रकृतिसात्म्यज्ञो भिषक् । योगेत्यादि परीक्षणीयानामुपलक्षणं । तान् प्रयोगान् प्रकल्पयेत् प्रकृतिसत्त्वसात्म्यादीन् पर्यालोच्य ॥२०॥

कफज इति । यं कफजं श्लेष्मजरोगं विबन्धञ्च । भल्लातकं कर्त्तृ न शीघ्रं हन्यात् । न तादृशः कफजः रोगः न वा तथाविधः कश्चन विबन्धः अस्ति । तच्च भल्लातकं मेधाग्निवर्द्धनं मेधायाः अग्नेश्च वर्द्धनं । अग्निवर्द्धनत्वात् तत् सर्वान् कफजरोगान् विबन्धांश्च शीघ्रमुपशमयति । मेधाग्निवर्द्धनमित्यत्र अग्निबलप्रदमिति वृद्धवाग्भटधृतः पाठः । भल्लातकविधिमुपसंहरति—इतीति ॥ २१ ॥

प्राणकामा इति । पुरा प्राणकामाः जीर्णाः जरायुक्ताः वृद्धाः च्यवनादयो महर्षयः शिवैः शुभैः एतैः रसायनैः अमितायुषो दीर्घायुषो बभूवुः । ते दीर्घायुषः सन्तः ज्ञानं तपः ब्रह्मचर्यं अध्यात्म्यं ध्यानं च यथाकामं संभृत्य निष्पाद्य त्रिदिवं स्वर्गं गताः ॥ २२ । २३ ॥

तत्र श्लोकः ।

रसायनानां संयोगाः सिद्धा भूतहितैषिणा ।
निर्दिष्टाः प्राणकामीये सप्त चैवं दशर्षिणा ॥ २५ ॥

इति चिकित्सिते प्राणकामीयो रसायनपादो द्वितीयः ।

तृतीयः पादः ।

अथातः करप्रचितीयं रसायनपादं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ॥ १ ॥

करप्रचितानां यथोक्तगुणानामामलकानामुद्धृतास्थ्नां शुष्कचूर्णितानां माघे फाल्गुने वा मासे त्रिःसप्तकृत्वः स्वरसपरिपीतानां पुनः शुष्कचूर्णीकृतानामाढ़कमेकं ग्राहयेत् । अथ जीव-

तस्मादिति । तस्मात् प्राणकामैः सुखार्थिभिः अन्यैरपि सुखमाहितैः सद्भिः आयुःप्रकर्षार्थं रसायनविधिः विधिवत् यथाविधि सेव्यः ॥ २४ ॥

द्वितीयपादार्थसंग्रहमाह—तत्र श्लोक इति । सर्वभूतहितैषिणा ऋषिणा भगवता पुनर्वसुना आत्रेयेण अस्मिन् प्राणकामीये द्वितीये रसायनपादे एवं सिद्धा निश्चितफलाः सप्त दश च सप्तदश रसायनानां संयोगाः प्रयोगाः निर्दिष्टाः उक्ताः ॥ २५ ॥

इति चरकोपस्कारे चिकित्सितस्थाने
प्रथमेऽध्याये द्वितीयः पादः ॥

अथ करप्रचितीयं तृतीयं रसायनपादमारभते—अथात इति ॥ १ ॥

तत्राद्यं योगमाह—करप्रचितानां इत्यादि । माघे फाल्गुने वा मासि करेण प्रचितानि शाखाभ्यः गृहीतानि करप्रचितानि तेषां । अनेन स्वयं पतितानां आमलकानां ग्रहणं प्रतिषिध्यते । उद्धृतास्थ्नां । आदौ शुष्काणि पश्चात् चूर्णितानि तेषां शुष्कचूर्णितानां । त्रिःसप्तकृत्वः एकविंशतिवारान् स्वरसपरिपीतानां स्वरसभावितानां । स्वरस इह आमलकस्यैव अधिकारात् । पुनः शुष्कचूर्णीकृतानां । तथाविधानामामलकानां एकमाढकं ग्राहयेत् । अथ षड्विरेचनशतीयोक्तानां श्लोकस्थाने षड्विरेचनशतीये अध्याये प्रागुक्तानां जीवनीयानां जीवकादिमधुकान्तानां । बृंहणी-

नीयानां बृंहणीयानां स्तन्यजननानां शुक्रवर्द्धनानां वयःस्थापनानां च षड्विरेचनशतीयोक्तानामौषधगणानां चन्दनागुरुधवखदिरशिंशपासनसाराणां च खण्डशः कृत्तानामभयाविभीतकपिप्पलीवचाचव्यचित्रकविडङ्गानाञ्च समस्तानामाढ़कमेकं दशगुणेनाम्भसा साधयेत्। तस्मिन्नाढ़कावशेषे रसे सुपूते तान्यामलकचूर्णानि दत्त्वा गोमयाग्निभिर्वंशविदलशरतेजनाग्निभिर्वा साधयेत्। यावदपनयाद्रसस्य। तमनुपदग्धमुपहृत्यायसीषु पात्रीष्वास्तीर्य्य शोषयेत्। सुशुष्कं तत् कृष्णाजिनस्योपरि दृशदि श्लक्ष्णपिष्टमयःस्थाल्यां निधापयेत् सम्यक्। तच्चूर्णमयश्चूर्णाष्टभागसम्प्रयुक्तं मधुसर्पिर्भ्यामग्निबलमभिसमीक्ष्य प्रयोजयेदिति ॥ २ ॥

यानां क्षीरिण्याद्यश्वगन्धान्तानां। शुक्रजननानां वीरणादिकत्तृणमूलान्तानां। शुक्रवर्द्धनानां शुक्रजननानां जीवकादिकुलिङ्गान्तानां वयःस्थापनानां। अमृतादिपुनर्नवान्तानां। औषधगणानां। तथा खण्डशः कृत्तानां शकलीकृतानां छिन्नानां चन्दनादीनामसनान्तानां षण्णां साराणां। तथा अभयादिविडंगान्तानां सप्तानां। एतेषां सप्तानां सर्वेषां मिलितानां एकमाढकं दशगुणेन अम्भसा दशाढकमितेन जलेन साधयेत्। तस्मिन् रसे क्वाथे आढकावशेषे सुपूते सम्यक् परिस्रावित तत्र तानि आमलकचूर्णानि दत्त्वा गोमयाग्निभिः। वंशविदलः। शरः। तेजनः तृणभेदः। तदग्निभिर्वा साधयेत् रसस्य क्वाथस्य अपनयात् यावत् यावत् क्वाथः शुष्यते तावत् साधयेत्। ततः तं अनुपदग्धं किञ्चिदार्द्रत्वेनावशिष्टं उपहृत्य अवतार्य आयसीषु पात्रीषु लौहभाजनेषु आस्तीर्य विकीर्य शोषयेत्। सुशुष्कं तत् कृष्णाजिनस्य कृष्णसारचर्मणः उपरि दृशदि शिलायां श्लक्ष्णपिष्टं अयःस्थाल्यां लौहस्थाल्यां सम्यक् निधापयेत् स्थापयेत्। तत् चूर्णं अयश्चूर्णाष्टभागसंप्रयुक्तं तदष्टमभागमितलौहचूर्णसंयुक्तं कृत्वा मधुसर्पिर्भ्यां अग्निबलमभिसमीक्ष्य अग्निबलापेक्षया मात्रया प्रयोजयेत् ॥२॥

१। तस्मिन्नाढकावशेषे रसे सुपूते · साधयेत् इति सन्दर्भः न पठ्यते ङ पुस्तके।

तत्र श्लोकाः ।

एतद्रसायनं पूर्वं वसिष्ठः कश्यपोऽङ्गिराः ।
जमदग्निर्भरद्वाजो भृगुर्वान्यश्च तद्विधाः ॥ ३ ॥
प्रयुज्य प्रयता मुक्ता श्रमव्याधिजराभयात् ।
यावदैच्छंस्तपस्तेपुस्तत्प्रभावान्महाबलाः ॥ ४ ॥
इदं रसायनं चक्रे ब्रह्मा वार्षसहस्रिकम् ।
जराव्याधिप्रशमनं बुद्धीन्द्रियबलप्रदम् ॥ ५ ॥
तपसा ब्रह्मचर्येण ध्यानेन प्रशमेन च ।
रसायनविधानेन कालयुक्तेन चायुषा ॥ ६ ॥
स्थिता महर्षयः पूर्वं न हि किञ्चिद्रसायनम् ।
ग्राम्याणामन्यकार्य्याणां सिध्यत्यप्रयतात्मनाम् ॥१॥७॥
इत्यामलकायसं ब्राह्मरसायनम् ।

तत्र श्लोका इति । पूर्वं पुरा वसिष्ठादयः तद्विधाश्चान्येऽपि महर्षयः प्रयताः संयतात्मानः सन्तः एतत् उक्तं रसायनं प्रयुज्य श्रमव्याधिजराभयात् मुक्ता बभूवुः । तस्य रसायनस्य प्रभावात् ते महाबलाः सन्तः यावत् ऐच्छन् यथाकामं तपः तेपुः ॥ ३ । ४ ॥

इदमिति । ब्रह्मा वार्षसहस्रिकं वर्षसहस्रायुःप्रदं जराव्याधिप्रशमनं बुद्धीन्द्रियबलप्रदं इदं रसायनं चक्रे ॥ ५ ॥

सम्प्रति रसायनस्य तपोब्रह्मचर्यादियुक्तस्यैव महाफलत्वमिति दर्शयति--तपसेति । पूर्वं महर्षयः तपसा ब्रह्मचर्येण प्रशमेन प्रशान्त्या तपःप्रभृतिसहकृतेन विधिना हेतुना कालयुक्तेन दीर्घकालयुक्तेन आयुषा उपलक्षिताः स्थिताः । तपःप्रभृतिविरहे रसायनस्याफलत्वमाह--न हि किञ्चिदिति । ग्राम्याणां । अन्यानि तपःप्रभृतिव्यतिरिक्तानि कार्याणि येषां तेषामन्यकार्याणां अन्यकर्मणि रतानां । अप्रयतात्मनां असंयतात्मनां तथाविधानां पुंसां किञ्चित् रसायनं न हि नैव सिध्यति ॥ ६ । ७ ॥

---

१ । कालयुक्तेनचायुषः इति च ग पुस्तकयोः ।

संवत्सरं पयोवृत्तिर्गवां मध्ये वसेत् सदा ।
सावित्रीं मनसा ध्यायन् ब्रह्मचारी यतेन्द्रियः ॥ ८ ॥
संवत्सरान्ते पौषीं वा माघीं वा फाल्गुनीं तिथिम् ।
त्र्यहोपवासी शुक्लस्य प्रविश्यामलकीवनम् ॥ ९ ॥
बृहत्फलाढ्यमारुह्य द्रुमं शाखागतं फलम् ।
गृहीत्वा पाणिना तिष्ठेज्जपन् ब्रह्माऽमृतागमात् ॥ १० ॥
तदा ह्यवश्यममृतं वसत्यामलके क्षणम् ।
शर्करामधुकल्पानि स्नेहवन्ति मृदूनि च ॥ ११ ॥
भवन्त्यमृतसंयोगात् तानि यावन्ति भक्षयेत् ।
जीवेद्वर्षसहस्राणि तावन्त्यागतयौवनः ॥ १२ ॥

द्वितीयं योगमाह—संवत्सरं पयोवृत्तिरित्यादि । पुमान् संवत्सरं गवां मध्ये वसेत् । कथंभूतः सन् वसेत् ? तदाह—पयोवृत्तिः दुग्धमात्राहारः । सदा मनसा सावित्रीं गायत्रीं ध्यायन् । ब्रह्मचारी व्यवायरहितः । यतेन्द्रियः संयतेन्द्रियः । ब्रह्मचारीति उपस्थस्य नियमनं ख्यापयति । यतेन्द्रिय इति तु अन्येषामिन्द्रियाणां इत्यपुनरुक्तत्वं । ततः संवत्सरान्ते त्र्यहोपवासी सन् । शुक्लस्य पक्षस्य पौषीं माघीं फाल्गुनीं वा तिथिं पौर्णमासीं । प्राप्येति शेषः । आमलकीवनं प्रविश्य । बृहत्फलाढ्यं द्रुमं आमलकवृक्षमारुह्य तस्य शाखागतं फलं पाणिना गृहीत्वा स्थित्वा आ अमृतागमात् अमृतागमपर्यन्तं यावत् तस्मिन् फले अमृतागमः स्यात् तावत् ब्रह्म वेदं मुख्यत्वात् प्रणवं गायत्रीं वा जपन् तिष्ठेत् । ननु अमृतागमो यदि नस्यादिति अत ? आह—तदेति । हि यस्मात् तदा तथाविधस्य पुंसः ब्रह्मजपकाले पाणिना गृहीते तस्मिन् आमलके फले क्षणं तस्मिन् क्षणे अमृतं अवश्यं वसति । एवं अमृतसंयोगात् तानि आमलकानि फलानि शर्करामधुकल्पानि शर्करामधुवत् मधुरास्वादानि स्नेहवन्ति स्निग्धानि मृदूनि च भवन्ति । तानि तथाविधानि आमलकानि यावन्ति यावत्संख्यकानि भक्षयेत् । तावन्ति तावत्संख्यकानि वर्षसहस्राणि आगतयौवनः सन् जीवेत् स पुमान् । एषां

सौहित्यमेषां गत्वा तु भवत्यमरसन्निभः ।
स्वयञ्चास्योपतिष्ठन्ते श्रीर्वेदा वाक् च रूपिणी ॥ १३ ॥
इति केवलामलकरसायनम् ।

त्रिफलाया रसे मूत्रे गवां क्षारे च लावणे ।
क्रमेण चेङ्गुदीक्षारे किंशुकक्षार एव च ॥ १४ ॥
तीक्ष्णायसस्य पत्राणि वह्निवर्णानि वापयेत् ।
चतुरङ्गुलदीर्घाणि तिलोत्सेधतनूनि च ॥ १५ ॥

तथाविधानामामलकानां । करणे षष्ठी । सौहित्यं तृप्तिं गत्वा स च अमरसन्निभः अमरतुल्यः भवति । तथा श्रीः वेदाः रूपिणी मूर्तिमती वाक् वाग्देवी च स्वयं अस्य पुंसः उपतिष्ठन्ते सन्निहिता भवन्ति ॥ ८—१३ ॥

तृतीयं योगमाह—त्रिफलायाः रसे इत्यादि । चतुरङ्गुलदीर्घाणि । तिलस्य उत्सेधः औन्नत्यं तद्वत् तनूनि । तिलवत्सूक्ष्माणि इत्यर्थः । तथाविधानि तीक्ष्णायसस्य तीक्ष्णलौहस्य पत्राणि वह्निवर्णानि अग्नौ सन्ताप्य अग्निवर्णानि कृत्वा क्रमेण त्रिफलायाः रसे गवां मूत्रे क्षारे यवक्षारोदके लावणे लवणक्षारे लवणोदके वा इङ्गुदीक्षारे किंशुकक्षारे च वापयेत् निर्वापयेत् । तथा च चतुरङ्गुलदीर्घाणि तिलवत् सूक्ष्माणि तीक्ष्णायसपत्राणि कृत्वा तानि वह्नौ तापयेत् । यदा तानि वह्निवर्णानि भवेयुः तदा उद्धृत्य त्रिफलायाः रसे निर्वापयेत् । पुनर्वह्नौ प्रताप्य वह्निवर्णानि कृत्वा गवां मूत्रे निर्वापयेत् । पुनर्वह्नौ तापयित्वा वह्निवर्णानि कृत्वा क्षारे क्षारोदके निर्वापयेत् । इह सर्वत्र क्षारेति परिस्राविणि क्षारोदके । ततस्तापयित्वा वह्निवर्णानि कृत्वा लावणे सैन्धवोदके निर्वापयेत् । लावणे क्षारे ज्योतिष्मत्याः क्षारे इति चक्रपाणिः । ततः तानि वह्नौ पुनः प्रताप्य अग्निवर्णानि कृत्वा इङ्गुदीक्षारे निर्वापयेत् । पुनर्वह्नौ तापयित्वा वह्निवर्णानि कृत्वा किंशुकक्षारे पलाशक्षारे निर्वापयेत् । एवंक्रमेण शोधयेत् । ततस्तानि आयसपत्राणि अञ्जनाभानि अञ्जनवर्णानि ज्ञात्वा सूक्ष्मचूर्णानि कारयेत् ।

---

१४ । क्षारे च नागरे इति क पुस्तके ।

१५ । तिलोत्सेधसमानि च इति क पुस्तके ।

ज्ञात्वा तान्यञ्जनाभानि सूक्ष्मचूर्णानि कारयेत् ।
तानि चूर्णानि मधुना रसेनामलकस्य च ॥ १६ ॥
युक्तानि लेहवत् कुम्भे स्थितानि घृतभाविते ।
संवत्सरं निधेयानि यवपल्ले तथैव च ॥ १७ ॥
दद्यादालोड़नं मासे सर्वत्रालोड़यन् बुधः ।
संवत्सरात्यये तस्य प्रयोगो मधुसर्पिषा ॥ १८ ॥
प्रातः प्रातर्बलापेक्षी सात्म्यं जीर्णे च भोजनम् ।
एष एव च लोहानां प्रयोगः संप्रकीर्त्तितः ॥ १६ ॥
नाभिघातैर्न चातंकैर्जरया न च मृत्युना ।
स धृष्यः स्याद्गजप्राणः सदा चातिबलेन्द्रियः ॥ २० ॥

ततस्तानि सूक्ष्माणि चूर्णानि समेन मधुना आमलकस्य रसेन च युक्तानि लेहवत् कृत्वा घृतभाविते कुम्भे स्थितानि स्थापयित्वा संवत्सरं यवपल्ले यवराशौ निधेयानि निदध्यात् । वृद्धवाग्भटस्तु भस्मराशौ निदध्यात् इत्याह ( उ० अ० ४६ ) । बुधः तद्विधिज्ञो भिषक् मासे मासे सर्वत्र आलोडयन् आलोडनं दद्यात् । मासि मासि च उद्धृत्य आयसेन लौहमयेन दण्डेन सर्वं घट्टयेत् । एवं संवत्सरं कुर्यात् । संवत्सरेण लौहचूर्णानि द्रवीभवन्ति । यथाह वृद्धवाग्भटः—मासि मासि चोद्धृत्यायसेन दण्डेन घट्टयेत् । एवं तानि लौहचूर्णानि संवत्सराद्द्रवीभवन्ति । इति (उ० ४६)। संवत्सरात्यये संवत्सरान्ते च प्रातः प्रातः प्रत्यहं प्रातः बलापेक्षी अग्निबलापेक्षया मात्रया मधुसर्पिषा तस्य लौहरसायनस्य प्रयोगः कार्य्यः । संवत्सरं तस्य प्रयोगः । तस्मिन् जीर्णे च सात्म्यं भोजनं । सात्म्यमन्नं अश्नीयात् । उपसंहरति—एष इति ॥ १४—१६ ॥

लौहरसायनप्रयोग फलमाह—नाभिघातैरिति । समां संवत्सरं लौहरसायनं प्रयुंजानः स नरः न अभिघातैः धृष्यः । धृष्य इति सर्वत्र योज्यं । न आतंकैः रोगैः । न

धीमान् यशस्वी वाग्मी च श्रुतधारी महाबलः ।
भवेत् समां प्रयुञ्जानो नरो लोहरसायनम् ॥ २१ ॥
अनेनैव विधानेन हेम्नश्च रजतस्य च ।
आयुःप्रकर्षकृत् सिद्धः प्रयोगः सर्वरोगनुत् ॥ २२ ॥

इति लोहादिरसायनम् ।

ऐन्द्री मत्स्याक्षको ब्राह्मी वचा ब्रह्मसुवर्चला ।
पिप्पल्यो लवणं हेम शङ्खपुष्पी विषं घृतम् ॥ २३ ॥
एषां त्रियवकान् भागान् हेमसर्पिर्विषैर्विना ।
द्वौ यवौ तत्र हेम्नस्तु तिलं दद्याद्विषस्य च ॥ २४ ॥
सर्पिषश्च पलं दद्यात् तदैकध्यं प्रयोजयेत् ।
घृतप्रभूतं सक्षौद्रं जीर्णे चान्नं प्रशस्यते ॥ २५ ॥

जरया । न च मृत्युना धृष्यः । शस्त्राभिघातव्याधिजरामरणानामगम्यः । सदा गजप्राणः हस्तितुल्यबलः । अतिबलेन्द्रियश्च स्यात् । स च धीमान् यशस्वी वाग्मी श्रुतधारी महाबलश्च भवेत् ॥ २० । २१ ॥

लौहवत् अन्येषां धातूनां प्रयोगमाह—अनेनेति । अनेन विधानेन लौहप्रयोगोक्तेन विधिना हेम्नः रजतस्य च ताम्रस्य चापि प्रयोगः । स च एकैकः प्रयोगः आयुःप्रकर्षकृत् । सिद्धः निश्चितफलः । सर्वरोगनुच्च । अष्टांगसंग्रहे च—ताम्ररूप्यसुवर्णानामयमेव पृथग् विधिः । द्विगुणन्तु गुणोत्कर्षं जानीयादुत्तरोत्तरं ॥ इति ( उ० ४६ )॥२२॥

चतुर्थं योगमाह—ऐन्द्रीत्यादि । ऐन्द्री गोरक्षकर्कटी । मत्स्याक्षकः पत्तूरः । ब्राह्मी शाकभेदः । ब्रह्मसुवर्चला सूर्यभक्ता । हेम सुवर्णं । एषां ऐन्द्र्यादिघृतान्तानां एकादशानां द्रव्याणां मध्ये हेमसर्पिर्विषैर्विना हेमादित्रयं वर्जयित्वा अन्येषां अष्टानां ऐन्द्रीमत्स्याक्षीका ब्राह्मवचाब्रह्मसुवर्चलापिप्पलीलवणशंखपुष्पीणां प्रत्येकं त्रियवकान् त्रियवपरिमितान् भागान् दद्यात् । हेमसर्पिर्विषैर्विनेत्यनेन हेमादीनां त्रियवकमानं प्रतिषिद्धं । तर्हि हेमादीनां किं मानं स्यादिति ? अत आह—द्वौ यवाविति । तत्र तेषु मध्ये हेम्नः द्वौ यवौ

जराव्याधिप्रशमनं स्मृतिमेधाकरं परम् ।
आयुष्यं पौष्टिकं बल्यं स्वरवर्णप्रसादनम् ॥ २६ ॥
परमोजस्करश्चैतत् सिद्धमैन्द्रं रसायनम् ।
नैनत् प्रसहते कृत्या नालक्ष्मीर्न विषं न रुक् ॥ २७ ॥
श्वित्रं सकुष्ठं जठराणि गुल्माः प्लीहा पुराणो विषमज्वरश्च ।
मेधास्मृतिज्ञानहराश्च रोगाः शाम्यन्त्यनेनातिबलाश्च वाताः ॥
इत्यैन्द्रं रसायनम् ।

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः क्षीरेण यष्टीमधुकस्य चूर्णम् ।
रसो गुडूच्यास्तु समूलपुष्प्याः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ॥ २९
आयुःप्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि ।
मेध्यानि चैतानि रसायनानि मेध्या विशेषेण तु शङ्खपुष्पी ॥ ३० ॥
इति मेध्यरसायनानि ।

दद्यात् । विषस्य तिलं । सर्पिषः घृतस्य पलं दद्यात् । तत्सर्वं ऐकध्यं एकत्र मिश्रीकृत्य प्रयोजयेत् । तस्मिन् जीर्णे च घृतप्रभूतं घृताढ्यं सक्षौद्रं समधु च अन्नं प्रशस्यते । जराव्याधिप्रशमनमित्यादि । एतत् ऐन्द्रं रसायनं जरायाः व्याधेश्च प्रशमनं । परमतीव स्मृतिमेधाकरं । आयुष्यं आयुषे हितं । पौष्टिकं पुष्टिकृत् । धन्यं धनकरं । स्वरवर्णयोः प्रसादनं । ओजस्करं । सिद्धं निश्चितफलं । न कृत्या अथर्ववेदोक्ता मारणादिक्रिया न अलक्ष्मीः न विषं न च रुक् रोगः एतत् ऐन्द्ररसायनं प्रसहते अभिभवितुं शक्नोति । श्वित्रमिति । श्वित्रं सकुष्ठं श्वित्रं कुष्ठं च । श्वित्रं कुष्ठभेदः । जठराणि उदराणि । पुराणो विषमज्वरः । श्वित्रादयो रोगाः । ये च रोगाः मेधास्मृतिज्ञानहराः तेऽपि तथा अतिबलाः वाताः अनेन ऐन्द्ररसायनेन शाम्यन्ति ॥ २३—२८ ॥

मण्डूकपर्ण्या इति । मण्डूकपर्ण्याः स्वरसः केवलः प्रयोज्यः । यष्टीमधुकस्य चूर्णं क्षीरेण प्रयोज्यं । गुडूच्याः रसः प्रयोज्यः । सह मूलपुष्पाभ्यां वर्तते या सा समूलपुष्पी । तस्याः तथाविधायाः शङ्खपुष्प्याः कल्कः प्रयोज्यः । एते चत्वारो योगाः । आयुः-

पञ्चाष्टौ सप्त दश वा पिप्पलीर्मधुसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ३१ ॥
तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च ।
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ॥ ३२ ॥
प्रयोज्या मधुसंमिश्रा रसायनगुणैषिणा ।
जेतुं कासं क्षयं शोषं श्वासं हिक्कां गलामयान् ॥ ३३ ॥
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम् ।
वैस्वर्य्यं पीनसं शोफं गुल्मं वातबलासकम् ॥ ३४ ॥
इति पिप्पलीरसायनद्वयम् ।

क्रमवृद्ध्या दशाहानि दशपिप्पलिकं दिनम् ।
वर्द्धयेत् पयसा सार्द्धं तथैवापनयेत् पुनः ॥ ३५ ॥

प्रदानीति । एतानि चत्वारि रसायनानि आयुःप्रदानि । आमयनाशनानि रोगघ्नानि । बलादिवर्धनानि । मेधायै हितानि मेध्यानि । शङ्खपुष्पी तु विशेषेण मेध्या ॥२९ । ३०॥

नवमं योगमाह—पञ्चाष्टाविति । रसायनगुणान्वेषी पुमान् एकां समां वर्षं व्याप्य पंच अष्टौ सप्त दश वा । संख्याविकल्पः प्रकृतिसात्म्यसत्त्वाद्यपेक्षया । पिप्पलीः चूर्णीकृत्य मधुसर्पिषा घृतमधुभ्यां प्रयोजयेत् ॥ ३१ ॥

दशमं योगमाह—तिस्रस्तिस्रस्त्विति । रसायनगुणैषिणा पुंसा किंशुकक्षारभाविताः पलाशक्षारोदकेन भाविता घृतभर्ज्जिताः पिप्पल्यः तिस्रः चूर्णीकृताः मधुसंमिश्राः मधुना संयुक्ताः कासक्षयादिरोगान् जेतुं पूर्वाह्णे तिस्रः प्रयोज्याः । ततः भोजनस्याग्रे भोजनात् प्राक् तिस्रः प्रयोज्याः । पुनर्भुक्त्वा भोजनान्ते च तिस्रः प्रयोज्याः । एवंप्रयुक्ताः ताः कासक्षयादिव्याधीन् जेतुमलमिति शेषः ॥ ३२—३४ ॥

वर्द्धमानपिप्पलीकमेकादशं योगमाह—क्रमवृद्ध्येति । दश पिप्पल्यो यत्र तत् दशपिप्पलिकं दिनं । प्रतिदिनं दश पिप्पलीरित्यर्थः । क्रमवृद्ध्या प्रतिदिनं दशवृद्धिक्रमेण

३३ । प्रयोज्या मधुसर्पिभ्यां इति क पुस्तके ।

जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनम् ॥ ३६ ॥
पिष्टास्ता बलिभिः सेव्याः शृता मध्यबलैर्नरैः ।
शीतीकृता ह्रस्वबलैर्योज्या दोषामयान् प्रति ॥ ३७ ॥
दशपैप्पलिकः श्रेष्ठो मध्यमः षट् प्रकीर्त्तितः ।
प्रयोगो यस्त्रिपर्य्यन्तः स कनीयान् स चाबलैः ॥ ३८ ॥

दश अहानि दिनानि दशपिप्पलिकं प्रथमं दिनमादाय पयसा सार्द्धं वर्धयेत् । तथा तेनैव क्रमेण पुनः अपनयेत् अपकर्षयेत् । एकादशदिनादारभ्य प्रतिदिनं दश ह्रासयेत् । एवं वृद्धिह्रासक्रमेणैकोनविंशदिने सहस्रं पूर्यते । जीर्णे जीर्णे चेति । जीर्णे जीर्णे प्रतिदिनं भुक्ते तस्मिन् औषधे जीर्णे सति क्षीरसर्पिषा पयसाससर्पिष्कं षष्टिकमन्नं भुञ्जीत । त्रिविधपुरुषापेक्षया पिप्पलीनां कल्पनात्रैविध्यं दर्शयति—पिष्टा इति । ताः पिप्पल्यः बलिभिः नरैः पिष्टाः कल्कीकृताः सेव्याः । मध्यबलैः ताः शृताः क्वथिताः सेव्याः । ह्रस्व-बलैः हीनबलैः पुनः ताः शीतीकृताः शीतकषायीकृताः सेव्याः । कल्कशृतशीतानां यथो-त्तरमल्पबलत्वात् । शीतकषायश्च—द्रव्यादापोथितात् तोये तत् पुनर्निशि संस्थितात् । कषायो योऽभिनिर्याति स शीतः परिकीर्त्तितः ॥ इति ( च० श्लो० ४ ) । चूर्णीकृताः ह्रस्वबलैरिति चक्रपाणिधृतः पाठः । स च सर्वथैव हेयः । चूर्णस्य कल्कात् बलिभिः सेव्यत्वेनोक्तात् अभेदात् हीनबलैः सेव्यत्ववचनं कथमपि संगमयितुं न शक्यते । स्वरसकल्कशृतशीत फांटानाम्—एतेषां यथापूर्वं बलाधिक्यमिति ( च० श्लो० ४ ) यथोत्तरमल्पबलत्वात् शीतीकृता ह्रस्वबलैरिति पाठ एव साधीयान् ।

---

३७। पिष्टास्ता बलिभिः सेव्याः शृताः इति क ख ग पुस्तकेषु ।

३७। शीतीकृता ह्रस्वबलैः कल्पनेयं बलं प्रति इति घ पुस्तके ।

३७। वीक्ष्य दोषामयान् प्रति इति ख पुस्तके ।

३८। यस्तु पिप्पलीपर्यन्तः प्रयोगः सोऽवरो मतः इति ख ग घ पुस्तकेषु ।

बृंहणं स्वर्य्यमायुष्यं प्लीहोदरविनाशनम् ।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥ ३६ ॥

इति वर्द्धमानपिप्पलीरसायनम् ।

जरणान्तेऽभयामेकां प्राग्भुक्ताद् द्वे विभीतके ।
भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्य्यामलकानि च ॥ ४० ॥
प्रयोजयन् समामेकां त्रिफलाया रसायनम् ।
जीवेद्वर्षशतं पूर्णमजरोऽव्याधिरेव च ॥ ४१ ॥

इति त्रिफलाया रसायनम् ।

दोषव्याध्यपेक्षया तासां प्रयोगमाह—दोषामयान् प्रतीति । दोषामयान् प्रति दोषव्याध्यपेक्षया ताः योज्याः । दोषान् व्याधींश्च वीक्ष्य प्रयोजयेत् । अस्य योगस्य परावरमध्यत्वेन त्रैविध्यमाह—दशपैप्पलिक इति । दशपैप्पलिकः योगः यः उक्तः स श्रेष्ठः । स बलिभिः सेव्यः । षट् षट्पैप्पलिकः योगः । प्रथमदिने षट् । ततः प्रतिदिनं षड्वृद्धिः । तेनैव क्रमेण ह्रासः । स मध्यमः प्रकीर्तितः । स च मध्यबलैः सेव्यः । यः अयं त्रिपर्यन्तः प्रयोगः । तथात्र प्रथमे दिने तिस्रः पिप्पल्यः । ततः प्रतिदिनं त्रिवृद्धिः । तेनैव क्रमेण ह्रासः । एवमन्त्यदिने पिप्पलीत्रयावस्थानात् त्रिपर्यन्तः योऽयं प्रयोगः स कनीयान् स च अबलैः हीनबलैः सेव्यः ॥ वर्द्धमानपिप्पलीरसायनसेवने फलमाह—बृंहणमित्यादि ॥ ३५—३९ ॥

द्वादशं योगमाह—जरणान्ते इति । जरणान्ते पूर्वदिनभुक्तस्य परिपाकान्ते अर्थात् प्रातः एकामभयां हरीतकीं मधुसर्पिर्भ्यां प्रयोजयन् । भुक्तात् प्राक् भोजनात् प्राक् द्वे विभीतके मधुसर्पिर्भ्यां प्रयोजयन् । भुक्त्वा तु भोजनान्ते पुनः चत्वारि आमलकानि मधुसर्पिर्भ्यां प्रयोजयन् । एकां समां एकं वर्षं व्याप्य एवं त्रिफलाया रसायनं प्रयोजयन् पुरुषः पूर्णं वर्षशतं अब्दशतं अजरः अव्याधिश्च सन् जीवेत् । वृद्धवाग्भटेनाप्युक्तं—वर्षं खादेत् प्राणदां प्रातरेकामश्नन्नात् पूर्वमक्षद्वयञ्च । साज्यक्षौद्रं भोजनान्ते चतुष्कं भल्लीकाणां तद्वयःस्थापनेऽलं ॥ इति । (अ० सं० उ० ४९) ॥ ४० । ४१ ॥

त्रैफलेनायसीं पत्रीं कल्केनालेपयेन्नवाम् ।
तमाहोरात्रिकं लेपं पिबेत् क्षौद्रोदकाप्लुतम् ॥ ४२ ॥
प्रभूतस्नेहमशनं जीर्णे तत्र प्रशस्यते ।
अजरोऽरुक् समाभ्यासाज्जीवेच्चैव समाः शतम् ॥ ४३ ॥

इति त्रिफलारसायनम् ।

मधुकेन तुगाक्षीर्या पिप्पल्या क्षौद्रसर्पिषा ।
त्रिफला सितया चापि युक्ता सिद्धं रसायनम् ॥ ४४ ॥

इति त्रिफलारसायनमपरम् ।

सर्वलोहैः सुवर्णेन वचया मधुसर्पिषा ।
विडङ्गपिप्पलीभ्याञ्च त्रिफला लवणेन च ॥ ४५ ॥

त्रयोदशं योगमाह—त्रैफलेनेत्यादि । नवां आयसीं लौहमयीं पत्रीं त्रैफलेन कल्केन त्रिफलाकल्केन आलेपयेत् । आहोरात्रिकं अहोरात्रस्थितं लेपं प्रातरुद्धृत्य क्षौद्रोदकेन आप्लुतं मधुमिश्रितजलेन आप्लाव्य पिबेत् । तत्र तस्मिन् औषधे जीर्णे च प्रभूतस्नेहं अशनं प्रशस्यते । घृताढ्यं शालिषष्टिकान्नमश्नीयात् । तस्य रसायनस्य समां वर्षं व्याप्य अभ्यासात् शतं समाः वर्षशतं अजरः अरुक् अव्याधिश्च सन् जीवेत् ॥ ४२ । ४३ ॥

चतुर्दशं योगमाह—मधुकेनेत्यादि । त्रिफला चूर्णीकृता कल्कीकृता वा । मधुकेन यष्टिमधुना । तुगाक्षीर्या वंशलोचनया । पिप्पल्या । मधुसर्पिषा । सितया शर्करया चापि युक्ता प्रयोज्येति शेषः । एतत्सिद्धं रसायनं ॥ ४४ ॥

पञ्चदशं योगमाह—सर्वलोहैरित्यादि । त्रिफला सर्वैः लोहैः पंचभिर्लोहैः त्रपुसीसताम्र-रूप्यकृष्णलोहैः । सुवर्णेन । वचया । मधुसर्पिषा । विडङ्गपिप्पलीभ्यां विडङ्गेन पिप्पल्या च । लवणेन सैन्धवेन च । सह संवत्सरप्रयोगेण मेधास्मृतिबलप्रदा । आयुःप्रदा । धन्या । जरारोगनिवर्हणी च । भवति । वृद्धवाग्भटेन अयं योगः पूर्वोक्तयोगेन सह एकीकृत्य पठितः । तथाच-मधुकेन तुगाक्षीर्या पिप्पल्या सिंधुजन्मना । पृथग् लोहैः सुवर्णेन वचया

संवत्सरप्रयोगेण मेधास्मृतिबलप्रदा ।
भवत्यायुष्प्रदा धन्या जरारोगनिवर्हणी ॥ ४६ ॥
इति त्रिफलारसायनमपरम् ।

अनम्लश्च कषायश्च कटु पाके शिलाजतु ।
नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भवः ॥ ४७ ॥
हेम्नश्च रजतात् ताम्राद्वरात् कृष्णायसादपि ।
रसायनं तद्विधिभिस्तद्वृष्यं तच्च रोगनुत् ॥ ४८ ॥
वातपित्तकफघ्नैस्तु निर्यूहैस्तत् सुभावितम् ।
वीर्य्योत्कर्षं परं याति सर्वैरेकैकशोऽपि वा ॥ ४९ ॥

मधुसर्पिषा ॥ सितया वा समायुक्ता समायुक्ता रसायनं । त्रिफला सर्वरोगघ्नी मेधायुः-स्मृति बुद्धिदा ॥ इति ( अ० सं० उ० ४९ ) । समायुक्ता संयुक्ता । समायुक्ता संवत्सरं प्रयुक्ता ॥ इति त्रिफलाया रसायनचतुष्कं ॥ ४५ । ४६ ॥

शिलाजतुप्रयोगमन्त्यं षोडशं योगमाह—अनम्लमित्यादि । शिलाजतु अनम्लं कषायं ईषदम्लकषायं रसे । पाके विपाके कटु । रूप्यजं वर्ज्जयित्वा । रूप्यजन्तु मधुरविपाकं । वक्ष्यति च—स्वादु विपच्यते । इति । नात्युष्णशीतं । इह सामान्यगुण उक्तः । हेमादिसम्भवत्वेन विशेषस्तु पश्चाद् वक्ष्यमाणः । वरात् श्रेष्ठात् हेम्नः सुवर्णात् रजतात् ताम्रात् कृष्णायसादपि एतेभ्यश्चतुर्भ्यो धातुभ्यः शिलाजतुनः सम्भव उत्पत्तिः । त्रपुसीसाभ्यामपि तस्य सम्भवः । तथाच सुश्रुतः—मासे शुक्रे शुचौ चैव शैलाः सूर्यांशुतापिताः । जतुप्रकाशं स्वरसं शिलाभ्यः प्रस्रवन्ति हि ॥ शिलाजत्विति विख्यातं सर्वव्याधिविनाशनं । त्रप्वादीनान्तु लोहानां षण्णामन्यतमान्वयं ॥ ज्ञेयं स्वगन्धतश्चापि षड्योनि प्रथितं क्षितौ । इति ( सु० चि० १३ ) । इह हेमादिसम्भवानां चतुर्णां वचनं मुख्यतया रसायने अधिकृतत्वात् । न तु तेन अन्ययोनि शिलाजतु प्रतिषिध्यते । विधिभिः प्रयुक्तं तत् शिलाजतु रसायनं । तद् वृष्यं शुक्रकरं । तच्च रोगनुत्

४७ । अनम्लं चाकषायं च कटु पाके इति ख पुस्तके ।
४९ । समस्तैरेकशोऽपि वा इति ग पुस्तके ।

प्रक्षिप्तोद्धृतमप्येनत् पुनस्तत् प्रक्षिपेद्रसे ।
कोष्णे सप्ताहमेतेन विधिना तस्य भावना ॥५०॥
पूर्वोक्तेन विधानेन लोहैश्चूर्णीकृतैः सह ।
तत् पीतं पयसा दद्याद्दीर्घमायुः सुखान्वितम् ॥५१॥
जराव्याधिप्रशमनं देहदार्ढ्यकरं परम् ।
मेधास्मृतिकरं बल्यं क्षीराशी तत् प्रयोजयेत् ॥ ५२॥
प्रयोगः सप्त सप्ताहास्त्रयश्चैकश्च सप्तकः ।
निर्दिष्टस्त्रिविधस्तस्य परो मध्योऽवरस्तथा ॥५३॥

सर्वरोगघ्नं । यथा तत् सर्वरोगघ्नं भवति तदाह—वातपित्तेति । तत् शिलाजतु वातपित्तकफघ्नैः क्रमात् रास्नादशमूलबलापुनर्नवैरण्डशुण्ठीमधुकानां द्राक्षाऽभीरुपटोलीत्रायन्तीगुडूचीजीवनीयानां क्रिमिजिद्वचात्रिफलाघनमुख्यपञ्चमूलपञ्चकोलकानां च क्वाथैः यथादोषं एकैकशः द्विशः सर्वैर्वा वक्ष्यमाणेन विधिना सुभावितं सम्यग् भावितं सत् सर्वरोगनुत् । अनेनास्य व्याधिहरत्वमपि ख्याप्यते । परं वीर्योत्कर्षं च याति । भावनाविधिमाह—प्रक्षिप्तोद्धृतमिति । भावनौषधानि अष्टगुणिते तोये क्वाथयेत् । अष्टमभागावशिष्टे तस्मिन् क्वाथे पूते कोष्णे ईषदुष्णे शिलाजतु प्रक्षिपेत् । एतत् शिलाजतु प्रक्षिप्य उद्धृतं उद्धृत्य संशुष्कं पुनरपि तत् कोष्णे रसे तथाविधे क्वाथे प्रक्षिपेत् । एवं एतेन उक्तेन विधिना सप्ताहं सप्तवारान् तस्य भावना । पूर्वोक्तेनेति । पूर्वोक्तेन प्राक् त्रिफलाया रसे मूत्रे गवां क्षारे च लावणे इत्यादिनोक्तेन विधानेन चूर्णीकृतैः लोहैः सह पयसा पीतं तत् शिलाजतु । सुखान्वितं आरोग्यान्वितं । सुखसंज्ञकमारोग्यमिति । दीर्घमायुः । दद्यात् । जराया व्याधेश्च प्रशमनं । परमतीव देहदार्ढ्यकरं । मेधास्मृतिकरं । बल्यं । क्षीराशी सन् तत् प्रयोजयेत् ॥४७—५२॥

प्रयोजयेदित्युक्तं । कियन्ति दिनानि तस्य प्रयोगः ? इत्याकांक्षायां पुरुषबलापेक्षया प्रयोगत्रैविध्यमाह—प्रयोग इति । सप्त सप्ताहाः त्रयः सप्ताहाः एकः सप्तकः सप्ताहः क्रमात् परः उत्तमः मध्यः मध्यमः अवरः अधमः इति त्रिविधः तस्य प्रयोगः निर्दिष्टः ॥ ५३ ॥

पलमर्द्धपलं कर्षो मात्रा तस्य त्रिधा मता ।
जातेर्विशेषं सविधिं तस्य वक्ष्याम्यतः परम् ॥ ५४ ॥
हेमाद्याः सूर्य्यसन्तप्ताः स्रवन्ति गिरिधातवः ॥
जत्वाभं मृदुमृत्स्नाच्छं यन्मलं तच्छिलाजतु ॥ ५५ ॥
मधुरश्च सतिक्तश्च जवापुष्पनिभश्च यः ।
कटुर्विपाके शीतश्च स सुवर्णस्य निःस्रवः ॥ ५६ ॥
रूप्यस्य कटुकः श्वेतः शीतः स्वादु विपच्यते ।
ताम्रस्य वर्हिकण्ठाभस्तिक्तोष्णः कटु पच्यते ॥५७॥
यस्तु गुग्गुलुकाभासस्तिक्तको लवणान्वितः ।
कटुर्विपाके शीतश्च सर्वश्रेष्ठः स चायसः ॥ ५८ ॥

त्रिविधं प्रयोगमुक्त्वा त्रिविधां मात्रां दर्शयति—पलमिति। पलं अर्द्धपलं कर्षः अक्षः इति त्रिधा क्रमात् उत्तममध्यमाधमा त्रिविधा मात्रा मता । जातेर्विशेषमिति। अतः परं शिलाजतुनः जातेर्विशेषं हेमादिभ्यश्चतुर्भ्यो धातुभ्यो जातेषु शिलाजतुषु चतुर्विधेषु यस्य यो विशेषः तं सविधिं सविधानं वक्ष्यामि ॥ ५४ ॥

हेमाद्या इति । हेमाद्याः गिरिधातवः । आद्यशब्देन रजतताम्रलोहानां ग्रहणं । निदाघे सूर्यसन्तप्ताः सन्तः जत्वाभं जतुप्रकाशं लाक्षासमं मृदु मृत्स्नं मसृणं अच्छं च। यत् मलं स्रवन्ति तत् शिलाजतु । हेमादिभ्यो धातुभ्यः सामान्यत उत्पत्तिमुक्त्वा जातिविशेषमाह—मधुरश्चेति। तत्र यो मधुरः। सतिक्तः तिक्तश्च। जवापुष्पनिभः जवापुष्पतुल्यवर्णः। विपाके कटुः कटुविपाकः। शीतः शीतवीर्यः। स सुवर्णस्य निःस्रवः शिलाजतु॥ यः कटुकः कटुरसः । श्वेतः श्वेतवर्णः। वीर्यतः शीतः। स्वादु मधुरं यथातथा विपच्यते मधुरविपाकः । स रूप्यस्य निःस्रवः शिलाजतु॥ यः वर्हिकण्ठाभः मयूरकण्ठतुल्यवर्णः। तिक्तोष्णः तिक्तः उष्णः उष्णवीर्यः । कटु यथास्यात् तथा पच्यते विपच्यते कटुवि-

---

५५। हेमाद्याः सूर्यसंतप्ताः समलं गिरिधातवः। ग्रीष्मे वमन्ति मृत्स्नाच्छं जत्वाभं तच्छिलाजतु।
५६-५८। मधुरश्च सतिक्तश्च......तिक्तको लवणान्वितः इति ग्रयं सन्दर्भो न पठ्यते च ग पुस्त०

गोमूत्रगन्धयः सर्वे सर्वकर्मसु यौगिकाः ।
रसायनप्रयोगेषु पश्चिमस्तु विशिष्यते ॥ ५९ ॥
यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु ।
विशेषतः प्रशस्यन्ते मला हेमादिधातुजाः ॥ ६० ॥
शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च ।
वर्जयेत् सर्वकालन्तु कुलत्थान् परिवर्जयेत् ॥ ६१ ॥
ते ह्यत्यन्तविरुद्धत्वादश्मनो भेदनाः परम् ।
लोकदृष्टास्ततस्तेषां प्रयोगः प्रतिषिध्यते ॥ ६२ ॥
पयांसि शुक्तानि रसाः सयूषास्तोयं समूत्रं विविधाः कषायाः ।
आलोड़नार्थं गिरिजस्य शस्तास्ते ते प्रयोज्याः प्रसमीक्ष्य कार्यं ॥

पाकः । स ताम्रस्य निःस्रवः शिलाजतु । यस्तु यः पुनः गुग्गुलुकाभासः गुग्गुलुतुल्यवर्णः । तिक्तकः तिक्तः । लवणान्वितः लवणरसश्च । विपाके कटुः कटुविपाकः । शीतः शीतवीर्यः । सः अयसः लौहस्य निःस्रवः शिलाजतु । स च सर्वश्रेष्ठः सर्वेषु चतुर्विधेषु श्रेष्ठः। सर्वे गोमूत्रगन्धयः । सर्वेषु कर्मसु यौगिकाः । रसायनप्रयोगेषु पुनः पश्चिमः अन्तिमः आयसः विशिष्यते सर्वश्रेष्ठत्वात् ॥ हेमादिधातुजाः हेमरूप्यताम्रकृष्णायसजाः—चतुर्विधाः मलाः यथाक्रमं वातपित्ते हेमजः । श्लेष्मपित्ते रूप्यजः । कफे ताम्रजः । त्रिषु वातपित्तकफेषु सन्निपाते कृष्णायसजः । तस्य सर्वश्रेष्ठत्वात् । विशेषतः प्रशस्यन्ते ॥ ५५-६० ॥

शिलाजतुप्रयोगेष्विति । शिलाजतुप्रयोगेषु विदाहीनि गुरूणि अन्नपानानि वर्जयेत् । कुलत्थांस्तु सर्वकालं सर्वदा परिवर्ज्जयेत् । कुतः ? हि यतः ते कुलत्थाः अत्यन्तविरुद्धत्वात् अश्मनः पाषाणस्य भेदनाः लोके दृष्टाः । ततः शिलाजतुनः पाषाणविकारत्वात् तेषां कुलत्थानां प्रयोगः उपयोगः शिलाजतुप्रयोगेषु प्रतिषिध्यते । वृद्धवाग्भटेनाप्युक्तं—कुलत्थान् काकमाचीं च कपोतांश्च सदा त्यजेत् । इति ( अ० सं० उ० ४९ ) ॥ ६१।६२॥

पयांसीति । शुक्तं आसुतद्रवद्रव्यभेदः । रसाः मांसरसाः । सयूषाः यूषाश्च । तोयं । समूत्रं ।

---

६३ । पयांसि तक्रानि रसाः इति क पुस्तके ।

न सोऽस्ति रोगो भुवि साध्यरूपः शिलाह्वयं यं न जयेत् प्रसह्य ।
तत्कालयोगैर्विधिभिः प्रयुक्तं स्वस्थस्य चोर्जां विपुलां ददाति ।

इति शिलाजतुरसायनम् ।

तत्र श्लोकः ।

करप्रचितिके पादे दश षट् च महर्षिणा ।
रसायनानां सिद्धानां संयोगाः समुदाहृताः ॥६५॥

इति चिकित्सिते करप्रचितीयो नाम रसायनपादस्तृतीयः ।

चतुर्थः पादः ।

अथात आयुर्वेदसमुत्थानीयं रसायनपादं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ॥ १ ॥

मूत्रं गोमूत्रं च। तोयं माहेन्द्रं कौपं प्रस्रवणाम्बु वा। विविधाः कषायाः क्वाथाः। कषायाः रास्नादशमूलादीनां प्राक् उपस्कारे प्रदर्शितानां । गिरिजस्य शिलाजतुनः आलोडनार्थं शस्ताः । कार्यं प्रसमीक्ष्य तत्साध्यदोषव्याध्यपेक्षया ते ते कषायादयः प्रयोज्याः ॥६३॥

शिलाजतुनः स्वस्थातुरहितत्वं दर्शयति—न सोऽस्तीति। भुवि साध्यरूपः औषधसाध्यः। असाध्येषु भेषजप्रयोगस्य प्रतिषिद्धत्वात्। स तथाविधः कश्चित् रोगः न अस्ति यं साध्यं रोगं शिलाह्वयं शिलाजतु प्रसह्य बलात्कृत्य न जयेत्। तत् शिलाह्वयं कालयोगैः। कालेति परीक्षणीयानामुपलक्षणं। देशकालप्रकृतिसत्त्वसात्म्याद्यनुगुणत्वेन विधिभिः प्रयुक्तं तत् स्वस्थस्य विपुलां ऊर्ज्जां बलवर्णाद्युपचयं ददाति ॥ ६४ ॥

तृतीयपादार्थसंग्रहमाह—करप्रचितिके इति। करप्रचितिके करप्रचितीये अस्मिन् पादे तृतीये रसायनपादे महर्षिणा भगवता आत्रेयेण पुनर्वसुना सिद्धानां रसायनानां दश-षट् च षोडश संयोगाः योगाः समुदाहृताः उक्ताः ॥ ६५ ॥

इति चरकोपस्कारे चिकित्सितस्थाने प्रथमेऽध्याये तृतीयः पादः ॥

अथ आयुर्वेदसमुत्थानीयं नाम अन्त्यं रसायनपादं प्रस्तौति—अथात इत्यादि। पूर्ववत् व्याख्येयम् ॥ १ ॥

ऋषयः खलु कदाचिच्छालीना यायावराश्च ग्राम्यौषध्याहाराः सन्तः साम्पन्निका मन्दचेष्टा नातिकल्याणाश्च प्रायेण बभूवुः । ते सर्वासामितिकर्त्तव्यतानामसमर्थाः सन्तो ग्राम्यवासकृतं दोषं मत्वा पूर्वनिवासमपगतग्राम्यदोषं शिवं पुण्यमुदारं मेध्यमगम्यमसुकृतिभिर्गङ्गाप्रभवममरगन्धर्वयक्षकिन्नरानुचरितमनेकरत्ननिचयमचिन्त्याद्भुतप्रभावं ब्रह्मर्षिसिद्धचारणानुचरितं दिव्यतीर्थौषधिप्रभवमतिशरण्यं हिमवन्तममराधिपतिगुप्तं जग्मुर्भृग्वङ्गिरोऽत्रिवसिष्ठकश्यपागस्त्यपुलस्त्यवामदेवासितगौतमप्रभृतयो महर्षयः ॥ २ ॥

तत्रादौ आयुर्वेदसमुत्थानमधिकृत्य प्रकरणमारभते—ऋषयः खल्वित्यादि । शालाप्रवेशमर्हन्तीति शालीनाः । गृहं निर्माय एकत्र कृतावस्थानाः । यायावराः पुनः पुनः गमनशीलाः स्थानात् स्थानान्तरं पुनः पुनर्गच्छन्तः नैकत्र स्थितिशीलाः । इति द्विविधा ऋषयः भृग्वंगिरःप्रभृतयः । कदाचित् । ग्राम्याः ग्रामे भवाः । ओषधयः । आहाराश्च । ते येषां ते । तथोक्ताः सन्तः । अर्थादिसम्पत्त्या सम्पन्ना एव साम्पन्निकाः । मन्दचेष्टाः अलसाः । प्रायेण नातिकल्याणाः नातिनीरोगाश्च बभूवुः । ते भृग्वंगिरोऽत्रिवसिष्ठकश्यपप्रभृतयो महर्षयः सर्वासां इतिकर्तव्यतानां कर्म्मानुष्ठानक्रमाणां असमर्थाः सन्तः ग्राम्यवासकृतं ग्राम्यवासजनितं तं दोषं मत्वा तेषां पूर्वनिवासं हिमवन्तं पर्वतं जग्मुः । हिमवन्तं विशिनष्टि—अपगतग्राम्यदोषमित्यादि । अपगतग्राम्यदोषं ग्राम्यदोषरहितं । शिवं शुभं । पुण्यं । उदारं । मेध्यं पवित्रं । असुकृतिभिः अपुण्यकृद्भिः अगम्यं गन्तुमशक्यं । गंगायाः । प्रभवत्यस्मादिति प्रभवः उत्पत्तिकारणं । तं । अमराः । गन्धर्वाः । यक्षाः । किन्नराश्च । ते । तैः अनुचरितः । तं । अनेके रत्नानां निचया राशयो यत्र सः । तं । अचिन्त्यः अद्भुतश्च प्रभावो यस्य सः । तं । ब्रह्मर्षयः वसिष्ठादयः । सिद्धाः देवयोनिभेदाः । चारणा देवानां स्तुतिपाठकाश्च । ते । तैरनुचरितः । तं । दिव्यानां तीर्थानां ओषधीनाञ्च प्रभवः । तं । अमराधिपतिना इन्द्रेण गुप्तं रक्षितं । एवंभूतं हिमवन्तं जग्मुः ॥ २ ॥

---

२ । ग्राम्यौषध्याहाराः सन्तः सांपत्तिकाः मंदचेष्टाः इति क घ ण पुस्तकेषु ।

तानिन्द्रः सहस्रदृगमरगुरुरब्रवीत् । स्वागतं ब्रह्मविदां ज्ञान-तपोधनानां ब्रह्मर्षीणाम् । अस्ति ननु वो ग्लानिरप्रभावत्वं वैस्वर्यं वैवर्ण्यञ्च । ग्राम्यवासकृतमसुखमसुखानुबन्धश्च । ग्राम्यो हि वासो मूलमशस्तानां । तत् कृतः पुण्यकृद्भिरनुग्रहः प्रजानां स्वशरीरचितिभिः । कालश्चायमायुर्वेदोपदेशस्य ब्रह्मर्षीणाम् । आत्मनः प्रजानाञ्चानुग्रहार्थमायुर्वेदमश्विनौ मह्यं प्रायच्छतां । प्रजापतिरश्विभ्यां । प्रजापतये ब्रह्मा । प्रजानामल्पमायुर्जरा-व्याधिबहुलमसुखमसुखानुबन्धम् । अल्पत्वादल्पतपोदमनियम-दानाध्ययनसञ्चयं मत्वा पुण्यतममायुःप्रकर्षकरं जराव्याधि-प्रशमनमूर्ज्जस्करममृतं शिवं शरण्यमुदारं भवन्तो मत्तः श्रोतु-

तानिन्द्र इत्यादि । सहस्रदृक् सहस्राक्षः । अमरगुरुः अमरश्रेष्ठः । इन्द्रः । तान् हिमवन्तं गतवतः भृग्वादीन् महर्षीन् अब्रवीत् अपृच्छत् । ब्रह्मविदां । ज्ञानं । तपश्च । ते एव धनं येषां ते ज्ञानतपोधनाः । तेषां तथाविधानां ब्रह्मर्षीणां युष्माकं स्वागतं सुष्ठु आगमनं कृतं । ननु प्रश्ने । वो युष्माकं । ग्लानिः अप्रहर्षः । अप्रभावत्वं प्रभावराहि-त्यं । वैस्वर्यं विस्वरता । वैवर्ण्यं विवर्णता । ग्राम्यवासकृतं । असुखस्य अनुबन्धो यत्र तत् । अनुबन्धः पुनः पुनर्भवनं । तथाविधं असुखं दुःखमनारोग्यं च किमस्ति । कुतः ? हि यतः ग्राम्यो वासः अशस्तानां सर्वेषाममंगलानां मूलं । यतो भवन्तः ग्राम्यवासं हित्वा हिमवति मत्सकाशमागताः । तत् तस्मात् पुण्यकृद्भिः भवद्भिः स्वशरीररक्षिभिः प्रजानां अनुग्रहः कृतः । इहागतैर्भवद्भिर्मत्तः आयुर्वेदस्य श्रवणेन स्वशरीरपालनं । तेनात्मन उपकारः । तस्य प्रचारेण प्रजानां चोपकारः । ब्रह्मर्षीणां ब्रह्मर्षिभ्यः युष्मभ्यं आयुर्वेदो-पदेशस्य अयं कालः उपस्थितः । साम्प्रतं युष्मभ्यमहमायुर्वेदमुपदिशामि । ननु सर्ववेद-प्रवक्ता हि भगवान् हिरण्यगर्भः । तत्प्रोक्तस्यायुर्वेदस्याधिगमः कुतो भवता ? यतस्त्व-मस्मभ्यमुपदेष्टुं प्रवर्त्तसे इति ? अत आयुर्वेदो यथा ब्रह्मत इन्द्रपर्यन्तं संप्राप्तः आदौ तद्विवरणं विलोमक्रमेणाह—आत्मन इत्यादि । आत्मनः प्रजानां लोकानाञ्च अनुग्रहार्थं अश्विनौ मह्यं आयुर्वेदं प्रायच्छतां । प्रजापतिर्दक्षः अश्विभ्यां प्रायच्छत् । ब्रह्मा प्रजानां । जरा-

मर्हन्त्युपधारयितुं प्रकाशयितुञ्च। प्रजानुग्रहार्थमार्षं ब्रह्म च मैत्रीं कारुण्यमात्मनश्चानुत्तमं पुण्यमुदारं ब्राह्ममक्षयं कर्मेति। तच्छ्रुत्वा विबुधपतिवचनमृषयः सर्व एवामरवरमृग्भिस्तुष्टुवुः। प्रहृष्टास्तद्वचनमभिननन्दुश्चेति ॥ ३ ॥

अथेन्द्रस्तदायुर्वेदामृतमृषिभ्यः संक्रम्योवाच। एतत् सर्वमनुष्ठेयम्। अयञ्च शिवः कालो रसायनानां। दिव्याश्चौषधयो हिमवतः प्रभावात्प्राप्तवीर्य्याः ॥ ४ ॥

व्याधिबहुलं। अल्पं आयुः। असुखं असुखानुबन्धं। आयुषोऽल्पत्वात् अल्पं तपोदमनियमदानाध्ययनसंचयं च। मत्वा आयुर्वेदं प्रजापतये दक्षाय प्रायच्छत्। दीर्घंजीवितीयेप्युक्तं—ब्रह्मणा हि यथाप्रोक्तमायुर्वेदं प्रजापतिः। जग्राह निखिलं नादावश्विनौ तु पुनस्ततः॥ अश्विभ्यां भगवाञ्छक्रः प्रतिपेदे ह केवलं। इति॥ भवन्तः पुण्यतमं आयुःप्रकर्षकरं जरायाः व्याधेश्च प्रशमनं स्वस्थस्य ऊर्ज्जस्करं। अनेनायुर्वेदस्य स्वस्थातुरहितत्वं दर्शितं भवति। अमृतं अमृतमिव जरामृत्युहरं। शिवं मंगलं। शरण्यं। उदारं। तमायुर्वेदं मत्तः मया उच्यमानं श्रोतुं अर्हन्ति योग्या भवन्ति। श्रुतं तमायुर्वेदं मनसा उपधारयितुं अर्हन्ति। मनसा उपधार्य च प्रजानुग्रहार्थं प्रकाशयितुं प्रचारयितुं। आयुर्वेदस्य प्रचारे न केवलं प्रजानुग्रहः फलं। किन्तु अन्यदपि भूयिष्ठं फलमस्ति। तदाह—आर्षमित्यादि। आर्षं ब्रह्म ब्रह्मविज्ञानं। मैत्री सर्वभूतेषु मित्रभावं। कारुण्यं करुणां। आत्मनः अनुत्तमं अत्युत्तमं उदारं पुण्यं ब्राह्मं अक्षयं कर्म च। प्रकाशयितुं अर्हन्ति भवन्तः। क्वचित् आर्षं ब्रह्मचर्यं प्रतीति पाठः। तत्र प्रतिशब्दः मैत्र्यादिभिः प्रत्येकं योज्यः। प्रति अधिकृत्य। तदिति। तत् उक्तं विबुधपतेरिन्द्रस्य वचनं श्रुत्वा सर्वे ऋषयः अमरवरं सुरेन्द्रं ऋग्भिः वेदमन्त्रैः तुष्टुवुः। प्रहृष्टाः सन्तः तद्वचनं अभिननन्दुश्च स्वीकारेण ॥ ३ ॥

अथेन्द्र इति। अथ इन्द्रः। तत् आयुर्वेदः अमृतमिव जरामृत्युहरत्वात्। तत् ऋषिभ्यः संक्रम्य कात्स्न्र्येन दत्त्वा उवाच। एतत्सर्वं यत् यत् मया उपदिष्टं भवद्भिश्च श्रुतं। तत्सर्वं अनुष्ठेयं कर्मणा साध्यं। अयं रसायनानां शिवः शुभः कालः। कुतः? यतः दिव्या ओषधयः हिमवतः प्रभावात् प्राप्तवीर्याः ॥ ४ ॥

तद्यथा । ऐन्द्री । ब्राह्मी । पयस्या । क्षीरपुष्पी । श्रावणी । महाश्रावणी । शतावरी । विदारी । जीवन्ती । पुनर्नवा । नागबला । स्थिरा । वचा । छत्रा । अतिच्छत्रा । मेदा । महामेदा । जीवनीयाश्चान्याः पयसा सहोपयुक्ताः षण्मासात् परं परमायुर्वयश्च तरुणमनामयत्वं स्वरवर्णसम्पदमुपचयं मेधां स्मृतिमुत्तमबलमिष्टांश्चापरान् भावानावहन्ति सिद्धाः ॥ ५ ॥

इतीन्द्रोक्तं रसायनम् ।

ब्रह्मसुवर्च्चला नामौषधिर्या हिरण्यक्षीरा पुष्करसदृशपत्रा ॥ आदित्यपर्णी नामौषधिर्या सूर्य्यकान्तेति विज्ञायते सुवर्णवर्णक्षीरा सूर्य्यमण्डलाकारपुष्पा च ॥ नारी नामौषधिरश्वबलेति

रसायनमाह—तद्यथेति । ऐन्द्री गोरक्षकर्कटी । ब्राह्मी स्वनामख्यातः शाकविशेषः । पयस्या क्षीरकाकोली । क्षीरपुष्पी स्वनामप्रसिद्धा । श्रावणी । महाश्रावणी । अनयोर्लक्षणं निवृत्तसन्तापीये रसायने उक्तं सुश्रुतेन—पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः । श्रावणी महती ज्ञेया कनकाभा पयस्विनी ॥ श्रावणी पाण्डुराभासा महाश्रावणिलक्षणा । इति (सु० चि० अ० ३०) । स्थिरा शालपर्णी । छत्रा शताह्वा । अतिच्छत्रा मधुरिका । एता उक्ताः । अनुक्ताः अन्याः । जीवनीयाः ओषधयः जीवकर्षभककाकोलीमुद्गपर्णीमाषपर्ण्याद्याः । ताः ओषधयः प्रत्येकं कल्किताश्चूर्णिता वा । प्रत्यहं प्रातः यथाग्निबलं पयसा दुग्धेन सह उपयुक्ताः षण्मासात् परं परमायुः तरुणं वयः अनामयत्वं नैरुज्यं स्वरवर्णसम्पदं उपचयं पुष्टिं मेधां स्मृतिं उत्तमं बलं अपरान् अन्यान् इष्टान् भावांश्च आवहन्ति । कुतः ? यतः सिद्धाः ताः सिद्धफलाः ॥५॥

ब्रह्मसुवर्चलादीनां दिव्यौषधीनां नातिप्रसिद्धतया तासां विज्ञानार्थमाह—ब्रह्मसुवर्चलेत्यादि । हिरण्यक्षीरा सुवर्णवर्णक्षीरा । पुष्करसदृशपत्रा पद्मपत्रसदृशपत्रा । तन्त्रान्तरेऽपि—कनकाभा जलान्तेषु सर्वतः परिसर्पति । सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला ॥ इति (सु० चि० अ० ३०) । आदित्यपर्णीति । सुवर्णवर्णं क्षीरं

विज्ञायते । या पुनरजसदृशपत्रा ॥ काष्ठगोधा नामौषधिर्गोधा-
कारा ॥ सर्पा नामौषधिः सर्पाकारा ॥ सोमा नामौषधिराजः
पञ्चदशपर्णः । स सोम इव हीयते वर्द्धते च ॥ पद्मा नामौषधिः
पद्माकारा पद्मरक्ता पद्मगन्धा च ॥ अजा नामौषधिरजशृङ्गीति
विज्ञायते ॥ नीला नामौषधिस्तु नीलक्षीरा नीलपुष्पा लता-
प्रतानबहुलेति ॥ आसामोषधीनां यां यामेव लभते तस्यास्तस्याः
स्वरसस्य सौहित्यं गत्वा स्नेहभावितायामार्द्रपलाशद्रोण्यां
सपिधानायां दिग्वासाः शयीत । तत्र प्रलीयते । षण्मासेन पुनः

यस्याः सा सुवर्णक्षीरा । सूर्यमण्डलाकारं सूर्यमण्डलाकृति पुष्पं यस्याः सा । सुश्रुते
च—मूलिनी पञ्चभिः पत्रैः सुरक्तांशुककोमलैः । आदित्यपर्णिनी ज्ञेया सदादित्यानु-
वर्त्तिनी । इति (सु० चि० अ० ३०) । नारीति । अजसदृशपत्रा छागविषाणसदृशपत्रा ।
काष्ठगोधेति । गोधाकारा । गोधा प्रसिद्धो जन्तुविशेषः । सर्पेति । सर्पाकारा सर्पसदृ-
शाकृतिः । सोम इति । ओषधीनां राजा इति ओषधिराजः । पञ्चदश पर्णानि यस्य स
पञ्चदशपर्णः । स सोमश्चन्द्र इव हीयते क्षीयते । वर्द्धते च । यथा कृष्णपक्षे प्रतिपदा-
दिषु पञ्चदशसु तिथिषु प्रतिदिनं चन्द्रस्य एकैककलाक्षयः शुक्लपक्षे च एकैककलावृद्धिः ।
तथा कृष्णपक्षे प्रतिदिनं सोमस्य ओषधिराजस्य एकैकं पत्रं क्षीयते । शुक्लपक्षे पुनर्जायते
च । तदुक्तं सुश्रुतेन—सर्वेषामेव सोमानां पत्राणि दश पञ्च च । तानि शुक्ले च कृष्णे च
जायन्ते निपतन्ति च ॥ एकैकं जायते पत्रं सोमस्याहरहस्तदा । शुक्लस्य पौर्णमा-
स्यां तु भवेत्पञ्चदशच्छदः ॥ शीर्यते पत्रमेकैकं दिवसे दिवसे पुनः । कृष्णपक्षक्षये चापि
लता भवति केवला ॥ इति (सु० चि० अ० २९) । कृष्णपक्षक्षये अमावास्यायां । पद्मेति ।
पद्माकारा पद्मसदृशाकृतिः । पद्मरक्ता । पद्मगन्धा पद्मस्य गन्ध इव गन्धो यस्याः सा ।
अजेति । अजा महौषधिर्ज्ञेया शंखकुन्देन्दुपाण्डुरा । (सु० चि० अ० ३० ) । नीलेति ।
नीलं नीलवर्णं क्षीरं यस्याः सा नीलक्षीरा । एवं नीलपुष्पा । लतायाः प्रतानः अति-
विस्तारः । स बहुलो यस्याः सा लताप्रतानबहुला । अस्मत्संगृहीतेषु पुस्तकेषु
आसामष्टानामोषधीनामिति पाठः । किन्तु ब्रह्मसुवर्चलादयो नव । तासु अन्यतमा का

सम्भवति । तस्याजं पयः प्रत्यवस्थापनम् । षण्मासेन देवतानुकारी भवति वयोवर्णस्वराकृतिबलप्रभाभिः । स्वयश्चास्य सर्ववाचोगतानि प्रादुर्भवन्ति । दिव्यश्चास्य चक्षुः श्रोत्रं च भवति । गतिर्योजनसहस्रं । दशवर्षसहस्राण्यायुरनुपद्रवञ्चेति ॥६॥

इति द्रोणीप्रावेशिकरसायनम् ।

भवन्ति चात्र ।

दिव्यानामोषधीनां यः प्रभावः स भवद्विधैः ।
शक्यः सोढुमशक्यस्तु स्यात् सोढुमकृतात्मभिः ॥७॥

वर्जनीया स्यात् ? इति निश्चयो हि अशक्यसम्भवः । इत्थं च अन्यतमापवर्जने मूलोच्छेदोऽपि स्यात् । इत्याशङ्कया इह अष्टानामिति पदस्य वर्जनं कृतं । तथात्वे मूलोच्छेदो न स्यात् । सन्तु नव । सन्तु वा अष्टौ । संख्याया अनभिधाने सर्वं समञ्जसं भवेत् । इत्यास्तां विस्तरः । आसामुक्तानां ब्रह्मसुवर्चलादीनामोषधीनां मध्ये यां यामोषधीं लभते । तस्याः तस्याः स्वरसस्य स्वरसेन सौहित्यं तृप्तिं गत्वा यावत्पानेन तृप्तिः स्यात् तावन्तं पीत्वा स्नेहभावितायां आर्द्रपलाशद्रोण्यां अशुष्कपलाशकाष्ठद्रोण्यां पुरुषप्रमाणायां सपिधानायां उपरि आच्छादनेन सहितायां दिग्वासाः नग्नोभूय शयीत । तत्र प्रलीयते तस्य पूर्वशरीरं लीयते । षण्मासेन पुनः सम्भवति पुनः सर्वावयवशाली भवति । प्रलीयते मूर्च्छति । षण्मासेन पुनः संभवति चैतन्यं लभते । इति व्याचक्षते केचित् । तस्य तत्र शयानस्य पुंसः आजं पयः छागदुग्धं प्रत्यवस्थापनं आहारसेवायां योज्यं । स च षण्मासेन वयोवर्णादिभिः देवतानुकारी भवति । देवसदृशवयोवर्णस्वरादिर्भवति । वाचोगतानि । वाचोगतानि इत्यलुक्समासः । अस्य सर्वाणि वाचोगतानि वाचा उक्तानि स्वयं प्रादुर्भवन्ति सिध्यन्तीत्यर्थः । अथवा वाचोगतानि वाङ्मात्रे स्थितानि अतीन्द्रियाणि स्वयं प्रादुर्भवन्ति । अस्य । दिवि भवं दिव्यं देवानामिव चक्षुः । श्रोत्रं च भवति । योजनसहस्रं गतिर्गमनं । दशवर्षसहस्राणि व्याप्य अनुपद्रवं नीरोगं आयुश्च भवति ॥ ६ ॥

भवन्ति चात्रेति । दिव्यानां औषधीनां प्रागुक्तब्रह्मसुवर्चलादीनां यः प्रभावः स

६ । आसामष्टानामोषधीनां इति सर्वेषु पुस्तकेषु ।

ओषधीनां प्रभावेण तिष्ठतां स्वे च कर्म्मणि ।
भवतां निखिलं श्रेयः सर्वथैवोपपत्स्यते ॥८॥
वानप्रस्थैर्गृहस्थैश्च प्रयतैर्नियतात्मभिः ।
शक्या ओषधयो ह्येताः सेवितुं विषयाभिजाः ॥९॥
यास्तु क्षेत्रगुणैस्तेषां मध्यमेन च कर्म्मणा ।
मृदुवीर्य्यतरास्तासां विधिर्ज्ञेयः स एव तु ॥१०॥
पर्य्येष्टुं ताः प्रयोक्तुं वा येऽसमर्थाः सुखार्थिनः ।
रसायनविधिस्तेषामयमन्यः प्रशस्यते ॥ ११ ॥

भवद्विधैः युष्मादृशैः कृतात्मभिरेव सोढुं शक्यः । अकृतात्मभिः असंयतात्मभिस्तु पुनः स सोढुं अशक्यः न शक्यः स्यात् । दिव्यौषधीनां प्रभावं भवद्विधाः कृतात्मान एव सोढुमर्हन्ति । न त्वकृतात्मानः । ओषधीनामिति । ओषधीनां दिव्यानां प्रभावेण स्वे स्वस्मिन् कर्मणि तपःप्रभृतिके तिष्ठतां । भवतां ब्रह्मर्षीणां निखिलं सकलं श्रेयः कल्याणं सर्वथैव साकल्येनैव उपपत्स्यते भविष्यति । दिव्यौषधिप्रभावेण । वानप्रस्थैरिति । प्रयतैः प्रयत्नवद्भिः नियतात्मभिः संयतात्मभिः वानप्रस्थैः वानप्रस्थाश्रमे स्थितैः तथाविधैः गृहस्थैः गृहिभिश्चापि विषयाभिजाः पुण्यदेशे जाताः एताः ओषधयः सेवितुं शक्याः । वानप्रस्था गृहस्थाश्च ये भवन्त इव उत्तमकर्माणः ते तासां दिव्यौषधीनां प्रभावं सोढुं शक्नुवन्ति ॥ ७—९ ॥

ननु या ओषधयः न हिमवत्तुल्ये उत्कृष्टक्षेत्रे जायन्ते ताः सेव्या न वेति ? आह—यास्त्विति । याः ओषधयः पुनः क्षेत्रगुणैः क्षेत्रधर्मैः । ततोऽपि किञ्चिदूनक्षेत्रे जातत्वात् तेषां क्षेत्रगुणानां मध्यमेन कर्मणा मृदुवीर्यतराः अतिशयेन मृदुवीर्याः । ता अपि प्रयोज्याः । तासां प्रयोगविधिमाह—तासामिति । तासामोषधीनां विधिः प्रयोगविधिः पुनः स एव प्रागुक्तवदेव ज्ञेयः । अत्यन्तमपकृष्टे क्षेत्रे जातास्तु न सेव्या एव इति भावः ॥ १० ॥

पर्येष्टुमिति । ये पुनः ताः दिव्यौषधीः पर्येष्टुं तासामन्वेषणं कर्तुं । प्रयोक्तुं वा । असमर्थाः प्रभावसहने अशक्तत्वात् । किन्तु सुखार्थिनः रसायनविधिना आत्मनो

बल्यानां जीवनीयानां बृंहणीयाश्च या दश ।
वयसः स्थापनानाञ्च खदिरस्यासनस्य च ॥१२॥
खर्ज्जूराणां मधूकानां मुस्तानामुत्पलस्य च ।
मृद्वीकानां विडङ्गानां वचायाश्चित्रकस्य च ॥१३॥
शतावर्य्याः पयस्यायाः पिप्पल्या जोङ्गकस्य च ।
ऋद्ध्या नागबलायाश्च हरिद्राया धवस्य च ॥१४॥
त्रिफलाकण्टकार्य्योश्च विदार्य्याश्चन्दनस्य च ।
इक्षूणां शरमूलानां श्रीपर्ण्यास्तिनिशस्य च ॥१५॥
रसाः पृथक् पृथग् ग्राह्याः पलाशक्षार एव च ।
एषां पलोन्मितान् भागान् पयो गव्यं चतुर्गुणम् ॥१६॥

दीर्घायुरादिकं कामयन्ते । तेषां तथाविधानां पुंसां सम्बन्धे अयं वक्ष्यमाणप्रकारः अन्यः रसायनविधिः प्रशस्यते ॥ ११ ॥

तेषां रसायनविधिमाह—बल्यानामित्यादि । बल्यानां रसा इत्यनेन सम्बन्धः । एवं सर्वत्र । प्राक् षड्विरेचनशतीये उक्तानां बल्यानां ऐन्द्रृषभ्यादीनां दशानामोषधीनां । जीवनीयानां जीवकर्षभकादीनां । बृंहणीयाः या दश ओषधयः क्षीरिण्यादयः प्राक् षड्विरेचनशतीये उक्ताः । तासां । वयसः स्थापनानां अमृताभयादीनां दशानां ओषधीनां । तथा खदिरस्य असनस्य च । असनः शालभेदः । खर्ज्जूराणां । मधूकानां । मुस्तानां । उत्पलस्य । मृद्वीकानां द्राक्षाणां । विडङ्गानां । वचायाः । चित्रकस्य । शतावर्याः । पयस्यायाः क्षीरकाकोल्याः । पिपल्याः । जोङ्गकस्य अगुरुणः । ऋद्ध्या । ऋद्धिः स्वनामख्याता । नागबलायाः । हरिद्रायाः । धवस्य । त्रिफलाकण्टकार्योः । त्रिफलायाः कण्टकार्याश्च । विदार्याः विदारीकन्दस्य । चन्दनस्य रक्तचन्दनस्य । इक्षूणां । शरमूलानां शराणां मूलानि तेषां । श्रीपर्ण्याः गाम्भार्याः । तिनिशस्य च । आसामोष-

१२ । बल्यानां जीवनीयानां प्रीणनीयाश्च यादश इति गपुस्तके ।

१४ । ऋद्ध्यानागबलायाश्च......इक्षूणांशरमूलानां इति सन्दर्भः न पठ्यते ड पुस्तके

१६ । एषां पात्रोन्मितान् भागान् इति ग पुस्तके ।

द्वे पात्रे तिलतैलस्य द्वे च गव्यस्य सर्पिषः।
तत् साध्यं सर्वमेकत्र सुसिद्धं स्नेहमुद्धरेत् ॥१७॥
तत्रामलकचूर्णानामाढ़कं शतभावितम्।
स्वरसेनैव दातव्यं क्षौद्रस्याभिनवस्य च ॥१८॥
शर्कराचूर्णपात्रञ्च प्रस्थमेकं प्रदापयेत्।
तुगाक्षीर्य्याः सपिप्पल्याः स्थाप्यं संमूर्च्छितञ्च तत् ॥१६
सुचौक्षे मार्त्तिके कुम्भे मासार्द्धं घृतभाविते।
मात्रामग्निसमां तस्य तत ऊर्ध्वं प्रयोजयेत् ॥२०॥
हेमताम्रप्रवालानामयसः स्फटिकस्य च।
मुक्तावैदूर्य्यशङ्खानां चूर्णानां रजतस्य च ॥२१॥
प्रक्षिप्य षोड़शीं मात्रां विहायायासमैथुनम्।
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ॥२२॥

धीनां रसाः यथासम्भवं रसाः क्वाथा वा पृथक् पृथक् ग्राह्याः। तथा पलाशक्षारोदकं च ग्राह्यम्। एषां तत्तद्रसानां पलाशक्षारस्य च प्रत्येकं पलोन्मितान् भागान्। तच्चतुर्गुणं गव्यं पयः दुग्धं। तिलतैलस्य द्वे पात्रे आढके। गव्यस्य सर्पिषो घृतस्य द्वे पात्रे च। दद्यादिति शेषः। तत्सर्वं एकत्र साध्यं पाच्यं। सुसिद्धं शब्दस्य फेनस्य चोपरमात् गन्धवर्णरसादीनां सम्पत्त्या च सम्यक् पक्वं स्नेहं घृततैलयमकं उद्धरेत् अवतारयेत्। तत्र तस्मिन् स्नेहयमके आमलकीनां स्वरसेन शतभावितं शतं वारान् भावितं तथाविधं आमलकचूर्णानां आढकं दातव्यं। तथा अभिनवस्य क्षौद्रस्य मधुनः एकं प्रस्थं। शर्कराचूर्णानां पात्रं आढकमेकं च। तुगाक्षीर्याः वंशलोचनायाः सपिप्पल्याः पिप्पल्याश्च एकं प्रस्थं। तत्र प्रदापयेत्। तत्सर्वं संमूर्च्छितं दर्व्या सम्यगालोडनेन मिश्रितं शुचौक्षे सुविशुद्धे अतिमनोज्ञे वा घृतभाविते मार्तिके मृन्मये कुम्भे मासार्द्धं पक्षं व्याप्य स्थाप्यं स्थापयेत्। तत उर्द्धं पक्षादूर्ध्वं तस्यौषधस्य अग्निसमां अग्निबलानुरूपां मात्रां गृहीत्वा

सर्वरोगप्रशमनं वृष्यमायुष्यमुत्तमम् ।
सत्त्वस्मृतिशरीराग्निबुद्धीन्द्रियबलप्रदम् ॥२३॥
परमूर्ज्जस्करञ्चैव वर्णस्वरकरं तथा ।
विषालक्ष्मीप्रशमनं सर्ववाचोगतप्रदम् ॥२४॥
सिद्धार्थताञ्चाभिनवं वयश्च प्रजाप्रियत्वञ्च यशश्च लोके ।
प्रयोज्यमिच्छद्भिरिदं यथावद्रसायनं ब्राह्ममुदारवीर्य्यम् ॥२५॥
इतीन्द्रोक्तरसायनमपरम् ।

समर्थानामरोगाणां धीमतां नियतात्मनाम् ।
कुटीप्रवेशः क्षमिणां परिच्छदवतां हितः ॥२६॥

तत्र हेमताम्रप्रवालानां अयसः लौहस्य स्फटिकस्य मुक्तावैदूर्यशङ्खानां । वैदूर्यं विदूर-भूमौ जातो मणिभेदः । रजतस्य च चूर्णानां । चूर्णीकृतानां हेमादिरजतान्तानां नवानां षोडशीं पलरूपां मात्रां। औषधस्य षोडशभागैकभागरूपां मात्रां वा। प्रक्षिप्य आयास-मैथुनं विहायव्यायामव्यवायौ वर्जयित्वा तामग्निसमां मात्रां प्रत्यहं प्रयोजयेत् । औषधे जीर्णे जीर्णे प्रतिदिनं जीर्णे सति क्षीरसर्पिषा षष्टिकमन्नं भुञ्जीत । सर्वरोगेति । एतत् रसायनं सर्वरोगप्रशमनं । उत्तमं वृष्यं । आयुष्यं । सत्त्वं । स्मृतिः । शरीरं । अग्निः जाठरः । शरीराग्निर्वा । बुद्धिः । इन्द्रियाणि च । तेषां बलं । तत्प्रदं । परमतीव ऊर्जस्करं । वर्णस्वरकरं । विषस्य अलक्ष्म्याश्च प्रशमनं । सर्ववाचोगतप्रदं । सर्वं विद्याप्रदं । सिद्धार्थतामिति । लोके सिद्धार्थतां सर्वत्र सफलकामत्वं । अभिनवं वयः । प्रजाप्रियत्वं लोकप्रियत्वं । यशश्च । इच्छद्भिः कामयमानैः पुरुषैः उदारवीर्यं इदं ब्राह्मं रसायनं यथा-वत् यथाविधि प्रयोज्यं । अस्य यथाविधि प्रयोगेण तेषां तत् सर्वं भवति ॥ २५ ॥

कुटीप्रावेशिको वातातपिकश्च इति द्विविधो रसायनविधिः प्रागुक्तः । तत्र कुटी-प्रावेशिकविधिं दर्शयित्वा सम्प्रति तत्साध्यान् पुरुषान् दर्शयति—समर्थानामिति । समर्थानां शक्तिमतां । अरोगाणां । धीमतां । नियतात्मनां संयतात्मनां । क्षमिणां क्षमाशीलानां । परिच्छदवतां धनजनादिसम्पन्नानां । तथाविधानां पुंसां । कुटीप्रवेशो हितः ॥ २६ ॥

अतोऽन्यथा तु ये तेषां सौर्य्यमारुतिको विधिः ।
तयोः श्रेष्ठतरः पूर्वो विधिः स तु सुदुष्करः ॥२७॥
रसायनविधिभ्रंशाज्जायेरन् व्याधयो यदि ।
यथास्वमौषधं तेषां कार्य्यं मुक्त्वा रसायनम् ॥२८॥
सत्यवादिनमक्रोधं निवृत्तं मद्यमैथुनात् ।
अहिंसकमनायासं प्रशान्तं प्रियवादिनम् ॥२९॥
जपशौचपरं धीरं दाननित्यं तपस्विनम् ।
देवगोब्राह्मणाचार्य्यगुरुवृद्धार्च्चने रतम् ॥ ३० ॥
आनृशंस्यपरं नित्यं नित्यं कारुण्यवेदिनम् ।
समजागरणस्वप्नं नित्यं क्षीरघृताशिनम् ॥३१॥

वातातपिकविधिसाध्यान् पुरुषानाह—अतोऽन्यथेति । ये पुरुषाः अतः अन्यथा उक्तविधेभ्यः विपरीताः । अर्थात् असम्मर्थाः रोगिणः अबुद्धिमन्तः अकृतात्मानः अक्षमिणः धनजनादिसम्पद्रहिताश्च । तेषां सौर्यमारुतिकः वातातपिको विधिः हितः । ननु कथं समर्थादिभिः कुटीप्रावेशिको विधिः कार्यः ? इतरैः पुनर्वातातपिक इति ? अत आह—तयोरिति । तयोर्विध्योर्द्वयोः मध्ये पूर्वः प्रथमः कुटीप्रावेशिको विधिः श्रेष्ठतरः । तस्मात् श्रेष्ठतरैः समर्थादिभिः स कार्यः । ननु कुटीप्रावेशिकस्य श्रेष्ठतरत्वे असमर्थादिभिरपि स एव क्रियतां ? न पुनर्वातातपिकः इति ? अत आह—स त्विति । स तु स कुटीप्रावेशिको विधिः पुनः सुदुष्करः अतीवदुष्करः । तस्मात् असमर्थादिभिः स कर्तुं न शक्यते । अतस्तेषां वातातपिको विधिः ॥ २७ ॥

रसायनविधीति । रसायनानां विधेः भ्रंशादपायात् यदि व्याधयो रोगाः जायेरन् भवेयुः । तदा रसायनं मुक्त्वा त्यक्त्वा तेषां व्याधीनां यथास्वं सर्वमौषधं कार्यं ॥२ ॥

कस्य पुना रसायनमेकान्तेन सिध्यति ? अत आह—सत्यवादिनमित्यादि । मद्यात् मैथुनात् च निवृत्तं । अनायासं अश्रमकारिणं । प्रशान्तं प्रशान्तचित्तं । देवः । गौः । ब्राह्मणः । आचार्यः शास्त्रोपदेष्टा । गुरुः पित्रादिगुरुजनः । वृद्धश्च । तेषामर्च्चनं पूजनं । तस्मिन् रतं ।

२७ । विधिः सतु सदुःसहः इति ग पुस्तके ।

देशकालप्रमाणज्ञं युक्तिज्ञमनहंकृतम् ।
शस्ताचारमसंकीर्णमध्यात्मप्रवणेन्द्रियम् ॥३२॥
उपासितारं वृद्धानामास्तिकानां जितात्मनाम् ।
धर्म्मशास्त्रपरं विद्यान्नरं नित्यरसायनम् ॥३३॥
गुणैरेतैः समुदितैः प्रयुङ्क्ते यो रसायनम् ।
रसायनगुणान् सर्वान् यथोक्तान् स समश्नुते ॥३४॥

इत्याचाररसायनम् ॥

यथास्थूलमनिर्वाह्य दोषाञ् शारीरमानसान् ।
रसायनगुणैर्जन्तुर्युज्यते न कदाचन ॥ ३५ ॥

नित्यं आनृशंस्यपरं अक्रूरं । नित्यं कारुण्यवेदिनं कारुण्यवेत्तारं सर्वभूतेषु करुणावन्तं । समौ तुल्यौ जागरणं स्वप्नः निन्द्रा च तौ यस्य तं । निशि जागरणेन जागरणस्याधिक्यं भवति । दिवास्वप्नेन च स्वप्नस्य । नित्यं क्षीरघृताशिनं । देशः । कालः प्रमाणं प्रमितेः ज्ञानस्य साधनं च । तानि जानाति यः स देशकालप्रमाणज्ञः । यो देशकालौ विचारयितुं प्रमाणेन वस्तु अवधारयितुं च शक्तः । तं । शस्ताचारं मङ्गलाचारं । असङ्कीर्णं सङ्कीर्णभावरहितं । अध्यात्मप्रवणानि प्रायेण अध्यात्मविषयोन्मुखानि इन्द्रियाणि यस्य तं । वृद्धादीनां उपासितारं । धर्मशास्त्रपरं तथाविधं नरं । नित्यं रसायनं रसायनप्रयोगो यस्य स तं नित्यरसायनं सततांचरितरसायनं । विद्यात् ॥ २९—३३ ॥

गुणैरिति । एतैरुक्तैर्गुणैः सत्यवादित्वादिभिः समुदितैः मिलितैः सर्वैः उपलक्षितः यः रसायनं प्रयुंक्ते । स यथोक्तान् सर्वानेव रसायनगुणान् समश्नुते । तथाविधस्य पुंसो रसायनप्रयोगः सर्वथैव सिध्यति ॥ ३४ ॥

शारीरमानसदोषवतां रसायनासिद्धिमाह—यथास्थूलमिति । शारीरमानसान् दोषान् । स्थूलाननतिक्रम्य यथास्थूलं । अनिर्वाह्य अनिःसार्य । सूक्ष्माणां निःसारयितुमशक्यत्वात् तेषामनिःसारणे न दोष इति भावः । जन्तुर्नरः रसायनगुणैः यथोक्तैः कदाचन कदापि न युज्यते ॥ ३५ ॥

---

३२ । अध्यात्म प्रवलेन्द्रियम् इति क पुस्तके ।

योगा ह्यायुःप्रकर्षार्था जरारोगनिवर्हणाः ।
मनःशरीरशुद्धानां सिध्यन्ति प्रयतात्मनाम् ॥३६॥
तदेतन्न भवेद्वाच्यं सर्व्वमेव हतात्मसु ।
अरुजेभ्योऽद्विजातिभ्यः शुश्रूषा येषु नास्ति च ॥३७॥
ये रसायनसंयोगा वृष्या योगाश्च ये मताः ।
यच्चौषधं विकाराणां सर्वं तद्वैद्यसंश्रयम् ॥३८॥
प्राणाचार्यं बुधस्तस्माद्धीमन्तं वेदपारगम् ।
अश्विनाविव देवेन्द्रः पूजयेदतिशक्तितः ॥ ३९ ॥

शारीरमानसदोषरहितानां रसायनसिद्धिमाह—योगा इति। मनसि शरीरे च शुद्धाः। तेषां मनःशरीरशुद्धानां। शारीरमानसदोषरहितानां। प्रयतात्मनां संयतात्मनां। तथाविधानां पुंसां हि। आयुःप्रकर्षकराः आयुरुत्कर्षकराः। जराया व्याधेश्च निवर्हणा निवर्त्तकाः। योगा रसायनयोगाः सिध्यन्ति ॥ ३६ ॥

एवं रसायनमुपदिश्य तत्संप्रदायप्रवर्त्तने नियममाह—तदेतदिति। तत् तस्मात् एतत्सर्वमेव रसायनं हतात्मसु हतभाग्येषु अपुण्यकृत्सु न वाच्यं वक्तव्यं। तथा अरुजेभ्यः स्वस्थेभ्यः। तेषां रसायनस्य प्रयोजनमेव नास्ति। अद्विजातिभ्यः शूद्रेभ्यः। तथा येषु शुश्रूषा श्रवणेच्छा नास्ति। तेऽभ्योपि च न वाच्यं ॥ ३७ ॥

औषधप्रयोगेषु सर्वेष्वेव सिद्धिर्वैद्याधीना इति दर्शयन् सम्प्रति वैद्यस्तुतिप्रकरणमारभते—ये रसायनसंयोगा इत्यादि। ये रसायनसंयोगाः रसायनयोगाः। ये च वृष्याः योगाः वाजीकरणयोगाः। रसायनवाजीकरणरूपं द्विविधं यत् स्वस्थस्योर्जस्करं भेषजं। यच्च विकाराणां औषधं यच्च रोगघ्नमौषधं। तत् सर्वं वैद्यसंश्रयं वैद्याश्रितं वैद्याधीनसिद्धिकं ॥ ३८ ॥

प्राणाचार्यमिति। तस्मात् बुधः विद्वान्। धीमन्तं बुद्धिमन्तं वेदपारगं कृत्स्नायुर्वेदवेदिनं प्राणाचार्यं भिषजं देवेन्द्रः अश्विनाविव यथा इन्द्रः अश्विनौ

३७। अरुजेभ्योऽद्विजातिभ्यः इति ख पुस्तके। ३७। अजरेभ्योऽद्विजातिभ्यः इति ग पुस्तके।

अश्विनौ देवभिषजौ यज्ञवाहाविति स्मृतौ ।
यज्ञस्य हि शिरश्छिन्नं पुनस्ताभ्यां समाहितम् ॥४०॥
प्रशीर्णा दशनाः पूष्णो नेत्रे नष्टे भगस्य च ।
वज्रिणश्च भुजस्तम्भस्ताभ्यामेव चिकित्सितः ॥४१॥
चिकित्सितस्तु शीतांशुर्गृहीतो राजयक्ष्मणा ।
सोमातिपतितश्चन्द्रः कृतस्ताभ्यां पुनः सुखी ॥४२॥
भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः ।
वीर्यवर्णस्वरोपेतः कृतस्ताभ्यां पुनर्युवा ॥४३॥

देवभिषजौ अत्यर्थं पूजयति । तथा प्राणाचार्यं अतिशक्तितः अतिशक्त्या स्वशक्तेरप्यतिक्रमेण पूजयेत् ॥ ३६ ॥

अश्विनाविव देवेन्द्र इत्युक्तं । कौ तावश्विनौ ? किमर्थं वा पूजितौ ? इत्याकांक्षायां सर्वं विवृत्याह—अश्विनावित्यादि । अश्विनौ देवभिषजौ स्वर्वैद्यौ । यज्ञं वहतः यज्ञस्य शिरःसन्धानेन यज्ञं निर्वाहयतः इति यज्ञवाहौ । तौ यज्ञवाहौ इति स्मृतौ ख्यातौ । यज्ञवाहावित्युक्तं विवृणोति—यज्ञस्य हीति । दक्षस्य प्रजापतेर्यज्ञे यज्ञस्य क्रतोः शिरः छिन्नं । तत् ताभ्यामश्विभ्यां पुनः समाहितं संयोजितं । पूष्णः सूर्यस्य दशनाः दन्ताः प्रशीर्णाः । ते च दन्ताः ताभ्यां चिकित्सिताः । भगस्य । भगोऽपि सूर्यभेदः । नेत्रे नष्टे । ताभ्यां चिकित्सिते । वज्रिणः इन्द्रस्य भुजस्तम्भः । ताभ्यामश्विभ्यां चिकित्सितः । शीतांशुः चन्द्रः राजयक्ष्मणा रोगेण गृहीतः पीडितः सन् ताभ्यामश्विभ्यां चिकित्सितः । मुक्तरोगः अभूत् । सोमातिपतितः सोमातिपातयोगेन युक्तः । तेन क्षपितवीर्यः । तथाच मदात्ययचिकित्सिते—सोमोऽतिपतितो यया । नीरजस्तमसाविप्रस्तस्माद्दुर्गात् समुद्धृतः ॥ इति । चन्द्रः ताभ्यामश्विभ्यां पुनः सुखी नीरोगः कृतः । भार्गव इति । कामी भार्गवः भृगुपुत्रः च्यवनः तदाख्यः मुनिः वृद्धः वलिपलितादिना विकृतिं गतः सन्नपि ताभ्यामश्विभ्यां पुनः वीर्यवर्णस्वरैः उपेतः युवा कृतः । एतैरिति । भिषगुत्तमौ वैद्यश्रेष्ठौ तौ अश्विनौ एतैः प्रागुक्तैः एवंविधैः अन्यैश्च बहुभिः कर्मभिः इन्द्रादीनां महात्मनां भृशमतीव पूज्यौ बभूवतुः । ग्रहा इति । द्विजातिभिः ग्रहाः सोमपान-

एतैश्चान्यैश्च बहुभिः कर्म्मभिर्भिषगुत्तमौ ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम् ॥४४॥
ग्रहाः स्तोत्राणि मन्त्राश्च तथान्यानि हवींषि च ।
धूमाश्च पशवस्ताभ्यां प्रकल्प्यन्ते द्विजातिभिः ॥४५॥
प्रातश्च सवने सोमं शक्रोऽश्विभ्यां सहाश्नुते ।
सौत्रामण्याञ्च भगवानश्विभ्यां सह मोदते ॥४६॥
इन्द्राग्नी चाश्विनौ चैव स्तूयन्ते प्रायशो द्विजैः ।
स्तूयन्ते वेदवाक्येषु न तथान्या हि देवताः ॥४७॥
अमरैरजरैस्तावद्विबुधैः साधिपैर्ध्रुवैः ।
पूज्येते प्रयतैरेवमश्विनौ भिषजाविति ॥४८॥

पात्राणि । स्तोत्राणि स्तवाः स्तुतिवाचः । मन्त्राः । मन्त्राणीति वा पाठः । मन्त्र्यन्ते इति मन्त्राणि अभिमन्त्रितानि । तथा अन्यानि हवींषि होमद्रव्याणि । घृतानि वा । धूमाः धूपाः । पशवः छागाः । छागोऽनादेशे पशोरिति शास्त्रात् पशुशब्देनेह छागएव विवक्षितः । धूमा इत्यत्र धूम्रा इति पाठे धूम्रवर्णाः पशवश्च । ताभ्यामश्विभ्यां प्रकल्प्यन्ते प्रदीयन्ते । प्रातश्चेति । भगवान् शक्रः सवने यज्ञस्थाने प्रातः अश्विभ्यां सह सोमं अश्नुते पिबति । सौत्रामण्यां । सुत्रामा इन्द्रः । तद्देवताका इष्टिः सौत्रामणी । तस्यां सौत्रमण्यां च अश्विभ्यां सह सोमं पिबन् मोदते भगवान् शक्रः । इन्द्राग्नी इति । द्विजैः वेदवाक्येषु प्रायशः इन्द्राग्नी अश्विनौ च एते एव यथा स्तूयन्ते न तथा अन्याः देवताः स्तूयन्ते ॥४०–४७॥

अजरैरिति । अजरैरमरैः विबुधैः । अजरामरविबुधशब्दाः देववाचिनः । एकार्थवाचित्वेऽपि त्रयाणां इह पृथग्ग्रहणं मर्त्त्येभ्यो जरामरणयुक्तेभ्यश्चाज्ञेभ्यो देवानां वैशिष्ट्यं दर्शयितुं । तेनापुनरुक्तत्वं । अमरत्वेन ध्रुवैः शाश्वतैः । सह अधिपेन वर्तमानाः साधिपाः । तैः । न केवलं साधारणदेवैः । किन्तु तेषामधिपेन इन्द्रेणापि । प्रयतैः सद्भिः अश्विनौ भिषजौ इति हेतोः इत्येवकारणात् एवं पूज्येते । मृत्युव्याधीति । यतः जरामरणव्याधिरहिताः इन्द्रादयो देवा अपि स्ववैद्यावश्विनौ एवं

मृत्युव्याधिजरावश्यैर्दुःखप्रायैः सुखार्थिभिः ।
किं पुनर्भिषजो मर्त्यैः पूज्याः स्युर्नातिशक्तितः ॥४६॥

शीलवान् मतिमान् युक्तस्त्रिजातिः शास्त्रपारगः ।
प्राणिभिर्गुरुवत् पूज्यः प्राणाचार्यः स हि स्मृतः ॥५०॥

विद्यासमाप्तौ भिषजस्तृतीया जातिरुच्यते ।
अश्नुते वैद्यशब्दं हि न वैद्यः पूर्वजन्मना ॥५१॥

पूजयन्ति । ततः । मृत्युः । व्याधिः । जरा च । तासां वश्यैः अधीनैः । दुःखप्रायैः रोगबहुलैः । मर्त्यैः मरणधर्मभिः । मानवैः सुखार्थिभिः आरोग्यार्थिभिः सद्भिः भिषजः किं पुनः अतिशक्तितः अतिशक्त्या स्वशक्तेरप्यतिक्रमेण न पूज्याः स्युः न पूज्येरन् ? किन्तु पूज्याः स्युरेव ॥ ४८ । ४६ ॥

शीलवानिति । शीलवान् चरित्रवान् । मतिमान् । युक्तः युक्तिज्ञः । त्रिजातिः । शास्त्रस्य आयुर्वेदस्य पारगः । प्राणिभिः गुरुवत् गुरुरिव पूज्यः । कुतः ? हि यतः स प्राणाचार्य इति स्मृतः ॥ ५० ॥

वैद्यस्य त्रिजातित्वं उक्तं । तदेव दर्शयति—विद्यासमाप्ताविति । विद्यासमाप्तौ भिषजः वैद्यस्य तृतीया जातिः जन्म उच्यते । प्रथमा जातिः मातृगर्भतो जन्म । द्वितीया जातिरुपनयनात् । तृतीया तु वैद्यविद्यासमाप्तौ । अतः शास्त्रपारगो वैद्यः विद्यासमाप्तिलक्षणतृतीयजन्मना त्रिज उच्यते । वैद्यत्वं वैद्यस्य विद्यायोगादेव भवतीत्याह—अश्नुते इति । विद्यासमाप्तौ सत्यां हि लोकः वैद्यशब्दं अश्नुते । वैद्यपदवाच्यो भवति । न तु पूर्वेण प्रथमेन जन्मना उत्पत्तिलक्षणेन । न च उपनयनलक्षणेन द्वितीयेन जन्मना वैद्यो भवति । न हि जातमात्रः कश्चिद्वैद्यो भवति । किन्तु शास्त्रमधीत्य विद्यायोगादेव ॥ ५१ ॥

---

५१ । भिषजो द्वितीया जातिरुच्यते इति च पुस्तके ।

५१ । अयुक्तो वैद्यशब्दं हि नावैद्यं पूर्वजन्मना इति ग पुस्तके ।

विद्यासमाप्तौ ब्राह्मं वा सत्त्वमार्षमथापि वा ।
ध्रुवमाविशति ज्ञानात् तस्माद्वैद्यस्त्रिजः स्मृतः ॥५२॥

नाभिध्यायेन्न चाक्रोशेदहितं न समाचरेत् ।
प्राणाचार्यं बुधः कश्चिदिच्छन्नायुरनित्वरम् ॥५३॥

चिकित्सितस्तु संश्रुत्य यो वाऽसंश्रुत्य मानवः ।
नोपाकरोति वैद्याय नास्ति तस्येह निष्कृतिः ॥५४॥

भिषगप्यातुरान् सर्वान् स्वसुतानिव यत्नवान् ।
आबाधेभ्यो हि संरक्षेदिच्छन् धर्ममनुत्तमम् ॥५५॥

विद्यासमाप्ताविति । विद्यासमाप्तौ सत्यां ब्राह्मं सत्त्वं अथवा आर्षं सत्त्वं कर्तृ वैद्यं ध्रुवं निश्चितं आविशति । तस्मात् ज्ञानात् विद्यालक्षणतृतीयजन्मना वैद्यः त्रिजः स्मृतः ॥ ५२ ॥

वैद्यं प्रति आतुरेण यथा कर्त्तव्यं तदाह—नाभिध्यायेदिति । आत्मनः आयुः अनित्वरं अगत्वरं । स्थिरमित्यर्थः । इच्छन् । बुधः ज्ञानवान् कश्चित् कोऽपि प्राणाचार्यं न अभिध्यायेत् न तस्य धनादिविषयस्पृहां कुर्यात् । अभिध्या परस्वविषयस्पृहा । न आक्रोशेत् न शपेत् । न तस्य अहितं समाचरेत् ॥ ५३ ॥

चिकित्सित इति । योमानवः वैद्येन चिकित्सितः रोगमुक्तः सन् । वैद्याय संश्रुत्य प्रतिश्रुत्य प्रतिज्ञाय । असंश्रुत्य वा । न उपाकरोति धनादिकं न ददाति । इह लोके परत्रापि तस्य निष्कृतिः निस्तारो नास्ति ॥ ५४ ॥

वैद्येनापि आतुरं प्रति यथा वर्तितव्यं तदाह—भिषगप्यातुरानिति । अनुत्तमं धर्मं इच्छन् भिषगपि यत्नवान् सन् सर्वान् आतुरान् रोगिणः स्वसुतान् आत्मनः पुत्रानिव । आबाधेभ्यः विपद्भ्यः । रोगेभ्य इत्यर्थः । संरक्षेत् । व्याधिभ्य आतुररक्षणं हि वैद्यस्य परमो धर्मः ॥ ५५ ॥

धर्म्मार्थश्चार्थकामार्थमायुर्वेदो महर्षिभिः ।
प्रकाशितो धर्म्मपरैरिच्छद्भिः स्थानमक्षरम् ॥५६॥

नार्थार्थं नापि कामार्थमथ भूतदयां प्रति ।
वर्त्तते यश्चिकित्सायां स सर्वमतिवर्त्तते ॥५७॥

कुर्वते ये तु वृत्त्यर्थं चिकित्सापुण्यविक्रयम् ।
ते हित्वा काञ्चनं राशिं पांशुराशिमुपासते ॥५८॥

आयुर्वेदप्रकाशने चतुर्वर्गफलमाह—धर्मार्थमिति । अक्षरं स्थानं मोक्षलक्षणं इच्छद्भिः । अनेन मोक्षार्थमित्यपि ख्यापितं । धर्मपरैः महर्षिभिः । धर्मार्थं धर्मनिमित्तं । अर्थकामार्थं अर्थकामनिमित्तं च । आयुर्वेदः प्रकाशितः । आयुर्वेदप्रकाशने धर्मः अर्थः कामो मोक्ष इति चतुर्वर्गः फलं ॥ ५६ ॥

तत्र धर्मार्थचिकित्सायाः सर्वश्रेष्ठत्वमाह—नार्थार्थमिति । यः न अर्थार्थं न वा कामार्थं चिकित्सायां प्रवर्त्तते । किन्तु भूतेषु सर्वेषु दया । तां प्रति । भूतदयामुद्दिश्य। भूतदया हि धर्मः । चिकित्सायां वर्तते । स सर्वं अतिवर्तते अतिक्रामति । स हि सर्वश्रेष्ठः । धर्मार्थचिकित्सायाः स्वर्गापवर्गसाधनत्वात् । तथा च धर्मलक्षणं । यदाह भगवान् कणादः—यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । इति (वैशेषिकदर्शन,१।१।२)। अभ्युदयः स्वर्गः । निःश्रेयसं मोक्षः आत्यन्तिकदुःखनिवृत्तिलक्षणः । तत्र धर्मस्य स्वर्गसाधनता साक्षादेव । मोक्षसाधनता तु तत्त्वज्ञानद्वारेण । इति विशेषः । एवं स्वर्गापवर्गसाधनतया धर्मार्थचिकित्सैव श्रेष्ठा ॥ ५७ ॥

वृत्त्यर्थचिकित्साया निन्दामाह—कुर्वते इति । ये पुनः भिषजः । वृत्तिः जीविका । तदर्थं । चिकित्सा एव पण्यं विक्रेयद्रव्यं । तस्य विक्रयः । तं कुर्वते । आतुरसकाशात् धनमादाय । ते काञ्चनं राशिं सुवर्णराशिं हित्वा त्यक्त्वा पांशुराशिं भस्मराशिं उपासते ॥ ५८ ॥

---

५६ । धर्मार्थं नार्थकामार्थं इति ख पुस्तके ॥ धर्मार्थं मोक्षकामार्थं इति ग पुस्तके ॥

दारुणैः कृष्यमाणानां गदैर्वैवस्वतक्षयम् ।
छित्त्वा वैवस्वतान् पाशान् जीवितं यः प्रयच्छति ॥५९॥

धर्म्मार्थदाता सदृशस्तस्य नेहोपलभ्यते ।
न हि जीवितदानाद्धि दानमन्यद्विशिष्यते ॥६०॥

परो भूतदया धर्म्म इति मत्वा चिकित्सया ।
वर्त्तते यः स सिद्धार्थः सुखमत्यन्तमश्नुते ॥६१॥

तत्र श्लोकौ ।

आयुर्वेदसमुत्थानं दिव्यौषधिविधिः शुभः ।
अमृताल्पान्तरगुणं सिद्धं रत्नरसायनम् ॥६२।

दारुणैरित्यादि । दारुणैः गदैः रोगैः । वैवस्वतस्य यमस्य क्षयः भवनं । तं प्रति कृष्यमाणानां नीयमानानां आतुराणां । वैवस्वतान् पाशान् छित्वा पाशसदृशेभ्यः रोगेभ्यो मोचयित्वा । यो भिषक् तेभ्यः जीवितं प्रयच्छति । तस्य सदृशः धर्मार्थदाता । धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमं । इति ( च० श्लो० १ ) । चतुवर्गं प्रति मूलकारणस्यारोग्यस्य जीवितस्य च प्रदानात् धर्मार्थदाता काममोक्षदाता चापि कश्चित् इह लोके न उपलभ्यते । न हि जीवितदानात् अन्यत् किञ्चित् दानं विशिष्यते अतिरिच्यते ॥ ५९ । ६० ॥

पर इति । यो भिषक् भूतदया परः उत्कृष्टो धर्म इति मत्वा चिकित्सया वर्तते स इह सिद्धार्थः सफलकामः सन् परत्र अत्यन्तं अन्तरहितं सुखं मोक्षलक्षणं अश्नुते । धर्मार्थचिकित्सया तस्य इह अर्थकामयोः सिद्धिः । परत्र मोक्षलाभश्चापि घटते ॥६१॥

चतुर्थपादार्थसंग्रहमाह—आयुर्वेदेति । आयुर्वेदसमुत्थानं । शुभः दिव्यानां ओषधीनां ब्रह्मसुवर्चलादीनां विधिः । तथा अमृताल्पान्तरगुणं अमृतात् किञ्चित् हीनगुणं । सिद्धं ।

सिद्धेभ्यो ब्रह्मचारिभ्यो यदुवाचामरेश्वरः ।
आयुर्वेदसमुत्थाने तत्सर्वं सम्प्रकाशितम् ॥६३॥

इति चिकित्सिते आयुर्वेदसमुत्थानीयो रसायनपादश्चतुर्थः ।

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने रसायनो नाम प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

### प्रथमः पादः ।

अथातः संयोगशरमूलीयं वाजीकरणपादं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ॥१॥

वाजीकरणमन्विच्छेत् पुरुषो नित्यमात्मवान् ।
तदायत्तौ हि धर्मार्थौ प्रीतिश्च यश एव च ॥२॥

रत्नरसायनं हेमादिरत्नसंयुक्तं रसायनं । यत् अमरेश्वरः इन्द्रः सिद्धेभ्यः ब्रह्मचारिभ्यः भृग्वङ्गिरःप्रभृतिभ्यः उवाच । तत्सर्वं आयुर्वेदसमुत्थाने आयुर्वेदसमुत्थानीये अस्मिन्पादे चतुर्थे रसायनपादे संप्रकाशितं भगवता आत्रेयेण पुनर्वसुना ॥ ६२ । ६ ॥

इति चरकोपस्कारे चिकित्सितस्थाने प्रथमेऽध्याये चतुर्थः पादः

इति वैद्यरत्नश्रीयोगीन्द्रनाथविद्याभूषणकृते चरकोपस्कारे चिकित्सितस्थाने प्रथमोऽध्यायः ॥ १ ॥

ऊर्जस्कराधिकारात् रसायनानन्तरं वाजीकरणमारभते । तत्र संयोगशरमूलीयं नामाद्यं पादमाह—अथात इत्यादि । संयोगशरमूलीयमिति । शरमूलस्य संयोगः संयोगशरमूलं । राजदन्तादित्वात् षष्ठ्यन्तस्य परनिपातः । वक्ष्यमाणस्य वाजीकरणसंयोगानित्यस्य अन्त्यः शब्दः संयोगेति । शरमूलेक्षुमूलानीत्यस्य च आद्यः शरमूलेति । तत् द्वयमादाय संयोगशरमूलेति वा । तदधिकृत्य कृतः संयोगशरमूलीयः। तं ॥१॥

वाजीकरणमिति । आत्मवान् पुरुषः । नित्यं । वाजीकरणं । अवाजी वाजीव अश्व इव अत्यर्थं मैथुने शक्तः क्रियते अनेन तद् वाजीकरणं वृष्ययोगं । अन्विच्छेत् । कुतः ? हि यतः धर्मार्थौ तदायत्तौ वाजीकरणाधीनौ । प्रीतिश्च तदायत्ता । यशश्चापि तदायत्तं । पुत्रस्यायतनमिति । कुतः धर्मादीनां वाजीकरणाधीनत्वं ? हि यतः एतत् वाजीकरणं पुत्रस्य आयतनं कारणं। एते उक्ताः गुणा धर्मादयश्च सुताश्रयाः पुत्राश्रयाः

पुत्रस्यायतनं ह्येतद् गुणाश्चैते सुताश्रयाः ।
वाजीकरणमग्र्यं च क्षेत्रं स्त्री या प्रहर्षिणी ॥३॥
इष्टा ह्येकैकशोऽप्यर्थाः परं प्रीतिकराः स्मृताः ।
किं पुनः स्त्रीशरीरे ये सङ्घातेन प्रतिष्ठिताः ॥४॥
सङ्घातो हीन्द्रियार्थानां स्त्रीषु नान्यत्र विद्यते ।
स्त्र्याश्रयो हीन्द्रियार्थो यः स प्रीतिजननोऽधिकः ॥५॥
स्त्रीषु प्रीतिर्विशेषेण स्त्रीष्वपत्यं प्रतिष्ठितम् ।
धर्म्मार्थौ स्त्रीषु लक्ष्मीश्च स्त्रीषु लोकाः प्रतिष्ठिताः ॥६॥

पुत्रनिमित्ताः । इत्थञ्च धर्मादीन् प्रत्यपि वाजीकरणस्य पुत्रोत्पत्तिद्वारेण कारणतया धर्मादीनां वाजीकरणाधीनत्वं । आदौ स्त्रीरूपं श्रेष्ठं वाजीकरणमाह—वाजीकरणमिति । प्रहर्षिणी पुंसः प्रहर्षकारिणी या स्त्री तदेव क्षेत्रं क्षेत्रभूतं शुक्ररूपबीजप्ररोहणात् । कामाधिकरणं वा । अग्र्यं श्रेष्ठं वाजीकरणं । ननु कुतः स्त्री प्रधानं वाजीकरणमुच्यते इति ? अत आह—इष्टा इति । हि यतः इष्टाः प्रियाः अर्थाः शब्दस्पर्शरूपरसगन्धाः पञ्च ये स्त्रीशरीरादन्यत्र गताः ते एकैकशोऽपि व्यस्ता अपि तेषामेकैकोऽपि परमतीव प्रीतिकराः स्मृताः । ये अर्थाः स्त्रीशरीरे एकस्मिन् सङ्घाते संहत्य व्यवस्थिताः सर्वे एकत्र मिलित्वा अवस्थिताः यथा अधररसकलस्तरूपादयः । ते यत् पुंसां निरतिशयप्रीतिकराः तत्र किं पुनः वक्तव्यं । सङ्घात इति । इन्द्रियार्थानां शब्दादीनां पञ्चानां सङ्घातः समवायः स्त्रीषु एव विद्यते । न अन्यत्र विद्यते । स्त्री आश्रयो यस्य स स्त्र्याश्रयः । स्त्रीशरीरगतः यः इन्द्रियार्थः शब्दादिः सः अधिकः प्रीतिजननः भवति । सर्वेषामिष्टानामिन्द्रियार्थानामेकस्मिन् स्त्रीशरीरे सद्भावात् कामाधिकरणत्वाच्च स्त्रियाः सर्ववाजीकरणेषु श्रेष्ठत्वं ॥ २—५ ॥

स्त्रीष्विति । स्त्रीषु प्रीतिः विशेषेण आधिक्येन प्रतिष्ठिता । स्त्रीशरीरगतानामिन्द्रियार्थानां निरतिशयप्रीतिकरत्वात् । स्त्रीषु अपत्यं प्रतिष्ठितं । उभयलोक-

४। एकत्वेनापि विषयाः परं प्रीतिकराः स्मृताः इति वा पुस्तके ।

सुरूपा यौवनस्था या लक्षणैर्या विभूषिता।
या वश्या शिक्षिता या च सा स्त्री वृष्यतमा मता ॥७॥
नानाभक्त्या तु लोकस्य दैवयोगाच्च योषिताम्।
तं तं प्राप्य विवर्द्धन्ते नरं रूपादयो गुणाः ॥८॥
वयोरूपवचोहावैर्या यस्य परमाङ्गना।
प्रविशत्याशु हृदयं दैवाद्वा कर्म्मणोऽपि वा ॥९॥
हृदयोत्सवभूता या या समानमनःशया।
समानसत्त्वा या वश्या या यस्य प्रीयते प्रियैः ॥१०॥

हितस्य सन्तानस्य स्त्रीषु प्रतिष्ठानात् धर्मार्थावपि स्त्रीषु प्रतिष्ठितौ। लक्ष्मीश्चापि स्त्रीषु प्रतिष्ठिता। अतो लोकाः सर्वे स्त्रीषु प्रतिष्ठिताः स्त्रीभिरेव सर्वेषां प्रतिष्ठानं ॥ ६ ॥

स्त्रिया वाजीकरणत्वमुक्तं। सम्प्रति तद्विशिष्याह—सुरूपेति। या स्त्री सुरूपा। या यौवनस्था। या लक्षणैः शुभैरुपलक्षिता। या विभूषिता नानालङ्कारैरलंकृता। या वश्या आयत्ता। या शिक्षिता कामशास्त्रोक्तगीतवादित्रलास्यादिकलासु शिक्षिता। सा सा स्त्री तं तं पुरुषं प्रति वृष्यतमा मता ॥७॥

कथमिति चेत्तत्राह—नानाभक्त्येति। लोकस्य पुंसः नानाभक्त्या नानाभोगस्पृहया। दैवयोगाच्च। योषितां स्त्रीणां रूपादयः गुणाः तं तं नरं तत्तद्रुचिमन्तं पुमांसं प्राप्यत्य विवर्द्धन्ते। अष्टाङ्गसंग्रहेऽप्युक्तं—रुचिभेदेन लोकस्य दैवयोगाच्च योषितां। तं तं प्राप्य विवर्द्धन्ते नरं रूपादयो गुणाः॥ इति (उ० ५०) ॥ ८ ॥

वयोरूपेत्यादि। या अङ्गना स्त्री। वयः यौवनं। रूपं। वचः। हावः शृङ्गारचेष्टाविशेषश्च। तैः परमा उत्कृष्टा उत्तमा। वयोरूपादिभिः। दैवात् प्राक्तनकर्मवशात्। कर्मणः ऐहिकात् प्रीतिकरणादिकर्मणो वा। यस्य पुंसः हृदयं आशु प्रविशति। सा स्त्री तस्य वृष्यतमेति परेणान्वयः। एवं परत्रापि। या स्त्री यस्य पुंसः हृदयस्य उत्सवभूता उत्सवस्वरूपा। या स्त्री। यस्य समानः। मनसि शेते इति मनःशयः

---

१०। या समानमनःश्रया इति क पुस्तके।

या पाशभूता सर्वेषामिन्द्रियाणां परैर्गुणैः ।
यया वियुक्तो निःस्त्रीकमरतिर्मन्यते जगत् ॥११॥
यस्या ऋते शरीरं ना धत्ते शून्यमिवेन्द्रियैः ।
शोकोद्वेगारतिभयैर्यां दृष्ट्वा नाभिभूयते ॥१२॥
याति यां प्राप्य विस्रम्भं दृष्ट्वा हृष्यत्यतीव याम् ।
अपूर्वामिव यां याति नित्यं हर्षातिवेगतः ॥१३॥
गत्वा गत्वापि बहुशो यां तृप्तिं नैव गच्छति ।
सा स्त्री वृष्यतमा तस्य नानाभावा हि मानवाः ॥१४॥
अतुल्यगोत्रां वृष्याञ्च प्रहृष्टां निरुपद्रवाम् ।
शुद्धस्नातां व्रजेन्नारीमपत्यार्थी निरामयः ॥१५॥

कामः । स यस्याः सा तथोक्ता । या यस्य समानं सत्त्वं यस्याः सा । या यस्य वश्या । या यस्य प्रियैः प्रीतिकरैः वस्त्वादिभिः प्रीयते । या स्त्री परैः श्रेष्ठैः गुणैः यस्य सर्वेषामिन्द्रियाणां पाशभूता भवति बन्धनहेतुत्वात् । तच्छरीरगतानां सर्वेषामेवेन्द्रियार्थानामेकान्तात्यन्तग्रहणात् । सा तस्य सर्वेषामिन्द्रियाणां पाशभूता भवति । पुमान् यया स्त्रिया वियुक्तः विरहितः अरतिः सन् जगत् निःस्त्रीकं मन्यते । ना पुमान् यस्या ऋते यां विना आत्मनः शरीरं इन्द्रियैः शून्यमिव धत्ते । तदर्थानां स्त्रीशरीरगतानां विरहात् । यां दृष्ट्वा । शोकः । उद्वेगः । अरतिः । भयं च । तैः न अभिभूयते । यातीति । यः पुमान् यां स्त्रियं प्राप्य विस्रम्भं विश्वासं याति । यां दृष्ट्वा अतीव हृष्यति । नित्यं प्रतिदिनं यां अपूर्वामिव तत्पूर्वमिव हर्षातिवेगतः अतिकामवेगात् याति । गत्वेति । यां स्त्रियं बहुशः बहुवारान् गत्वा गत्वापि प्रतिदिनं गत्वापि पुमान् तृप्तिं मैथुनपर्याप्तिं नैव गच्छति नैव याति । सा सा स्त्री तस्य तस्य पुंसः वृष्यतमा मता । न तु एकविधा सर्वेषां । कुतः ? हि यतः मानवाः पुमांसः नानाभावाः भिन्नरुचयः । तत्तद्रुचिमन्तं प्रति सा सा एव वृष्यतमा ॥ ९—१४ ॥

अतुल्यगोत्रामिति । निरामयः नीरोगः पुमान् । अपत्यार्थी सन् । अतुल्यगोत्रां असमानगोत्रां । असमानप्रवरां चापि । तथा च विष्णुसूत्रं—न समानगोत्रां न समान-

---

१३ । यां प्राप्य विभ्रंशं दृष्ट्वा इति ग ङ पुस्तकयोः ।

अच्छायश्चैकशाखश्च निष्फलश्च यथा द्रुमः ।
अनिष्टगन्धश्चैकश्च निरपत्यस्तथा नरः ॥१६॥
चित्रदीपः सरः शुष्कमधातुर्धातुसन्निभः ।
निष्प्रजस्तृणपूलीति मन्तव्यः पुरुषाकृतिः ॥१७॥
अप्रतिष्ठश्च नग्नश्च शून्यश्चैकेन्द्रियश्च ना ।
मन्तव्यो निष्क्रियश्चैव यस्यापत्यं न विद्यते ॥१८॥
बहुमूर्त्तिर्बहुमुखो बहुव्यूहो बहुक्रियः ।
बहुचक्षुर्बहुज्ञानो बह्वात्मा च बहुप्रजः ॥१९॥

प्रवरां भार्यां विन्देत । इति । वृष्यां । प्रहृष्टां । निरुपद्रवां अरोगां । आदौ शुद्धा पश्चात् स्नाता शुद्धस्नाता । तां । पुष्पात् प्रभृति चतुर्थेऽहनि नारीं ऊढां व्रजेत् ॥ १५ ॥

वाजीकरणेष्वपत्यकारणेषु प्रवृत्तिनिमित्तं निरपत्यस्य पुंसो दोषमाह—अच्छाय इति । एकशाखः एकस्वरूपः । एकः असहायः लताविरहितः । अच्छायः छाया-रहितः । निष्फलः । अनिष्टगन्धः पूतिगन्धिकुसुमः । तथाविधो द्रुमो वृक्षो यथा लोकैर्न सेव्यते आश्रयणीयो न भवति । तथा निरपत्यः निःसन्तानः नरः पुमान् । उक्तं च—अच्छायः पूतिकुसुमः फलेन रहितो द्रुमः । यथैकश्चैकशाखश्च निरप-त्यस्तथा पुमान् ॥ इति ( अ० सं० उ० ५० ) । चित्रदीप इति । निष्प्रजः निरपत्यः पुमान् । चित्रदीपः चित्रलिखितप्रदीप इव । चित्रदीपो नालोककृत् । शुष्कं सरः जला-शय इव । अधातुः न धातुः । धातुः सुवर्णादिः । धातुसन्निभः धातुवदाभासमानः । यथा जतुकंकनादि । स पुरुषाकृतिः तृणपूली तृणराशिरिति मन्तव्यः पुरुषार्थक्रिया-विरहितत्वात् । पूल् राशीकरणे । अप्रतिष्ठश्चेति । यस्य अपत्यं न विद्यते स ना पुमान् अप्रतिष्ठः प्रतिष्ठारहितः । नग्नो दिगम्बर इव पुत्रैरपरिवृतत्वात् । शून्यः सहाय-रहितः । एकं इन्द्रियं चक्षुरादिकं यस्य स एकेन्द्रियः । निष्क्रियः क्रियारहित श्च मन्तव्यः । आत्मनः पुत्ररूपेण जायमानत्वात् पुत्रेषु जातेषु लोको बह्वात्मा बहुमूर्तिः बह्विन्द्रियः सक्रियश्च भवति ॥ १६—१८ ॥

अपत्यवतो गुणं दर्शयन् तदेवाह—बहुमूर्तिरिति । बहुप्रजः बह्वपत्यः पुमान् ।

मङ्गल्योऽयं प्रशस्तोऽयं धन्योऽयं वीर्य्यवानयम् ।
बहुशाखोऽयमिति च स्तूयते ना बहुप्रजः ॥२०॥
प्रीतिर्बलं सुखं वृत्तिर्विस्तारो विभवः कुलम् ।
यशो लोकाः सुखोदर्कास्तुष्टिश्चापत्यसंश्रिताः ॥२१॥
तस्मादपत्यमन्विच्छन् गुणांश्चापत्यसंश्रितान् ।
वाजीकरणनित्यः स्यादिच्छन् कामसुखानि च ॥२२॥
उपभोगसुखान् सिद्धान् वीर्य्यापत्यविवर्द्धनान् ।
वाजीकरणसंयोगान् प्रवक्ष्याम्यत उत्तरम् ॥२३॥

बह्वात्मा । आत्मनः पुत्ररूपेण जायमानत्वात् बहुभिः पुत्रैर्जातैः बह्वात्मा भवति । अतो बहुमूर्तिः । बहुमुखः । बहुव्यूहः । व्यूहः अवयवसङ्घातः । बहुक्रियः । बहुचक्षुः । चक्षुरिति इन्द्रियाणामुपलक्षणं । बहुज्ञानश्च भवति । मङ्गल्योऽयमिति । बहुप्रजः ना पुमान् अयं पुरुषः मङ्गलाय हितः मङ्गल्य इति । अयं प्रशस्त इति । अयं धन्य इति । अयं वीर्यवान् इति । अयं बहुशाख इति च । स्तूयते लोकैः ॥ १६।२० ॥

अपत्यस्य गुणानाह—प्रीतिरिति । प्रीतिः । बलं । सुखं । वृत्तिर्जीविका । विस्तारो वंशस्य । विभवः । कुलं कौलीन्यं । यशः । सुखं उदर्कः उत्तरफलं येषां ते सुखोदर्काः । उदर्कः फलमुत्तरमिति । तथाविधा लोकाः स्वर्गादयः । पुष्टिश्च । एते अपत्यं संश्रिताः सत्पुत्रनिमित्ता भवन्ति ॥ २१ ॥

तस्मादिति । तस्मादपत्यमुभयलोकोपकारकं अन्विच्छन् । अपत्यसंश्रितान् गुणान् प्रीत्यादींश्च अन्विच्छन् । कामसुखानि ऐहिकानि केवलं मैथुनसुखं च अन्विच्छन् । पुरुषः वाजीकरणनित्यः स्यात् नित्यं वाजीकरणमुपयुञ्जीत ॥ २२ ॥

वाजीकरणयोगानभिधातुं प्रतिजानीते—उपभोगसुखानिति । अत उत्तरं अतः परं । उपभोगे स्त्रीसम्भोगे मैथुने सुखाः सुखकराः । तान् । सिद्धान् निश्चितफलान् । वीर्यस्य शुक्रस्य अपत्यस्य च विवर्द्धनान् वाजीकरणसंयोगान् वृष्ययोगान् प्रवक्ष्यामि ॥२३॥

शरमूलेक्षुमूलानि काण्डेक्षुं सेक्षुवालिकम् ।
शतावरीं पयस्यां च विदारीं कण्टकारिकाम् ॥२४॥
जीवन्तीं जीवकं मेदां वीरामृषभकं बलाम् ।
ऋद्धिं गोक्षुरकं रास्नामात्मगुप्तां पुनर्नवाम् ॥ २५ ॥
पृथक् त्रिपलिकान् कृत्वा माषाणामाढ़कं नवम् ।
विपाचयेज्जलद्रोणे चतुर्भागश्च शेषयेत् ॥ २६ ॥
तत्र पेष्याणि मधुकं द्राक्षा फल्गु च पिप्पली ।
आत्मगुप्ता मधूकं च खर्ज्जूरं च शतावरी ॥२७॥

आद्यं योगमाह—शरमूलेक्षुमूलानीति । शरमूलेक्षुमूलानि शरमूलानि इक्षुमूलानि च । काण्डेक्षुं सेक्षुवालिकं काण्डेक्षुं इक्षुवालिकां च । काण्डेक्षुः इक्षुभेदः । इक्षुवालिका काशतृणभेदः । काण्डेक्ष्विक्षुवालिकयोर्मूलं । शतावरीं । पयस्यां क्षीरकाकोलीं । विदारीं । कण्टकारिकां । विदारीकण्टकारिकयोरपि मूलं । तथाच—शरेक्षुकुशकाशानां विदार्या वीरणस्य च । मूलानि कण्टकार्याश्च ॥ इति ( अ०सं० उ० ५० ) । जीवन्तीं । जीवकं । मेदां । वीरां शालपर्णीं । ऋषभकं । बलां । ऋद्धिं । गोक्षुरकं । रास्नां । आत्मगुप्तां शूकशिम्बीं । पुनर्नवां च । पृथक् प्रत्येकं त्रिपलिकान् भागान् कृत्वा शरमूलादिपुनर्नवान्तानां एकोनविंशतेर्द्रव्याणां प्रत्येकं पलत्रयपरिमितं कृत्वा । माषाणां नवं नूतनं आढकं । नवत्वमिह माषाणां ज्ञेयं । मानस्य नवत्वानवत्वासम्भवात् । तत् सर्वं जलद्रोणे द्रोणपरिमिते जले विपाचयेत् । चतुर्भागं चतुर्थभागं पादं च शेषयेत् । तत्र पादावशेषे रसे । मधुकं यष्टिमधु । द्राक्षा । फल्गु काकोदुम्बरिका । पिप्पली । आत्मगुप्ता । मधूकं मधूकपुष्पं । खर्ज्जूरं । शतावरी च । इमानि अष्टौ द्रव्याणि पेष्याणि पेषयित्वा कल्कीकृत्य तत्र प्रक्षिपेत् । तत्र विदार्यामलकेक्षूणां पृथक् पृथक् रसस्य आढकं विदारीरसस्य आढकं आमलकरसस्य आढकं इक्षुरसस्य च आढकं सर्पिषः गव्यस्य

२४ । शरदर्भेक्षुमूलानि काण्डेक्षुं इति ख ग ग्ा पुस्तकेषु ।

२४—२५ । शरमूलेक्षुमूलानि······आत्मगुप्तां पुनर्नवां । इति श्लोकद्वये सर्वाणि पदानि प्रथमाविभक्त्यन्तानि क ग च ग्ा पुस्तकेषु ।

२६ । विपाचयेज्जलद्रोण्या आढकं चावशेषयेत् इति ग ग्ा पुस्तकयोः ।

विदार्य्यामलकेक्षूणां रसस्य च पृथक् पृथक् ।
सर्पिषश्चाढ़कं दद्यात् क्षीरद्रोणञ्च तद्भिषक् ॥२८॥
साधयेद्‌ घृतशेषञ्च सुपूतं योजयेत् पुनः ।
शर्करायास्तुगाक्षीर्य्याश्चूर्णैः प्रस्थोन्मितैर्भिषक् ॥२९॥
पलैश्चतुर्भिर्मागध्याः पलेन मरिचस्य च ।
त्वगेलाकेशराणाञ्च चूर्णैरर्द्धपलोन्मितैः ।३०॥
मधुनः कुड़वाभ्याञ्च द्वाभ्यां तत् कारयेद्‌ भिषक् ।
पलिका गुड़िकाः कृत्वा ता यथाग्नि प्रयोजयेत् ॥३१॥
एष वृष्यः परं योगो वृंहणो बलवर्द्धनः ।
अनेनाश्व इवोदीर्णो लिङ्गमर्पयते स्त्रियाम् ॥३२॥
इति वृंहणी गुड़िका ।

आढकं क्षीरस्य दुग्धस्य गव्यस्य द्रोणं च दद्यात् । भिषक् तत्सर्वं मृदुना अग्निना साधयेत् । ततः घृतशेषं घृतावशेषं सुपूतं वस्त्रेण सम्यक् परिस्रुतं कृत्वा । पुनः शर्करायाः तुगाक्षीर्या वंशलोचनायाश्च । चूर्णैः । प्रत्येकं प्रस्थोन्मितैः प्रस्थमितैः । मागध्याः पिप्पल्याः चूर्णितायाः चतुर्भिः पलैः । मरिचस्य चूर्णितस्य च पलेन । त्वक् । एला सूक्ष्मा । केशरो नागकेशरश्च । तेषां चूर्णैः प्रत्येकमर्द्धपलोन्मितैः । मधुनः द्वाभ्यां कुडवाभ्यां च । सह योजयेत् भिषक् । युक्तं तत्सर्वं भिषक् पलिकाः पलपरिमिताः गुड़िकाः कारयेत् । गुड़िकाः कृत्वा ताः यथाग्नि अग्निबलापेक्षया मात्रया प्रयोजयेत् । एष इति । एष योगः परं अत्यर्थं वृष्यः शुक्रकृत् । वृंहणः । बलवर्द्धनश्च । अनेन योगेन पुमान् अश्व इव उदीर्णः उदीर्णकामवेगः सन् स्त्रियां स्त्रीयोनौ लिङ्गं अर्पयते । अश्व इव मैथुनं आचरितुं शक्नोतीत्यर्थः ॥ २४—३२॥

२८। सर्पिषश्चढके दद्यात् इति ग पुस्तके ।

२९। चूर्णैः प्रस्थोन्मितैः पृथक् इति घ पुस्तके । २९—३१। श्लोकत्रयं न पठ्यते ए पुस्तके ॥

३२। अनेनाश्व इवोदीर्णो बली लिङ्गं समर्पयेत् इति ग घ पुस्तकयोः ।

माषाणामात्मगुप्तानां वीजानामाढ़कं नवम् ।
जीवकर्षभकौ वीरां मेदामृद्धिं शतावरीम् ॥३३॥
मधुकश्चाश्वगन्धाश्च साधयेत् कुड़वोन्मिताम् ।
रसे तस्मिन् घृतप्रस्थं प्रस्थमिक्षुरसस्य च ॥३४॥
विदारीणां रसप्रस्थं गव्यं दशगुणं पयः ।
दत्त्वा मृद्वग्निना साध्यं सिद्धं सर्पिर्निधापयेत् ॥३५॥
शर्करायास्तुगाक्षीर्याः क्षौद्रस्य च पृथक् पृथक् ।
भागांश्चतुष्पलांस्तत्र पिप्पल्याश्चावपेत् पलम् ॥३६॥

द्वितीयं योगमाह—माषाणामित्यादि । माषाणां । आत्मगुप्तानां शूकशिम्बीनां वीजानां च । नवमाढकं। नवानां माषाणामेकं आढकं। आत्मगुप्तावीजानां चैकमाढकं । तथा जीवकर्षभकौ जीवकं ऋषभकञ्च । वीरां शालपर्णीं । मेदां । ऋद्धिं । शतावरीं । मधुकं यष्टीमधु । अश्वगन्धां । कुडवोन्मितां च । जीवकाद्यश्वगन्धान्तानामष्टानां प्रत्येकं कुडवप्रमाणं । तेन कुडवोन्मितामितिपदं जीवकर्षभकादिष्वपि लिङ्गवचनविपर्ययेण यथायथं योज्यं । तत्सर्वं अष्टगुणे जले साधयेत् पचेत् । पादं च अवशेषयेत् । ततः पादावशेषं तं रसमवतार्य परिस्रुतं कृत्वा तस्मिन् रसे घृतस्य प्रस्थं दशगुणं गव्यं पयो दुग्धं विदारीणां भूमिकुष्माण्डानां रसस्य प्रस्थं इक्षुरसस्य प्रस्थं च दत्त्वा तत्सर्वं मृद्वग्निना मृदुना अग्निना साध्यं पाच्यं । ततः शब्दस्य फेनस्य चोपरमे गन्धवर्णरसादीनां सम्पत्तौ च यदा सर्पिः घृतं सिद्धं सम्यक् सिद्धं भवति तदा अवतार्य वस्त्रेण परिस्राव्य निधापयेत् पात्रे स्थापयेत् । तत्र धृते शर्करायाः तुगाक्षीर्याः वंशलोचनायाः क्षौद्रस्य मधुनः पृथक् पृथक् प्रत्येकं चतुष्पलान् भागान् पिप्पल्याः चूर्णितायाः पलमेकं च आवपेत् प्रक्षिपेत् । यः अक्षयं शुक्रं शेफसो मेहनस्य उत्तमं बलं च इच्छेत् स तादृशः पुमान् अत औषधात् पलप्रमाणं पूर्वं भोजनात् प्राक् लीढ्वा ततः अन्नं उपयोजयेत् भुञ्जीत । अष्टाङ्गसंग्रहे तु जीवकर्षभकादीनां मानमन्यथा कृत्वा अयं योगः पठितः । तथा च—माषात्मगुप्तावीजानामाढकं प्रसृतोन्मितं । मेदाश्व-

३४। साधयेत् प्रसृतोन्मितं इति ग पुस्तके ।

पलं पूर्वमतो लीढ्वा ततोऽन्नमुपयोजयेत् ।
अ इच्छेदक्षयं शुक्रं शेफसश्चोत्तमं बलम् ॥३७॥
इति वाजीकरणं घृतम् ।

शर्करा माषविदलास्तुगाक्षीरी पयो घृतम् ।
गोधूमचूर्णषष्ठानि सर्पिष्युत्कारिकां पचेत् ॥३८॥
तां नातिपक्वां मृदितां कौक्कुटे मधुरे रसे ।
सुगन्धे प्रक्षिपेदुष्णे यथा सान्द्रीभवेद्रसः ॥३९॥
एष पिण्डरसो वृष्यः पौष्टिको बलवर्द्धनः ।
अनेनाश्व इवोदीर्णबलो लिङ्गं समर्पयेत् ॥४०॥
शिखितित्तिरिहंसानामेवं पिण्डरसो मतः ।
बलवर्णस्वरकरः पुमांस्तेन वृषायते ॥४१॥
इति वाजीकरणपिण्डरसाः ।

गन्धाह्विश्वरीवीरायष्टीछिजीवकं ॥ सूर्पेऽपां विपचेत्तेन पादशेषेण पाचयेत् । विदारी-क्षुरसप्रस्थद्वयेन सद्रसेन च ॥ सर्वैः क्षीरेण हविषो नवात् प्रस्थं शृतेन च । सिता-क्षौद्रतुगाख्यानां पृथक् दद्यान्तुलपलं ॥ पलं कणा पुरो भुक्तं लिह्यंस्तत् पलपूर्वकं । तरुणीष्वतितृप्तासु प्रसभं रासभायते ॥ इति ( उ० ४६ ) ॥ ३५—३७ ॥

तृतीयं योगमाह—शर्करेत्यादि । शर्करा । माषविदला माषविदलः । तुगाक्षीरी वंशलोचना । पयो गव्यं । घृतं गव्यं च । एतानि पञ्च । गोधूमचूर्णं षष्ठं येषां तानि गोधूमचूर्णषष्ठानि । तानि सर्वाणि सर्पिषि घृते उत्कारिकां पचेत् । उत्कारिका हल्वा इति ख्याता । तां उत्कारिकां नातिपक्वां । करेण मृदितां । मधुरे शर्करादियोगेन । एला-दिचूर्णयोगेन सुगन्धे । उष्णे । कौक्कुटे रसे कुक्कुटमांसरसे प्रक्षिपेत् । यथा स रसः सान्द्रीभवेत् । एष पिण्डरसः पिण्डीभूतो रसः वृष्यः । पौष्टिकः पुष्टिकृत् । बलवर्द्धनश्च । अनेन पिण्डरसेन पुमान् अश्व इव उदीर्णबलः सन् लिङ्गं समर्पयेत् स्त्रीयोनौ ॥३८–४०॥

४० । पौष्टिकोऽनलवर्धनः इति च पुस्तके ।

घृतं माषान् सवस्ताण्डान् साधयेन्माहिषे रसे ।
भर्जयेत् तं रसं पूतं फलाम्लं नवसर्पिषि ॥४२॥
ईषत् सलवणं युक्तं धान्यजीरकनागरैः ।
एषं वृष्यश्च बल्यश्च बृंहणश्च रसोत्तमः ॥४३॥
इति वृष्यरसः ।

चटकांस्तित्तिरिरसे तित्तिरीन् कौक्कुटे रसे ।
कुक्कुटान् बार्हिणरसे हांसे बर्हिणमेव च ॥४४॥
नवसर्पिषि सन्तप्तान् फलाम्लान् कारयेद्रसान् ।
मधुरान् वा यथासात्म्यं गन्धाढ्यान् बलवर्द्धनान् ॥४५॥
इत्यन्ये वृष्यरसाः ।

शिखीति । एवं कौक्कुटपिण्डरसवत् । शिखी मयूरः । तित्तिरिः । हंसश्च । ते । तेषां पिण्डरसो मतः । तथा च शर्करादीनि षट् द्रव्याणि पूर्ववत् सर्पिषि उत्कारिकां पक्त्वा नातिपक्वां तां मृदितां मधुरे सुगन्धे उष्णे च मायूरे तैत्तिरे हांसे वा रसे प्रक्षिपेत् यथा स रसः सान्द्रीभवेत् । स च पिण्डरसः बलवर्णस्वरकरः । तेन पिण्ड-रसेन पुमान् वृषायते स्त्रीषु वृष इव आचरति मैथुनं करोति । इह एक एव योगो मन्तव्यः । सर्वेषां प्रयोगापेक्षया एकरूपत्वात् ॥ ४१ ॥

चतुर्थं योगमाह—घृतं माषानित्यादि । घृतं । माषान् । सह वस्ताण्डैः छागाण्डैः वर्तमानाः । तान् सवस्ताण्डान् । घृतं माषान् छागाण्डकोषफलैः सह । माहिषे रसे माहिषमांसरसे साधयेत् । ततः तं रसं पूतं वस्त्रेण गालितं फलाम्लं दाडिमाम्लफला-दीनां रसैः अम्लरसं कृत्वा । ईषत् सलवणं ईषल्लवणयुक्तं । धान्यजीरकनागरैः धन्याकजीरकनागराणां चूर्णैः युक्तं च कृत्वा । नवे सर्पिषि भर्जयेत् । एष रसोत्तमः वृष्यः बल्यः बृंहणश्च ॥ ४२ । ४३ ॥

चटकांस्तित्तिरिरसे इत्यादि । तित्तिरिरसे चटकान् साधयेत् । कौक्कुटे रसे तितिरीन् वा साधयेत् । बार्हिणरसे मायूररसे कुक्कुटान् वा साधयेत् । हांसे रसे वा बर्हिणं मयूरं साधयेत् । ततः पूतान् बलवर्द्धनान् तान् चतुरो रसान् तैत्तिरकौक्कुट-

तृप्तिं चटकमांसानां गत्वा योऽनुपिबेत् पयः।
न तस्य लिङ्गशैथिल्यं स्यान्न शुक्रक्षयो निशि ॥४६॥

इति वृष्यमांसम्।

माषयूषेण यो भुक्त्वा घृताढ्यं षष्टिकौदनम्।
पयः पिबति रात्रिं स कृत्स्नां जागर्ति वेगवान् ॥४७॥

इति वृष्यमाषः।

न ना स्वपिति रात्रीषु निःस्तब्धेन च शेफसा।
तृप्तः कुक्कुटमांसानां भृष्टानां नक्ररेतसि ॥४८॥

इति वृष्यशुक्ररसः।

बार्हिणहंसान् यथासात्म्यं फलाम्लान् अम्लदाडिमफलादीनां रसैः अम्लरसान् शर्करादियोगेन मधुरान् एलादिचूर्णैः गन्धाढ्यान् च कृत्वा नवे सर्पिषि सन्तप्तान् कारयेत् भर्जयेत्। इह चत्वारो योगाः ॥ ४४। ४५ ॥

नवमं योगमाह—तृप्तिमिति। यः पुमान् चटकमांसानां। पूरणतृप्त्यर्थयोरिति करणे षष्ठी। तृप्तिं गत्वा चटकमांसैः सौहित्यं गत्वा। पयः दुग्धं अनुपिबेत्। निशि रात्रौ तस्य लिङ्गशैथिल्यं न स्यात्। न च शुक्रक्षयः स्यात् ॥ ४६ ॥

दशमं योगमाह—माषयूषेणेति। यः पुमान् माषयूषेण षष्टिकौदनं भुक्त्वा पयः पिबति। स वेगवान् उदीर्णकामवेगः सन् कृत्स्नां सर्वां रात्रिं व्याप्य जागर्ति स्त्रीभिः सह रममाणः ॥ ४७ ॥

एकादशं योगमाह—न नेति। नक्रस्य रेतसि कुम्भीरस्य शुक्रे भृष्टानां कुक्कुट-मांसानां तृप्तः ना पुरुषः निःस्तब्धेन दण्डवत् दृढाशिथिलेन शेफसा लिङ्गेन उपलक्षितः सन् रात्रीषु न स्वपिति निद्राति। किन्तु कृत्स्नां रात्रिं जागर्ति स्त्रीभिः सह मैथुनं कुर्वन् ॥ ४८ ॥

---

४७। पयः पिबति शैथिल्यं स्यान्न शुक्रक्षयो निशि ॥ इति ग पुस्तके ॥

निःस्राव्य मत्स्याण्डरसं भृष्टं सर्पिषि भक्षयेत् ।
हंसबर्हिणदक्षाणामेवमण्डानि भक्षयेत् ॥ ४९ ॥

इत्यन्यो वृष्यरसः ।

भवतश्चात्र ।

स्रोतःसु शुद्धेष्वमले शरीरे वृष्यं यदाद्यं मितमत्ति काले ।
वृषायते तेन परं मनुष्यस्तद्बृंहणं चैव बलप्रदश्च ॥५०॥
तस्मात् पुरा शोधनमेव कार्य्यं बलानुरूपं न हि वृष्ययोगाः ।
सिध्यन्ति देहे मलिने प्रयुक्ताः क्लिष्टे यथा वाससि रागयोगाः ॥

द्वादशं योगमाह—निःस्राव्येति । मत्स्याण्डरसं मत्स्याण्डं निपीड्य तस्य रसं निःस्राव्य सर्पिषि भृष्टं भर्जयित्वा भक्षयेत् । हंसेति । हंसः । बर्हिणः मयूरः । दक्षश्च । ते । तेषां अण्डानि एवं सर्पिषि भृष्टानि भक्षयेत् । उक्तं च— हंसबर्हिणदक्षाण्डान् भृष्टांस्तप्तेन सर्पिषा । इति ( अ० सं० उ० ५० ) । हंसबर्हिणदक्षाण्डानां पृथक् त्रयो योगाः । तथात्वे हि पञ्चदश योगाः पूर्य्यन्ते ॥ ४९ ॥

रसायनयोगा इव वृष्ययोगाश्चापि शुद्धदेहैरेव कर्त्तव्या इति दर्शयन्नाह—स्रोतःस्वित्यादि । स्रोतःसु रसादिवहेषु शुद्धेषु सत्सु । शरीरे च अमले शोधनेन निर्हृतमले शुद्धे सति । वृष्यं यत् आद्यं भक्ष्यं । तत् मितं परिमितं अग्निबलापेक्षिण्या मात्रया । काले अत्ति भक्षयति मनुष्यः । स तेन तथाविधवृष्योपयोगेन परमतीव वृषायते । तत् वृष्यमाद्यं मात्रया काले भुक्तं बृंहणं बलप्रदं च भवति । तस्मादिति । तस्मादेवं वृष्ययोगस्य शुद्धशरीरे एव फलोपधायकत्वात् । पुरा पूर्वं वृष्ययोगात् प्रागेव बलानुरूपं शोधनं वमनादिकर्म कार्यं । कुतः ? हि यतः वृष्ययोगाः मलिने अशुद्धे शोधनेन अनिर्हृतमले देहे प्रयुक्ताः । यथा क्लिष्टे धूल्यादिमलिने वाससि वस्त्रे प्रयुक्ताः रागयोगाः रङ्गयोगाः न सिध्यन्ति । तद्वत् न सिध्यन्ति । अतः प्रागेव शोधनं कार्यं । शोधनं कृत्वा शुद्धशरीरः सन् वृष्ययोगानुपयुञ्जीत ॥ ५० । ५१ ॥

---

५१ । बलानुरूपं न हि सिद्धियोगाः इति क पुस्तके ।

तत्र श्लोकौ ।

वाजीकरणसामर्थ्यं क्षेत्रं स्त्री यस्य चैव या ।
ये दोषा निरपत्यानां गुणाः पुत्रवताश्च ये ॥५२॥
दश पञ्च च संयोगा वीर्य्यापत्यविवर्द्धनाः ।
उक्तास्ते शरमूलीये पादे पुष्टिबलप्रदाः ॥५३॥

इति चिकित्सिते संयोगशरमूलीयो वाजीकरणपादः प्रथमः ॥१॥

द्वितीयः पादः ।

अथात आसिक्तक्षीरिकं वाजीकरणपादं व्याख्यास्यामः
इति ह स्माह भगवानात्रेयः ॥१॥

आसिक्तक्षीरमापूर्णमशुष्कं शुद्धषष्टिकम् ।
क्षुण्णं विमृदितं क्षीरे पीड़येत् सुसमाहितः ॥२॥

प्रथमपादार्थसंग्रहमाह—वाजीकरणसामर्थ्यमिति । वाजीकरणस्य सामर्थ्यं । स्त्री क्षेत्रं । या यद्विधा स्त्री यस्य पुंसो वृष्यतमा । निरपत्यानां पुंसां ये दोषाः । पुत्रवतां पुंसां ये च गुणाः । तत् सर्वं । तथा वीर्यापत्यविवर्द्धनाः पुष्टिबलप्रदाश्च ये दश पञ्च च पंचदश संयोगाः योगाः । ते सर्वं शरमूलीये संयोगशरमूलीये अस्मिन् पादे प्रथमे वाजीकरणपादे उक्ताः भगवता आत्रेयेण पुनर्वसुना ॥ ५२ । ५३ ॥

इति चरकोपस्कारे चिकित्सितस्थाने द्वितीयेऽध्याये प्रथमः पादः ॥

संयोगशरमूलीयानन्तरं असिक्तक्षीरिकं द्वितीयं वाजीकरणपादमारभते—अथात इत्यादि । आसिक्तक्षीरमस्त्यस्मिन् इति आसिक्तक्षीरी । स एव आसिक्तक्षीरिकः । स्वार्थिकः कः । तं ॥ १ ॥

आद्यं योगमाह—आसिक्तक्षीरमित्यादि । आसिक्तं क्षीरं यस्मिन् तत् आसिक्तक्षीरं । क्षीरसेकेन वर्द्धितमित्यर्थः । तदुक्तं जतूकर्णेन—क्षीरसेकवृद्धषष्टिकं पक्वमित्यादि । आपूर्णं ईषत्पूर्णं । अशुष्कं आर्द्रं । शुद्धषष्टिकं गौरषष्टिकं । क्षुण्णं उदूखले संक्षुण्णं । विमृदितं विमर्दितं । क्षीरे दुग्धे पीडयेत् । वैद्यः सुसमाहितः सन् । ततः निपीड्य तं रसं गृह्णीयात् । पूतं वस्त्रेण परिस्रुतं कृत्वा । तं रसं गव्येन पयसा दुग्धेन सह ।

गृहीत्वा तं रसं पूतं गव्येन पयसा सह ।
बीजानामात्मगुप्ताया धान्यमाषरसेन च ॥३॥
बलायाः सूप्यपर्ण्योश्च जीवन्त्या जीवकस्य च ।
ऋद्धयृषभककाकोलीश्वदंष्ट्रामधुकस्य च ॥४॥
शतावर्य्या विदार्य्याश्च द्राक्षाखर्ज्जूरयोरपि ।
संयुक्तं मात्रया वैद्यः साधयेत् तत्र चावपेत् ॥५॥
तुगाक्षीर्य्याः समाषाणां शालीनां षष्टिकस्य च ।
गोधूमानाञ्च चूर्णानि यैः स सान्द्रीभवेद्रसः ॥६॥
सान्द्रीभूतञ्च तं कुर्य्यात् प्रभूतमधुशर्करम् ।
गुडिका बदरैस्तुल्यास्ताश्च सर्पिषि भर्ज्जयेत् ॥७।
ता यथाग्नि प्रयुञ्जानः क्षीरमांसरसाशनः ।
पश्यत्यपत्यं विपुलं वृद्धोऽप्यात्मजमक्षयम् ॥८॥
इत्यपत्यकरी षष्टिकादिगुडिका ।

आत्मगुप्तायाः शूकशिम्ब्याः बीजानां रसेन । धान्यस्य धन्याकस्य माषस्य च रसेन । तथा बलायाः । सूप्यपर्ण्योः मुद्गपर्णीमाषपर्ण्योः । जीवन्त्याः । जीवकस्य । ऋद्धिः । ऋषभकः । काकोली । श्वदंष्ट्रा । मधुकं यष्टिमधु च । तेषां समाहारः । तत् । तस्य । शतावर्याः । विदार्याः । द्राक्षाखर्जूरयोः द्राक्षायाः खर्ज्जूरस्य च । रसेन । बलादि-खर्ज्जूरान्तानां त्रयोदशानां द्रव्याणां रसैः सह । मात्रया । मात्रा तुल्यमानता । संयुक्तं कृत्वा । वैद्यः साधयेत् पचेत् मृद्वग्निना । पादशेषे तत्र रसे । तुगाक्षीर्याः वंशलोचनायाः। स माषाणां शालीनां माषाणां शालीनां च। षष्टिकस्य। गोधूमानां च। चूर्णानि तावन्ति आवपेत् प्रक्षिपेत् यैः यावद्भिः चूर्णैः स रसः सान्द्रीभवेत् । ततः सान्द्रीभूतं तं रसं प्रभूतमधुशर्करं प्रभूतमधुशर्करायुक्तं कुर्यात् । ततः तेन बदरैः तुल्याः गुडिकाः

४। ऋद्धयृषभककाकोलीमधुकस्य रसेन च इति ग पुस्तके ।

चटकानां सहंसानां दक्षाणां शिखिनां तथा ।
शिशुमारस्य नक्रस्य भिषक् शुक्राणि संहरेत् ॥९॥
गव्यं सर्पिर्वराहस्य कुलिङ्गस्य वसामपि ।
षष्टिकानाञ्च चूर्णानि चूर्णं गोधूमिकं तथा ॥१०॥
एभिः पूपलिकाः कार्याः शष्कुल्यो वर्त्तिकास्तथा ।
पूपा धानाश्च विविधा भक्ष्याश्चान्ये पृथग्विधाः ॥११॥
एषां प्रयोगाद्भक्ष्याणां स्तब्धेनापूर्णरेतसा ।
शेफसा वाजिवद् याति यावदिच्छं स्त्रियो नरः ॥१२॥

इति वृष्यपूपलिकादियोगाः ।

कृत्वा ताः गुडिकाः सर्पिषि भर्जयेत् । इह प्रयोगमहिम्ना द्रव्यान्तरयोगाच्च मधुयुक्तस्यापि भर्जनक्रियायामग्निसंयोगो न विरोधमावहति । ततः ताः घृते भृष्टाः गुडिकाः प्रतिदिनं यथाग्नि अग्निबलापेक्षया मात्रया प्रयुञ्जानः क्षीरमांसरसाशनः क्षीरं मांसरसं च अश्नन् पुमान् वृद्धोऽपि विपुलं महत् अनेकं वा अक्षयं दीर्घायुः आत्मजमपत्यं पश्यति । अथवा विपुलं अपत्यं तथा अक्षयं आत्मजं शुक्रं हर्षमयात्मनो जातत्त्वात् पश्यति ॥ २ । ८ ॥

द्वितीयं योगमाह—चटकानामित्यादि । भिषक् । चटकानां । चटकः चड़ाई इति वंगेषु ख्यातः क्षुद्रपक्षिभेदः । सहंसानां चटकानां हंसानां च । दक्षाणां । दक्षः कुक्कुटः । शिखिनां मयूराणां । शिशुमारस्य । शिशुमारः शुशुक इति वंगेषु ख्यातः जलजन्तुभेदः । नक्रस्य कुम्भीरस्य च । शुक्राणि । संहरेत् आहरेत् । गव्यं सर्पिः घृतं । वराहस्य वसां । कुलिङ्गस्यापि वसां । कुलिङ्गश्चटकः । षष्टिकानां चूर्णानि । गौधूमिकं चूर्णं गोधूमचूर्णं च । संहरेत् आहरेत् । एभिः विविधाः पूपलिकाः । शष्कुल्यः । वर्तिकाः वर्त्याकाराः भक्ष्याः । पूपाः । पूपलिकाशष्कुलीपूपाः पिष्टकभेदाः । धानाः । तथा अन्येऽपि पृथग्विधाः नानाविधाः भक्ष्याः कार्याः । एषां भक्ष्याणां प्रयोगात् नरः स्तब्धेन

आत्मगुप्ताफलं माषान् खर्ज्जूराणि शतावरीम् ।
शृङ्गाटकाणि मृद्वीकां साधयेत् प्रसृतोन्मिताम् । १३ ।
क्षीरप्रस्थं जलप्रस्थमेतत् प्रस्थावशेषितम् ।
शुद्धेन वाससा पूतं योजयेत् प्रसृतैस्त्रिभिः ॥१४॥
शर्करायास्तुगाक्षीर्याः सर्पिषोऽभिनवस्य च ।
तत् पाययेत सक्षौद्रं षष्टिकान्नञ्च भोजयेत् ॥१५॥
जरापरीतोऽप्यबलो योगेनानेन विन्दति ।
नरोऽपत्यं सुविपुलं युवेव च स हृष्यति ॥१६॥

इत्यपत्यकरः स्वरसः ।

दृढेन आपूर्णरेतसा शुक्रममुञ्चता शेफसा । वाजिवत् वाजीव यावदिच्छं यथेच्छं स्त्रियो याति । विविधभक्ष्यरूपोऽप्येक एवायं योगः तुल्यद्रव्यत्वात् ॥ ६—१२ ॥

तृतीयं योगमाह—आत्मगुप्ताफलमित्यादि । आत्मगुप्तायाः फलं प्रसृतोन्मितं । माषान् प्रसृतोन्मितान् । खर्ज्जूराणि प्रसृतोन्मितानि । शतावरीं प्रसृतोन्मितां । शृंगाटकाणि प्रसृतोन्मितानि । शृङ्गाटकं सिंगाड़ा इति ख्यातं । मृद्वीकां द्राक्षां च प्रसृतोन्मितां पलद्वयपरिमितां । प्रसृतोन्मितामित्यत्र प्रस्थसंमितामिति पठति गंगाधरः । तच्चिन्त्यं । आत्मगुप्ताफलादीनां षण्णां क्वाथ्यानां प्रत्येकं प्रस्थमितत्वे द्रवद्वयप्रस्थे पाकस्यैवासम्भवात् । क्षीरप्रस्थं जलप्रस्थं च एकत्र साधयेत् । आत्मगुप्ताफलादीनि मृद्वीकान्तानि षट् द्रव्याणि प्रत्येकं पलद्वयमितानि कल्कीकृत्य क्षीरप्रस्थे जलप्रस्थे च पचेत् । एतत् प्रस्थावशेषितं । तेन क्षीरप्रस्थावशेषमित्यर्थः । शुद्धेन वाससा वस्त्रेण पूतं परिस्रुतं कृत्वा तत् शर्करायाः तुगाक्षीर्याः वंशलोचनायाः अभिनवस्य नूतनस्य सर्पिषो घृतस्य च प्रत्येकं त्रिभिः प्रसृतैः षड्भिः पलैः योजयेत् । तत् सक्षौद्रं मधुसंयुक्तं कृत्वा पाययेत् । ततः षष्टिकान्नं भोजयेत् । जरापरीतो जरायुक्तः अबलोऽपि नरः अनेन योगेन सुविपुलं अपत्यं विन्दति लभते । स च युवा इव

१७ । मृद्वीकां सहजाफलं इति ख ग ङ पुस्तकेषु ।

खर्ज्जूरीमस्तकं माषान् पयस्यां सशतावरीम् ।
खर्ज्जूराणि मधूकानि मृद्वीकामजड़ाफलम् ॥१७॥
पलोन्मितानि सर्वाणि साधयेत् सलिलाढ़के ।
तेन पादावशेषेण क्षीरप्रस्थं विपाचयेत् ॥१८॥
क्षीरशेषेण तेनाद्याद् घृताढ्यं षष्टिकौदनम् ।
सशर्करेण संयोग एष वृष्यः परं मतः ॥१९॥

इति वृष्यक्षीरम् ।

हृष्यति मेहनोच्छ्रायवान् भवति ।·:अष्टाङ्गसंग्रहेऽपि—आत्मगुप्ताफलं माषान् खर्ज्जूराणि शतावरीं । शृङ्गाटकाणि मृद्वीकां पचेत् तत् प्रसृतोन्मितं ॥ क्षीरप्रस्थं जलप्रस्थमेतत् क्षीरावशेषितं । शुचिना वाससा पूतं योजयेत् प्रसृतैस्त्रिभिः ॥ शर्करायास्तुगाक्षीर्याः सर्पिषोऽभिनवस्य च । तत्पिबेत् क्षौद्रसंयुक्तं भुञ्जानः षष्टिकौदनं ॥ तथा जरापरीतोऽपि पुत्रैः सम्परिवार्यते । इति ( उ० ५० ) ॥ १३—१६ ॥

चतुर्थं योगमाह—खर्ज्जूरीमस्तकमित्यादि । खर्ज्जूर्याः क्षुद्रस्य खर्ज्जूरवृक्षस्य असंजातफलस्य इत्यर्थः । अल्पविवक्षायां ङीप् । मस्तकं । माषान् । पयस्यां सशतावरीं पयस्यां शतावरीं च । पयस्या क्षीरकाकोली । खर्ज्जूराणि खर्ज्जूरफलानि । मधूकानि मधूकपुष्पाणि । मृद्वीकां द्राक्षां । अजड़ाफलं । अजड़ा शूकशिम्बी । अष्टांगसंग्रहे तु अजड़ाफलमित्यत्र उच्चटाफलमिति पाठः । सर्वाणि द्रव्याणि प्रत्येकं पलोन्मितानि कृत्वा । सलिलाढके आढकपरिमिते जले साधयेत् मृद्वग्निना । पादञ्च अवशेषयेत् । ततः पादावशेषेण तेन क्वाथेन क्षीरस्य दुग्धस्य गव्यस्य प्रस्थं विपाचयेत् यावत् क्वाथस्य क्षयः स्यात् । ततः क्षीरशेषेण क्वाथस्य क्षयात् क्षीरमात्रावशेषेण तेन सशर्करेण शर्करया युक्तेन क्षीरावशेषं तं अवतार्य शर्करासंयुक्तं कृत्वा तेन घृताढ्यं षष्टिकौदनं अद्यात् भुञ्जीत । एष संयोगः प्रयोगः परमतीव वृष्यः शुक्रकृत् मतः । अष्टाङ्गसंग्रहेऽप्युक्तं—द्राक्षा खर्ज्जूरखर्ज्जूरीमस्तकान्युच्चटाफलं । पयस्याभीरुमाषांश्च मधूकानि च साधयेत् ॥ तोयाढके पलांशानि पादशेषेण तेन च । क्षीरप्रस्थं पचेत्क्षीरशेषेणाद्याद् घृतान्वितं ॥ षष्टिकान्नं सिताज्येन योगोऽयं शुक्रकृत्परं । इति ( उ० ५० ) । उच्चटाफलं गुञ्जाफलं ॥१७–१९॥

(जीवकर्षभकौ मेदां जीवन्तीं श्रावणीद्वयम् ।
खर्ज्जूरं मधुकं द्राक्षां पिप्पलीं विश्वभेषजम् ॥२०॥
शृङ्गाटकीं विदारीञ्च नवं सर्पिः पयो जलम् ।
सिद्धं घृतावशेषं तच्छर्कराक्षौद्रपादिकम् ॥२१॥
षष्टिकान्नेन संयुक्तमुपयोज्यं यथाबलम् ।
वृष्यं बल्यञ्च वर्ण्यञ्च कण्ठ्यं बृंहणमुत्तमम् ॥२२॥

इति वृष्यघृतम् ।

पञ्चमं योगमाह—जीवकर्षभकावित्यादि । जीवकर्षभकौ जीवकं ऋषभकं च । मेदां । जीवन्तीं । श्रावणीद्वयं श्रावणीमहाश्रावण्यौ । खर्ज्जूरं । मधुकं । द्राक्षां । पिप्पलीं । विश्वभेषजं शुण्ठीं । शृङ्गाटकीं । विदारीं विदारीकन्दं च । जीवकादिविदार्यन्तानि त्रयोदश द्रव्याणि तुल्यमानानि । कल्कीकृत्य तत् कल्कं । ततश्चतुर्गुणं नवं सर्पिः । सर्पिःसमानं पयो गव्यं दुग्धं । जलं च त्रिगुणं । जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितं । तत्र स्यादौषधात्स्नेहः स्नेहात्तोयं चतुर्गुणं इति । (च०क० १२) । औषधात् चतुर्गुणः स्नेहः । स्नेहाच्चतुर्गुणं तोयं । तोयमिति द्रवस्योपलक्षणं । तत्सर्वं एकत्र साधयेत् । सिद्धं घृतावशेषं तत् शर्कराक्षौद्रपादिकं तच्चतुर्थांशपरिमिताभ्यां शर्कराक्षौद्राभ्यां युक्तं षष्टिकान्नेन संयुक्तं षष्टिकान्नेन सह यथाबलं अग्निबलापेक्षया मात्रया उपयोज्यं उपयोजयेत् भुञ्जीत । एवमुपयुक्तं तत् । वृष्यं शुक्रकृत् । बलाय हितं बल्यं । एवं वर्ण्यं । कण्ठ्यं च । उत्तमं बृंहणं च भवति । तदुक्तं—जीवकर्षभकौ मेदा जीवन्ती श्रावणीद्वयं । खर्ज्जूरं मधुकं द्राक्षा विदारी विश्वभेषजं॥ शृङ्गाटकाणि चपला नवं सर्पिः पयो जलं । घृतावशेषं सिद्धं च शर्करामाक्षिकान्वितं ॥ षष्टिकौदनसंयुक्तमुपयोज्यं यथायथं । तद्वृष्यं बलकृद्वर्ण्यं कण्ठ्यं देहस्य बृंहणं ॥ इति ( अ० सं० उ० ५० ) । चपला पिप्पली ॥ २०—२२ ॥

दध्नः सरं शरच्चन्द्रसन्निभं दोषवर्ज्जितम् ।
शर्कराक्षौद्रमरिचैस्तुगाक्षीर्य्या च बुद्धिमान् ॥२३॥
युक्त्या युक्तं ससूक्ष्मैलं नवे कुम्भे शुचौ पटे ।
मार्ज्जितं प्रक्षिपेच्छीते घृताढ्ये षष्टिकौदने ॥२४॥
तमद्यादुपरिष्टाच्च रसालां मात्रया पिबेत् ।
वर्णस्वरबलोपेतः पुमांस्तेन वृषायते ॥२५॥

इति वृष्यदध्यादि ।

चन्द्रांशुकल्पं पयसा घृताढ्यं षष्टिकौदनम् ।
शर्करामधुसंयुक्तं प्रयुञ्जानो वृषायते ॥२६॥

इति वृष्यदुग्धादि ।

तप्ते सर्पिषि नक्राण्डं ताम्रचूड़ाण्डमिश्रितम् ।
युक्तं षष्टिकचूर्णेन सर्पिषाऽभिनवेन च ॥२७॥

षष्ठं योगमाह—दध्नः सरमित्यादि । बुद्धिमान् भिषक् शरच्चन्द्रसन्निभं शरच्चन्द्रसदृशशुभ्रवर्णं । दोषवर्जितं निर्दोषं । दध्नः सरं । शर्करा । क्षौद्रं । मरिचं च । तानि । तैः । तुगाक्षीर्या वंशलोचनया च । युक्त्या युक्तं यावन्मात्रया नातिमधुरं नातिकटुकं च स्यात् शर्करादीनां तावन्मात्रया युक्तं । ससूक्ष्मैलं सूक्ष्मैलाचूर्णसंयुक्तं च कृत्वा । नवे कुम्भे शुचौ पटे निर्मले वस्त्रे बद्ध्वा । मार्जितं निर्णिक्तं कृत्वा । तत् शीते पर्युषिते घृताढ्ये षष्टिकौदने प्रक्षिपेत् । तत् षष्टिकोदनं भुक्त्वा उपरिष्टात् रसालां कुम्भे पतितस्य दधिसररसस्य रसाला संज्ञकस्य । रसाला शिखरिणी । मात्रया पिबेत् । पुमान् तेन वर्णस्वरबलोपेतः सन् वृषायते ॥ २३—२५ ॥

सप्तमं योगमाह—चन्द्रांशुकल्पमिति । पुमान् चन्द्रांशुकल्पं चन्द्रकिरणवत् शुभ्रवर्णं षष्टिकौदनं घृताढ्यं शर्करामधुसंयुक्तं च कृत्वा पयसा दुग्धेन सह प्रयुञ्जानः भुञ्जानः वृषायते ॥ २६ ॥

अष्टमं योगमाह—तप्ते सर्पिषीत्यादि । तप्ते सर्पिषि नक्राण्डं कुम्भीराण्डं ताम्र-

---

२४। नवे काण्डे शुचौ पटे इति ङ पुस्तके ।

पक्त्वा पूपलिकाः खादेद्वारुणीमण्डपो नरः ।
य इच्छेदश्ववद्गन्तुं प्रसेक्तुं गजवच्च यः ॥२८॥

इति नक्राण्डपाकवृष्ययोगः ।

एतैः प्रयोगैर्विविधैर्वपुष्मान् स्नेहोपपन्नो बलवर्णयुक्तः ।
हर्षान्वितो वाजिवदष्ट वर्षान् भवेत् समर्थश्च वराङ्गनासु ॥२९॥

यद्यच्च किञ्चिन्मनसः प्रियं स्याद्रम्या वनान्ताः पुलिनानि शैलाः ।
इष्टाः स्त्रियो भूषणगन्धमाल्यं प्रिया वयस्याश्च तदत्र योज्यम् ॥

चूडाण्डमिश्रितं । ताम्रचूडः कुक्कुटः । नक्राण्डताम्रचूडाण्डयोः आवरणं वहिः क्षिप्त्वा तन्मध्यस्थं यत् तत् गृहीत्वा तत् षष्टिकचूर्णेन षष्टिकतण्डुलचूर्णेन युक्तं कृत्वा । तेन च पूपलिकाः निर्माय ताः अभिनवेन सर्पिषा पक्त्वा भृष्ट्वा नरः वारुणीमण्डपः वारुणीमण्डं पिबन् खादेत् । यः अश्ववत् स्त्रियो गन्तुं इच्छेत् । यश्च गजवत् प्रसेक्तुं शुक्रमोक्षं कर्तुं इच्छेत् ॥ २७–२८ ॥

एतैरिति । एतैः विविधैः प्रयोगैः वृष्ययोगैः पुमान् वपुष्मान् प्रशस्तवपुः स्नेहोपपन्नः स्निग्धगात्रः बलवर्णयुक्तः हर्षान्वितः वराङ्गनासु उत्तमस्त्रीषु वाजिवत् समर्थः मैथुनक्षमो भवेत् । कियन्तं कालं समर्थः भवेदिति ? आह—अष्ट वर्षान् । अष्ट अष्टौ वर्षान् व्याप्य समर्थो भवेत् । यथाविधिप्रयोगेण एषां योगानां प्रभावः अष्टौ वर्षान् व्याप्य तिष्ठेत् इत्यर्थः ॥ २९ ॥

वाजीकरणमाचारमाह—भवतश्चात्रेति । यद्व यच्चेति । रम्याः । वनान्ताः वनप्रदेशाः । रम्याणि पुलिनानि । रम्याः शैलाः पर्वताः । इष्टाः स्त्रियः । इष्टं भूषणं गंधः माल्यं च तत् । प्रियाः वयस्याः सखायश्च । इत्येवं यत् यत् किंचित् मनसः प्रियं स्यात् । तत्सर्वं अत्र वृष्यप्रयोगे योज्यं । तदुक्तं सुश्रुतेनापि—भोजनानि विचित्राणि पानानि विविधानि च । वाचः श्रोत्रानुगामिन्यस्त्वचः स्पर्शसुखास्तथा ॥ यामिनी सेन्दुतिलका कामिनी नवयौवना । गीतं श्रोत्रमनोहारि ताम्बूलं मदिरास्रजः ॥ मनसश्चाप्रतीघातो वाजीकुर्वन्ति मानवम् । इति ( सु० चि० २६ ) ॥ ३० ॥

तत्र श्लोकः।

आसिक्तक्षीरिके पादे ये योगाः परिकीर्त्तिताः।
अष्टावपत्यकामैस्ते प्रयोज्याः पौरुषार्थिभिः ॥३१॥

इति चिकित्सित आसिक्तक्षीरिको वाजीकरणपादो द्वितीयः।

तृतीयः पादः।

अथातो माषपर्णभृतीयं वाजीकरणपादं व्याख्यास्यामः।
इति ह स्माह भगवानात्रेयः ॥१॥

माषपर्णभृतां धेनुं गृष्टिं पुष्टां चतुःस्तनीम्।
समानवर्णवत्सां च जीवद्वत्साञ्च बुद्धिमान् ॥२॥
रोहिणीमथवा कृष्णामूर्ध्वशृङ्गीमदारुणाम्।
इक्ष्वादामर्ज्जुनादां वा सान्द्रक्षीराञ्च धारयेत् ॥३॥
केवलन्तु पयस्तस्याः शृतं वाऽशृतमेव वा।

अध्यायार्थसंग्रहमाह—तत्र श्लोक इति। आसिक्तक्षीरिके पादे ये अष्टौ योगाः परिकीर्तिताः। अपत्यकामैः पौरुषार्थिभिः शुक्रार्थिभिः ते प्रयोज्याः ॥३१॥

इति चरकोपस्कारे चिकित्सितस्थाने द्वितीयेऽध्याये द्वितीयः पादः।

अथ माषपर्णभृतीयं नाम तृतीयं वाजीकरणपादमारभते—अथात इति। माष-पर्णभृतामिति पदमधिकृत्य कृतः अध्यायपादः माषपर्णभृतीयः। तं ॥१॥

माषपर्णभृतामित्यादि। पुष्टां न रुग्णां। चतुःस्तनीं सम्पूर्णचतुःस्तनीं। समान-वर्णो वत्सो यस्याः सा। तां। जीवन् वत्सो यस्याः सा। तां। रोहिणीं लोहितवर्णां। कृष्णां कृष्णवर्णां वा। ऊर्ध्वशृङ्गीं। अनेन विशुद्धबहुक्षीरत्वं ज्ञापयति। अदारुणाम-दुष्टां। सान्द्रं क्षीरं यस्याः सा। तां सान्द्रक्षीरां। माषपर्णैः भृता पुष्टा। तां माषपर्ण-भृतां। माषपर्णभक्षवामित्यर्थः। इक्षुं अत्ति भक्षयति इति इक्ष्वादा। एवं अर्ज्जुनादा। इक्ष्वदां इक्षुदण्डभक्षां। अर्ज्जुनादां अर्ज्जुनपत्रभक्षां। माषपर्णभृता इक्ष्वादा अर्ज्जुनादा वा इति विकल्पत्रयं। बुद्धिमान् भिषक् तथाविधां गृष्टिं एकवारप्रसूतां। गृष्टिः सकृत्प्रसूता गौरिति। धेनुं। धारयेत् दुह्यात्। तस्याः गृष्टेः तत् पयः दुग्धं केवलं द्रव्यान्तरासम्पृक्तं। शृतं पक्वं। अशृतं अपक्वं वा। इति योगद्वयं। जतूकर्णेऽपि—

शर्करामधुसर्पिर्भिर्युक्तं तद्‌ वृष्यमुत्तमम् ॥४॥
शुक्लैर्जीवनीयैश्च बृंहणैर्बलवर्द्धनैः ।
वयःसंस्थापनैश्चैव पयः सिद्धं पृथक् पृथक् ॥५॥
युक्तं गोधूमचूर्णेन सघृतक्षौद्रशर्करम् ।
पर्य्यायेण प्रयोक्तव्यमिच्छता शुक्रमक्षयम् ॥६॥
मेदां पयस्यां जीवन्तीं विदारीं कण्टकारिकाम् ।
श्वदंष्ट्रां क्षीरिकां माषान् गोधूमाञ्छालिषष्टिकान् ॥७॥

तस्याः क्षीरं शर्कराक्षौद्रयुक्तं केवलं शृतमशृतं वा । इति । तस्याः पयः शर्करामधुसर्पिर्भिः युक्तं शर्करामधुघृतयुक्तं उत्तमं वृष्यं । अयमन्यो योगः । तदुक्तं—गृष्टिर्वष्कयनी नीरुगूर्ध्वंवश्रृङ्गी चतुःस्तनी । सान्द्रस्वादुबहुक्षीरा रूपशीलसमन्विता । इक्षुभिर्मापपर्णेन या सुतृप्तार्ज्जुनेन वा । तत्क्षीरं ससिताक्षौद्रघृतं पुत्ररतिप्रदं ॥ इति । ( अ० सं० उ० ५० ) । इति त्रयो योगाः ॥ २—४ ॥

शुक्लैरित्यादि । अक्षयं शुक्रमिच्छता पुंसा पयः गृष्टेः क्षीरं । तस्याधिकृतत्वात् । शुक्लैः शुक्रजननैः षड्‌विरेचनशतीयोक्तैः जीवकर्षभककाकोलीक्षीरकाकोल्यादिभिः । जीवनीयैः जीवकर्षभकमेदामहामेदादिभिः । बृंहणैः बृंहणीयैः क्षीरिणीराजक्षवकाश्वगन्धादिभिः । बलवर्द्धनैः बल्यैः ऐन्द्र्यृषभ्यतिरसर्ष्यप्रोक्तादिभिः । वयःसंस्थापनैः वयःस्थापनैः अमृताभयाधात्रीयुक्ताश्रेयसीजीवन्त्यादिभिः । वयःस्थापनैरित्यत्र क्षीरसंजननैरिति पाठः। क्षीरसंजननैः स्तन्यजननैः वीरणशालिषष्टिकेक्षुवालिकादिभिः । वयःसंस्थापनैरिति वृद्धवाग्भटधृतः पाठः। स एव समीचीनः प्रतिभाति। अस्मत्संगृहीतेषु सर्वेषु चरकपुस्तकेषु क्षीरसंजननैरिति पाठः। इति पञ्चभिर्वर्गैः पृथक् पृथक् कल्कीकृतैः सिद्धं कृत्वा ततः गोधूमचूर्णेन युक्तं सघृतक्षौद्रशर्करं घृतमधुशर्करायुक्तं च कृत्वा पर्यायेण पञ्चानां वर्गाणामेकैकक्रमेण प्रयोक्तव्यं । उक्तं च—शुक्लैर्जीवनीयाख्यैःर्बृंहणैर्बलवर्द्धनैः । वयः संस्थापनैश्चैतत् पयः सिद्धं पृथक् पृथक् ॥ पर्यायेण प्रयोक्तव्यमिच्छता शुक्रमक्षयं । इति ( अ० सं० उ० ५० ) । इह शुक्रजननजीवनीय बृंहणीयबल्यवयःस्थापनैः पञ्चभिर्वर्गैः पञ्च योगाः ॥ ५।६ ॥

५ । क्षीरसंजननैश्चैव पयः सिद्धं इति सर्वेषु पुस्तकेषु । वयः संस्थापनैरिति पठति वृद्धवाग्भटः ।

पयस्यर्द्धोदके पक्त्वा कार्षिकानाढकोन्मिते ।
विवर्जयेत् पयः शेषं तत् पूतं क्षौद्रसर्पिषा ॥८॥
युक्तं सशर्करं पीत्वा वृद्धः सप्ततिकोऽपि वा ।
विपुलं लभतेऽपत्यं युवेव च स हृष्यति ॥९॥
मण्डलैर्जातरूपस्य तस्या एव पयः शृतम् ।
अपत्यजननं सिद्धं सघृतक्षौद्रशर्करम् ॥१०॥
त्रिंशत् सुपिष्टाः पिप्पल्यः प्रकुञ्चे तैलसर्पिषोः ।
भृष्ट्वा सशर्कराक्षौद्राः क्षीरधारावदोहिताः ॥११॥

नवमं योगमाह—मेदामित्यादि । मेदां । पयस्यां क्षीरकाकोलीं । जीवन्तीं । विदारीं । कण्टकारिकां । श्वदंष्ट्रां गोक्षुरकं । क्षीरिकां राजादनं । माषान् । गोधूमान् । शालिषष्टिकांश्च । एतान् प्रत्येकं कार्षिकान् कर्षपरिमितान् कल्कीकृतान् । अर्द्धं उदकं जलं यस्मिन् तस्मिन् अर्द्धोदके आढकमिते आढकपरिमिते पयसि गृष्टेः क्षीरे पक्त्वा यावत् उदकस्य क्षयः स्यात् विवर्जयेत् मेदादीनां किट्टान् त्यजेत् । ततः पयःशेषं उदकक्षयात् दुग्धमात्रावशिष्टं तत् पूतं सूक्ष्मेण वस्त्रेण गालितं कृत्वा क्षौद्रसर्पिषा युक्तं घृतमधुयुक्तं सशर्करं शर्करायुक्तं च कृत्वा तत् पीत्वा । वृद्धः सप्ततेरर्वाक् । अथवा सप्ततिकोऽपि । विपुलं अपत्यं लभते । युवेव हृष्यति च ॥ ७–९ ॥

दशमं योगमाह—मण्डलैरिति । तस्याः गृष्टेरेव पयः । जातरूपस्य सुवर्णस्य मण्डलैः मण्डलाकारैः वलयाकृतिभिः शृतं । सुवर्णस्य मण्डलानि अग्नौ तापयित्वा तैः सुतप्तैः शृतं । सुवर्णस्य मण्डलरूपाकृतिः प्रभावात् वृष्यप्रयोगोपकारिणी भवति । ततः तत् सघृतक्षौद्रशर्करं घृतमधुशर्करायुक्तं कृत्वा पीतं सिद्धं निश्चितफलं अपत्यजननं । रूप्यताम्रादीनामप्येवं विधिर्ज्ञेयः । उक्तञ्च—मण्डलैर्जातरूपस्य सुतप्तैस्तत् पयः शृतं । सिद्धं पुंसवनं वृष्यं ससिताघृतमाक्षिकं ॥ रूप्यायस्ताम्रसीसानामयमेव पृथग् विधिः । इति ( अ० सं० उ० ५० ) ॥ १० ॥

एकादशं योगमाह—त्रिंशदित्यादि । त्रिंशत् आहृत्य त्रिंशत् पिप्पल्यः सुपिष्टाः सम्यक् कल्किताः । तैलसर्पिषोः प्रकुञ्चे पले भृष्टाः ततः सशर्कराक्षौद्राः शर्करामधु-

पीत्वा यथाबलञ्चोर्ध्वं षष्टिकं क्षीरसर्पिषा ।
भुक्त्वा न रात्रिमस्तब्धं लिङ्गं पश्यति ना क्षरत् ॥१२॥
श्वदंष्ट्राया विदार्य्याश्च रसे क्षीरचतुर्गुणे ।
घृताढ्यः साधितो वृष्यो माषषष्टिकपायसः ॥१३॥
फलानां जीवनीयानां स्निग्धानां रुचिकारिणाम् ।
कुड़वश्चूर्णितानां स्यात् स्वयंगुप्ताफलस्य च ॥१४॥
कुड़वश्चैव माषाणां द्वौ द्वौ च तिलमुद्गयोः ।
गोधूमशालिचूर्णानां कुड़वः कुड़वो भवेत् ॥१५॥
सर्पिषः कुड़वश्चैव क्षीरेण मृदितं च तत् ।
पक्त्वा पूपलिकाः खादेद्बह्व्यः स्युर्यस्य योषितः ॥१६॥

युक्ताः कृत्वा । दोहनपात्रे प्रक्षिप्य दुह्यमानायाः गृष्टेः क्षीरधारया अवदोहिता आलोड़िताः । ताः यथाबलं अग्निबलानुरूपया मात्रया पीत्वा । ऊर्ध्वं ततः परं क्षीरसर्पिषा षष्टिकं भुक्त्वा गृष्टेः क्षीरेण ससर्पिष्कं षष्टिकान्नं भुञ्जानः ना पुमान् रात्रिं कृत्स्नां व्याप्य आत्मनो लिङ्गं क्षरत् शुक्रमोक्षं कुर्वत् अस्तब्धं अदृढं च न पश्यति ॥ ११।१२ ॥

द्वादशं योगमाह—श्वदंष्ट्राया इति । श्वदंष्ट्रायाः गोक्षुरकस्य । विदार्याः विदारीकन्दस्य च । रसे । क्षीरं चतुर्गुणं यस्मिन् तस्मिन् । तथाविधे श्वदंष्ट्राविदार्योः रसे साधितः घृताढ्यः माषषष्टिकपायसः वृष्यः शुक्रकृत् ॥ १३ ॥

त्रयोदशं योगमाह—फलानामित्यादि । फलानामिति जीवनीयानामित्यादिभिः प्रत्येकमभिसंबध्यते । जीवनीयानां प्राक् षड्विरेचनशतीये उक्तानां जीवकर्षभकमेदामहामेदादीनां दशानां । स्निग्धानां स्नेहोपगानां मृद्वीकामधुकमधुपर्णीमेदाविदार्यादीनां दशानां । रुचिकारिणां हृद्यानां आम्राम्रातकलकुचकरमर्दादीनां दशानां फलानां । सर्वेषां चूर्णितानां कुडवः प्रमाणं स्यात् । स्वयंगुप्ताफलस्य आत्मगुप्ताफलानां चूर्णितानां च कुडवः । माषाणां चूर्णितानां कुडवः । तिलमुद्गयोः चूर्णितयोः द्वौ द्वौ कुडवौ । तिलस्य द्वौ कुडवौ । मुद्गस्य च द्वौ । गोधूमशालिचूर्णानां कुड़वः

घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत् ।
शर्करापिप्पलीक्षौद्रयुक्तं तद् वृष्यमुत्तमम् ॥१७॥

कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ।
पयोऽनुपानं लिह्याद्यो नित्यवेगः स ना भवेत् ॥१८॥

घृतक्षीराशनो निर्भीर्निर्व्याधिर्नित्यगो युवा ।
सङ्कल्पप्रबलो नित्यं नरः स्त्रीषु वृषायते ॥१९॥

कुड़वः भवेत् । गोधूमचूर्णानां कुडवः शालिचूर्णानां च कुड़वः । सर्पिषो घृतस्य गव्यस्य कुड़वः । तत्सर्वं द्रव्यं क्षीरेण मृदितं क्षीरेणालोड्य मर्दयित्वा पूपलिकाः पक्त्वा ताः पूपलिकाः खादेत् पुमान् । यस्य पुंसः बह्व्यः योषितः भार्याः स्युः ॥१४–१६॥

चतुर्दशं योगमाह—घृतमिति । शतावरी कल्किता गर्भे यस्य तत् शतावरीगर्भं । शतावरीगर्भं घृतं ततो दशगुणे क्षीरे पचेत् । शतावरीकल्के घृतात्पादिके घृतात् दशगुणं दुग्धं दत्त्वा तत्र घृतं पचेत् । तत् घृतं शर्करापिप्पलीक्षौद्रैः युक्तं । शर्करादीनां तावन्मानं यावता तन्नातिमधुरं नातिकटुकं च स्यात् । तत् उत्तमं वृष्यम् ॥ १७ ॥

पञ्चदशं योगमाह–कर्षमिति । यः मधुकचूर्णस्य यष्टीमधुकचूर्णस्य कर्षं कर्षप्रमाणं घृतक्षौद्रसमन्वितं घृतमधुयुक्तं कर्षमितं मधुकचूर्णं घृतमधुभ्यां लेह्यं कृत्वा पयोऽनुपानं यथा तथा लिह्यात् । तत् लीढ्वा पयः अनुपिबेत् । स ना पुरुषः नित्यवेगः सतत कामवेगः भवेत् । इति पञ्चदश वृष्ययोगाः ॥ १८ ॥

पुंसां मनसः प्रहर्षनिमित्तं यत्किञ्चित् सामान्यतः तत् सर्वं वृष्यं । तत्र स्त्री । सा च यद्विधा यद्विधस्य वृष्यतमा तच्च उपदर्शितं प्राक् । साम्प्रतमन्यानि यानि पुंसां प्रहर्षनिमित्तानि सन्ति तानि दर्शयितुमाह—घृतक्षीराशन इति । नित्यं घृतक्षीराशनः नित्यं घृत दुग्धभोजी । निर्भीः निर्भयः । निर्व्याधिः । नित्यगः सततस्त्रीगमनशीलः । युवा । संकल्पः प्रबलो यस्य स संकल्पप्रबलः । मनसा सततं रमणं कल्पयन् । तथाविधो नरः स्त्रीषु वृषायते ॥ १९ ॥

कृतैककृत्याः सिद्धार्था ये चान्योन्यानुवर्त्तिनः ।
कलासु कुशला स्तुल्याः सत्त्वेन वयसा च ये ॥२०॥
कुलमाहात्म्यदाक्षिण्यशीलशौचसमन्विताः ।
ये कामनित्या ये हृष्टा ये विशोका गतव्यथाः ॥२१॥
ये तुल्यशीला ये भक्ता ये प्रिया ये प्रियंवदाः ।
तैर्नरः सह विस्रब्धः सुवयस्यैर्वृषायते ॥२२॥
अभ्यङ्गोत्सादनस्नानगन्धमाल्यविभूषणैः ।
गृहशय्यासनसुखैर्वासोभिरहतैः प्रियैः ॥२३॥
विहङ्गानां रुतैरिष्टैः स्त्रीणाश्चाभरणस्वनैः ।
संवाहनैर्वरस्त्रीणामिष्टानाञ्च वृषायते ॥२४॥

कृतैककृत्या इत्यादि। ये। कृतं एकं कृत्यं कर्म यैः ते कृतैककृत्याः। एककर्मकरणात् अन्योन्यानुवर्तित्वं। सिद्धार्थाः कृतार्थाः। तेन हि अव्याकुलमनसः। अन्योन्यानुवर्तिनः परस्परानुरक्ताः। ये कलासु कुशलाः। ये सत्त्वेन वयसा च तुल्याः। कुलेति। ये। कुलमाभिजात्यं। माहात्म्यं। दाक्षिण्यं दक्षिणाचारः। शीलं सच्चरित्रं। शौचं वाह्याभ्यन्तरशुचिता च। तैः समन्विताः। ये कामनित्याः नित्यकामुकाः। ये हृष्टाः नित्यं हर्षयुक्ताः। ये विशोकाः विगतशोकाः। गतव्यथा रोगादिदुःखरहिताः। ये तुल्यशीला इति। ये तुल्यशीलाः ये भक्ताः अनुरक्ताः। ये प्रियाः। ये च प्रियंवदाः प्रियभाषिणः। तैः तथाविधैः सुवयस्यैः सह विस्रब्धः विश्वासालापामोदयुक्तः नरो वृषायते॥२०-२२॥

अभ्यङ्गोत्सादनेत्यादि। अभ्यङ्गः। उत्सादनं उद्वर्तनं। स्नानं। गन्धः। माल्यं पुष्पस्रक्। विभूषणं च। तैः। गृहं। शय्या। आसनं च। तेषु सुखैः सुखान्वितैः सुखकरैः गृहशयनासनैः। अहतैः अच्छिन्नैः नूतनैरित्यर्थः। प्रियैः। वासोभिः वसनैः। इष्टैः विहङ्गानां तैः रवैः। स्त्रीणां आभरणस्वनैः अलंकारशिञ्जितैः। इष्टानां वरस्त्रीणां संवाहनैः करैः स्पर्शसुखैः अङ्गमर्दनैश्च। नरः स्त्रीषु वृषायते॥ २३।२४॥

मत्तद्विरेफाचरिताः सपद्माः सलिलाशयाः ।
जात्युत्पलसुगन्धीनि शीतगर्भगृहाणि च ॥२५॥
नद्यः फेनोत्तरीयाश्च गिरयो नीलसानवः ।
उन्नतिर्नीलमेघानां रम्यचन्द्रोदया निशाः ॥२६॥
वायवः सुखसंस्पर्शाः कुमुदाकरगन्धिनः ।
रतिभोगक्षमा नार्यः सङ्कोचागुरुवल्लभाः ॥२७॥

सुखाः सहायाः परपुष्टघुष्टाः फुल्ला वनान्ता विशदान्नपानाः ।
गान्धर्वशब्दाश्च सुगन्धयोगाः सत्त्वं विशालं निरुपद्रवश्च ॥२८॥
सिद्धार्थता चाभिनवश्च कामः स्त्री चायुधं सर्वमिहात्मजस्य ।
वयो नवं जातमदश्च कालो हर्षस्य योनिः परमा नराणाम् ॥२९॥

मत्तद्विरेफाचरिता इत्यादि । मत्तैः मधुपानमत्तैः द्विरेफैः भ्रमरैः आचरिताः उपासिताः । सपद्माः । सलिलाशयाः जलाशयाः । जातिभिः मालतीपुष्पैः । उत्पलैश्च । सुगन्धीनि । शीतानि गर्भगृहाणि च । फेनः उत्तरीयं उत्तराम्वरं यासां ताः फेनोत्तरीयाः । वर्षासु फेनिलत्वात् । तादृश्यो नद्यः । नीलानि नवमेघाच्छन्नत्वात् सानूनि येषां ते नीलसानवः । गिरयः पर्वताः । नीलमेघानां उन्नतिश्च । रम्यचन्द्रोदया इति । रम्यः चन्द्रोदयो यासु ताः । तथाविधाः निशाः । सुखसंस्पर्शाः । कुमुदानां आकराः सरोवराः । तद्गन्धिनः कुमुदाकरत्वात् कुमुदगन्धवन्तः । तथाविधा वायवश्च । सङ्कोचागुरुवल्लभाः कुङ्कुमागुरुप्रियाः । तादृश्यः रतिभोगक्षमा नार्यः । सुखा इति । सुखाः सुखदाः सहायाः सहचराः । अथवा सुखाः सुखकराः अदुर्गमाः सहायाः सहायभूताः भयविरहात् । परपुष्टैः कोकिलैः घुष्टाः नादिताः । फुल्लाः प्रफुल्लकुसुमाः । विशदं अन्नं पानं च येषु ते । तथोक्ताः । वनान्ताः वनप्रदेशाः विहारभूमयः । गान्धर्वशब्दाः शृङ्गारकथाविशेषाः । सुगन्धयोगाश्च । सत्त्वमिति । विशालं महत् निरुपद्रवं आधिरहितं

---

२७ । रतिभोगक्षमा इति क पुस्तके ।

२९ । अभिनवस्य कामः इति ग पुस्तके ।

तत्र श्लोकः ।

प्रहर्षयोनयो योगा व्याख्याता दश पञ्च च ।
माषपर्णभृतीयेऽस्मिन् पादे शुक्रबलप्रदाः ॥३०॥

इति चिकित्सिते माषपर्णभृतीयो नाम वाजीकरणपादस्तृतीयः ।

चतुर्थः पादः ।

अथातः पुमाञ्जातबलादिकं वाजीकरणपादं व्याख्यास्यामः । इति ह स्माह भगवानात्रेयः ॥ १ ॥

पुमान् यथा जातबलो यावदिच्छं स्त्रियो व्रजेत् ।
यथा चापत्यवान् सद्यो भवेत् तदुपदेक्ष्यते ॥२॥

सत्त्वं मनः । सिद्धार्थता सफलकामता । अभिनवः कामः कन्दर्पः । स्त्रीषु अभिलाषो वा । स्त्री च । एतत् सर्वं आत्मजस्य कामस्य आयुधं प्रहरणं कामोद्दीपनकृत् । नवं वयः यौवनं । जातमदः कालः वसन्तादिश्च । नराणां हर्षस्य परमा योनिः उत्पत्तिकारणं परं प्रहर्षनिमित्तं भवति ॥ २५—२६ ॥

तृतीयपादार्थसंग्रहमाह—प्रहर्षयोनय इति । शुक्रबलप्रदाः दश पञ्च च पञ्चदश योगाः । तथा प्रहर्षयोनयः पुंसां मनसः प्रहर्षनिमित्तानि यानि । ते सर्वे अस्मिन् माषपर्णभृतीये पादे माषपर्णभृतीयाख्ये तृतीये वाजीकरणपादे व्याख्याताः उक्ताः । भगवता आत्रेयेण पुनर्वसुना इति शेषः ॥ ३० ॥

इति चरकोपस्कारे चिकित्सितस्थाने द्वितीयेऽध्याये तृतीयः पादः ।

अथ पुमाञ्जातबलादिकं नाम अन्त्यं वाजीकरणपादमाह—अथात इति । पुमाञ्जातबलादिकमिति । पुमान् जातबलः इति आदौ यस्य स पुमाञ्जातबलादिः । ततः स्वार्थिकः कः । तं पुमाञ्जातबलादिकं । अन्यत् सर्वं पूर्ववत् व्याख्येयं ॥१॥

पुमान् यथेति । पुमान् यथा येन प्रकारेण जातं बलं मैथुनसामर्थ्यं यस्य स जातबलः सन् । यावदिच्छं यावदिच्छा । यावदवधारणे इति ( पा०२ । १ । ८ ) समासः । यावती ईच्छा यस्मिन् तत् यथा स्यात्तथा इति वा । यावदिच्छं यथेच्छं स्त्रियो व्रजेत् गन्तुं शक्नुयात् । यथा च स सद्यः तत्क्षणात् मैथुनमात्रेण अमोघवीर्यतया अपत्यवान् गर्भकृत् भवेत् । तद्वाजीकरणमुपदेक्ष्यते । स्त्रीषु बलप्रदा गर्भाधानकराश्च ते वृष्ययोगा अत्र वक्ष्यन्ते ॥ २ ॥

न हि जातबलाः सर्वे नराश्चापत्यभागिनः ।
बृहच्छरीरा बलिनः सन्ति नारीषु दुर्बलाः ॥३॥
सन्ति चाल्पबलाः स्त्रीषु बलवन्तो बहुप्रजाः ।
प्रकृत्या चाबलाः सन्ति सन्ति चामयदुर्बलाः ॥४॥
नराश्चटकवत् केचिद् व्रजन्ति बहुशः स्त्रियम् ।
गजवत्तु प्रसिञ्चन्ति केचिन्न बहुगामिनः ॥५॥
कामयोगबलाः केचित् केचिदभ्यसनध्रुवाः ।
केचित् प्रयत्नैर्वाह्यन्ते वृषाः केचित् स्वभावतः ॥६॥

ननु किमर्थं वृष्ययोगा उपदिश्यन्ते इति ? अतो वृष्ययोगोपदेशस्य कारणं दर्शयति—न हीत्यादि । हि यतः सर्वे नराः न जातबलाः मैथुनक्षमाः सन्ति । न च सर्वे नराः अपत्यभागिनो भवन्ति । केचित् पुरुषाः बृहच्छरीराः अन्यत्र बलिनोऽपि नारीषु दुर्बलाः मैथुने असमर्थाः सन्ति । अन्ये पुनः अल्पबलाः अल्पशरीराश्चापि स्त्रीषु बलवन्तः बहुप्रजाः बह्वपत्याश्च सन्ति शुक्रसारत्वात् । केचित् पुरुषाः प्रकृत्या स्वभावेन अबलाः स्त्रीषु दुर्बलाः सन्ति । केचिच्च आमयदुर्बला व्याधिवशात् स्त्रीषु दुर्बलाः सन्ति ॥ ३ । ४ ॥

नरा इति । केचित् नराः पुरुषाः शीघ्रमैथुनाः चटकवत् चटका इव बहुशः बहून् वारान् पुनः पुनः स्त्रियं व्रजन्ति गच्छन्ति । केचित्तु केचित्पुनः दृढमैथुनाः गजवत् गजा इव प्रसिञ्चन्ति एकदा बहुशुक्रमोक्षं कुर्वन्ति । न बहुगामिनः बहु-स्त्रीगमनशीलाः न बह्वीः स्त्रियो गन्तुं शक्नुवन्ति ॥ ५ ॥

कामयोगेति । केचित्कामयोगैः कामोद्दीपनकृतप्रयोगैः कामोद्दीपनहेतुभिः कामयोगः । तेन वा बलं येषां ते कामयोगबलाः सन्ति । कालयोगेति क्वचित् पाठः । कालयोगात् हेमन्तादिकालयोगात् बलं येषां ते कालयोगबलाः । केचित् अभ्यसनध्रुवाः मैथुनाभ्यासेन मैथुनसमर्थाः भवन्ति । इत्थं च केचित् अल्पशुक्राः पुमांसः प्रयत्नैः वाह्यन्ते वृष्यप्रयोगैः मैथुनसमर्थाः क्रियन्ते । केचित् पुनः स्वभावतः प्रकृत्या वृषाः बहुशुक्राः । तेन मैथुनसमर्थाः सन्ति ॥ ६ ॥

६ । कालयोगबलाः केचित् केचिदभ्यसनध्रुवाः इति ख ग पुस्तकयोः ।

तस्मात् प्रयोगान् वक्ष्यामो दुर्बलानां बलप्रदान् ।
सुखोपभोगान् बलिनां भूयश्च बलवर्द्धनान् ॥७॥
पूर्वं शुद्धशरीराणां निरूहान् सानुवासनान् ।
बलापेक्षी प्रयुञ्जीत शुक्रापत्यविवर्द्धनान् ॥८॥
घृततैलरसक्षीरशर्करामधुसंयुताः ।
वस्तयः संविधातव्याः क्षीरमांसरसाशिनाम् ॥९॥
पिष्ट्वा वराहमांसानि दत्त्वा मरिचसैन्धवे ।
कोलवद् गुड़िकाः कृत्वा तप्ते पयसि वर्तयेत् ॥१०॥

तस्मादिति। तस्मात् दुर्बलानां प्रकृत्या स्त्रीषु दुर्बलानां पुंसां बलप्रदान्। बलिनां बलवतां चापि भूयो बलवर्द्धनान् अभ्यधिकबलप्रदान्। सुखः सुखकरः उपभोगः उपयोगः येषां तान्। तथाविधान् प्रयोगान् वक्ष्यामः ॥ ७ ॥

वृष्ययोगात् प्राक् करणीयान् निरूहानुवासनानाह—पूर्वमिति। पूर्वं प्राक्। शुद्धं वमनविरेचनाभ्यां निर्हृतमलं स्निग्धं चापि शरीरं येषां तेषां। तथाविधानां पुंसां बलापेक्षी प्रकृतिसात्म्यसत्त्वाद्यपेक्षया भिषक् सानुवासनान् अनुवासनसहितान् निरूहान् आस्थापनानि प्रयुञ्जीत। ततः परं शुक्रापत्यविवर्द्धनान् वृष्ययोगान् प्रयुञ्जीत। शुक्रापत्यविवर्द्धनान् निरूहान् प्रयुञ्जीत इति वा ॥ ८ ॥

निरूहानुवासना वस्तयः यद्विधानां यथा प्रयोक्तव्याः तदाह—घृततैलेति। क्षीरमांसरसाशिनां पुंसां सम्बन्धे। घृतं। तैलं। रसः मांसरसः। क्षीरं। शर्करा। मधु च। तैः संयुताः। वस्तयः निरूहानुवासनाख्याः प्रयोक्तव्याः। उक्तं च—अथ स्निग्धविशुद्धानां निरूहान् सानुवासनान्। घृततैलरसक्षीरशर्कराक्षौद्रसंयुतान् ॥ योगविद् योजयेत् पूर्वं क्षीरमांसरसाशिनां। ततो वाजीकरान् योगान् शुक्रापत्यविवर्धनान् ॥ इति ( अ० सं० उ० ५० ) ॥ ९ ॥

अथ वृष्ययोगानाह। तत्राद्यो योगः—पिष्ट्वा वराहमांसानीत्यादि। वराहमांसानि निरस्थीनि पिष्ट्वा। तत्र मरिचसैन्धवे चूर्णिते दत्त्वा। कोलवत् वृहद्बदरवत् गुड़िकाः कृत्वा। ताः तप्ते पयसि दुग्धे वर्तयेत् आवर्त्तयेत्। ततः वर्तनेन

---

१०। तप्ते सर्पिषि भर्जयेत् इति ख ग ङ पुस्तकेषु ।

वर्त्तनस्तम्भितास्ताश्च प्रक्षेप्याः कौक्कुटे रसे ।
घृताढ्ये गन्धपिशुने दधिदाड़िमसारिके ॥११॥
यथा न भिन्द्याद् गुड़िकास्तथा तं साधयेद्रसम् ।
तं पिबन् भक्षयंस्ताश्च लभते शुक्रमक्षयम् ॥१२॥
इति वृष्या मांसगुड़िका ।
मांसानामेवमन्येषां मेध्यानां कारयेद्भिषक् ।
गुड़िकाः सरसास्तासां प्रयोगः शुक्रवर्द्धनः ॥१३॥
माषानङ्कुरिताञ् शुद्धान् निस्तुषान् साजड़ाफलान् ।
घृताढ्ये माहिषरसे दधिदाड़िमसारिके ॥१४॥

तप्ते पयसि आवर्तनेन स्तम्भिताः कठिनीकृताः ताः गुड़िकाः दधिदाडिमसारिके दधिदाडिमसाराभ्यां संस्कृते । दाडिमसारो दाडिमरसः । घृताढ्ये घृतबहुले । गन्धपिशुने एलादिचूर्णयोगात् गन्धयुते । तथाविधे कौक्कुटे रसे कौक्कुटमांसरसे प्रक्षेप्याः ताः प्रक्षिपेत् । ततः तं रसं तथा साधयेत् यथा स रसपाकः गुड़िकाः न भिन्द्यात् । तं रसं पिबन् ता गुड़िकाश्च भक्षयन् पुमान् अक्षयं शुक्रं लभते ॥१०—१२॥

वराहमांसोक्तविधिमन्यत्रातिदिशन्नाह— मांसानामित्यादि । एवं वराहमांसोक्तेन प्रकारेण अन्येषां मेध्यानां मेदुराणां मांसानां सरसाः रससहिताः गुड़िकाः कारयेत् । तासां सरसानां गुड़िकानां प्रयोगः । रसस्य पानं गुड़िकानां च भक्षणं । शुक्रवर्धनः । इति अतिदेशयोगो द्वितीय इति चक्रपाणिः । तच्चिन्त्यं । द्रव्यभेदेऽपि विधेरभेदात् । इह योगान्तरकल्पने आर्द्राणि मत्स्यमांसानीत्यत्र योगद्वयात् त्रयोदश योगाः स्युः । ननु आर्द्राणि मत्स्यमांसानीत्यत्र एक एव योगः । इति चेत् ? न । तत्र वाशब्दः स्पष्टमेव पक्षद्वयं ख्यापयति ॥ १३ ॥

द्वितीयं योगमाह—माषानङ्कुरितानिति । माषानङ्कुरितान् पूर्वं जले प्रक्षेपात् आर्द्रत्वेन जाताङ्कुरान् । ततः शुद्धान् जलेन धौतान् । निस्तुषान् तुषरहितान् कृतान् । तथाविधान् माषान् । साजडाफलान् अजडाफलसहितान् अजड़ा शूकशिंबी । घृताढ्ये

११ । भर्जनस्तम्भितास्ताश्च इति ख ग ङ पुस्तकेषु ।

प्रक्षिपेन्मात्रया युक्तो धान्यजीरकनागरैः ।
पीतो भुक्तश्च स रसः कुरुते शुक्रमक्षयम् ॥१५॥

इति वृष्यो माहिषरसः ।

आर्द्राणि मत्स्यमांसानि शफरीर्वा सुभर्जिताः ।
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम् ॥१६॥

इति वृष्या घृततलितमत्स्याः ।

घृतभृष्टान् रसे च्छागे रोहितान् फलसारिके ।
अनुपीतरसान् सिद्धानपत्यार्थी प्रयोजयेत् ॥१७॥

इति गर्भाधानकरो योगः ।

कुट्टकं मत्स्यमांसानां हिङ्गुसैन्धवधान्यकैः ।
युक्तं गोधूमचूर्णेन घृते पूपलिकाः पचेत् ॥१८॥

बहुघृते । दधिदाडिमसारिके दधिदाडिमसाराभ्यां संस्कृते । माहिषे रसे माहिस-मांसरसे प्रक्षिपेत् । प्रक्षिप्य पूर्ववत् साधयेत् । ततः स रसः धान्यजीरकनागरैः चूर्णितैः । धान्यं धन्याकं । नागरं शुण्ठी । मात्रया युक्तः । मात्रया पीतः भुक्तश्च । घनभागस्य भोजनं । द्रवस्य च पानं । अक्षयं शुक्रं कुरुते ॥ १४ । १५ ॥

आर्द्राणीति । यः पुमान् आर्द्राणि सद्यस्कानि मत्स्यानां रोहितादीनां प्रशस्तत्वात् मांसानि खादेत् । वा अथवा तप्ते सर्पिषि घृते सुभर्ज्जिताः शफरीः सद्यस्काः खादेत् । स स्त्रीषु अतिप्रवर्तमानोऽपि क्षयं न याति । इह योगद्वयं ॥ १६ ॥

पञ्चमं योगमाह—घृतभृष्टानिति । अपत्यार्थी पुमान् फलसारिके दाडिमामलकादि-फलसारसंस्कृते छागे रसे छागमांसरसे । घृतभृष्टान् रोहितान् मत्स्यान् प्रक्षिप्य सिद्धान् । ततः तान् अनुपीतरसान् पश्चात् पीतरसान् प्रयोजयेत् । आदौ घृतभृष्टान् छागरससिद्धान् तान् रोहितमत्स्यान् खादेत् । पश्चात् तं रसं पिबेत् ॥ १७ ॥

कुट्टकमित्यादि । मत्स्यमांसानां कुट्टकं कुट्टनेन अणुशः कृतं खण्डं निरस्थि हिंगुसैन्धवधान्यकैश्चूर्णितैः युक्तं मर्द्दयित्वा गोधूमचूर्णेन गोधूमपिष्टेन कृतवेष्टनाः

माहिषे च रसे मत्स्यान् स्निग्धाम्ललवणान् पचेत् ।
रसे चानुगते मत्स्यान् पोथयेत् तत्र चावपेत् ॥१९॥
मरिचं जीरकं धान्यमल्पं हिंगु नवं घृतम् ।
माषपूपलिकानां तद्गर्भार्थमुपकल्पयेत् ॥२०॥
एतौ पूपलिकायोगौ बृंहणौ बलवर्द्धनौ ।
हर्षसौभाग्यदौ पुत्र्यौ परं शुक्राभिवर्द्धनौ ॥२१॥

इति वृष्यौ पूपलिकायोगौ ।

मापात्मगुप्तागोधूमशालिषष्टिकपैष्टिकम् ।

पूपलिकाः कृत्वा घृते पचेत् । अयमेको योगः । माहिषे रसे माहिषमांसरसे मत्स्यान् रोहितादीन् स्निग्धाम्ललवणान् घृतदाडिमसैन्धवादियोगात् स्निग्धाम्ललवणीकृत्य पचेत् । ततः तस्मिन् रसे अनुगते पाकात् शुष्कीभूते सति तान् मत्स्यान् पोथयेत् कुट्टयेत् कण्टकादिरहितांश्च कारयेत् । ततस्तत्र चूर्णितं मरिचं जीरकं धान्यं धन्याकं अल्पं हिंगु नवं घृतं च आवपेत् प्रक्षिपेत् । ततः तत् माषपूपलिकानां गर्भार्थं उपकल्पयेत् । माषपिष्टेन पूपलिकानां गर्भवेष्टनं कृत्वा तदभ्यन्तरे तद् दत्त्वा ताः पूपलिकाः घृते पचेत् । अयमन्यो योगः । एतौ द्वौ पूपलिकायोगौ बृंहणौ । बलवर्द्धनौ । हर्षसौभाग्यदौ । पुत्र्यौ पुत्राय हितौ । परमतीव शुक्राभिवर्द्धनौ च ॥ १८-२१ ॥

अष्टमं योगमाह—मापात्मगुप्तेत्यादि । मापादि षष्टिकान्तानां पञ्चानां निस्तुषाणां । पैष्टिकं पिष्टमेव । शर्करायाः । विदार्याः विदारीकन्दस्य । इक्षुरकस्य कोकिलाक्षस्य च । चूर्णानि । मृतृणे निर्मले क्षीरे संयोज्य मर्दयित्वा पूपलिकाः कृत्वा घृते पचेत् । ताः पूपालिकाः पयोऽनुपाना भुक्ताः । ताः भक्षयित्वा पयोऽनुपिबेत् । शीघ्रं परां श्रेष्ठां वृषतां कुर्वन्ति ॥ २२।२३ ॥

नवमं योगमाह—शर्करायास्तुलैका स्यादित्यादि । शर्करायाः एका तुला । गव्यस्य सर्पिषो घृतस्य च एका तुला । विदार्याश्चूर्णस्य एकः प्रस्थः । पिप्पल्याश्चूर्णस्य एकः प्रस्थः । तुगाक्षीर्याः चूर्णितायाः वंशलोचनायाः अर्द्धाढकं । अभिनवस्य क्षौद्रस्य मधुनः अर्द्धाढकं च । तत् सर्वं संमूर्च्छितं आलोडितं मार्तिके मृन्मये घृतभाजने घृत-

शर्करायां विदार्य्याश्च चूर्णानीक्षुरकस्य च ॥२२॥
संयोज्य मसृणे क्षीरे घृते पूपलिकाः पचेत् ।
पयोऽनुपानास्ताः शीघ्रं कुर्वन्ति वृषतां पराम् ॥२३॥
इति वृष्या माषादिपूपलिकाः ।

शर्करायास्तुलैका स्यादेका गव्यस्य सर्पिषः ।
प्रस्थो विदार्य्याश्चूर्णस्य पिप्पल्याः प्रस्थ एव च ॥२४॥
अर्द्धाढ़कं तुगाक्षीर्य्याः क्षौद्रस्याभिनवस्य च ।
तत् सर्वं मूर्च्छितं तिष्ठेन्मार्त्तिके घृतभाजने ॥२५॥
मात्रामग्निसमां तस्य प्रातः प्रातः प्रयोजयेत् ।
एष वृष्यः परं योगो बल्यो बृंहण एव च ॥२६॥
इति वृष्ययोगः ।

शतावर्य्या विदार्याश्च तथा माषात्मगुप्तयोः ।
श्वदंष्ट्रायाश्च निःक्वाथनल्वणेषु पृथक् पृथक् ॥२७॥
साधयित्वा घृतप्रस्थं पयस्यष्टगुणे पचेत् ।
शर्करामधुयुक्तं तदपत्यार्थी प्रयोजयेत् ॥२८॥
इत्यपत्यकरं घृतम् ।

भाण्डे तिष्ठेत् स्थापयेत् । प्रातः प्रातः प्रतिदिनं प्रातः तस्य अग्निसमां अग्निबलानुरूपां मात्रां प्रयोजयेत् । एष योगः परमतीव वृष्यः । बल्यः बृंहणश्च ॥ २४–२६ ॥

दशमं योगमाह—शतावर्या इत्यादि । शतावर्याः । विदार्याः विदारीकन्दस्य । तथा माषात्मगुप्तयोः माषस्य आत्मगुप्तायाश्च । श्वदंष्ट्रायाः गोक्षुरस्य च । शतावर्यादीनां पञ्चानां निःक्वाथनल्वणेषु क्वाथद्रोणेषु पञ्चसु । कंसश्चतुर्गुणो द्रोणश्चार्मणं नल्वणं च तत् । इति ( च० क० १२ ) । शतावर्यादीनां पञ्चानां एकैकस्य

२६ । योगः कण्ठ्यो बृंहण एव च इति क ङ च ण पुस्तकेषु ।

घृतपात्रं शतगुणे विदारीस्वरसे पचेत् ।
सिद्धं पुनः शतगुणे गव्ये पयसि साधयेत् ॥२९॥
शर्करायास्तुगाक्षीर्याः क्षौद्रस्येक्षुरकस्य च ।
पिप्पल्याः साजडायाश्च भागैः पादांशिकैर्युतम् ॥३०॥
गुडिकाः कारयेद्वैद्यो यथा स्थूलमुदुम्बरम् ।
तासां प्रयोगात् पुरुषः कुलिङ्ग इव हृष्यति ॥३१॥

इति वृष्यगुडिका ।

सितोपलापलशतं तदर्धं नवसर्पिषः ।
क्षौद्रपादेन संयुक्तं साधयेज्जलपादिकम् ॥३२॥
सान्द्रं गोधूमचूर्णानां पादं स्तीर्णे शिलातले ।
शुचौ श्लक्ष्णे समुत्कीर्य मर्दनेनोपपादयेत् ॥३३॥

क्वाथद्रोणे क्रमात् घृतप्रस्थं पृथक् पृथक् साधयित्वा तत्पुनः अष्टगुणे पयसि दुग्धे पचेत् । ततः तत् शर्करामधुसंयुक्तं कृत्वा । प्रक्षेपन्यायात् शर्करामधुनोः पादिकत्वं बोध्यं । अपत्यार्थी पुमान् प्रयोजयेत् अग्निवलापेक्षया मात्रया ॥ २७।२८ ॥

एकादशं योगमाह—घृतपात्रमित्यादि । वैद्यः घृतस्य पात्रमाढकं ततः शतगुणे विदार्याः स्वरसे पचेत् साधयेत् । विदार्याः स्वरसे सिद्धं तत्पुनः शतगुणे गव्ये पयसि साधयेत् । ततः तत् । शर्करायाः । तुगाक्षीर्याः वंशलोचनायाः । क्षौद्रस्य मधुनः । इक्षुरकस्य कोकिलाक्षस्य । पिप्पल्याः साजडायाः पिपल्याः अजडायाश्च । अजडा शूकशिम्बी । पादांशिकैः घृतापेक्षया पादप्रमाणैः भागैः युक्तं कृत्वा स्थूलमुदुम्बरं यथा वृहदुदुम्बरमिव गुडिकाः कारयेत् । तासां गुडिकानां प्रयोगात् पुरुषः कुलिङ्गश्चटक इव हृष्यति । पुनः पुनरुच्छ्रितलिङ्गो भवति बहुशः स्त्रियो गच्छति ॥२९–३१॥

द्वादशं योगमाह—सितोपलापलशतमित्यादि । सितोपलायाः मत्स्यण्डिकायाः शर्कराया वा । पलशतं तुलां । नवस्य सर्पिषो घृतस्य गव्यस्य तदर्द्धं ततः सितोपलातः

शुद्धा उत्कारिकाः कार्य्याश्चन्द्रमण्डलसन्निभाः ।
तासां प्रयोगाद्गजवन्नारीस्तर्पयते नरः ॥३४॥

इति वृष्या लप्सिका ।

यत् किञ्चिन्मधुरं स्निग्धं जीवनं बृंहणं गुरु ।
हर्षणं मनसश्चैव सर्वं तद्वृष्यमुच्यते ॥३५॥
द्रव्यैरेवंविधैस्तस्माद्भावितः प्रमदां व्रजेत् ।
आत्मवेगेन चोदीर्णः स्त्रीगुणैश्च प्रहर्षितः ॥३६॥
गत्वा स्नात्वा पयः पीत्वा रसं वाऽनु शयीत च ।
तथास्याप्यायते भूयः शुक्रञ्च बलमेव च ॥ ३७ ॥

अर्द्धं पञ्चाशत्पलं । तत् सर्वं क्षौद्रस्य मधुनः सितोपलातः पादेन पञ्चविंशत्या पलैः संयुक्तं । जलं पादिकं यत्र तत् जलपादिकं च कृत्वा । सान्द्रं यथा स्यात्तथा साधयेत् पचेत् । ततः तत् गोधूमचूर्णानां पादं सितोपलापादिकं गोधूमचूर्णं च स्तीर्णे विस्तीर्णे शुचौ शुद्धे श्लक्ष्णे मसृणे शिलातले समुत्कीर्य विस्तीर्य मर्दनेन उपपादयेत् । ततः चन्द्रमण्डलसन्निभाः चन्द्रमण्डलतुल्याः शुद्धाः उत्कारिकाः लप्सिकाः कार्याः पुनः पाकेन । तासां उत्कारिकाणां प्रयोगात् नरः गजवत् नारीः तर्पयते ॥३२—३४॥

अनुक्तवाजीकरणसंग्रहार्थमाह—यत् किंचिदिति । यत् किंचित् द्रव्यं मधुरं । स्निग्धं । जीवनं जीवनीयं । बृंहणं बृंहणीयं । गुरु प्रकृत्या गुरु । मनसो हर्षणं प्रहर्षकरं च । तत् सर्वं वृष्यमुच्यते ॥ ३५ ॥.

मैथुनात् प्राक् यत्कार्यं तदाह—द्रव्यैरिति । तस्मात् मधुरादिद्रव्याणां वृष्यत्वात् एवंविधैः उक्तविधैः मधुरादिभिः द्रव्यैः भावितः संस्कृतशरीरः । आत्मवेगेन उदीर्णः स्वतो जनितकामवेगेन उद्गतलिङ्गः । स्त्रीगुणैः मधुरालापहावभावादिभिर्वा प्रहर्षितः जातप्रहर्षः उच्छ्रितलिङ्गः सन् । पुमान् प्रमदां स्त्रियं व्रजेत् गच्छेत् ॥३६ ॥

मैथुनात् परं यत् कार्यं तदाह—गत्वेत्ति । ना पुमान् गत्वा स्त्रियं गत्वा मैथुनं कृत्वा । ततः स्नात्वा । पयः दुग्धं रसं मांसरसं वा पीत्वा । अनु पश्चात् शयीत । तथा कृते सति अस्य कृतमैथुनस्य पुंसः शुक्रं बलं च भूयः पुनः आप्यायते वर्द्धते ॥३७॥

यथा मुकुलपुष्पस्य स्वगन्धो नोपलभ्यते ।
लभ्यते तद्विकाशात् तु तथा शुक्रं हि देहिनाम् ॥३८॥
नर्त्ते वै षोड़शाद्वर्षात् सप्तत्याः परतो न च ।
आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति ॥३९॥
अतिबालो ह्यसम्पूर्णसर्वधातुः स्त्रियं व्रजन् ।
उपशुष्येत सहसा तड़ागमिव काजलम् ॥४०॥
शुष्कं रूक्षं यथा काष्ठं जन्तुजग्धं विजर्ज्जरम् ।
स्पृष्टमाशु विशीर्य्येत तथा वृद्धः स्त्रियं व्रजन् ॥४१॥
जरया चिन्तया शुक्रं व्याधिभिः कर्म्मकर्शनात् ।
क्षयं गच्छत्यनशनात्स्त्रीणाञ्चातिनिषेवणात् ॥४२॥

यथेति । यथा मुकुलपुष्पस्य मुकुलावस्थस्य कलिकारूपस्य पुष्पस्य स्वगन्धः न उपलभ्यते । तु किन्तु तद्विकाशात् तस्य पुष्पमुकुलस्य विकाशात् स गन्धः लभ्यते उपलभ्यते । तथा तद्वत् देहिनामप्राप्तवयसां शुक्रं न उपलभ्यते । वयःपरिणामात् पुनः तदुपलभ्यते ॥ ३८ ॥

अतिबालातिवृद्धयोर्मैथुनप्रतिषेधमाह नर्त्ते इति । आयुष्कामो नरः न षोड-शात् वर्षात् ऋते षोडशवर्षादर्वाक् । न च सप्तत्याः परतः सप्ततेरूर्द्ध्वं । स्त्रीभिः सह संयोगं मैथुनं कर्त्तुं अर्हति ॥ ९ ॥

अतिबालस्य मैथुने दोषमाह अतिबाल इति । कुतः? हि यतः अतिबालः षोडशवर्षादवरः । अतः असम्पूर्णसर्वधातुः । तथाविधः पुमान् स्त्रियं व्रजन् मैथुनं कुर्वन् काजलं कुजलं अल्पजलं तडागं सर इव सहसा उपशुष्येत ॥ ४० ॥

अतिवृद्धस्य मैथुने दोषमाह—शुष्कमिति । यथा शुष्कं रूक्षं जन्तुजग्धं कीट-दष्टं विजर्जरं अतिजीर्णं च काष्ठं स्पृष्टं सन् आशु विशीर्येत भज्येत तथा वृद्धः अति-वृद्धोऽपि स्त्रियं व्रजन् आशु विशीर्येत ॥ ४१ ॥

शुक्रक्षये हेतुमाह—जरयेति । जरया वार्द्धक्येन । चिन्तया । व्याधिभिः ।

क्षयाद्भयादविस्रम्भाच्छोकात् स्त्रीदोषदर्शनात् ।
नारीणामरसज्ञत्वादभिचारादसेवनात् ॥ ४३ ॥
हृष्टस्यापि स्त्रियं गन्तुं न शक्तिरुपजायते ।
देहसत्त्वबलापेक्षो हर्षः शक्तिश्च हर्षजा ॥ ४४ ॥
रस इक्षौ यथा दध्नि सर्पिस्तैलं तिले यथा ।
सर्वत्रानुगतं देहे शुक्रं संस्पर्शने तथा ॥ ४५ ॥

कर्मभिः अध्वगमनादिभिः कर्शनं । तस्मात् । अनशनात् उपवासात् । स्त्रीणां अतिनिषेवणात् अतिव्यवायाच्च । एभ्यः हेतुभ्यः पुंसां शुक्रं क्षयं गच्छति ॥४२॥

हृष्टस्यापि कचित् मैथुने असामर्थ्यं तद्धेतुञ्चाह—क्षयादित्यादि । हृष्टस्यापि उच्छ्रितलिङ्गस्यापि पुंसः । क्षयात् शुक्रक्षयात् । भयात् । अविस्रम्भात् अविश्वासात् । लज्जया । शोकात् । स्त्रीणां दोषाः रजस्वलात्वादिदोषाः । तद्दर्शनात् । नारीणां अरसज्ञत्वात् रतिकर्मणि अकुशलत्वात् । अभिचारात् अन्यकारितमैथुनरोधक्रियया । असेवनात् स्त्रीणां चिरमसेवनात् । मेढ्रामयादिभ्यश्चापि । एभ्यः कारणेभ्यः । स्त्रियं गन्तुं मैथुनं कर्तुं शक्तिः न उपजायते । लिङ्गस्य योनिं प्रविशतः प्रविष्टस्य वा सहसा शैथिल्यात् । ननु हर्षे कथं न मैथुनासामर्थ्यमिति ? अत आह—देहसत्त्वेति । देहसत्त्वबलापेक्षी हर्षः । शक्तिः मैथुनशक्तिः हर्षजा । तथाविधादेव हर्षात् जायते । इह शुक्रक्षयादिना देहमनसोः दुर्बलत्वात् कथंचित् सत्यपि हर्षे व्यवायशक्तिर्न भवति । उक्तञ्च—शुक्रक्षयात् भयाच्छोकादविस्रम्भादसेवनात् । अतिहर्षादतिस्थौल्यान्मलोपचयतः श्रमात् ॥ स्त्रीणामकौशलाद् दोषदर्शनादभिचारतः । मेढ्रामयात्तु महतः क्रोधतो मर्मकर्तनात् ॥ हृष्टस्यापि स्त्रियं गन्तुं न शक्तिरुपजायते । इति ( अ० सं० उ० ५० ) ॥४३।४४॥

शुक्रस्य सर्वांगव्याप्तिमाह—रस इक्षावित्यादि । इक्षौ रस इव यथा इक्षुरसः सर्वस्मिन् इक्षौ अनुगतः । यथा सर्पिर्घृतं सर्वस्मिन् दध्नि अनुगतं । यथा वा तिले

४३ । अभिवातादसेवनात् इति ग ट पुस्तकयोः ।

४४ । तृप्तस्यापि इति क पुस्तके ।

तत् स्त्रीपुरुषसंयोगे चेष्टासङ्कल्पपीड़नात् ।
शुक्रं प्रच्यवते स्थानाज्जलमार्द्रात् पटादिव ॥ ४६ ॥
हर्षात् तर्पात् सरत्वाच्च पैच्छिल्याद्गौरवादपि ।
अणुप्रवणभावाच्च द्रुतत्वान्मारुतस्य च ॥ ४७ ॥
अष्टाभ्य एभ्यो हेतुभ्यः शुक्रं देहात् प्रसिच्यते ।
चरतो विश्वरूपस्य रूपद्रव्यं यदुच्यते ॥ ४८ ॥

सर्वत्र तैलं अनुगतं । तथा पुंसां शुक्रं सर्वत्र देहे सर्वदेहे अनुगतं । ननु शुक्रं सर्वदेहे अनुगतं चेत् तर्हि केशादौ स्यादिति ? अस्ततद्वारणाय आह—संस्पर्शने इति । संस्पर्शने संस्पर्शनवति । संस्पर्शनं त्वक् । सर्वत्र संस्पर्शनवति देहे अनुगतं । संस्पर्शनाऽव्याप्तेः केशादौ शुक्रं नास्ति । शुक्रं शरीरे शुक्रधरां कलामाश्रित्य सर्वाङ्गव्यापित्वेन स्थितं । विशेषतश्च मज्जमुष्कस्तनेषु ॥ ४५ ॥

सर्वाङ्गव्यापिनः शुक्रस्य यथा प्रच्युतिर्भवति तदाह— तदिति । तत् सर्वदेहानुगतं शुक्रं स्त्रीपुरुषयोः संयोगे सति । चेष्टा शारीरव्यापारः मैथुनचेष्टा अङ्गदोलनादिः । संकल्पः मानसं कर्म । अनुरागादिः । ताभ्यां पीडनं उत्कटत्वात् पीडनं । परस्पराश्लेषो वा । तस्मात् चेष्टासंकल्पपीड़नात् । स्थानात् स्वस्थानात् प्रच्यवते प्रस्रवति । तत्र दृष्टान्तमाह—जलमार्द्रादित्यादि । यथा आर्द्रात् पटात् वस्त्रात् जलं तत्र सर्वत्र अनुगतं पीडनात् निष्पीडनात् प्रच्यवते निर्गच्छति । यथा वा इक्षोः रसः । दध्नः सर्पिः । तिलात् तैलं । तद्वत् ॥ ४६ ॥

शुक्रप्रवृत्तिहेतुमाह—हर्षादिति । पुंसो हर्षात् । हर्षः ध्वजोच्छ्रायकृदिच्छा । तर्पात् । तर्पः स्त्रीषु अभिलाषः । शुक्रस्य सरत्वात् अस्थिरत्वात् । पैच्छिल्यात् पिच्छिलत्वात् । गौरवात् गुरुत्वात् । अणुप्रवणभावात् अणुभावात् प्रवणभावाच्च । अणुभावः अणुत्वं सौक्ष्म्यं । प्रवणभावः बहिर्निर्गमनस्वभावः । मारुतस्य शुक्रप्रेरकस्य वायोः द्रुतत्वात् द्रवणशीलत्वाच्च । एभ्यः उक्तेभ्यः हर्षादिभ्यः अष्टाभ्यः हेतुभ्यः कारणेभ्यः शुक्रं देहात्

४८ । चरतो विश्वरूपस्य रूपि द्रव्यं यदुच्यते इति ख ग पुस्तकयोः ।

बहलं मधुरं स्निग्धमविस्रं गुरु पिच्छिलम् ।
शुक्लं बहु च यच्छुक्रं फलवत् तदसंशयम् ॥ ४६ ॥
येन नारीषु सामर्थ्यं वाजीव लभते नरः ।
व्रजेच्चाभ्यधिकं येन वाजीकरणमेव तत् ॥ ५० ॥

तत्र श्लोकौ ।

हेतुर्योगोपदेशस्य योगा द्वादश चोत्तमाः ।
यत् पूर्वं मैथुनात् सेव्यं सेव्यं यन्मैथुनादनु ॥ ५१ ॥
यदा न सेव्याः प्रमदाः कृत्स्नः शुक्रविनिश्चयः ।
निरुक्तञ्चेह निर्दिष्टं पुमाञ्जातबलादिके ॥ ५२ ॥

प्रसिच्यते निष्पतति । यत् शुक्रं चरतः देहात् देहान्तरं गच्छतः नानायोनिषु भ्रमतः विश्वरूपस्य आत्मनः । तथा च आत्मपर्यायेषूक्तं–विश्वकर्मा विश्वरूपः पुरुषः इत्यादि ( च० शा० ४ ) । रूपद्रव्यं विश्वरूपनिष्पत्तौ कारणभूतं उच्यते । अव्यक्तस्यात्मनो व्यक्तविविधशरीरनिर्वृत्तौ शुक्रमेव हेतुः ॥ ४७,४८ ॥

गर्भाधानयोग्यं शुक्रमाह– बहलमिति । यत् शुक्रं बहलं नातिघनं । मधुरं । स्निग्धं । अविस्रं न आमगन्धि । गुरु । पिच्छिलं । शुक्लं । बहु च । तत् तथाविधं शुक्रं असंशयं निश्चितं फलवत् गर्भकरं ॥ ४६ ॥

वाजीकरणशब्दस्य निरुक्तिमाह–येनेति । नरः पुमान् येन नारीषु वाजी अश्व इव सामर्थ्यं मैथुनशक्तिं लभते । येन च अभ्यधिकं व्रजेत् बहुशः स्त्रियो गच्छेत् । तदेव वाजीकरणमुच्यते । सुश्रुते च– सेवमानो यदौचित्याद्वाजीवात्यर्थवेगवान् । नारीस्तर्पयते तेन वाजीकरणमुच्यते ॥ इति ( सु० चि० २६ ) । अवाजी वाजीव क्रियते अनेन इति वाजीकरणं । येन पुमान् वाजीव मैथुनसमर्थः क्रियते तत् वाजीकरणं ॥ ५० ॥

चतुर्थपादार्थसंग्रहमाह–तत्रश्लोकाविति । योगा वृष्ययोगाः । तेषां उपदेशः । तस्य हेतुः । द्वादश उत्तमा योगाः मैथुनात् पूर्वं प्राक् यत् सेव्यं । यच्च मैथुनात् अनु पश्चात् सेव्यं । यदा षोडशवर्षादर्वाक् सप्ततेरूर्द्ध्वं च प्रमदा न सेव्याः । कृत्स्नः सर्वः शुक्रस्य सम्बन्धे विनिश्चयः निर्णयः । शुक्रस्य क्षयहेतुः । सर्वशरीरव्यापित्वं

इति चिकित्सितस्थाने पुमाञ्जातबलादिको वाजीकरणपादश्चतुर्थः ।
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
वाजीकरणं नाम द्वितीयोऽध्यायः ॥ २ ॥

तृतीयोऽध्यायः ।

अथातो ज्वरचिकित्सितं व्याख्यास्यामः । इति ह
स्माह भगवानात्रेयः ॥ १ ॥

विज्वरं ज्वरसन्देहं पर्यपृच्छत् पुनर्वसुम् ।
विविक्ते शान्तमासीनमग्निवेशः कृताञ्जलिः ॥२॥
देहेन्द्रियमनस्तापी सर्वरोगाग्रजो बली ।
ज्वरः प्रधानो रोगाणामुक्तो भगवता पुरा ॥३॥

च । शुक्रं यथा येन हेतुना च प्रच्यवते । यादृक् शुक्रं च गर्भजननसमर्थं । इत्यादि सर्वं निरुक्तं । वाजीकरणशब्दस्य निरुक्तिश्च । एतत् सर्वं पुमाञ्जातबलादिके अस्मिन् चतुर्थे वाजीकरणपादे निर्द्दिष्टमुक्तं भगवता आत्रेयेण पुनर्वसुना ॥५१-५२॥

इति चरकोपस्कारे चिकित्सितस्थाने द्वितीयेऽध्याये चतुर्थः पादः ।
इति वैद्यरत्न श्रीयोगीन्द्रनाथविद्याभूषणकृते चरकोपस्कारे चिकित्सितस्थाने द्वितीयोऽध्यायः ॥२॥

तृतीयोऽध्यायः ।

स्वस्थस्योर्जस्करं रसायनवाजीकरणरूपमध्यायद्वयेनोक्तं । सम्प्रति व्याधितस्य व्याधिहरमभिधातव्यं । तत्र सर्वरोगप्रधानत्वादादौ ज्वरस्य चिकित्सितमाह— अथात इति । ज्वरस्य चिकित्सितं यस्मिन् अध्याये स ज्वरचिकित्सितो नाम अध्यायः । तं । एवं परत्रापि । अन्यत् सर्वं पूर्ववद् व्याख्येयं ॥ १ ॥

विज्वरमिति । अग्निवेशः कृतांजलिः सन् । विविक्ते निर्जने स्थाने । आसीनं उपविष्टं । विगतो ज्वरो रोगो यस्य । ज्वरशब्द इह रोगसामान्यवाची । तं विज्वरं नीरोगं शारीरमानससर्वव्याधिभ्यो निर्मुक्तं । शान्तं । पुनर्वसुं भगवन्तमात्रेयं गुरुं । ज्वरसंदेहं ज्वरस्य सम्बन्धे सन्देहः यो यः सन्दिग्धविषयः । तं । मुख्यं कर्म । प्रच्छेर्द्विकर्मकत्वात् । पर्यपृच्छत् ॥ २ ॥

तस्य प्राणिसपत्नस्य ध्रुवस्य प्रलयोदये ।
प्रकृतिश्च प्रवृत्तिश्च प्रभावं कारणानि च ॥४॥

पूर्वरूपमधिष्ठानं बलकालात्मलक्षणम् ।
व्यासतो विधिभेदश्च पृथग्भिन्नस्य चाकृतिम् ॥५॥

लिङ्गमामस्य जीर्णस्य चौषधं सक्रियाक्रमम् ।
विमुञ्चतः प्रशान्तस्य चिह्नं यच्च पृथक् पृथक् ॥६॥

ज्वरावसृष्टो रक्ष्यश्च यावत्कालं यतो यतः ।
प्रशान्तः कारणैर्यैश्च पुनरावर्त्तते ज्वरः ॥७॥

ननु सत्सु अन्येषु रोगेषु कथं प्राक् ज्वरमधिकृत्य पृच्छसि इति चेत्? ततो ज्वरस्य सर्वरोगप्रधानत्वं दर्शयन्नाह—देहेन्द्रियेति । पुरा पूर्वं निदानस्थाने भगवता भवता ज्वरः देहेन्द्रियमनस्तापी देहेन्द्रियमनसां सन्तापकरः । रोगाः केचिन् देहमात्रतापिनः यथा अर्बुदादयः । केचित् मनस्तापिनः यथा अतत्त्वाभिनिवेशादयः । केचिच्च इन्द्रियतापिनः यथा तिमिरादयः । ज्वरस्तु एतत्त्रितयतापी । ज्वरस्य सर्वरोगप्रधानत्वे देहेन्द्रियमनस्तापीत्यादि हेतुगर्भं विशेषणं । सर्वरोगाग्रजः सर्वरोगज्ये । ज्वरपूर्वकत्वात् सर्वरोगग्रामस्य । बली बलवान् । अतः रोगप्रधानः इति उक्तः । स सर्वरोगाधिपतिः । इति (च० नि० १) । प्राणिसपत्नस्य प्राणिनां सपत्नस्य शत्रुभूतस्य । प्राणहरत्वात् । प्रलयोदये प्रलयोदययोः । प्रलये मरणे । उदये जन्मनि च । ध्रुवस्य निश्चितस्य अवश्यंभाविनः । तदुक्तं— सर्वे प्राणभृतः सज्वरा एव जायन्ते । सज्वरा एव म्रियन्ते । इति (च० नि० १) । एवम्भूतस्य तस्य ज्वरस्य प्रकृतिं उत्पत्तौ बीजभूतकारणं । वक्तुमर्हसीति परेणान्वयः । एवं परत्रापि । प्रवृत्तिः प्रथमाविर्भावः । तां । प्रभावः अचिन्त्यशक्तिः । तं । कारणानि उत्पत्तौ निमित्तानि । पूर्वरूपं प्रागुत्पत्तिलक्षणं ।

४ । स्वभावं कारणानि च इति ख ग पुस्तकयोः ।

५ । पूर्वरूपमधिष्ठानं बलं कालं च लक्षणं इति च पुस्तके ।

५ । व्यासतो व्याधिभेदं च इति ङ पुस्तके ।

६ । लिङ्गमामस्य पूर्वस्य संनिषेधं क्रियाक्रमं इति ख ग ङ ण पुस्तकेषु ।

याश्चापि पुनरावृत्तं क्रियाः प्रशमयन्ति तम् ।
जगद्धितार्थं तत् सर्वं भगवन् वक्तुमर्हसि ॥८॥
तदग्निवेशस्य वचो निशम्य गुरुरब्रवीत् ।
ज्वराधिकारे यद्वाच्यं तत् सौम्य निखिलं शृणु ॥९॥
ज्वरो विकारो रोगश्च व्याधिरातङ्क एव च ।
एकार्थनामपर्यायैर्विविधैरभिधीयते ॥१०॥

अधिष्ठानमाश्रयं । बलकालः आत्मलक्षणं स्वरूपं च तत् बलकालात्मलक्षणं । बलकालं आत्मलक्षणं च । व्यासतः विस्तरतः । विधिभेदः प्रकारभेदः । तं । ज्वरस्य प्रकारभेदान् । भिन्नस्य प्रकारैः भिन्नस्य तस्य ज्वरस्य पृथक् पृथक् आकृतिं लक्षणं । आमस्य ज्वरस्य लिङ्गं लक्षणं । जीर्णस्य ज्वरस्य च लिङ्गं । सक्रियाक्रमं क्रियाक्रमेण सहितं औषधं भेषजद्रव्यं क्रियाक्रमं च । विमुञ्चतो ज्वरस्य ज्वरमोक्षस्य यत् चिह्नं लक्षणं । तत् । प्रशान्तस्य ज्वरस्य निवृत्तस्य ज्वरस्य च यत् चिन्हं । तच्च । पृथक् पृथक् वक्तुमर्हसि । ज्वरावसृष्टः ज्वरमुक्तः पुमान् यतो यतो भावात् यावत्कालं रक्ष्यः पालनीयः । तत् सर्वं । ज्वरः प्रशान्तोऽपि यैः कारणैः पुनरावर्तते पुनरागच्छति । तानि । याश्च क्रियाः चिकित्सालक्षणाः पुनरावृत्तं पुनरागत्तं तं ज्वरं प्रशमयन्ति । ताश्चापि । हे भगवन् !- जगद्धितार्थं लोकहितार्थं तत् सर्वं मह्यं वक्तुमर्हसि योग्यो भवसि ॥ ३—८ ॥

तदग्निवेशस्येति । गुरुः भगवान् पुनर्वसुरात्रेयः अग्निवेशस्य तत् वचः निशम्य श्रुत्वा अब्रवीत् । हे सौम्य ! ज्वराधिकारे यत् वाच्यं तव प्रश्नस्य उत्तररूपेण यत् यत् वक्तव्यं वक्तुमुचितं तत् निखिलं सर्वं मया उच्यमानं शृणु ॥ ९ ॥

तत्रादौ ज्वरशब्दस्य पर्यायान् आह—ज्वरो विकार इति । विविधैः भिन्नाकृतिभिः । एकः अभिन्नः अर्थः वस्तु एकार्थः । तस्य नाम । तस्य पर्यायाः एकार्थवाचिनः शब्दाः । तैः एकार्थनामपर्यायैः एकस्य वस्तुनः नाम्नः पर्यायरूपेण पर्यायवाचित्वेन ज्वरः विकारः रोगः व्याधिः आतङ्कः इत्यादिशब्दैः अभिधीयते उच्यते । ज्वरादिशब्दैः एकोऽर्थोऽभिधीयते । प्राक् निदानस्थाने—व्याधिरामयो गद आतङ्को ज्वरो विकारो रोग इत्यनर्थान्तरं । इति ( नि० १ ) यत् पर्यायाभिधानं कृत तत् व्याधि-

तस्य प्रकृतिरुद्दिष्टा दोषाः शारीरमानसाः ।
देहिनं न हि निर्दोषं ज्वरः समुपसेवते ॥११॥
क्षयस्तमो ज्वरः पाप्मा मृत्योश्चोक्तोऽयमात्मजः ।
कर्म्मभिः क्लिश्यमानानां पञ्चत्वप्रत्ययान्नृणाम् ॥१२॥
इत्यस्य प्रकृतिः प्रोक्ता प्रवृत्तिस्तु परिग्रहात् ।
निदाने पूर्वमुद्दिष्टा रुद्रकोपात् सुदारुणात् ॥१३॥

सामान्यस्य । इह पुनर्ज्वरस्य । तस्य प्रकृतत्वात् । इत्यपौनरुक्तं । विकारादयो यद्यपि रोगसामान्याभिधायिनः तथापि प्रकरणात् इह ज्वरे एव विशिष्टे व्याधौ वर्तन्ते ॥१०॥

ज्वरस्य प्रकृतिमाह—तस्येति । शारीरमानसाः शारीरा मानसाश्च दोषाः। शारीराः दोषाः वातपित्तकफाः । मानसा रजस्तमसी । तदुक्तं—वायुः पित्तं कफश्चोक्तः शारीरो दोषसंग्रहः । मानसः पुनरुद्दिष्टो रजश्च तम एव च ॥ इति ( च० श्लो० १ ) । तस्य ज्वरस्य प्रकृतिः उत्पत्तौ कारणं बीजभूतं। पटस्य तन्तव इव। उद्दिष्टा उक्ता । ननु कुतो दोषा एव ज्वरस्य प्रकृतिरिति ? अत आह—न हीति । हि यतः निर्दोषं देहिनं ज्वरो न समुपसेवते । किंतु दोषवन्तमेव समुपसेवते । एवं दोषाणां भावाभावयोर्ज्वरस्य भावाभावाभ्यां ज्वरस्य दोषप्रकृतिकत्वं अन्वयव्यतिरेकाभ्यां सिध्यति ॥ ११ ॥

प्रसङ्गात् स्वभावरूपां प्रकृतिं दर्शयन् क्षयादिसंज्ञामाह—क्षयस्तम इति। अयं ज्वरः क्षय इति उक्तः देहक्षयहेतुभूतत्वात् क्षय इत्युच्यते। मोहकर्तृत्वात् तम इति उक्तः । पापजन्यत्वात् पाप्मा इति उक्तः । सर्वे रोगाः पापकर्मणां फलभूताः । कर्मभिः स्वकृतपापकर्मभिः क्लिश्यमानानां नृणां पञ्चत्वप्रत्ययात् मृत्युहेतुत्वात् मरणापादनात् अयं ज्वरः मृत्योः यमस्य आत्मजः पुत्र इति च उक्तः । मृत्युश्चोक्तो यमात्मजः इति पाठे मृत्युः यमः यमस्य आत्मजश्चापि उक्तः । सश्रुतेऽपि—कालोह्येष यमश्चैव नियतिर्मृत्युरेव च । तस्मिन् व्यपगते देहाज्जन्मेह पुनरुच्यते ॥ इति ॥ १२ ॥

प्रकृतिमुपसंहरति—इत्यस्येति । क्रमप्राप्तां प्रवृतिमाह—प्रवृत्तिस्त्विति । प्रवृत्तिः

१२। मृत्योश्चोक्तोऽयमात्मकः इति ख ग पुस्तकयोः।

१२। पञ्चत्वं प्रत्यया नृणां क्रियतां स्वेन कर्मणा इति ख ग ङ च ट या पुस्तकेषु ।

१३। प्रवृत्तिस्तु परिग्रहः इति क पुस्तके ।

द्वितीये हि युगे शर्वमक्रोधव्रतमास्थितम् ।
दिव्यं सहस्रं वर्षाणामसुरा अभिदुद्रुवः ॥१४॥

तपोविघ्नं शमीकर्त्तुं तपोविघ्नं महात्मनः ।
पश्यन् समर्थश्चोपेक्षां चक्रे दक्षः प्रजापतिः ॥१५॥

पुनर्माहेश्वरं भागं ध्रुवं दक्षः प्रजापतिः ।
यज्ञे न कल्पयामास प्रोच्यमानः सुरैरपि ॥१६॥

प्रथमोत्पत्तिः । रोगाणां सम्भवे हेतुः द्विविधः सामान्यविशेषभेदेन । तत्रादौ सामान्यहेतुमाह—परिग्रहादिति । परिग्रहः ग्रहणं परस्वादानं । तस्मात् । एतत् अधर्महेतूनामुपलक्षणं । सर्वरोगाणां प्रागुत्पत्तौ हेतुरधर्मः । तथा च जनपदोद्ध्वंसनीये विमाने—प्रागपि चाधर्माद्दृते नाशुभोत्पत्तिरभूदिति । आदौ कृतयुगे विगतरागद्वेषादिद्वन्द्वा जितकामक्रोधलोभादयो निष्परिग्रहाः पुरुषा बभूवुः । तेषां पुण्यबलेन पृथिव्यादीनां सर्वगुणसमुदायादचिन्त्यरसवीर्यसमुदितानि शस्यान्योषधयश्चासन् । भ्रश्यति तु कृतयुगे युगस्वभावात् क्रमेण परिहीयमाणसर्वगुणेषु पृथिव्यादिषु शरीरेषु च धर्मातिक्रमात् अधर्माभिवृद्ध्या च यथा ज्वरादयो व्याधयः प्रादुरभूवन् तदपि जनपदोद्ध्वंसनीये विमाने भ्रश्यति तु कृतयुगे इत्यादिना प्रपञ्चेनोपदर्शितं प्राक् । सामान्यमुक्त्वा विशेषमाह—निदान इति । पूर्वं निदाने स्थाने दारुणात् रुद्रस्य महादेवस्य कोपाच्च ज्वरस्य प्रवृत्तिः उद्दिष्टा समासत उक्ता । समासकथनमुद्देशः । तथा च निदानस्थाने—ज्वरस्तु खलु महेश्वरकोपप्रभवः । इति ( च० नि० १ ) ॥ १३ ॥

रुद्रकोपात् ज्वरस्य प्रवृत्तिर्निदाने पूर्वमुद्दिष्टा । सम्प्रति तां निर्दिशति—द्वितीये इति । द्वितीये युगे त्रेतायां । असुराः । दिव्यं दिव्यमानं । वर्षाणां सहस्रं अब्दसहस्रं व्याप्य । अक्रोधव्रतं आस्थितं क्रोधं परिरक्षितवन्तं शर्वं महादेवं अभिदुद्रुवुः अपचक्रुः । तपोविघ्नमिति । दक्षः प्रजापतिः महात्मनः शिवस्य तपोविघ्नं असुरैः कृतं पश्यन् तच्च तपोविघ्नं शमीकर्तुं निवर्तयितुं समर्थश्चापि उपेक्षां चक्रे । दक्षस्यायमेकोऽपराधः । अपराधान्तरमाह—पुनरिति । पुनः दक्षः प्रजापतिः यज्ञे माहेश्वरं भागं

पाशुपत्य ऋचो याश्च शैव्यश्चाहुतयश्च याः ।
यज्ञसिद्धिप्रदास्ताभिर्हीनं चैव स इष्टवान् ॥१७॥
अथोत्तीर्णव्रतो देवो बुद्ध्वा दक्षव्यतिक्रमम् ।
रुद्रो रौद्रं पुरस्कृत्य भावमात्मविदात्मनः ॥१८॥
स्पृष्ट्वा ललाटे नयनं दग्ध्वा तानसुरान् प्रभुः ।
बालं क्रोधाग्निसन्दीप्तमसृजच्छत्रुनाशनम् ॥१९॥
ततो यज्ञः स विध्वस्तो व्यथिताश्च दिवौकसः ।
दाहव्यथापरीताश्च भ्रान्ता भूतगणा दिशः ॥२०॥

कल्पयितुं सुरैः प्रोच्यमानोऽपि यज्ञे माहेश्वरं भागं न ध्रुवं नैव कल्पयामास । दक्षस्य पुनरपराधान्तरमाह—पाशुपत्य इति । यज्ञसिद्धिप्रदा याश्च पाशुपत्यः पशुपतेः शिवस्य सम्बन्धिन्यः ऋचः मन्त्राः । याश्च शैव्यः आहुतयः । ताभिः पाशुपतीभिः ऋग्भिः शैवीभिः आहुतिभिश्च हीनं यथा स्यात् तथा स दक्षः प्रजापतिः इष्टवान् यज्ञं कृतवान् ॥ १४—१७ ॥

अथेत्यादि । अथ अनन्तरं आत्मवित् आत्मज्ञः प्रभुः निग्रहानुग्रहसमर्थः देवः रुद्रः उत्तीर्णव्रतः अवसितव्रतः सन् दक्षस्य प्रजापतेः व्यतिक्रमं कृतं तं अपराधं बुद्ध्वा आत्मनः रौद्रमुग्रं भावं पुरस्कृत्य प्रकाश्य नयनं ललाटे स्पृष्ट्वा ललाटस्पर्शं कारयित्वा विस्फार्य इत्यर्थः । ललाटात् निर्गतेन क्रोधाग्निना तान् तपोविघ्नकरान् असुरान् दग्ध्वा तेन क्रोधाग्निना क्रोधाग्निसन्दीप्तं अतीव क्रुद्धं शत्रुनाशनं बालं वीरभद्राख्यं असृजत् ॥ १८।१९ ॥

तत इति । ततः तेन बालरूपिणा क्रोधाग्निना स दक्षस्य यज्ञः विध्वस्तः । दिवौकसः देवाश्च व्यथिताः । भूतगणाः सर्वे प्राणिनः दाहव्यथापरीताः अस्थिराः सन्तः दिशः भ्रान्ता बभ्रमुः ॥ २० ॥

---

१९ । बाणं रोषाग्निसंतप्तं इति ठ पुस्तके । १९ । असृजन्मन्त्रनाशनं इति ङ च ग पुस्तकेषु ।
२० । देहव्यथापरीताश्च इति ख ग पुस्तकयो ।

अथेश्वरं देवगणाः सह सप्तर्षिभिर्विभुम् ।
तमृग्भिरस्तुवद् यावच्छैवे भावे शिवः स्थितः ॥२१॥

शिवं शिवाय भूतानां स्थितं ज्ञात्वा कृताञ्जलिः ।
भिया भस्मप्रहरणस्त्रिशिरा नवलोचनः ॥२२॥

ज्वालामालाकुलो रौद्रो ह्रस्वजंघोदरः क्रमात् ।
क्रोधाग्निरुक्तवान् देवमहं किं करवाणि ते ॥२३॥

अथेश्वरमिति । अथ सप्तर्षिभिः मरीच्यादिभिः सह देवगणः तं रौद्रं भावमास्थितं विभुं ईश्वरं देवदेवं ऋग्भिः पाशुपतीभित्यावत् अस्तुवत् यावत स शिवः शैवे शान्ते भावे स्थितः अभूत् ॥ २१ ॥

शिवमित्यादि । भस्मप्रहरणः । प्रहरणमस्त्रं । त्रिशिराः । नवलोचनः । प्रतिशिरः लोचनत्रयात् । ज्वालामालाकुलः । रौद्रः रुद्रजनितत्वात् । क्रमात् ह्रस्वजङ्घोदरः । तथाविधाकृतिः । बालरूपी स क्रोधाग्निः । शिवं देवैरभिष्ठूयमानत्वात् भूतानां शिवाय मङ्गलाय शैवे भावे स्थितं ज्ञात्वा भिया भयेन कृताञ्जलिः सन् देवं शिवं उक्तवान् । हे देवदेव सम्प्रति अहं ते तव किं करवाणीति । ईश्वरः शिवः तं क्रोधं उवाच । हे मत्क्रोध । त्वं लोके जन्मादौ निधने च जन्ममरणयोः । मध्ये चापि अपचारान्तरेषु अपथ्यविशेषेषु ज्वरकृत्सु । ज्वरनिदानसेवायामित्यर्थः । ज्वरो भविष्यसीति । वृद्धवाग्भटेनाप्युक्तं—ज्वरस्तु स्थाणुशापात् प्राचेतसत्वमुपागतस्य प्रजापतेः क्रतौ भागमपरिकल्पयतस्तद्विनाशार्थं पूर्वजन्मावमानितया रुद्राण्या प्रेरितस्य पशुपतेर्दिव्यमब्दसहस्रं परिरक्षितवतः क्रोधमतिचिरकालसम्भृतो व्रतान्ते रोषाग्निः किंकररूपेण किल पिण्डितमूर्तिर्वीरभद्रनामा भस्मप्रहरणस्त्रिशिरोऽक्षिबाहुपादः पिङ्गललोचनो दंष्ट्री शंकुकर्णः कृष्णतनुरुत्तमाङ्गान्निश्चचार । स देवीनिर्मितया सह भद्रकाल्या प्रतिरोमकूपमभिनिःसृतैर्विविधविकृताकृतिभिरनन्तैर्भयानकवाक्यक्रियावपुर्भिरनुचरैः परिवृतश्चतुर्युगान्तकरकालाम्भोदसहस्रनिनदोऽनुनादयन्

तमुवाचेश्वरः क्रोधं ज्वरो लोके भविष्यसि ।
जन्मादौ निधने च त्वमपचारान्तरेषु च ॥२४॥
सन्तापः सारुचिस्तृष्णा चाङ्गमर्दो हृदि व्यथा ।
ज्वरप्रभावो जन्मादौ निधने च महत्तमः ॥२५॥
प्रकृतिश्च प्रवृत्तिश्च प्रभावश्च प्रदर्शितः ।
निदाने कारणान्यष्टौ पूर्वोक्तानि विभागशः ॥२६॥

रोदसी ज्वालागर्भेण परीतः कलकलारावेण महाभूतसम्प्लवकारिणा विधाय दानववधमश्वमेधाध्वरविध्वंसनं च प्रांजलिर्विज्ञापयामास शिवं । शिवीभूतोऽसि देवदेव । देवैः पितामहप्रभृतिभिर्जगतः पित्रा च धात्राऽभिष्टूयमानः । सम्प्रत्यहं किं करवाणीति । तं शूली क्रोधमादिदेश । यस्मात् त्रिदशैरप्यजय्य मत्क्रोध व्रतविघ्नं चिकीर्षुर्दैत्यसैन्यं दक्षो दक्षहव्यं च त्वया जीर्णम् । तो जगतोऽस्य सस्थावरस्य ज्वरयिता ज्वरो भवान् भवतु । त्वं हि सर्वरोगाणां प्रथमः । प्रवरो जन्ममरणेषु । तमोमयतया महामोहः । प्राग् जन्मनो विस्मारयिता । अपचारान्तरेषु चोष्ममयत्वात् सन्तापात्मा । द्वयेष्वपि ध्रुवो ज्वरो भवेति । इति ( अ० सं० नि० १ ) । २२—२४ ॥

प्रभावमाह—सन्ताप इति । सन्तापः । सह अरुच्या वर्तमाना सारुचिः तृष्णा । तृष्णा अरुचिश्च । अङ्गमर्दः । हृदि व्यथा । जन्मादौ निधने मरणे च महत् तमः मोहः । तेन प्राग् जन्मनो विस्मरणं । तदुक्तं—स महामोहः । तेनाभिभूताः प्राग् दैहिकं देहिनः किञ्चिदपि न स्मरन्ति । इति ( च० नि० १ ) । इति ज्वरप्रभावः ॥२५॥

उपसंहरति—प्रकृतिश्चेति । प्रकृतेरुपसंहारः प्रागपि कृतः—इत्यस्य प्रकृतिः प्रोक्ता इति । इह पुनः प्रकृतिश्चेति त्रयाणामेकत्र संग्रहार्थं । प्रकृत्यादयस्त्रय एव उक्ताः । साम्प्रतं कारणानि वक्तव्यानि । तत्राह—निदाने इति । ज्वरस्य कारणानि निमित्तानि अष्टौ विभागशः विभज्य विभज्य निदाने स्थाने पूर्वमुक्तानि । तथा च—अथ खल्व-

२४ । मनुष्याणां च जन्मादौ निधने च महत्तमः इति ङ पुस्तके ।

२४ । उपचारान्तरेषु च इति ख ग च ठ ञ पुस्तकेषु ।

आलस्यं नयने साम्रे जृम्भणं गौरवं क्लमः ।
ज्वलनातपवाय्वम्बुभक्तिद्वेषावनिश्चितौ ॥२७॥
अविपाकास्यवैरस्ये हानिश्च बलवर्णयोः ।
शीलवैकृतमल्पञ्च ज्वरलक्षणमग्रजम् ॥२८॥
केवलं समनस्कञ्च ज्वराधिष्ठानमुच्यते ।
शरीरं बलकालस्तु निदाने सम्प्रदर्शितः ॥२९॥

ष्टाभ्यः कारणेभ्यो ज्वरः संजायते मनुष्याणां । तद्यथा । वातात् । पित्तात् । कफात् । वातपित्ताभ्यां । वातकफाभ्यां । पित्तकफाभ्यां । वातपित्तकफेभ्यः । आगन्तोरष्टमात् कारणात् । इति (च० नि० १) । इह वातादयः कुपिता एव बोद्धव्याः । तेषां कुपितानां रोगान् प्रति कारणत्वात् । स च प्रकोपो यथोक्तनिदानसेवनाद् भवति । एवं ज्वरनिदानस्यापि संग्रहः। रोगाणां द्विविधं कारणं। साक्षाद् व्यवहितं च। तत्र आद्यं वातादिवैषम्यं। अन्त्यं रूक्षलघुशीतादि। तच्च दोषप्रकोपणद्वारेण परम्परया हेतुर्भवति। तदुक्तं वृद्धवाग्भटेनापि—तत्र निदानं वाय्वादिप्रकोपः। तस्य पुनरहिताहारविहारसेवा। इति ( अ० सं० नि० १ ) ॥ २६ ॥

पूर्वरूपमाह—आलस्यमित्यादि। आलस्यं। नयने साम्रे अश्रुयुक्ते। जृम्भणं। गौरवं गुरुगात्रत्वं। क्लमः अनायासश्रमः। ज्वलनः अग्निः। आतपः। वायुः। अम्बु जलञ्च। तेषु भक्तिरिच्छा। द्वेषश्च। तौ अनिश्चितौ। तेषु अकस्मात् इच्छाद्वेषौ सहत्वासहत्वे। अविपाकः। आस्यस्य मुखस्य वैरस्यं विरसता च। ते। बलवर्णयोः हानिः क्षयः। अल्पं शीलस्य स्वभावस्य वैकृतं विकृतिः। चकारात् निदानस्थानोक्तमनशाभिलाषादिकञ्चापि। एतत् सर्वं अग्रजं पूर्वं ज्वरस्य भाविनो लक्षणं। ज्वरस्य पूर्वरूपमित्यर्थः॥ २७। २८॥

अधिष्ठानमाह—केवलमिति। शरीरमिति च्छेदः। सह मनसा सत्त्वसंज्ञकेन वर्तमानं समनस्कं केवलं कृत्स्नं शरीरं केशरोमादिकं वर्जयित्वा। तथाच—वेदनानामधिष्ठानं मनो देहश्च सेन्द्रियः। केशरोमनखाग्रान्नमलद्रवगुणैर्विना॥ इति ( च० शा० १ )। शरीरं मनश्च ज्वरस्य अधिष्ठानमाश्रयः उच्यते। शरीरं सत्त्वसंज्ञं च

ज्वरप्रत्यात्मिकं लिङ्गं सन्तापो दैहमानसः ।
ज्वरेणाविशता भूतं न हि किञ्चिन्न तप्यते ॥३०॥
द्विविधो विधिभेदेन ज्वरः शारीरमानसः ।
पुनश्च द्विविधो दृष्टः सौम्यश्चाग्नेय एव च ॥३१॥
अन्तर्वेगो बहिर्वेगो द्विविधः पुनरुच्यते ।
प्राकृतो वैकृतश्चैव साध्यश्चासाध्य एव च ॥३२॥

व्याधीनामाश्रयो मतः । इति ( च० श्लो० १ ) । बलकालमाह—बलकालस्त्विति । बलकालविशेषः वातिकपैत्तिकश्लैष्मिकाणां क्रमात् जरणान्तादिभुक्तविदाहकालादि- भुक्तमात्रादिलक्षणः निदाने स्थाने प्राक् सम्प्रदर्शितः ॥ २६ ॥

ज्वरस्यात्मलक्षणमाह—ज्वरप्रत्यात्मिकमिति । दैहमानसः दैहिकः मानसश्च सन्तापः । देहेन्द्रियमनसां तापकरः । इति (च० नि० १) । इह इन्द्रियाणां देहे अवरोधः । ज्वरस्य प्रत्यात्मिकं लिङ्गं प्रतिज्वरमव्यभिचारि लक्षणं । कुतः ? हि यतः ज्वरेण आविशता किञ्चित् मनुष्यादि भूतं प्राणी न तप्यते इति न । किन्तु सर्वमेव तप्यते । इत्थं च सति ज्वरे सर्वत्र सन्तापस्यावश्यंभावात् सन्तापो ज्वरस्य अव्यभिचारि लक्षणं ॥ ३० ॥

व्यासतो विधिभेदमाह—द्विविध इत्यादि । विधिभेदेन प्रकारभेदेन ज्वरो द्विविधः । शारीरो मानसश्च । पुनश्च ज्वरो द्विविधः । सौम्यः आग्नेयश्च । शीतकारणा- रब्धत्वात् सोमदेवताकः सौम्यः शीतः । उष्णकारणारब्धत्वात् अग्निदेवताकः आग्नेयः उष्णः । पुनश्च द्विविध उच्यते । अन्तर्वेगः बहिर्वेगः इति । पुनश्च ज्वरो द्विविधः । प्राकृतो वैकृतश्च । प्रकृतिरिह कालप्रकृतिः कालस्वभावः । वक्ष्यति च— कालप्रकृतिमुद्दिश्य निर्दिष्टः प्राकृतो ज्वरः । इति । न तु दोषप्रकृतिः । कालप्रकृतिकृतः प्राकृतः । यथा वर्षासु वातिकः । शरदि पैत्तिकः । वसन्ते श्लैष्मिकः । वर्षाशरद्- वसन्तेषु वाताद्यैः प्राकृतः क्रमात् । इति ( अ० सं० नि० २ ) । अन्यकालकृतो वैकृतः । कालेष्वन्येषु वैकृतः । इति । पुनश्च द्विविधः । साध्यः असाध्यश्च इति । बहुभिः प्रकारैः द्वैविध्यमुक्त्वा प्रकारान्तरेण पञ्चविधत्वमाह—पुनः पञ्चविध इति । दोषः कालश्च

३० । ज्वरं प्रत्यात्मिकं लिङ्गं इति क ख ग ठ-पुस्तकेषु ।

पुनः पञ्चविधो दृष्टो दोषकालबलाबलात् ।
सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥३३॥
पुनराश्रयभेदेन धातूनां सप्तधा मतः ।
भिन्नः कारणभेदेन पुनरष्टविधो ज्वरः ॥३४॥
शारीरो जायते पूर्वं देहे मनसि मानसः ॥३५॥
वैचित्त्यमरतिर्ग्लानिर्मनसस्तापलक्षणम् ॥
इन्द्रियाणाञ्च वैकृत्यं ज्ञेयं सन्तापलक्षणम् ॥३६॥

तौ । तयोर्बलमबलञ्च तत् दोषकालबलाबलं । तस्मात् दोषकालबलाबलात् दोषाणां तुल्यदूष्यप्रकृतिकृतबलाबलाभ्यां ज्वरः पुनः पञ्चविधो दृष्टः । तद्यथा । सन्ततः । सततः । अन्येद्युः अन्येद्युष्कः । तृतीयकः चतुर्थकश्च तौ । दोषकालबलाबलं एतेषां लक्षणेषु दर्शयिष्यते । प्रकारान्तरेण सप्तविधत्वमाह—पुनराश्रयभेदेनेति । धातूनां आश्रयभूतानां भेदेन तदाश्रितो ज्वरः पुनः सप्तधा मतः । रसादिशुक्रान्तसप्तधातुगतत्वेन सप्तविधो मतः । अष्टविधत्वमाह—भिन्नः कारणभेदेनेति । कारणानि यानि निदानस्थाने अथ खल्वष्टाभ्यः कारणेभ्यो ज्वरः सञ्जायते इत्यादिना उक्तानि । तेषां भेदेन भिन्नः सन् ज्वरः पुनरष्टविधो मतः ॥ ३१–३४ ॥

ज्वरस्य प्रकारभेदानुक्त्वा तेषां लक्षणानि क्रमेणाह । तत्रादौ शारीरमानसयोर्लक्षणं—शारीरो जायते पूर्वमिति । शारीरो ज्वरः सन्तापलक्षणः पूर्वं प्रथमं देहे शरीरे जायते । पश्चात् मनस्यपि भवति । एवं मानसो ज्वरः पूर्वं मनसि जायते पश्चाद्देहेऽपि । तदुक्तं—पूर्वं शरीरे शारीरे तापो मनसि मानसे । इति ( अ० सं० नि० २ ) ॥३५॥

ननु शारीरः सन्तापो व्यक्तमनुभूयते । मानसः सन्तापः कथं ज्ञायते इति ? अत आह—वैचित्त्यमिति । वैचित्त्यं विचित्तता अन्यमनस्कत्वं । अरतिः मनसः अनवस्थितत्वं । ग्लानिः अहर्षश्च । एतत् मनसः तापलक्षणं । वैचित्त्यादिभिः मानसः सन्तापः अनुमीयते । देहेन्द्रियमनस्तापीति ज्वरे इन्द्रियतापोऽप्युक्तः । तदर्थमाह—इन्द्रियाणामिति । इन्द्रियाणां वैकृत्यं विकृतिः स्वभावान्यत्वं । तच्च यथास्वमर्थाग्रहणादनुमेयं । तद्धि तेषां सन्तापलक्षणं ज्ञेयं ॥ ३६ ॥

---

३६ । इन्द्रियाणांच वैकृत्यं देहे संतापलक्षणं इति क पुस्तके ।

वातपित्तात्मकः शीतमुष्णं वातकफात्मकः ।
इच्छत्युभयमेतत् तु ज्वरो व्यामिश्रलक्षणः ॥३७॥

योगवाहः परं वायुः संयोगादुभयार्थकृत् ।
दाहकृत् तेजसा युक्तः शीतकृत् सोमसंश्रयात् ॥३८॥

सौम्याग्नेययोर्लक्षणमाह—वातपित्तात्मक इति । इच्छतीति च्छेदः । वातपित्तात्मकः वातपित्तारब्धः उष्णसमुत्थः ज्वरः आग्नेयः उष्णः । स च शीतमिच्छति । वातकफात्मकः वातकफकृतः शीतसमुत्थः ज्वरः शीतः सौम्यः । स च उष्णमिच्छतीति । उष्णज्वरे शीतकामिता । शीतज्वरे च उष्णकामिता । इत्यनयोर्लक्षणं । भट्टौदरीयेऽप्युक्तं—द्वौ ज्वराविति । उष्णाभिप्रायः शीतसमुत्थः । शीताभिप्रायश्चोष्णसमुत्थः । इति । एतौ द्वान्द्विकौ । ननु वातपित्तात्मकः कथमुष्णारब्धः स्यात् ? सत्यपि पित्तस्यौष्ण्ये वायोः शैत्यात् । रूक्षः शीतो लघुः सूक्ष्मः । इति (च० श्लो० १) । इति चेत् ? न । वायोर्योगवाहितया पित्तसंयोगे तस्यापि दाहकारित्वात् । प्रसङ्गादुभयात्मकस्य लक्षणमाह—उभयमिति । व्यामिश्रलक्षणः उभयात्मकः वातयुक्तपित्तश्लेष्मकृतः ज्वरः एतत् उभयं शीतमुष्णञ्च इच्छति । शीतोष्णोभयात्मके उष्णशीतोभयकामिता ॥ ३७ ॥

वायोर्योगवाहितामाह—योगवाह इति । वायुः परमत्यर्थं योगवाहः । यो योगात् योगिनो गुणं वहति स योगवाह इत्युच्यते । अतः स संयोगात् उभयार्थकृत् । उष्णशीताभ्यां सह योगात् दाहं शीतञ्च उभयं करोति । इत्थं च स यदा तेजसा पित्तेन युक्तः तदा दाहकृत् । सोमसंश्रयात् श्लेष्मणा सह योगात् शीतकृत् । तथाच वातः यदा पित्तेन सह युज्यते तदा स्वकीयं शैत्यं हित्वा पित्तस्य यदौष्ण्यं तदादत्ते योगवाहत्वात् । तेन वातपित्तात्मके पित्तवत् वायुनापि दाहात् उष्णत्वं शीतकामित्वञ्च उपपद्यते ॥ ३८ ॥

---

३७ । उष्णं पित्तानिलात्मकः इति ख ग पुस्तकयोः ।

३७ । अस्यार्द्धोऽधिकात्पृष्ठा इति घ पुस्तके ।

अन्तर्दाहोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ।
सन्ध्यस्थिशूलमस्वेदो दोषवर्चोविनिग्रहः ॥३९॥
अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत् ।
सन्तापोऽभ्यधिको बाह्यस्तृष्णादीनाञ्च मार्दवम् ॥४०॥

शीतकृत् सोमसंश्रयादिति । स्वकीयशैत्येन शीतकरणे सिद्धेऽपि सोमसंश्रयादिति वचनं वायोर्योगवाहत्वं दर्शयितुं । तथा च यथा पित्तसंयोगे वायुः स्वकीयं शैत्यं हित्वा पित्तस्य औष्ण्यमादाय दाहं करोति । एवं श्लेष्मसंयोगेऽपि स्वकीयं शैत्यं त्यक्त्वा श्लेष्मणो यच्छैत्यं तदादाय शीतं करोति । एवं योगवाहत्वदर्शनात् वैशेषिका वायुमनुष्णाशीतमाहुः । अनुष्णाशीतः स्पर्शस्तु पवने मतः । इति ( विश्वनाथकारिका, ४२ ) । तेषामयमाशयः । वायुः प्रकृत्या नोष्णः । नापि शीतः । तस्य यदौष्ण्यं तत् उष्णेन सह योगात् । शैत्यं च शीतेन । पित्तेन उष्णेन सह योगात् वायुना दाहः । श्लेष्मणा शीतेन च शीतकरणं । दाहकृत् तेजसा युक्तः शीतकृत् सोमसंश्रयात् । इति । एकस्य दाहशीतोभयकारित्वं स्वस्यानुष्णा शीतत्वे हि उष्णशीताभ्यां सह योगात् सम्भवति । तन्न । वातः प्रकृत्या शीतः । वायुर्यत् शीतः तत् शीतेनाभिवृद्धया उष्णेन चोपशमनात् वयमहरहः प्रत्यक्षीकुर्मः । पित्तसंयोगे वायुनाऽपि दाहः दाहकृत् तेजसा युक्तः इति । तत् योगवाहत्वात् । प्रकृत्या शीतस्यापि तस्य श्लेष्मसंयोगात् यत् शीतकृत्त्ववचनं शीतकृत् सोमसंश्रयादिति तत् योगवाहत्वं दर्शयितुं । वस्तुतस्तु केवलवातोऽपि शीतं करोति । इत्यास्तां विस्तरः ॥ ३८ ॥

अन्तर्वेगं लक्षयति—अन्तर्दाह इत्यादि । अन्तर्दाहः शरीराभ्यन्तरे दाहः अधिकः । अधिकपदं तृष्णादिष्वपि यथालिङ्गं योज्यं । तृष्णा । प्रलापः । श्वसनं श्वासः । भ्रमः । सन्ध्यस्थिशूलं । अस्वेदः स्वेदस्य अप्रवृत्तिः । दोषाणां वातादीनां वर्चसः शकृतश्च विनिग्रहः अप्रवृत्तिः । बहिर्वेगे सुखसाध्यत्ववचनादस्य कृच्छ्रसाध्यत्वमर्थाल्लभ्यते । अन्तर्वेगस्य ज्वरस्य एतानि उक्तानि अन्तर्दाहादीनि लिङ्गानि लक्षयेत् भिषक् । सुश्रुते चायं गम्भीरसंज्ञः । तथाच—गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया । आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च ॥ इति ( सु० उ० ३९ ) । आनद्धत्वेन दोषपुरीषविबन्धेन ॥ ३९ ॥

बहिर्वेगं लक्षयति—सन्तापोऽभ्यधिक इति । बहिर्वेगे ज्वरे बाह्यः सन्तापः अभ्य-

वहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च ।
प्राकृतः सुखसाध्यस्तु वसन्तशरदुद्भवः ॥४१॥

धिको भवति। तृष्णादीनां मार्दवं मृदुत्वमल्पत्वं। सुखसाध्यत्वं च। एतानि वहिर्वेगस्य ज्वरस्य लिङ्गानि भवन्ति ॥४०॥

प्राकृतवैकृतौ विवृणोति। तत्रादौ कफपित्तजयोः प्राकृतयोः सुखसाध्यत्वमाह— प्राकृतः सुखसाध्यस्त्विति। प्राकृतः कालस्वभावकृतः। यथा वर्षाशरद्वसन्तेषु वातपित्तकफजाः। तत्र वसन्तशरदुद्भवः प्राकृतः वसन्ते कफजः शरदि पित्तजः सुखसाध्यः। व्याधिदोषयोस्तुल्यक्रियत्वात्। तथा हि ज्वरः आमाशयोत्थो व्याधिः। तत्र लङ्घनं पथ्यं। कफः सौम्यो लङ्घनसहः। पित्तमाग्नेयमपि तदा कफस्यानुयलत्वेन कालस्य विसर्गात्मकस्य सौम्यत्वात् द्रवधातुतया चापि लङ्घनं सहते। तथा च— कफपित्ते द्रवौ धातू सहेते लङ्घनं महत्। आमक्षयादूर्ध्वमपि वायुर्न सहते क्षणं॥ इति। कफजपित्तजप्राकृतयोः सुखसाध्यत्ववचनात् वातजप्राकृतस्य कृच्छ्रसाध्यत्वं-मर्थादवगम्यते। वक्ष्यमाणवचनाच्चापि। वचनञ्च—प्रायेणानिलजो दुःखः इति। चक्रपाणिः पुनरिह व्याचष्टे—य एव सुखसाध्यो वसन्तशरदुद्भवः प्राकृतः स एवेह प्राकृतशब्देन तव्यते इत्यर्थः। वर्षाकालभववातिकस्तु न सुखसाध्यः। तेन नासौ प्राकृत उच्यते। इति। तन्मते सुखसाध्यत्वमेव प्राकृतसंज्ञाहेतुः। वसन्तशरदुद्भमवयोः कफजपित्तजयोः सुखसाध्यत्वात् प्राकृतसंज्ञा। वर्षाभववातिकस्य कृच्छ्र-साध्यतया वैकृतादभिन्नत्वात् न प्राकृतसंज्ञा। मैवं। सोऽपि प्राकृत उच्यते। तथा च वृद्धवाग्भटः—वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्। वैकृतोऽन्यः स दुः-साध्यः प्रायश्च प्राकृतोऽनिलात् ॥ इति ( अ० सं० नि० २ )। कालप्रकृतिरिह प्राकृत-संज्ञायां हेतुः। न तु सुखसाध्यता। ननु प्राकृतो ज्वरः किं वर्षाशरद्वसन्तेषु क्रमात् वातपित्तकफैः कृतः? उत वातलादीनां वातादिकृतः? अत आह—काल प्रकृतिमिति। कालप्रकृतिं कालस्वभावमुद्दिश्य लक्षीकृत्य प्राकृतो ज्वरः प्रोच्यते। न तु दोषप्रकृतिं। कालस्वभावप्रकुपितदोषकृतो हि ज्वर इह प्राकृतसंज्ञः। न तु वातलादीनां वाता-दिकृतः ॥ ४१ ॥

४१। कालप्रकृतिमुद्दिश्य इति श्लोकार्धं न पठ्यते ख ग घ ट पुस्तकेषु ।

कालप्रकृतिमुद्दिश्य प्रोच्यते प्राकृतो ज्वरः ।
उष्णमुष्णेन संवृद्धं पित्तं शरदि कुप्यति ॥४२॥
चितः शीते कफश्चैवं वसन्ते समुदीर्य्यते ।
वर्षास्वम्लविपाकाभिरद्भिरोषधिभिस्तथा ॥४३॥

वर्षाशरद्वसन्तेषु यथा प्राकृतो ज्वरो जायते तद् दर्शयितुमाह—उष्णमुष्णेनेत्यादि। वर्षासु ओषधय आपश्च तरुण्यः। ताः परिणमन्त्यः यथा यथा दोषाणां सञ्चयं प्रकोपञ्चापादयन्ति तेनैव क्रमेण अभिधानस्यौचित्यात् चयादिषु पित्तादिक्रमः। तथा च—चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमं। भवन्त्येकैकशः षट्सु कालेष्वभ्रागमादिषु॥ इति ( च० श्लो० १७ )। तदिह प्राक् पित्तग्रहणं। पित्तमम्लमुष्णं च। संवृद्धं वर्षासु संचितं शरदि उष्णेन आदित्यतेजसा उद्रिक्तं कुप्यति। एवं कफः शीते चितः सञ्चितः वसन्ते समुदीर्यते कुप्यति ॥४२॥

उष्णमुष्णेनेत्युक्तं विवृणोति—वर्षास्वित्यादि। पित्तमम्लमुष्णं च वर्षासु अम्लविपकाभिः अद्भिः जलैः तथा ओषधिभिः सञ्चितं शरदि आदित्यतेजसा उष्णेन उत्क्लिष्टं उद्रिक्तं आशु शीघ्रं ज्वरं संजनयति। वर्षासु ओषधीनामपां च अम्लविपाकित्वात् पित्तमम्लं वर्षासु चीयते सामान्यात्। न तु कुप्यति। तदा वर्षवातकृतशैत्येन स्त्यानत्वात्। तत् पुनः शरदि अर्ककिरणैः सर्पिरिव प्रविलायितं भवति। तेन शरदि पित्तस्य प्रकोपो जायते। तदुक्तं सुश्रुतेनापि—तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्याः। आपश्चाप्रसन्नाः क्षितिमलप्रायाः। ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टम्भिताग्नीनां विदह्यन्ते। विदाहात् पित्तसञ्चयमापादयन्ति। स सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पंकेऽर्ककिरणप्रविलायितः पैत्तिकान् व्याधीन् जनयति। इति (सु० सू० ३)। दोषान्तरानुबन्धमाह—तस्य चानुबलः कफः इति। कफः तस्य पित्तस्य ज्वरं कर्तुमुद्यतस्य अनुबलः भवति सहायरूपेण बलोपबृंहणं करोति। तदा कफस्य अनुबलत्वेन स्थितिः। न तु संसर्गे इव स्वयंकर्तृत्वेन। एवं वसन्ते कफजे ज्वरे वातपित्तयो-

४३। संचितं पित्तमक्लिष्टं इति स ग ट ठ या पुस्तकेषु।

सञ्चितं पित्तमुद्रिक्तं शरद्यादित्यतेजसा ।
ज्वरं सञ्जनयत्याशु तस्य चानुबलः कफः ॥४४॥
तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ।
अद्भिरोषधिभिश्चैव मधुराभिश्चितः कफः ॥४५॥
हेमन्ते सूर्य्यसन्तप्तः स वसन्ते प्रकुप्यति ।
वसन्ते कफजस्तस्माज्ज्वरः समुपजायते ॥४६॥

रनुबलत्वं बोद्धव्यं । शरदि वातस्यानुबलत्वं न सम्भवति । कालस्वभावेन तस्य प्रशमात् । ननु शरदुद्भवः प्राकृतः कथं सुखसाध्यः स्यात् ? यतः पित्तमाग्नेयं । अनशनादी पायाशङ्कास्तीति चेत् ? तत्राह—तत्प्रकृत्येति । तस्य कफस्य अनुबलभूतस्य प्रकृत्या सौम्यस्वभावत्वात् । अथवा तयोः पित्तकफयोः प्रकृत्या द्रवस्वभावत्वात् । विसर्गात् कालात् वर्षाशरद्धेमन्तात्मकस्य दक्षिणायनापरनाम्नो विसर्गस्य कालस्य सौम्यत्वाच्च । विसर्गः सौम्य इति । तत्र शरदि कफयुतपित्तकृते ज्वरे अनशनात् न भयमस्ति । तत्र लङ्घनं विधेयमेव ॥ ४३।४४ ॥

चितः शीते कफश्चैवं वसन्ते समुदीर्यते इत्युक्तं विवृणोति—अद्भिरिति । हेमन्ते इति च्छेदः । हेमन्ते कफः मधुरः स्निग्धः गुरुश्च मधुराभिः स्निग्धाभिः गुर्वीभिश्च अद्भिः ओषधिभिश्च चितः भवति सामान्यात् । ततः स सञ्चितः कफः वसन्ते सूर्यसन्तप्तः सन् प्रकुप्यति । हेमन्ते श्लेष्मणः संचयो भवति । न तु प्रकोपः । कालस्य शैत्येन तदा सङ्घातरूपत्वात् । प्रकोपस्तु वसन्ते । तदा स सूर्यकिरणसम्पर्कात् सर्पिरिव प्रविलायितो भवति । तस्मात् वसन्ते कफजो ज्वरः समुपजायते । तदुक्तं सुश्रुतेन—ता एवौषधयः कालपरिणामात् परिणतवीर्या बलवत्यो हेमन्ते भवन्ति । आपश्च स्निग्धाश्चात्यर्थं गुर्व्यः । ता उपयुज्यमाना मन्दकिरणत्वाद् भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनामविदग्धाः स्नेहाच्छैत्याद् गौरवादुपलेपाच्च श्लेष्मसञ्चयमापादयन्ति । स सञ्चयो वसन्तेऽर्करश्मिप्रविलायित ईषत्स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयन्ति । इति ( सु० सू० ६ ) त-

४४ । प्रकृत्येव विसर्गस्य इति ख ठ पुस्तकयोः ।
४५ । मधुराद्विचितः कफः इति ख ग पुस्तकयोः ।

आदानमध्ये तस्यापि वातपित्तं भवेदनु ॥४६॥
आदावन्ते च मध्ये च ज्ञात्वा दोषबलाबलम् ।
शरद्वसन्तयोर्विद्वान् ज्वरस्य प्रतिकारयेत् ॥४७॥
प्रायेणानिलजो दुःखः कालेष्वन्येषु वैकृतः ।

दा वातपित्तयोरनुबलत्वमाह—आदानमध्ये इति । आदानमुत्तरायणं शिशिरवसन्तग्रीष्मात्मकः कालः । तस्य मध्यं वसन्तः । तस्मिन् । वातः पित्तं च । तयोः समाहारः । तत् वातपित्तं । तस्य कफस्य अनु अनुबलं भवेत् । तदा वातपित्ते अनुबलत्वेन स्थिते । न तु सन्निपाते इव स्वयंकर्तृत्वेन । श्लेष्मणः सौम्यप्रकृत्या आदानस्य आग्नेयत्वेऽपि मध्ये मध्यबलत्वात् वातपित्तयोश्च अनुबलत्वेन स्थितत्वात् तत्रापि न अनशनात् लंघनात् भयमस्ति । वातजप्राकृतस्यासाध्यत्वादुत्पत्तिरिह नोक्ता । तस्योत्पत्तिक्रमो यथा । वातो ग्रीष्मे लघुरूक्षाभिरद्भिरोषधिभिश्च चितो वर्षासु शीतवातवर्षेरितः प्रकुप्यति । ग्रीष्मे वातस्य सञ्चयो भवति । न तु प्रकोपः । कालस्यौष्ण्यात् । उक्तञ्च—चीयते लघुरूक्षाभिरोषधीभिः समीरणः । तद्विधस्तद्विधे देहे कालस्यौष्ण्यान्न कुप्यति ॥ इति ( अ० सं० सू० २१ ) । तस्य प्रकोपो वर्षासु भवति । तस्मात् वर्षासु वातिको ज्वरः समुपजायते । तथाच सुश्रुतः—ता एवौषधयो निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्ति । आपश्च । ता उपयुज्यमानाः सूर्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद् वैशद्याच्च वायोः सञ्चयमापादयन्ति । स सञ्चयः प्रावृष्यत्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति । इति (सु० सू० ६) । तस्यापि श्लेष्मपित्तं अनुबलं भवेत् । तथाच वृद्धवाग्भटः—वर्षासु मारुतो दुष्टः श्लेष्मपित्तान्वितो ज्वरं । कुर्याच्छरदि पित्तं च तस्य चानुबलः कफः । तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयं । कफो वसन्ते तमपि वातपित्तं भवेदनु ॥ इति ( अ० सं० नि० २) ॥ ४५।४६ ॥

वसन्तशरदुद्भवप्राकृतज्वरयोः सुखसाध्यत्वात् उत्पत्तिक्रमं दोषान्तरानुबन्धञ्च दर्शयित्वा तयोश्चिकित्सा यथा कार्या सम्प्रति तदुपदिशति—आदावन्ते चेति । विद्वान् भिषक् शरद्वसन्तयोः आदौ मध्ये च अन्ते च ज्वरस्य दोषस्य आरम्भकस्य अनुबलस्य च बलाबलं बुद्ध्वा प्रतिकारयेत् प्रतिकारं कुर्यात् ॥ ४७ ॥

पित्तजकफजप्राकृतयोः सुखसाध्यत्वमुक्त्वा सम्प्रति वातजप्राकृतस्य कृच्छ्रसाध्य-

हेतवो विविधास्तस्य निदाने सम्प्रदर्शिताः ॥४८॥
बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ॥४९॥
हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः।
ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः ॥५०॥

त्वमाह—प्रायेणेति। अनिलजः वातजः प्राकृतः। तस्य प्रकृतत्वात्। प्रायेण बाहुल्येन दुःखः कृच्छ्रसाध्यः। भिन्नोपक्रमत्वात्। तथा च ज्वरे लंघनं पथ्यं। वायौ पुनरपथ्यं। वायुर्न सहते क्षणमिति। तत्र अनशनात् महदेव भयं। प्रायेणेत्यनेन कदाचित् दैवानुकूलत्वात् सुखसाध्योऽपि भवतीति द्योत्यते। प्राकृतमुक्त्वा वैकृतं लक्षयति—कालेष्वन्येषु वैकृत इति। अन्येषु वर्षादिभ्यः ऋतुभ्यः अन्येषु कालेषु हेमन्तशिशिरग्रीष्मेषु जातः ज्वरः वैकृतः उच्यते। सोऽपि वातजप्राकृतवत् कृच्छ्रसाध्यः। यदाह वृद्धवाग्भटः—वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्। वैकृतोऽन्यः स दुःसाध्यः प्रायश्च प्राकृतोऽनिलात्॥ एकमार्गक्रियारम्भव्यतिवृत्तेर्महात्ययात्। इति (अ० सं० नि० २)। एकमार्गक्रियारम्भव्यतिवृत्तेरिति—एकमार्गः एकरूपः। क्रियायाः चिकित्सालक्षणायाः आरम्भः। तस्य व्यतिवृत्तिः व्यतिक्रमः। तस्याः। अयं दुःसाध्यत्वं प्रति हेतुः। ननु प्राकृतस्य हेतुः कालप्रकृतिः। कः पुनः वैकृतस्य हेतुरिति? आह–निदान इति। तस्य वैकृतस्य ज्वरस्य विविधाः हेतवः वातिकस्य लघुरूक्षशीतादयः पैत्तिकस्य उष्णाम्ललवणादयः श्लैष्मिकस्य स्निग्धगुरुमधुरादयः निदाने स्थाने सम्प्रदर्शिताः ॥ ४८ ॥

साध्यासाध्यौ विवृणोति। तत्रादौ साध्यमाह—बलवत्स्विति। बलवत्सु पुरुषेषु। अल्पदोषेषु च पुरुषेषु। यो ज्वरो जायते। अनुपद्रवः उपद्रवरहितः। ज्वरस्य उपद्रवाः—कासमूर्च्छाऽरुचिच्छर्दितृष्णातीसारविड्ग्रहाः। हिक्काश्वासोऽङ्गभेदश्च ज्वरस्योपद्रवा दश॥ इति। उपद्रवः पश्चाज्जायमानः तन्मूलकः अन्यो विकारः। वक्ष्यति च–उपद्रवस्तु खलु रोगोत्तरकालजो रोगाश्रयो रोग एव स्थूलोऽणुर्वा। रोगात् पश्चाज्जायत इत्युपद्रवसंज्ञः। इति (च० चि० २१)। तथाविधो ज्वरः साध्यः साधयितुं शक्यः ॥ ४९ ॥

असाध्यमाह—हेतुभिरिति। यो ज्वरः बहुभिर्बलिभिः बलवद्भिः हेतुभिः निदानैः जातः। यश्च बहुलक्षणः। अतिमात्रसर्वरूपश्चापि। तदुक्तं पूर्वरूपीयेन्द्रिये—पूर्वरू-

(सप्ताहाद्वा दशाहाद्वा द्वादशाहात् तथैव च ।
सप्रलापभ्रमश्वासस्तीक्ष्णो हन्याज्ज्वरो नरम् ॥५१॥
ज्वरः क्षीणस्य शूनस्य गम्भीरो दैर्घरात्रिकः ।
असाध्यो बलवान् यश्च केशसीमन्तकृज्ज्वरः ॥५२॥
(स्रोतोभिर्विसृता दोषा गुरवो रसवाहिभिः ।
सर्वदेहानुगाः स्तब्धा ज्वरं कुर्वन्ति सन्ततम् ॥५३॥
दशाहं द्वादशाहं वा सप्ताहं वा सुदुःसहः ।
स शीघ्रं शीघ्रकारित्वात् प्रशमं याति हन्ति वा ॥५४॥

पाणि सर्वाणि ज्वरोक्तान्यतिमात्रया । यं विशन्ति विशल्येनं मृत्युर्ज्वरपुरःसरः ॥ इति ( च० इ० ५ ) । स प्राणान्तकृत् । यश्च शीघ्रं उत्पन्नमात्र एव इन्द्रियनाशनः चिकित्स्यमानोऽपि इन्द्रियं चक्षुरादिकं नाशयति सोऽपि प्राणान्तकृत् ॥ ५० ॥

सप्ताहाद्व वेति । सप्रलापभ्रमश्वासः तीक्ष्णः ज्वरः वातोत्तरः सप्ताहात्परं नरं हन्यात् । वातस्य शीघ्रकारित्वात् । पैत्तिकश्चेत् दशाहात् परं हन्यात् । पित्तस्याल्प-शीघ्रकारित्वात् । श्लैष्मिकः द्वादशाहात् परं नरं हन्यात् । श्लेष्मणश्चिरकारित्वात् । दोषत्रयापेक्षया विकल्पत्रयं ॥ ५१ ॥

ज्वरः क्षीणस्येति । बलवानिति सर्वत्र योज्यं । क्षीणस्य शूनस्य च पुंसः बलवान् ज्वरः असाध्यः । गम्भीरः गम्भीरधातुस्थः । अन्तर्वेग इति अन्ये । ज्वरः असाध्यः । यश्च केशसीमन्तकृत् अकस्मात् केशेषु सीमन्तान् करोति सोऽप्यसाध्यः । उक्तं च— केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ । लुनन्ति चाक्षिपक्ष्माणि सोऽचिराद् याति मृत्यवे ॥ इति ( सु० सू० ३१ ) ॥ ५२ ॥

दोषकालबलाबलात् सन्ततादयः पञ्च भेदाः उक्ताः । सम्प्रति क्रमेण तान् विवृणोति । तत्रादौ सन्ततमाह—स्रोतोभिरित्यादि । गुरवः सामत्वात् । दोषाः वातादयः । विशेषेण रसाश्रितत्वात् रसवाहिभिः स्रोतोभिः विसृताः सर्वदेहप्रसृताः । अतः सर्वदे-हानुगाः । स्तब्धाः निश्चलाः । ऊर्ध्वमधश्चानिःसरणात् । सन्ततं ज्वरं कुर्वन्ति ॥५३॥

सम्प्राप्तिमुक्त्वा मोक्षवधयोरवधिमाह—दशाहमिति । स सन्ततो ज्वरः दशाहं

कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि सन्ततम् ।
निष्प्रत्यनीकः कुरुते तस्माज् ज्ञेयः सुदुःसहः ॥५५॥

द्वादशाहं सप्ताहं वा व्याप्य । दशाहादिविकल्पः क्रमात् पित्तकफवातोत्तरसन्निपातारब्धत्वेन सन्ततस्य विशेयः । तदुक्तं—क्रमाद्वातपित्तकफैः सप्त दश द्वादश वासरान् । इति ( अ० सं० नि० २ ) । सुदुःसहः सन् । शीघ्रकारित्वात् शीघ्रं दशाहादिषु । सन्ततज्वरे मोक्षवधयोः सैव मर्यादा । दशाहादीनामिह शीघ्रशब्दवाच्यत्वं । प्रभृतेतरकालापेक्षया शीघ्रत्वात् । प्रशमं याति प्रशाम्यति । आतुरं हन्ति वा । रसादीनां सम्यक् शुद्ध्यशुद्धिभ्यां । मोक्षवधयोरेवं त्रिदोषमर्यादा सुश्रुतेनाप्युक्ता । तथा च—सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा । पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥ इति ( सु० उ० ३९ ) । हारीतः पुनराह—द्विगुणा सप्तमी यावन्नवम्येकादशी तथा । एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥ इति (अ० सं० नि० २) । तन्मते वातोत्तरे द्विगुणा सप्तमी चतुर्दश दिनानि । पित्तोत्तरे द्विगुणा नवमी अष्टादश दिनानि । श्लेष्मोत्तरे च द्विगुणा एकादशी द्वाविंशतिर्दिनानि । मोक्षवधयोरवधिः । द्वयमपि चैतदार्षं वचः प्रमाणं । दोषस्याशु सर्वशरीरे सन्तत्या व्याप्त्या ज्वरस्य सन्तत इति संज्ञा । एवं सततोऽपि । यदाह वृद्धवाग्भटः—आसन्नविवृतास्यत्वात् स्रोतसां रसवाहिनां । आशु सर्वस्य वपुषो व्याप्तिर्दोषेण जायते ॥ सन्ततः सततस्तेन । इति ( अ० सं० नि० २ ) । सुश्रुतस्तु प्राह--सप्ताहं वा दशाहं वा द्वादशाहमथापि वा । सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते ॥ इति ( सु० उ० ३९ ) । तन्मते सप्ताहादिषु सन्तत्या नैरन्तर्येण अनवस्थानात् सन्तत इत्युच्यते ॥ ५४ ॥

कस्मात् पुनरयं सुदुःसहो भवति ? अत आह—कालदूष्येति । कालः । दूष्यो रसादिधातुः । प्रकृतिः दोषप्रकृतिः वातलाद्या । ताभिः तुल्यः । अत एव निष्प्रत्यनीकः निष्प्रतिद्वन्द्वः । कालादीनां सर्वेषामनुगुणत्वात् । तथाविधो दोषः । कालदूष्यप्रकृतिभिस्तुल्यो दोषो यथा वसन्ते श्लेष्मप्रकृतौ मेदसि दूष्ये कफो दोषः । एवं शरदि पित्तलप्रकृतौ रक्ते दूष्ये पित्तं दोषः । न त्वेवं सन्तते त्रिदोषारब्धे सर्वत्र दोषस्य

५५ । निष्प्रत्यनीकं कुरुते इति क पुस्तके । दुष्प्रत्यनीकः कुरुते इति ठ पुस्तके ।

यथा धातंस्तथा मूत्रं पुरीषञ्चानिलादयः ।
अनुबध्नन्ति युगपदवश्यं सन्तते ज्वरे ॥५६॥
स शुद्ध्या वाप्यशुद्ध्या वा रसादीनामशेषतः ।
सप्ताहादिषु कालेषु प्रशमं याति हन्ति वा ॥५७॥
यदा तु नाति शुध्यन्ति न वा शुध्यन्ति सर्वशः ।
द्वादशैते समुद्दिष्टाः सन्ततस्याश्रयास्तदा ॥५८॥
विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षणः ।
दुर्लभोपशमः कालं दीर्घमप्यनुवर्त्तते ॥ ५९ ॥

कालादिभिस्तुल्यत्वं सम्भवति । कालादोनामसमानानामपि वलवत्ता दोषेण परिगृहीतानां प्रतीपार्थकरणासामर्थ्यात् अनुगुणतेव । तेन तत्रापि निष्प्रतिद्वन्द्व एव दोषः । अतः तुल्य इत्यभिधायापि पुनः निष्प्रत्यनीक इत्युक्तं । सन्ततं ज्वरं कुरुते । तस्मात् तुल्यकालादिवर्द्धितदोषारब्धत्वात् सन्ततो ज्वरः सुदुःसहः । अतः असह्यः ज्ञेयः । यथा धातूनिति ।( सन्तते ज्वरे अनिलादयः वातादयः त्रयः अवश्यं नियतमेव । यथा धातून् रसादीन् सप्त । तथा मूत्रं पुरीषं च । युगपत् एकदा अनुबध्नन्ति अनुगच्छन्ति । स सन्ततः रसादीनां अशेषतः साकल्येन शुद्ध्या अशुद्ध्या वापि सप्ताहादिषु कालेषु प्रशमं याति । आतुरं हन्ति वा । रसादीनां अशेषतः शुद्ध्या मोक्षः । अशुद्ध्या च वधः । यदा त्विति । यदा तु एते समुद्दिष्टाः उक्ताः द्वादश सप्त धातवः मूत्रपुरीषे वातपित्तकफाः इति द्वादश सन्ततस्याश्रयाः ) न अति शुद्ध्यन्ति न सम्यक् शुद्धाः । किन्तु सावशेषदोषाः भवन्ति । न सर्वशः शुध्यन्ति रसादिषु कतिचित् शुद्धाः कतिचिच्च अशुद्धा एव वर्तन्ते । तदा श्लेष्मोत्तरश्चेत् द्वादशानां पूरणः । तस्मिन् द्वादशे दिवसे । एतत् मर्यादाकालस्योपलक्षणं । तेन सप्तमे दशमे वापि क्रमात् वातपित्तोत्तरत्वे । विसर्गं परित्यागं कृत्वा । अव्यक्तं लक्षणं यस्य स तथोक्तः । तस्मात् दुर्लभोपशमः सन् दीर्घमपि कालं अनुवर्तते ॥ ५५—५९ ॥

---

५६ । युगपच्चानुबध्नन्ते नियमात् सन्तते ज्वरे इति क पुस्तके ।

५७ । वा रसादीनामशेषतः इति ठ पुस्तके ।

इति बुद्ध्वा ज्वरं वैद्यः सन्ततं समुपाचरेत् ।
क्रियाक्रमविधौ युक्तः प्रायः प्रागपतर्पणैः ॥६०॥
रक्तधात्वाश्रयः प्रायो दोषः सततकं ज्वरम् ।
सप्रत्यनीकः कुरुते कालवृद्धिक्षयात्मकः ।
अहोरात्रे सततको द्वौ कालावनुवर्त्तते ॥६१॥
कालप्रकृतिदूष्याणां प्राप्यैवान्यतमाद्बलम् ।

इतीति । इति एवं सन्ततं ज्वरं बुद्ध्वा वैद्यः क्रियाक्रमविधौ युक्तः अवहितः सन् प्राक् प्रायः अपतर्पणैः लङ्घनैरुपाचरेत् चिकित्सेत् ॥ ६० ॥

सन्ततमुक्त्वा सततमाह—रक्तधात्वाश्रय इति । दोषः वातादिः । प्रायः रक्तधात्वाश्रयः । प्रायोग्रहणात् कदाचित् रक्तव्यतिरिक्तं धातुं मांसादिकमपि आश्रयते इति दर्शयति । सप्रत्यनीकः सह प्रत्यनीकेन कालादीनामन्यतमेन अतुल्यत्वात् दोषप्रतिपक्षभूतेन वर्तमानः सप्रत्यनीकः सप्रतिद्वन्द्वः । अतः काले वृद्धिक्षयात्मकः वृद्धिक्षयभाक् । प्रत्यनीकस्य बलकाले क्षीयते । तस्य दुर्बलत्वे च वर्द्धते । दूष्यादिषु इतरयोः तुल्यत्वात् । सततकादिषु चतुर्षु दोषस्य सप्रत्यनीकतया ज्वरस्य विरतिर्भवति । सन्तते तु कालादीनां सर्वेषां तुल्यतया दोषस्य निष्प्रतिद्वन्द्वत्वात् सप्ताहादिषु अविच्छेदः । तथाविधो दोषः । सतत एव सततकः । तं । ज्वरं कुरुते । स च सततको ज्वरः अहोरात्रे द्वौ कालौ अहनि एकवारं रात्रौ एकवारं इति द्वौ कालौ । अहन्येव द्वौ कालौ । रात्रावेव द्वौ कालौ इति वा । नियमस्यानभिधानात् । अनुवर्तते कोपं कुरुते । सुश्रुतेऽपि—अहोरात्रे सततको द्वौ कालावनुवर्तते । इति ( सु० उ० ३९ ) अन्ते—विषमज्वर एवान्यश्चतुर्थकविपर्यय इति चतुर्थकविपर्ययस्य विषमज्वरेष्वन्यतमत्ववचनात् सततकादयश्चत्वारो विषमज्वरा ज्ञेयाः । तन्त्रान्तरसंवादाच्च । तथाच सुश्रुतः—दोषोऽल्पोऽहितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः । धातुमन्यतमं प्राप्य करोति विषमज्वरं ॥ सततं रसरक्तस्थः सोऽन्येद्युः

६१ । सप्रत्यनीकं कुरुते इति ग पुस्तके ।

अन्येद्युष्कं ज्वरं दोषो रुद्ध्वा मेदोवहाः सिराः ॥६२॥
सप्रत्यनीको जनयत्येककालमहर्निशम् ।
दोषोऽस्थिमज्जगः कुर्य्यात्तृतीयकचतुर्थकौ ॥६३॥
गतिर्द्व्येकान्तरान्येद्युर्दोषस्योक्ताऽन्यथा परैः ।
अन्येद्युष्कं ज्वरं कुर्य्यादपि संश्रित्य शोणितम् ॥६४॥
मांसस्रोतांस्यनुगतो जनयेत् तु तृतीयकम् ।

पिशिताश्रयः । मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जगतः पुनः ॥ कुर्य्याच्चतुर्थकं घोरमन्तकं रोगसंकरं । इति ( सु० उ० ३९ ) । खरनादेनाप्युक्तं—ज्वराः पञ्च मयोक्ता ये पूर्वं सन्तकादयः । चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमा ज्वराः ॥ इति । वाग्भटेऽपि—एवं ज्वराः प्रवर्तन्ते विषमाः सततादयः । इति । विषमज्वरस्वरूपं तत्रोक्तं—विषमो विषमारम्भक्रियाकालोऽनुषङ्गवान् । इति । अन्यत्र च—यः स्यादनियतात् कालात् शीतोष्णाभ्यां तथैव च । तापनश्चापि विषमो ज्वरः स विषमः स्मृतः ॥ इति ॥६१ । ६२॥

अन्येद्युष्कादीनां सम्प्राप्तिमाह—अन्येद्युष्कमित्यादि । दोषः मेदोवहाः सिराः नाडीः रुद्ध्वा । तत्र स्थितः कालप्रभृतिद्रव्याणां मध्ये अन्यतमात् एकतमात् तुल्यात् बलं प्राप्य । कालादिषु एकस्य तुल्यत्वे सुतरामितरयोरतुल्ययोर्दोषप्रतिपक्षत्वेन सप्रत्यनीकः । प्रत्यनीकबलाबलाभ्यां सोऽपि काले क्षयवृद्धिभाक् । तथाविधो दोषः अन्येद्युष्कं ज्वरं अहर्निशं एककालं एकवारं सकृत् जनयति । सततकः अहोरात्रे द्वौ कालौ । अन्येद्युष्कस्तु सकृत् । अत्र विरतस्य पुनः अन्येद्युः अन्यस्मिन् दिने आगमनात् अन्येद्युष्कसंज्ञा ॥ अस्थिमज्जगः दोषः । सोऽपि सप्रत्यनीकः काले वृद्धिक्षयभाक् । क्रमात् तृतीयकः चतुर्थकश्च तौ । अस्थिगः तृतीयकं । मज्जगश्च चतुर्थकं कुर्य्यात् । तृतीयकचतुर्थकाविति तृतीयचतुर्थदिनभावित्वात् ॥ ६३ ॥

समतमुक्त्वा तन्त्रान्तरीयाणां मतमाह—गतिरिति । अन्येद्युः अन्येद्युष्के ज्वरे । एतदुपलक्षणं । तृतीयकचतुर्थकयोरपि । दोषस्य गतिः परैरन्यैः तन्त्रान्तरीयैः अन्यथा अन्यविधा उक्ता । तद्विवरणं—द्व्येकान्तरेति । द्व्येकान्तरा द्व्यन्तरा

६३ । सप्रत्यनीकं कुरुते एककालमहर्निशम् इति क पुस्तके ।

संश्रितो मेदसो मार्गं दोषश्चापि चतुर्थकम् ॥६५॥
अन्येद्युष्कः प्रतिदिनं दिनं हित्वा तृतीयकः ।
दिनद्वयं यो विश्रम्य प्रत्येति स चतुर्थकः ॥६६॥
अधिशेते यथा भूमिं बीजं काले च रोहति ।
अधिशेते तथा धातून् दोषः काले च कुप्यति ॥६७॥
स वृद्धिं बलकालञ्च प्राप्य दोषस्तृतीयकम् ।
चतुर्थकञ्च कुरुते प्रत्यनीकबलक्षयात् ॥६८॥

एकान्तरा च । तथा च इह अन्येद्युष्कादिषु दोषस्याश्रयत्वेन यो यो धातुरुक्तः ततः अग्रतः पश्चाद्वा एकद्वित्र्यात्वन्तरा उक्ता । तदेव स्वयं विवृत्य दर्शयति—अन्येद्युष्कमिति । दोषः शोणितं संश्रित्यापि अन्येद्युष्कं ज्वरं कुर्यात् । दोषः मांसस्रोतांसि अनुगतः तृतीयकं ज्वरं जनयेत् । दोषः मेदसः मार्गं संश्रितश्चापि चतुर्थकं ज्वरं जनयेत् । तन्त्रान्तरे अन्येद्युष्कादिषु दोषस्य गतिः पुनरन्यथाऽपि । तथा च सुश्रुतः—सोऽन्येद्युः पिशिताश्रयः । मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जगतः पुनः । कुर्याच्चतुर्थकं घोरमन्तकं रोगसंकरं ॥ इति ( सु० उ० ३९ )॥६४।६५॥

अन्येद्युष्क इति । अन्येद्युष्कः ज्वरः प्रतिदिनं प्रत्येति । तृतीयको ज्वरः दिनं हित्वा मध्ये एकं दिनं विहाय तृतीयस्मिन् दिवसे प्रत्येति । यो मध्ये दिनद्वयं व्याप्य विश्रम्य चतुर्थे दिवसे प्रत्येति स चतुर्थकः । चतुर्थदिनभावित्वात् ॥ ६६ ॥

सततकादिषु दोषाणां तत्तद्धात्वाश्रितानामपि ज्वरोत्पत्तौ कालप्रतीक्षणं सदृष्टान्तमाह—अधिशेते इति । यथा बीजं कर्तृ । भूमिं । अधिशीङ्स्थासां कर्मेति कर्मसंज्ञा । अधिशेते भूमौ उप्यते । ततः काले च जलैः सिक्तं रोहति अंकुरं जनयति । न तु उप्तमात्रमेव । तथा दोषः धातून् अधिशेते आश्रयति । ततः काले च कुप्यति सदृशदूष्यादिलाभात् । तदुक्तं—भूमौ स्थितं जलैः सिक्तं कालमेव प्रतीक्षते । अङ्कुराय यथा बीजं दोषबीजं रुजे तथा ॥ इति ( अ० सं० नि० २ ) ॥६७॥

स इति । तथा च स तत्तद्धातुगतः दोषः । प्रत्यनीकः दूष्यादिषु अतुल्यत्वेन दोषप्रतिपक्षभूतो यः । तस्य बलक्षयः दुर्बलत्वं । तस्मात् प्रत्यनीकबलक्षयात् ।

कृत्वा वेगं गतबलाः स्वे स्वे स्थाने व्यवस्थिताः ।
पुनर्विवृद्धाः स्वे काले ज्वरयन्ति नरं मलाः ॥६९॥
कफपित्तात् त्रिकग्राही पृष्ठाद्वातकफात्मकः ।
वातपित्ताच्छिरोग्राही त्रिविधः स्यात् तृतीयकः॥७०॥

दूष्यादिषु कस्यचित् तुल्यत्वेऽपि अन्यतमस्य अतुल्यस्य प्रत्यनीकभूतस्य वलवत्त्वात् तत्तद्धातुगतोऽपि दोषः एतावन्तं कालं ज्वरमारब्धुं न शक्तः । प्रत्यनीकवलक्षयात् वृद्धिं वलकालं च प्राप्य । वलकालः सततके अहोरात्रे द्वौ वारौ । अन्येद्युष्के प्रतिदिनं सकृत् । तृतीयके तृतीयं दिनं । चतुर्थके च चतुर्थं दिनं । तृतीयकं चतुर्थकं सततकं अन्येद्युष्कं चापि ज्वरं कुरुते ॥ ६८ ॥

ननु दोषाणां शरीरे सर्वदाऽवस्थितानामपि कथं सततकादिषु विरतिः ? तथा तथा पुनः प्रवृत्तिर्वास्यादिति ? आह—कृत्वा वेगं गतवला इति । मला दोषाः वेगं कृत्वा गतबलाः प्रत्यनीकवलेन दुर्वलीकृताः स्वे स्वे स्थाने आश्रयभूतेषु तत्तद्धातुषु व्यवस्थिताः तिष्ठन्ति लीयन्ते । प्रत्यनीकवलक्षयात् स्वे काले प्रागुक्ते पुनर्विवृद्धाः सन्तः नरं ज्वरयन्ति । तदुक्तं—वेगं कृत्वा विषं यद्वदाशये लीयतेऽवलं । कुप्यत्याप्तवलं भूयः काले दोषविषं तथा ॥ एवं ज्वराः प्रवर्त्तन्ते विषमाः सततादयः । दोषः प्रवर्तते तेषां स्वे काले ज्वरयन् वली ॥ निवर्तते पुनश्चैव प्रत्यनीकवलावलः । इति ( अ० सं० नि० २ ) । सुश्रुते च—यथा वेगोदये वेलाश्छादयित्वा महोदधेः । वेगहानौ तदेवाम्भस्तत्रवान्तर्निलीयते ॥ दोषवेगोदये तद्वदुदीर्येत ज्वरोऽस्य वा । वेगहानौ प्रशाम्येत यथाम्भः सागरे तथा ॥ इति ( सु० उ० ३९ ) ॥ ६९ ॥

दोषोद्रेकविशेषेण तृतीयकस्य प्रभावमाह—कफपित्तादिति । तृतीयकः । कफपित्ताद् धिकात् त्रिकग्राही त्रिके पीडामुत्पादयति । वातकफात्मकः वातकफोत्तरः पृष्ठाद् ग्राही पृष्ठे पीडामुत्पादयति । वातपित्तादधिकाच्च शिरोग्राही मूर्ध्नि तास्ता वेदना जनयति । इति त्रिविधः स्यात् ॥७०॥

---

६९ । श्लेष्मस्थाने व्यवस्थिताः इति क पुस्तके ।

चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः ।
जङ्घाभ्यां श्लैश्मिकः पूर्वं शिरस्तोऽनिलसंभवः ॥७१॥
विषमज्वर एवान्यश्चतुर्थकविपर्य्ययः ।
त्रिविधो धातुरेकैको द्विधातुस्थः करोति यम् ॥७२॥
प्रायशः सन्निपातेन दृष्टः पञ्चविधो ज्वरः ।
सन्निपाते तु यो भूयान् स दोषः परिकीर्त्तितः ॥७३॥

चतुर्थकस्य प्रभावमाह—चतुर्थक इति । चतुर्थको ज्वरः द्विविधं प्रभावं दर्शयति । तद्यथा । श्लैष्मिकः श्लेष्माधिकश्चेत् तदा पूर्वं जंघाभ्यां प्रभावं दर्शयति । प्रथमं जंघयोः पीडां करोति । ततः अन्येषु अङ्गेषु । अनिलसम्भवः वातोत्तरः पूर्वं शिरस्तः शिरसः प्रभावं दर्शयति । प्रथमं मूर्ध्नि पीडां जनयति । अनन्तरं अंगान्तरेषु । इह पित्तस्यानुद्रेकः गम्भीरधातुचारित्वात् ॥ ७१ ॥

उक्तचतुर्थकविपरीतमन्यं चतुर्थकमाह—विषमज्वर इति । चतुर्थकविपर्ययः उक्तलक्षणात् चतुर्थकात् विपरीतलक्षणः । चतुर्थकः दिनद्वयं विश्राम्यति । अयंतु दिनद्वयं ज्वरयति । चतुर्थकविपर्ययः तदाख्यः अन्यः विषमज्वरः अस्ति । अयमपि चतुर्थकः । दिनद्वयं ज्वरयित्वा तृतीयस्मिन् दिने विरमति । पुनश्चतुर्थे च प्रवर्त्तते । द्विधातुस्थः अस्थिमज्जोभयगतः । त्रिविधः एकैकः धातुः दोषः वातः पित्तं कफश्च अधिकः । यं चतुर्थकविपर्ययं करोति । तदुक्तं वृद्धवाग्भटेन—अस्थि-मज्जोभयगते चतुर्थकविपर्ययः । त्रिधा द्व्यहं ज्वरयति दिनमेकन्तु मुञ्चति ॥ इति ( अ० सं० नि० २ ) ॥ ७२ ॥

सन्ततादीनां पञ्चानां सन्निपातोद्भवत्वमाह—प्रायश इति । प्रायशः सन्निपातेन सन्ततादिःपञ्चविधः ज्वरः दृष्टः । सन्ततादयः पञ्च ज्वराः प्रायः सान्निपातिका दृश्यन्ते । प्रायग्रहणात् कदाचित् एषां द्वन्द्वादिजन्यत्वमपि दर्शयति । ननु सन्निपातार-ब्धत्वे कथं जंघाभ्यां श्लैष्मिकः पूर्वमिति श्लैष्मिकत्वादि व्यपदेशः स्यादिति ? अत

ऋत्वहोरात्रदोषाणां मनसश्च बलाबलात् ।
कालमर्थवशाच्चैव ज्वरस्तं तं प्रपद्यते ॥७४॥
गुरुत्वं दैन्यमुद्वेगः सदनं छर्द्यरोचकौ ।
रसस्थिते वहिस्तापः साङ्गमर्दो विजृम्भणम् ॥७५॥
रक्तोष्णाः पिड़कास्तृष्णा सरक्तं ष्ठीवनं मुहुः ।
दाहरागभ्रममदाः प्रलापो रक्तसंस्थिते ॥७६॥

आह—सन्निपाते त्विति । सन्निपाते त्रयाणां मध्ये यो दोषः भूयान् बहुतरः स परिकीर्तितः व्यपदिश्यते । भूयसा व्यपदेशो भवति ॥ ७३ ॥

दोषकालबलाबलात् सन्ततादिपञ्चविधत्वं ज्वरस्य भवति । पुनः पञ्चविधो दृष्टो दोषकालबलाबलादित्युक्तं । सम्प्रति तदेव विवृत्य दर्शयति—ऋत्वहोरात्रेति । ऋतुः शिशिरादिः । अहोरात्रः पूर्वाह्णप्रदोषादिलक्षणः । दोषश्च । दूष्यः । प्रकृतिश्चापि । तेषां बलमबलञ्च बलाबलं बलाबले । तुल्यातुल्यकालदूष्यप्रकृतिकृतात् दोषाणां बलाबलात् । मनसः बलाबलात् । अर्थवशात् कर्मवशात् । कर्मणः पूर्वकृतस्य बलाबलाच्च । ज्वरः तं तं सन्ततादिज्वरोक्तं कालं प्रपद्यते प्राप्नोति । सन्ततादिरूपो भवति इत्यर्थः । तदुक्तं—बलाबलेन दोषाणामन्नचेष्टादिजन्मना । ज्वरः स्यान्मनसस्तद्वत् कर्मणश्च तदा तदा ॥ इति ( अ० सं० नि० २ ) ॥ ७४ ॥

रसादिधात्वाश्रयत्वेन ज्वरः सप्तविधः उक्तः । क्रमेण तल्लक्षणमाह । तत्रादौ रसस्थस्य लक्षणं—गुरुत्वमित्यादि । रसस्थिते ज्वरे गुरुत्वं गात्राणां । दैन्यं क्लान्तचित्तत्वं । उद्वेगः । सदनं अंगसादः । छर्दिः अरोचकश्च तौ । सह अंगमर्देन वर्तमानः सांगमर्दः । वहिस्तापः । विजृम्भणं च जायते । गौरवादीनि रसस्थिते ज्वरे लिंगानि । सुश्रुते च—गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ । रसस्थे तु ज्वरे लिंगं दैन्यं चास्योपजायते ॥ इति ( सु० उ० ३६ ) ॥ ७५ ॥

रक्तस्थज्वरस्य लक्षणमाह—रक्तोष्णा इति । रक्तसंस्थिते ज्वरे । रक्तोष्णाः

---

७५ । गुरुत्वं शीतमुद्वेगः इति ग ङ पुस्तकयोः ।

७६ । रक्तोत्थाः पिड़काः इति क पुस्तके ।

अन्तर्दाहः सतृण्मोहः सग्लानिः सृष्टविट्कता ।
दौर्गन्ध्यं गात्रविक्षेपो ज्वरे मांसस्थिते भवेत् ॥७७॥
स्वेदस्तीव्रा पिपासा च प्रलापो वम्यभीक्ष्णशः ।
स्वगन्धास्यसहत्वञ्च मेदःस्थे ग्लान्यरोचकौ ॥७८॥
विरेकवमने चोभे सास्थिभेदं प्रकूजनम् ।
विक्षेपणञ्च गात्राणां श्वासश्चास्थिगते ज्वरे ॥७९॥

रक्ताः रक्तवर्णाः उष्णाश्च ता रक्तोष्णाः । पिडकाः । तृष्णा । मुहुः सरक्तं ष्ठीवनं रक्तनिष्ठीवनं । दाहः । रागः । भ्रमः । मदश्च । ते । प्रलापश्च । रक्तोष्णपिड़कादीनि रक्तस्थे ज्वरे लिंगानि। तदुक्तं-रक्तनिष्ठीवनं तृष्णा रक्तोष्णपिडकोद्गमः। दाहरागभ्रममदप्रलापा रक्तसंस्थिते ॥ इति ( अ० सं० नि० २ ) । सुश्रुतेनाप्युक्तं—रक्तनिष्ठीवनं दाहः स्वेदश्छर्दनविभ्रमौ। प्रलापः पिकाडतृष्णा रक्तप्राप्ते ज्वरे नृणां ॥ इति ( सु० उ० ३९ ) ॥ ७६ ॥

मांसस्थज्वरं लक्षयति—अन्तर्दाह इति। मांसस्थिते ज्वरे। अन्तर्दाहः। सह तृषा वर्तमानः सतृट् । मोहः । सग्लानिः सृष्टविट्कता सृष्टपुरीषत्वं । दौर्गन्ध्यं । गात्रमं विक्षेपश्च। भवेत्। अन्तर्दाहादीनि मांसस्थज्वरस्य लक्षणानि। सुश्रुते च—पिण्डिकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता। ऊष्मान्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ॥ इति ( सु० उ० ३९ ) ॥ ७७ ॥

मेदःस्थज्वरस्य लक्षणमाह—स्वेद इति। मेदःस्थे ज्वरे स्वेदः अधिकः। तीव्रा पिपासा। प्रलापः। अभीक्ष्णशः पुनःपुनः वमो। स्वगन्धस्य मेदोगन्धस्य असहत्वं असहिष्णुता। ग्लानिः अरोचश्च तौ। मेदःस्थे ज्वरे स्वेदादीनि लिंगानि। सुश्रुतेनाप्युक्तं—भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव चः दौर्गन्ध्यारोचकौग्लानिर्मेदःस्थे चासहिष्णुता ॥ इति ( सु० उ० ३९ ) ॥ ७८ ॥

अस्थिगतस्य ज्वरस्य लक्षणमाह—विरेकवमने इति। अस्थिगते ज्वरे। विरेको

७७। अन्तर्दाहोऽधिकस्तृष्णा इति क पुस्तके।
७८। सगन्धस्यासहत्वं च इति ख पुस्तके।

हिक्का श्वासस्तथा कासस्तमसश्चातिदर्शनम् ।
मर्म्मच्छेदो बहिः शैत्यं दाहोऽन्तश्चैव मज्जगे ॥८०॥
शुक्रस्थानगतः शुक्रमोक्षं कृत्वा विनाश्य च ।
प्राणं वाय्वग्निसोमैश्च सार्द्धं गच्छत्यसौ विभुः ॥८१॥

वमनञ्च ते उभे भवतः। सास्थिभेदं प्रकूजनं अस्थ्नां भेदः प्रकूजनं च। गात्राणां विक्षेपणं। श्वासश्च। स्यात्। सुश्रुतेऽपि—भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्दिरेव च। विक्षेपणं च गात्राणामेतदस्थिगते ज्वरे ॥ इति ( सु० उ० ३९ ) ॥ ७९ ॥

मज्जगतज्वरस्य लक्षणमाह—हिक्केति। मज्जगे ज्वरे। हिक्का। श्वासः। तथा कासः। तमसः अन्धकारस्य अतिदर्शनं। अन्धकारप्रवेशनमिव। मर्मच्छेदः हृदयस्य छेदनमिव। बहिः शैत्यं। अन्तर्दाहश्च। स्यात्। हिक्कादीनि मज्जगज्वरस्य लक्षणानि। तदुक्तं सुश्रुतेनापि—अन्तर्दाहो महाश्वासो मर्मच्छेदश्च मज्जगे। इति ( सु० उ० ३९ ) ॥ ८० ॥

शुक्रस्थं ज्वरं विवृणोति—शुक्रस्थानगत इति। शुक्रस्थानगतः असौ विभुः ईश्वरः सर्वसंहारसामर्थ्यात् ज्वरः आतुरस्य शुक्रमोक्षं कृत्वा प्राणं विनाश्य च वाय्वग्नि-सोमैः। चकारात् क्षित्या च। आकाशस्याग्रहणं अक्रियत्वात्। सर्वव्यापित्वाच्च। वाय्वादिभिः चतुर्भिः सूक्ष्मभूतैः। एतल्लिङ्गं शरीरस्योपलक्षणं। तत्सम्बन्धात् आत्माप्याक्षिप्यते। सार्धं सह गच्छति। ज्वरो गच्छति। लिङ्गशरीरेण सार्धं आत्मापि गच्छति। उत्पत्तौ चतुर्भिः सूक्ष्मभूतैः तन्मात्राख्यैः सह आत्मनो देहात् देहान्तर-संसरणं कतिधापुरुषीये प्रागुक्तं। तथा च—भूतैश्चतुर्भिः सहितः स सूक्ष्मैर्मनोजवो देहमुपैति देहात्। इति (च० शा० २)। मरणकाले तैश्चतुर्भिः सूक्ष्मभूतैः सहैव आत्मा मातापितृजस्थूलदेहात् बहिर्गच्छति। लिङ्गशरीरस्य नियतत्वात्। तथा च ईश्वर-कृष्णः—पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तं। संसरति निरुपभोगं भावै-रधिवासितं लिंगं ॥ इति ( सांख्यकारिका, ४० )। नियतमितिआदि सर्गात् आ आच महाप्रलयादवतिष्ठते। शुक्रस्थानगते ज्वरे शुक्रप्रवृत्तिर्मृत्युश्च। सुश्रुतेनाप्युक्तं-

८१। प्राणा वाय्वग्निसोमैः इति ख पुस्तके।

रसरक्ताश्रितः साध्यो मेदोमांसगतश्च यः ।
अस्थिमज्जगतः कृच्छ्रः शुक्रस्थो नैव सिध्यति ॥८२॥
हेतुभिर्लक्षणैश्चोक्तः पूर्व्वमष्टविधो ज्वरः ।
समासेनोपदिष्टस्य व्यासतः शृणु लक्षणम् ॥८३॥
रोमहर्षश्च दाहश्च पर्वभेदः शिरोरुजा ।
कण्ठास्यशोषो वमथुस्तृष्णा मूर्च्छा भ्रमोऽरतिः
स्वप्ननाशोऽतिवाग्जृम्भा वातपित्तज्वराकृतिः ॥८४॥

मरणं प्राप्नुयात्तत्र शुक्रस्थानेगते ज्वरे। शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ॥ दग्ध्वेन्धनं यथा वह्निर्धातून् हत्वा विषं यथा । कृतकृत्यो व्रजेच्छान्तिं देहं हत्वा तथा ज्वरः ॥ इति ( सु० उ० ३९ ) ॥ ८१ ॥

रसादिसप्तधातुगतानां ज्वराणां लक्षणान्युक्त्वा सम्प्रति तेषां साध्यासाध्यत्वविशेषमाह—रसरक्ताश्रित इति । उक्तेषु रसाद्याश्रितेषु मध्ये रसरक्ताश्रितः ज्वरः साध्यः । यश्च मेदोमांसगतः सोऽपि साध्यः । अस्थिमज्जगतः ज्वरः कृच्छ्रः कृच्छ्रसाध्यः । शुक्रस्थो ज्वरो नैव सिध्यति । सः असाध्य एव । वृद्धवाग्भटस्तु मज्जगतस्यापि असाध्यत्वमाह । तथा च—उत्तरोत्तरदुःसाध्याः पञ्चात्रान्यौ तु वर्जयेत् । इति ( अ० सं० नि० २ ) ॥ ८२ ॥

सम्प्रति अष्टविधज्वराकृतिर्वक्तव्या । तत्राह—हेतुभिरिति । अष्टविधः ज्वरः पूर्वं निदानस्थाने हेतुभिः लक्षणैश्च उक्तः । तत्र समासेन संक्षेपेण उपदिष्टस्य द्वान्द्विकसान्निपातिकागन्तुकस्य लक्षणं इह व्यासतः विस्तरतः शृणु । एकैकदोषजास्त्रय : प्राक् निदानस्थाने विस्तरेणोक्ताः । तस्मादिह ते न पुनर्वक्तव्याः । ये च द्वन्द्वसन्निपातागन्तुजाः तत्र समासेनोपदिष्टाः तेषामेव इह विस्तरेणाभिधानं ॥ ८३ ॥

द्वान्द्विकं त्रिविधं लक्षयति । तत्रादौ वातपित्तज्वरस्य लक्षणमाह—रोमहर्ष इत्यादि । रोम्णां हर्षः रोमहर्षः । दाहः । पर्वणां भेदः भेदनवत् पीडा पर्वभेदः । शिरसः

शीतको गौरवं तन्द्रा स्तैमित्यं पर्वणाञ्च रुक् ।
शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्त्तनम् ।
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥८५॥
मुहुर्दाहो मुहुः शीतं स्वेदः स्तम्भो मुहुर्मुहुः ॥८६॥
मोहः कासोऽरुचिस्तृष्णा श्लेष्मपित्तप्रवर्त्तनम् ।
लिप्ततिक्तास्यता तन्द्रा श्लेष्मपित्तज्वराकृतिः ॥८७॥

रुजा रुक् शिरोरुजा । कण्ठास्यशोषः कण्ठस्य आस्यस्य मुखस्य च शोषः शुष्कत्वं । वमथुः वमिः । तृषा । मूर्च्छा । भ्रमः । अरतिः अनवस्थितचित्तत्वं । स्वप्ननाशः अनिद्रा । अतिवाक् । जृम्भा च । इति वातपित्तज्वरस्य आकृतिर्लक्षणं । सुश्रुतेऽपि—तृष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा । कण्ठास्यशोषो वमथू रोमहर्षोऽरुचिस्तथा ॥ पर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः । इति (सु० उ० ३६) ॥ ८४ ॥

वातश्लेष्मज्वरस्य लक्षणमाह—शीतक इत्यादि । शीतकः शीतः । गौरवं गात्राणां गुरुत्वं । तन्द्रा निद्रार्त्तस्येव विषयाग्रहणं । स्तैमित्यं अङ्गानामार्द्रपटावगुण्ठितत्वमिव प्रतीतिः । निश्चलत्वमिति डल्लणः । पर्वणां रुक् । शिरसः ग्रहः ग्रहणं शिरोग्रहः । शिरो गृहीतमिव मन्यते । प्रतिश्यायः । कासः । स्वेदस्य अप्रवर्तनं अप्रवृत्तिः अनिर्गमः । सन्तापः । मध्यवेगः नातितीक्ष्णः नातिमृदुः । इति वातश्लेष्मज्वरस्याकृतिः । सुश्रुतेनाप्युक्तं—स्तैमित्यं पर्वणां भेदो निद्रा गौरवमेव च । शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्तनं ॥ सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः । इति (सु० उ० ३६) ॥ ८५ ॥

पित्तश्लेष्मज्वरस्य लक्षणमाह—मुहुर्दाह इत्यादि । मुहुः दाहः । मुहुः शीतं च । मुहुः स्वेदः । मुहुः स्तम्भश्च । दाहशीतस्वेदस्तम्भानां अव्यवस्था । मोहः । कासः । अरुचिः । तृष्णा । श्लेष्मपित्तप्रवर्तनं श्लेष्मपित्तयोः प्रवृत्तिः निर्गमः । लिप्तं तिक्तं

इत्येते द्वन्द्वजाः प्रोक्ताः सन्निपातज उच्यते ।
सन्निपातज्वरस्योर्ध्वं त्रयोदशविधस्य च ।
प्राक् सूत्रितस्य वक्ष्यामि लक्षणं वै पृथक् पृथक् ॥८८॥
भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक् ।
वातपित्तोल्वणे विद्याल्लिङ्गं मन्दकफे ज्वरे ॥८९॥

च आस्यं मुखं यस्य सः लिप्ततिक्तास्यः । तस्य भावः लिप्ततिक्तास्यता । मुखस्य लिप्तत्वं कफेन । तिक्तत्वं च पित्तेन भवति । इति श्लेष्मपित्तज्वरस्य आकृतिर्लक्षणं । सुश्रुते च—लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तृषा । मुहुर्दाहो मुहुः शीतं श्लेष्मपित्तज्वराकृतिः ॥ इति ( सु० उ० ३९ ) । द्वन्द्वजानुपसंहरति—इत्येत इति । सन्निपातज्वरमाह—सन्निपातज इति ॥ ८६ । ८७ ॥

सन्निपातज्वरस्येति । उर्द्ध्वमतः परं । प्राक् कियन्तःशिरसीये सूत्रितस्य उद्दिष्टस्य त्रयोदशविधस्य सन्निपातज्वरस्य पृथक् पृथक् लक्षणं वक्ष्यामि । तथा च कियन्तःशिरसीये—द्व्युल्बणैकोल्वणैः षट् स्युर्हीनमध्याधिकैश्च षट् । समैश्चैको विकारस्ते सन्निपातास्त्रयोदश ॥ इति सन्निपतितानां दोषाणां वृद्धानां मध्ये द्वयोरुल्वणत्वे अतिशये त्रयः । एकस्य च उल्वणत्वे च त्रयः । इति द्व्युल्वणैकोल्वणैर्दोषैः षट् । हीनमध्याधिकैश्च षट् । समैस्तुल्यवृद्धैः दोषैः एकः । इति त्रयोदश सन्निपाता वृद्धौ । क्षयेऽप्येवं त्रयोदश भवन्ति । युगपद्वृद्धिक्षयकृता अन्येऽपि द्वादश सन्ति । यथा तत्रैव—वृद्धिक्षयकृतश्चान्यो विकल्प उपदिश्यते ॥ वृद्धिरेकस्य समता चैकस्यैकस्य संक्षयः । द्वन्द्ववृद्धिः क्षयश्चैकस्यैकवृद्धिर्द्वयोः क्षयः ॥ इति । ते च द्वादश तत्रैव—प्रकृतिस्थं यदा पित्तमित्यादिना वेपयत्यथ मानवमित्यन्तेन च ग्रन्थेन लक्षणैरुदाहृताः । द्व्युल्वणैकोल्वणाद्या ये च त्रयोदश तत्र नोक्ताः ते हि अत्र लक्षणैरुदाहरिष्यन्ते ॥८८॥

तत्रादौ द्व्युल्वणत्रयं लक्षयति—भ्रमः पिपासा इत्यादि । भ्रमः । पिपासा । दाहः ।

---

८८ । संनिपातज्वरस्योर्ध्वमतो वक्ष्यामि लक्षणं इति ड पुस्तके ।

शैत्यं कासोऽरुचिस्तन्द्रा पिपासा दाहरुग्व्यथाः ।
वातश्लेष्मोल्बणे व्याधौ लिङ्गं पित्तावरे विदुः ॥९०॥
छर्दिः शैत्यं मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना ।
मन्दवाते व्यवस्यन्ति लिङ्गं पित्तकफोल्बणे ॥९१॥
सन्ध्यस्थिशिरसः शूलं प्रलापो गौरवं भ्रमः ।
वातोल्बणे स्याद् द्व्यनुगे तृष्णा कण्ठास्यशुष्कता ॥९२॥

गौरवं गात्राणां गुरुत्वं । शिरसः अतिरुक् च । एतत् सर्वं । वातपित्ते उल्वणे कफाद्वृद्धादधिकवृद्धे यत्र सः वातपित्तोल्वणः । तस्मिन् । मन्दः अधिकवृद्धवातपित्तापेक्षया मन्दः अल्पवृद्ध इत्यर्थः । कफः यस्मिन् तस्मिन् तथाविधे । एवं परत्रापि व्याख्येयं । तथाविधे सान्निपातिके ज्वरे लिङ्गं विद्यात् जानीयात् भिषक् । सन्निपतितानां मध्ये इह कफो वृद्धः । वातपित्ते अधिकवृद्धे ॥ ८९ ॥

शैत्यमिति । शैत्यं । कासः । अरुचिः । तन्द्रा । पिपासा । दाहः । रुक् । व्यथा च । ताश्च । एतत् सर्वं वातश्लेष्मोल्वणे पित्तमवरं अधमं अधिकवृद्धवातश्लेष्मापेक्षया हीनमल्पवृद्धं यस्मिन् तथाविधे व्याधौ लिङ्गं विदुः जानन्ति भिषजः । इह पित्तं वृद्धं । वातश्लेष्माणौ अधिकवृद्धौ ॥ ९० ॥

छर्दिरिति । छर्दिः । मुहुः शैत्यं । मुहुर्दाहश्च । तृष्णा । मोहः । अस्थिवेदना च । एतत् सर्वं मन्दवाते पित्तकफोल्वणे ज्वरे लिङ्गं व्यवस्यन्ति लिङ्गत्वेनाध्यवस्यन्ति । शैत्यं श्लेष्मणा । दाहः पित्तेन । तयोरव्यवस्थितत्वं योगवाहस्य वायोश्चलस्वभावत्वात् । इह वातो वृद्धः । पित्तकफावधिकवृद्धौ । इति द्व्युल्वणास्त्रयः ॥९१॥

एकोल्वणांस्त्रीनाह—सन्ध्यस्थीति । वातोल्वणे द्वौ पित्तकफौ अनुगौ अनुगतौ अधिकवृद्धवातापेक्षया मन्दौ यत्र स तस्मिन् द्व्यनुगे । तथाविधे सन्निपाते सन्ध्यस्थिशिरसः सन्ध्यस्थ्नां शिरसश्च शूलं । प्रलापः । गौरवं । भ्रमः । तृष्णा । कण्ठस्य आस्यस्य मुखस्य च शुष्कता कण्ठास्यशुष्कता च स्यात् । वातोल्वणे मन्दपित्तकफे सन्निपाते सन्ध्यस्थिशिरःशूलादिकं लिङ्गं । इह पित्तकफौ वृद्धौ । वातः अधिकवृद्धः ॥ ९२ ॥

रक्तविण्मूत्रतेति । पित्तं गरीयः वातकफाभ्यामधिकतरं यस्मिन् तस्मिन् पित्त-

---

८८-९२० । प्राक्सूचितस्य वक्ष्यामि……लिंगं वाताधिके मतं इति संदर्भो न पठ्यते ट पुस्तके ।

रक्तविण्मूत्रता दाहः स्वेदस्तृड्बलसंक्षयः ।
मूर्च्छा चाति त्रिदोषे स्याल्लिङ्गं पित्तगरीयसि ॥६३॥
आलस्यारुचिहृल्लासदाहवम्यरतिभ्रमैः ।
कफोल्वणं सन्निपातं तन्द्राकासेन चादिशेत् ॥६४॥
प्रतिश्या च्छर्दिरालस्यं तन्द्राऽरुच्यग्निमार्द्दवम् ।
हीनवाते पित्तमध्ये लिंगं श्लेष्माधिके मतम् ॥६५॥
हारिद्रमूत्रनेत्रत्वं दाहस्तृष्णा भ्रमोऽरुचिः ।
हीनवाते मध्यकफे लिङ्गं पित्ताधिके मतम् ॥६६॥

गरीयसि । तेन मन्दवातकफे । तथाविधे त्रिदोषे सन्निपाते । रक्तं विण्मूत्रं च तत् यस्य स तस्य भावः रक्तविण्मूत्रता । दाहः । स्वेदः । तृट् तृष्णा । बलस्य संक्षयः । मूर्च्छा च । लिङ्गं स्यात् । इह वातकफौ वृद्धौ । पित्तमधिकवृद्धं ॥ ६३ ॥

आलस्येति । आलस्यं । अरुचिः । हृल्लासः । दाहः । वमिः । अरतिः अनवस्थितचित्तत्वं । भ्रमश्च । ते । तैः । तन्द्राकासेन तन्द्राकासाभ्यां च । एभिर्लक्षणैः कफोल्वणं अतो मन्दवातपित्तं तथाविधं सन्निपातं आदिशेत् लक्षयेत् । इह वातपित्ते वृद्धे । कफः अधिकवृद्धः । इति एकोल्वणास्त्रयः ॥६४॥

हीनमध्यादिकैश्च षट् इति । षण्णामुदाहरणं क्रमेणाह—प्रतिश्येति । प्रतिश्या प्रतिश्यायः । छर्दिः । आलस्यं । तन्द्रा । अरुचिः । अग्निमार्द्दवं अग्निमान्द्यञ्च । तत् । एतत् सर्वं हीनवाते पित्तमध्ये श्लेष्माधिके तथाविधे सन्निपाते लिङ्गं मतं । इह वातो वृद्धः । पित्तं वृद्धतरं । श्लेष्मा वृद्धतमः ॥६५॥

हारिद्रेति । हारिद्राणि हरिद्रावर्णानि मूत्रं नेत्रे च तानि यस्य स हारिद्रमूत्रनेत्रः । तस्य भावः हारिद्रमूत्रनेत्रत्वं । दाहः । तृष्णा । भ्रमः । अरुचिश्च । एतत् सर्वं हीनवाते मध्यकफे पित्ताधिके सन्निपाते लिङ्गं मतं । इह वातो वृद्धः । कफो वृद्धतरः । पित्तं वृद्धतमं ॥ ६६ ॥

---

६५ । तन्द्रावम्यग्निमार्द्दवं इति क पुस्तके ।

शिरोरुग्वेपथुः श्वासः प्रलापच्छर्द्यरोचकाः ।
हीनपित्ते मध्यकफे लिङ्गं स्यान्मारुताधिके ॥९७॥
शीतको गौरवं तन्द्रा प्रलापोऽस्थिशिरोऽतिरुक् ।
हीनपित्ते वातमध्ये लिंगं श्लेष्माधिके विदुः ॥९८॥
पर्व्वभेदोऽग्निदौर्ब्बल्यं तृष्णा दाहोऽरुचिर्भ्रमः ।
कफहीने वातमध्ये लिङ्गं पित्ताधिके मतम् ॥९९॥
श्वासः कासः प्रतिश्यायो मुखशोषोऽतिपार्श्वरुक् ।
कफहीने पित्तमध्ये लिङ्गं वाताधिके मतम् ॥१००॥
क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा ।
सास्रावे कलुषे रक्ते निर्भुग्ने चापि दर्शने ॥१०१॥

शिरोरुगिति । शिरोरुक् । वेपथुः । श्वासः । प्रलापः । छर्दिः । अरोचकश्च । रे । शिरोरुगादिकं हीनपित्ते मध्यकफे मारुतेऽधिके वातेऽधिके च लिङ्गं स्यात् । इह पित्तं वृद्धं । कफो वृद्धतरः । वातो वृद्धतमः ॥ ९७ ॥

शीतक इति । शीतकः शीतः । गौरवं । तन्द्रा । प्रलापः । अस्थिशिरोऽतिरुक् । अस्थ्नां शिरसश्च अतिरुक् । सा च । एतत् हीनपिते वातमध्ये श्लेष्माधिके त्रिदोषे लिङ्गं विदुः । इह पित्तं वृद्धं । वातो वृद्धतरः । श्लेष्मा वृद्धतमः ॥ ९८ ॥

पर्वभेद इति । पर्वणां भेदः । अग्नेर्जाठरस्य दौर्वल्यं । तृष्णा । दाहः । अरुचिः । भ्रमश्च इति । कफो हीनो यत्र तस्मिन् कफहीने । मन्दकफे वातमध्ये पित्ताधिके च सन्निपाते लिङ्गं मतं । अत्र श्लेष्मा वृद्धः । वातो वृद्धतरः । पित्तं वृद्धतमं ॥ ९९ ॥

श्वास इति । श्वासः । कासः । प्रतिश्यायः । मुखशोषः । अतिपार्श्वरुक् पार्श्वयोरतिरुक् च । एतत् सर्वं कफहीने मन्दकफे पित्तमध्ये वाताधिके च तथाविधे सन्निपाते लिङ्गं मतं । इह कफो वृद्धः । पित्तं वृद्धतरं । वातो वृद्धतमः । इति हीनमध्याधिकैः षट् ॥ १०० ॥

द्व्युल्वणास्त्रयः एकोल्वणास्त्रयः हीनमध्याधिकैः षट् इति द्वादश उक्ताः । सम्प्रति समैरेकः इति त्रयोदशं सन्निपातं लक्षयति—क्षणे दाह इत्यादि । क्षणे दाहः ।

सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः ।
तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः ॥१०२॥
परिदग्धा खरस्पर्शा जिह्वा स्रस्तांगता परम् ।
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ॥१०३॥
शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा ।
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ॥१०४॥
कृशत्वं नातिगात्राणां प्रततं कण्ठकूजनम् ।
कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम् ॥१०५॥
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च ।
चिरात् पाकश्च दोषाणां सन्निपातज्वराकृतिः ॥१०६॥

क्षणे च शीतं। दाहशीतयोरव्यवस्थितत्वं। योगवाहिनो वातस्य चलत्वात्। अस्थिसन्धिशिरसां शूलं। दर्शने लोचने सास्रावे साश्रुणी। कलुषे आविले। रक्ते रक्तवर्णे। निर्भुग्ने अतिकुटिले चापि भवतः। कर्णौ सस्वनौ सशब्दौ। सरुजौ च। कण्ठः शूकैः शूकधान्यादेः शूकैः आवृत इव। तन्द्रा। मोहः। प्रलापः। कासः। श्वासः। अरुचिः। भ्रमः। जिह्वा परिदग्धा दग्धवत् कृष्णवर्णा। खरः कर्कशः स्पर्शो यस्याः सा। तथोक्ता च। परमतीव स्रस्तांगता शिथिलांगसन्धिता। कफेन उन्मिश्रितस्य रक्तपित्तस्य रक्तस्य च पित्तस्य च ष्ठीवनं स्वल्पोद्गिरणं। शिरसः लोठनं इतस्ततः चालनं। तृष्णा। निन्द्रानाशः। हृदि व्यथा। स्वेदमूत्रपुरीषाणां चिरात् अल्पशः दर्शनं प्रवृत्तिः। गात्राणां नाति कृशत्वं। प्रततं सततं कण्ठस्य कूजनं सस्वनत्वं। श्यावरक्तानां कोठानां। कोठो निर्मुखपिटकप्रायः। तल्लक्षणं—वरटीदष्टसंकाशः कण्डूसमानोऽस्रकफपित्तात्। क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः॥ इति। मण्डलानां च दर्शनं अंगेष्वाविर्भावः। मूकत्वं निर्वाक्त्वं। अल्पवचनत्वं वा। स्रोतसां पाकः। उदरस्य गुरुत्वं उदरगौरवं। दोषाणां चिरात् पाकः।

---

१०६। पूतित्वं स्रोतसां पाकः इति ग ण पुस्तकयोः।

[दोषे विबद्धे नष्टेऽग्नौ सर्व्वसम्पूर्णलक्षणः ।
सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्त्वतोऽन्यथा/॥१०७॥
निदाने त्रिविधा प्रोक्ता या पृथग्जज्वराकृतिः ।
संसर्गसन्निपातानां तथा चोक्तं स्वलक्षणम् ॥१०८॥
आगन्तुरष्टमो यस्तु स निर्द्दिष्टश्चतुर्व्विधः ।
अभिघाताभिषङ्गाभ्यामभिचाराभिशापतः ॥१०९॥

अतिसामत्वात्। इति सन्निपातज्वरस्य समोल्वणनिर्दोपारब्धज्वरस्य आकृतिः लक्षणं ॥ १०१-१०६ ॥

सन्निपातज्वरस्यासाध्यत्वं कृच्छ्रसाध्यत्वं च सलक्षणमाह—दोषे विबद्धे इति। दोषे मले विबद्धे। अग्नौ जाठरे नष्टे च सति। सर्वाणि सम्पूर्णानि सम्यक् पूर्णानि। तेन बलवन्तीत्यर्थः। लक्षणानि यस्य सः। तथाविधः सन्निपातज्वरः असाध्यः। अतः एतस्मात् उक्तलक्षणात् अन्यथा अन्यविधः असर्वसम्पूर्णलक्षणः सन्निपातज्वरः कृच्छ्रसाध्यः। सन्निपातः सुखसाध्यो नैव भवति। अस्यातिकृच्छ्रसाध्यत्वं प्राक् यज्ञःपुरुषीयेऽप्युक्तं—सन्निपातो दुश्चिकित्स्यानामिति ॥१०७॥

निदाने इति। पृथग्जाः एकैकदोषजाः वातपित्तकफजाः त्रयः ज्वराः। तेषां आकृतिः या त्रिविधा। सा निदाने स्थाने प्रोक्ता। तत्र विस्तरेणाभिधानात् इह न पुनर्वचनं। तथा संसर्गसन्निपातानां च स्वलक्षणं इह उक्तं। निदानस्थाने त्रिविधज्वरलिङ्गान्युक्त्वा तेषां यथायथमतिदेशः त्रिविधे द्वान्द्विके सान्निपातिके च कृतः। न तु तत्र द्वान्द्विकसान्निपातिकानां पृथग् लक्षणमुक्तं ॥१०८॥

कारणभेदादष्टसु ज्वरेषु पृथक् संसर्गसन्निपातजाः निजाः सप्त लक्षणैरुक्ताः। साम्प्रतमागन्तुकारणमष्टममाह—आगन्तुरिति। आगन्तुः आगन्तुकारणजन्यः बाह्यहेतुजः यः अष्टमः ज्वरः सः अभिघाताभिषङ्गाभ्यां अभिघातः शस्त्रलोष्टादिभिरभिहननं। अभिषङ्गः कामशोकादीनां भूतानाञ्च सम्बन्धः। अभिचाराभिशापतः अभिचाराभि-

शस्त्रलोष्टकशाकाष्ठमुष्ट्यरत्नितलद्विजैः ।
तद्विधैश्च हते गात्रे ज्वरः स्यादभिघातजः ॥११०॥
तत्राभिघातजे वायुः प्रायो रक्तं प्रदूषयन् ।
सव्यथाशोफवैवर्ण्यं करोति सरुजं ज्वरम् ॥१११॥
कामशोकभयक्रोधैरभिषक्तस्य यो ज्वरः ।
सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः ॥११२॥

शापाभ्यां । अभिचारः मन्त्रादिभिर्मारणक्रिया । अभिशापः ब्रह्मर्षिगुरुसिद्धवृद्धादीनामाक्रोशजन्यः । अभिघाताभिषङ्गाभिचाराभिशापेभ्यश्चतुर्भ्यो हेतुभ्यो जातत्वात् चतुर्विधः निर्दिष्टः उक्तः ॥ १०९॥

तत्राभिघातजं विवृणोति—शस्त्रलोष्टेति । शस्त्रं । लोष्टं । कशा अश्वादिताडनरज्जुः । काष्ठं । मुष्टिः बद्धपाणिः । अरत्निः विस्तृतकनिष्ठाङ्गुलिः समुष्टिको हस्तः । अरत्निस्तु निष्कनिष्ठेन मुष्टिना । इति । इह हस्तमात्रः । तस्य तलं । अरत्नितलं करतलं वा । द्विजः दन्तः । तैः । तद्विधैः अन्यैश्चापि नखादिभिः । हते आहते गात्रे सति यो ज्वरो जायते सः अभिघातजः स्यात् ॥ ११० ॥

आगन्तुः किञ्चित्कालं केवलो भूत्वा पश्चाद् दोषैरनुबध्यते । तत्र अभिघातजे दोषानुबन्धं दर्शयति—तत्राभिघातजे इति । तत्र अभिघातजे वायुः प्रायः रक्तं प्रदूषयन् । प्राय इत्यनेन कदापि मांसादीनामपि दुष्टिरिति ख्याप्यते । सव्यथाशोफवैवर्ण्यं । सरुजं । एतदभिघातज्वरलक्षणं । ज्वरं करोति । निदानस्थानेऽपि—स किञ्चित्कालमागन्तुः केवलो भूत्वा पश्चाद् दोषैरनुबध्यते । तत्राभिघातजो वायुना दुष्टशोणिताधिष्ठानेन । अभिषङ्गजः पुनर्वातपित्ताभ्याम् । अभिचाराभिशापजौ तु सन्निपातेनानुबध्येते । इति ( च० नि० १ ) ॥ १११ ॥

अभिषङ्गज्वरमाह—कामशोकेति । कामः । शोकः । भयं । क्रोधश्च । तैः अभिषक्तस्य पुंसः यो ज्वरः जायते सः अभिषङ्गज्वरो ज्ञेयः । यश्च ज्वरः भूताभिषङ्गजः भूताभिषङ्गात् जायते सोऽपि अभिषंगज्वरो ज्ञेयः ॥ ११२ ॥

कामशोकभयाद्वायुः क्रोधात् पित्तं त्रयो मलाः ।
भूताभिषंगात् कुप्यन्ति भूतसामान्यलक्षणाः ।
भूताधिकारे व्याख्यातं तदष्टविधलक्षणम् ॥११३॥
विषवृक्षानिलस्पर्शात् तथान्यैर्विषसम्भवैः ।
अभिषक्तस्य चाप्याहुर्ज्वरमेकेऽभिषंगजम् ॥११४॥
चिकित्सया विषघ्न्यैव स शमं लभते नरः ॥११५॥

अभिषङ्गज्वरे दोषानुबन्धमाह—कामशोकेति । कामशोकभयात् वायुः कुप्यति । क्रोधात् पित्तं कुप्यति । भूताभिषङ्गात् भूतावेशात् त्रयो मला दोषाः भूतसामान्यलक्षणाः—उन्मादचिकित्सिते देवादयोऽष्टौ भूताः उन्मादकर्त्तारो वक्ष्यन्ते । तेषु येन भूतेनाविष्टः तत्तुल्यलक्षणाः सन्तः कुप्यन्ति । तेन भूताभिषङ्गज्वरो भूतोन्मादतुल्यलक्षण इति ज्ञेयं । भूतेति । भूताधिकारे भूतोन्मादाधिकारे उन्मादकराणां भूतानां अष्टानां तदष्टविधलक्षणं व्याख्यातं—सौम्यदृष्टिरित्यादिना पिशाचोन्मत्तं विद्यादित्यन्तेन ग्रन्थेन । अतः इह नोच्यते ॥ ११३ ॥

विषवातस्पर्शादिभ्योऽभिषङ्गज्वरं दर्शयति—विषवृक्षेति । विषवृक्षस्य अनिलः वातः । विषवृक्षो विषानिलो वा । तत्स्पर्शात् । तस्मात् । तथा अन्यैः विषसम्भवैः वस्तुभिः अभिषक्तस्य वा । यो ज्वरो जायते एके केचित् तमपि अभिषङ्गजं ज्वरमाहुः । विषसम्भवाभिषङ्गज्वरवान् नरः विषघ्न्या चिकित्सया शमं लभते ॥ ११४ । ११५ ॥

अभिचाराभिशापाभ्यां ज्वरमाह—अभिचाराभिशापाभ्यामिति । सिद्धानां मन्त्रौषधितपःप्रभृतिभिः सिद्धानां अभिचाराभिशापाभ्यां अभिचारादभिशापाच्च यो ज्वरः प्रवर्तते स सन्निपातज्वरः ज्ञेयः । तत्र त्रयाणां दोषाणां प्रकोपात् । स च घोरः सुदुःसहः अतिकृच्छ्रसाध्यः ॥ ११६ ॥

---

११४ । विषवृक्षानिलस्पर्शात् इति ख पुस्तके ।

अभिचाराभिशापाभ्यां सिद्धानां यः प्रवर्त्तते ।
सन्निपातज्वरो घोरो स विज्ञेयः सुदुःसहः ॥११६॥
सन्निपातज्वरस्योक्तं लिंगं यद् तस्य तत् स्मृतम् ।
चित्तेन्द्रियशरीराणामार्त्तयोऽन्याश्च नकशः ॥११७॥
प्रयोगन्त्वभिचारस्य दृष्ट्वा शापस्य चैव हि ।
स्वयं श्रुत्वानुमानेन लक्ष्यते प्रशमेन च ॥११८॥
ववैध्यादभिचारस्य शापस्य च तदात्मके ।
यथाकर्म्मप्रयोगेण लक्षणं स्यात् पृथग्विधम् ॥११६॥

अभिचाराभिशापज्वरयोः प्रागुक्तसन्निपातज्वरलिंगस्यातिदेशमाह— सन्निपातज्वरस्येति। सन्निपातज्वरस्य यत् लिङ्गं उक्तं तस्य आभिचारिकस्य आभिशापिकस्य च ज्वरस्यापि तत् लिंगं स्मृतं । तस्यापि सान्निपातिकत्वात् । सन्निपातज्वराद् यो विशेषस्तमाह— चित्तेन्द्रियेति । तत्र चित्तेन्द्रियशरीराणां चित्तस्य मनसः इन्द्रियाणां चक्षुरादीनां शरीरस्य कृत्स्नस्य आर्तयः पीड़ाः । अन्या अन्यविधाः आर्तयश्चापि नैकशः अनेकशः बहुशः भवन्ति । आभिचारिकज्वरलक्षणं यदाह वृद्धवाग्भटः— तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते । पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः ॥ सदाहमूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्धते ज्वरः । इति ( अ० सं० नि० २ ) ॥ ११७ ॥

अभिचाराभिशापयोर्बहुविधप्रयोगतया तत्तज्ज्वरलक्षणस्य नानाविधत्वात् न केवलमुपदेशेन तदुपलब्धुं शक्यं । किन्तु प्रत्यक्षानुमानाभ्यामपीत्याह—प्रयोगन्त्विति । अभिचारस्य शापस्याभिशापस्य च प्रयोगं बहुविधं स्वयं दृष्ट्वा । इदं प्रत्यक्षं । श्रुत्वा । अयमागमः । प्रशमेन हेतुना तत्तदौषधेन उपशमदर्शनात् अनुमानेन च । एवं त्रिभिः प्रमाणैः प्रत्यक्षानुमानागमैः लक्ष्यते लक्षयितुं शक्यते आभिचारिक आभिशापिकश्च ज्वरः ॥ ११८ ॥

कुत एवमिति ? अत आह—वैविध्यादिति । यतः अभिचारस्य शापस्य अभिशापस्य च वैविध्यात् विविधत्वात् नानाविधप्रयोगतया तदात्मकै अभिचारात्मके

ध्याननिःश्वासबहुलं लिंगं कामज्वरे स्मृतम् ।
शोकजे बाष्पबहुलं त्रासप्रायं भयज्वरे ॥१२०॥
क्रोधजे बहुसंरम्भं भूतावेशे त्वमानुषम् ।
मूर्च्छामोहमदग्लानिभूयिष्ठं विषसम्भवे ॥१२१॥
केषाञ्चिदेषां लिंगानां सन्तापो जायते पुरः ।
पश्चात् तुल्यन्तु केषाञ्चिदेषु कामज्वरादिषु ॥१२२॥

अभिशापात्मके च ज्वरे यथाकर्मप्रयोगेण यथा कर्मणः अभिचारलक्षणस्य अभिशापलक्षणस्य वा प्रयोगः। तथैव। तत्तत्कर्मप्रयोगानुरूपं। पृथग्विधं नानाविधं। अभिचाराभिशापयोः नानाविधत्वात्। लक्षणं स्यात् ॥११६ ॥

अभिषंगज्वरस्य सम्प्राप्तिर्दोषानुबन्धश्च प्रागुक्तः। सम्प्रति कामादिजन्यत्वेन विशिष्य तस्य लक्षणमाह—ध्यानेत्यादि। कामज्वरे कामजे अभिषंगज्वरे ध्यानं चिन्ता। निःश्वासश्च। तौ बहुलौ यत्र तत् ध्याननिःश्वासबहुलं ध्याननिश्वासयोः बाहुल्यं। एवं परत्रापि व्याख्येयं। लिंगं स्मृतं। शोकजे अभिषंगज्वरे बाष्पबहुलं लिंगं स्मृतं। भयज्वरे भयाभिषंगज्वरे त्रासप्रायं त्रासबहुलं लिंगं स्मृतं। क्रोधजे अभिषङ्गज्वरे बहुः संरम्भः कोपः यत्र तत् बहुसरम्भं लिंगं स्मृतं। भूतावेशे भूताभिषंगज्वरे तु अमानुषं मानुषानुचितं चेष्टितं सामान्यतो लिंगं। विशेषतस्तु उन्मादचिकित्सिते तत्तद्भूताधिकारे द्रष्टव्यं। विषसम्भवे अभिषंगज्वरे मूर्च्छा मोहः मदः ग्लानिश्च ता भूयिष्ठाः यत्र तत् मूर्च्छादीनां बाहुल्यं लिंगं स्मृतं। सुश्रुते च—श्यावास्यता विषकृते दाहातीसारहृद्ग्रहाः। अभक्तरुक् पिपासा च तोदो मूर्च्छा बलक्षयः॥ ओषधीगन्धजे मूर्च्छा शिरोरुग् वमथुः क्षवः। कामजे चित्तविभ्रंशस्तन्द्रालस्यमभक्तरुक् ॥ हृदये वेदना चास्य गात्रं च परिशुष्यति। भयात् प्रलापः शोकाच्च भवेत् कोपाच्च वेपथुः ॥ इति ( सु० उ० ३९ ) ॥ १२०।१२१ ॥

केषाञ्चिदिति। एषु कामज्वरादिषु केषाञ्चित् पुंसां एषामुक्तानां लिङ्गानां ध्यानादीनां पुरः अग्रतः संतापो जायते आदौ सन्तापो जायते। पश्चाद् अस्य लिंगानि।

कामादिजानामुद्दिष्टं ज्वराणां यद्विशेषणम् ।
कामादिजानां रोगाणामन्येषामपि तत् स्मृतम् ॥१२३॥
मनस्यभिद्रुते पूर्व्वं कामाद्यैन तथा वलम् ।
ज्वरोः प्राप्नोति वाताद्यैर्देहो यावन्न दुष्यति ॥१२४॥
देहे चाभिद्रुते पूर्वं वाताद्यैर्न तथा वलम् ।
ज्वरः प्राप्नोति कामाद्यैर्मनो यावन्न दुष्यति ॥१२५॥
ते पूर्व्वं केवलाः पश्चान्निजैर्व्यामिश्रलक्षणाः ।
हेत्वौषधविशिष्टाश्च भवन्त्यागन्तवो ज्वराः ॥१२६॥

केषांचित् आदौ अस्य लिंगानि जायन्ते । पश्चात् सन्तापः । केषांचिच्च सन्तापः अस्य लिङ्गानि च तुल्यं समकालं युगपज्जायन्ते ॥ १२२ ॥

कामाद्यभिषङ्गज्वरोक्तलिंगानि कामादिजेष्वन्यरोगेष्वतिदिशन्नाह—कामादिजानामिति । कामादिजानां कामाद्यभिषंगजानां ज्वराणां यत् विशेषणं लक्षणं इह उद्दिष्टं उक्तं कामादिजानामन्येषामपि रोगाणां तत् विशेषणं लक्षणं स्मृतं ॥ १२३ ॥

शरीरमनसोरुभयोर्दुष्टावेव ज्वरस्य वलवत्त्वमित्याह—मनस्यभिद्रुते इति । पूर्वं मनसि कामाद्यैः अभिद्रुते दूषितेऽपि यावत् देहः वाताद्यैः शरीरदोषैः न दुष्यति तावत् ज्वरो न तथा वलं लभते । देहे चाभिद्रुते इति । एवं देहे पूर्वं वाताद्यैः अभिद्रुतेऽपि यावत् कामाद्यैः मनः न दुष्यति । तावत् ज्वरः न तथा वलं लभते । शरीरमनसोरुभयोर्दुष्टौ ज्वरो यथा वलं लभते न तथा एकतरदुष्टौ ॥ १२४।१२५ ॥

ते पूर्वमिति । ते अभिघाताभिषंगाभिचाराभिशापनिमित्ताः चतुर्विधाः आगन्तवो ज्वराः पूर्वं प्राक् दोषाणामननुवन्धात् । आगन्तोर्लक्षणं व्यथापूर्वत्वं । तथाच—आगन्तुर्हि व्यथापूर्वमुत्पन्नः । जघन्यं वातपित्तश्लेष्मणां वैषम्यमापादयति । निजे तु वातपित्तश्लेष्माणः पूर्वं वैषम्यमापद्यन्ते । जघन्यं व्यथामभिनिर्वर्तयन्ति । इति ( च० श्लो० २० ) । जघन्यं पश्चात् । त्रिशोथीये च—ते पुनर्यथास्वं हेतुजैर्व्यञ्जनैरादा-

१२५ । अयं श्लोको न पठ्यते क पुस्तके ।

संसृष्टाः सन्निपतिताः पृथग्वा कुपिता मलाः ।
रसाख्यं धातुमन्वेत्य पक्तिस्थानान्निरस्य च ॥१२७॥
स्वेन तेनोष्मणा चैव कृत्वा देहोष्मणो बलम् ।
स्रोतांसि रुद्ध्वा सम्प्राप्ताः केवलं देहमुल्वणाः ॥१२८॥
सन्तापमधिकं देहे जनयन्ति नरस्तदा ।
भवत्यत्युष्णसर्वांगो ज्वरितस्तेन चोच्यते ॥१२९॥

ह्युपलभ्यन्ते निजव्यञ्जनैकादशविपरीतैः । इति ( च० श्लो० १८ ) । पश्चाद्दोषैरनु-बध्यमानाः । निजाः शारीरदोषोत्थाः वातादिजन्याः सप्त । तैः निजैः निजलक्षणैः व्यामिश्रलक्षणाः । प्राक् केवलागन्तुलक्षणाः । दोषानुबन्धात् पश्चात् वातादिलिंगैश्च युक्ताः । हेत्वौषधविशिष्टाः विशिष्टहेत्वौषधाः । विशिष्टलिंगाश्चापि भवन्ति । एवं विशिष्टहेतुलिंगौषधत्वात् ते निजात् विशिष्यन्ते । तदुक्तं—स सप्तविधाज् ज्वराद् विशिष्टलिंगोपक्रमसमुत्थानत्वाद् विशिष्टो वेदितव्यः । इति (च० नि० १) ॥१२६॥

सर्वज्वरसाधारणसम्प्राप्तिमाह—संसृष्टा इति । संसृष्टाः युग्मभूताः द्वौ द्वौ मिलितौ । सन्निपतिताः त्रयो मिलिताः । पृथक् एकैको वा । मलाः दोषाः वातपित्त-श्लेष्माणः कुपिताः स्वैः स्वैः प्रकोपणैः प्रकुपिताः रसाख्यं आद्यं धातुं आमाशयस्थं अन्वेत्य अनुगत्य स्रोतांसि रसस्वेदवहानि रुद्ध्वा । पक्तिस्थानात् ग्रहण्याः । सैव अग्न्यधिष्ठानभूता । उष्माणमन्तरग्निं । पक्तिं स्थानादिति पाठे—पक्तिं अग्निं पक्तिहेतुत्वात् । स्थानात् स्वस्थानात् । निरस्य बहिर्निःसार्य । तेनैव सह उल्वणाः सन्तः केवलं कृत्स्नं देहं सम्प्राप्ताः अभिसर्पन्तः । स्वेन देहस्य स्वकीयेन ऊष्मणा तेन पक्तिस्थानात् बहिः निःसारितेन जठराग्नेरूष्मणा च देहोष्मणः बलं कृत्वा जठराग्नेरूष्मणा मिश्रीभावात् देहोष्माणं एधयन्तः देहे समस्ते अधिकं सन्तापं जनयन्ति । अतः तदा नरः अत्युष्णसर्वाङ्गो भवति । तेन अत्युष्णसर्वाङ्गतया स तदा ज्वरितः उच्यते । ज्वरस्य सन्तापलक्षणत्वात् । सुश्रुतेऽपि—दुष्टाः स्वहेतुभि-र्दोषाः व्याप्यामाशयमूष्मणा । सहिताश्च समागत्य रसस्वेदप्रवाहिणां ॥ स्रोतसां मार्गमावृत्य मन्दीकृत्य हुताशनं । निरस्य बहिरूष्माणं पक्तिस्थानाच्च केवलं ॥ शरीरं समभिव्याप्य स्वकालेषु ज्वरागमं । जनयन्त्यथ वृद्धिं च स्ववर्णं च त्वगादिषु ॥ इति ( सु० उ० ३९ ) ॥ १२७-१२९ ॥

स्रोतसां संनिरुद्धत्वात् स्वेदं ना नाधिगच्छति ।
स्वस्थानात् प्रच्युते चाग्नौ प्रायशस्तरुणे ज्वरे ॥१३०॥
अरुचिश्चाविपाकश्च गुरुत्वमुदरस्य च ।
हृदयस्याविशुद्धिश्च तन्द्रा चालस्यमेव च ॥१३१॥
ज्वरोऽविसर्गी वलवान् दोषाणामप्रवर्त्तनम् ।
लालाप्रसेको हृल्लासो क्षुन्नाशो विरसं मुखम् ॥१३२॥
स्तब्धसुप्तगुरुत्वञ्च गात्राणां वहुमूत्रता ।
न विड् जीर्णा न च ग्लानिर्ज्वरस्यामस्य-लक्षणम् ॥१३३॥

स्रोतसामिति । स्रोतसां रसस्वेदवाहिनां सन्निरुद्धत्वात् आवृतमुखत्वात् । अग्नौ च स्वस्थानात् प्रच्युते अग्नेः स्वस्थानच्युतत्वाच्च । तरुणे ज्वरे ना ज्वरितः पुमान् प्रायशः स्वेदं न अधिगच्छति । प्रायश इत्यनेन कचित् पित्तादिज्वरे स्वेदाधिगमोऽपि भवतीति ख्याप्यते ॥ १३० ॥

अथामज्वरस्य लक्षणमाह—अरुचिश्चेति । अरुचिः । अविपाकः । उदरस्य गुरुत्वं गौरवं । हृदयस्य अविशुद्धिः जाड्यं । तन्द्रा निद्रार्तस्येव विषयाग्रहणं । आलस्यं कर्मण्यनुत्साहः । ज्वरः अविसर्गी अविरामः । वलवांश्च । दोषाणां मलसम्वद्धानां अप्रवर्तनं अप्रवृत्तिः अनिर्गमः । लालाप्रसेकः । हृल्लासः । क्षुधो नाशः क्षुन्नाशः अक्षुधा । मुखं विरसं मुखवैरस्यं । अविशदमिति पाठे अविशदं पिच्छिलमविशुद्धमित्यर्थः । गात्राणां स्तब्धसुप्तगुरुत्वं । स्तब्धत्वं निश्चलीभावः । सुप्तत्वं स्पर्शाज्ञता । गुरुत्वं गौरवं च । वहुमूत्रता रसाधिक्यात् । विट् न जीर्णा पुरीषस्य अपक्वत्वं । न च ग्लानिः अक्षीणमांसता । ग्लै हर्षक्षये धातुक्षयेऽपि । एतत् सर्वं अरुच्यादिकं आमस्य तरुणस्य ज्वरस्य लक्षणं । सुश्रुतेऽपि—हृदयोद्वेष्टनं तन्द्रा लालास्रुतिररोचकः । दोषाप्रवृत्तिरालस्यं विवन्धो वहुमूत्रता ॥ गुरूदरत्वमस्वेदो न पक्तिः शकृतोऽरतिः । स्वापः स्तम्भो गुरुत्वं च गात्राणां वह्निमार्दवं ॥ मुखस्याशुद्धिरग्लानिः प्रसङ्गी वलवान् ज्वरः । लिंगैरेभिर्विजानीयाज् ज्वरमामं विचक्षणः ॥ इति ( सु० उ० ३९ ) ॥१३१-१३३॥

---

१३२ । गात्राणां ज्वरमार्दवं इति ङ पुस्तके ।

ज्वरवेगोऽधिकस्तृष्णाप्रलापः श्वसनं भ्रमः ।
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥१३४॥
क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्दवम् ।
दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम् ॥१३५॥
नवज्वरे दिवास्वप्नस्नानाभ्यंगान्नमैथुनम् ।
क्रोधप्रवातव्यायामकषायांश्च विवर्जयेत् ॥१३६॥

प्रसङ्गात् पच्यमानस्य लक्षणमाह—ज्वरवेग इति । ज्वरवेगः अधिकः । तृष्णा । प्रलापः । श्वसनं श्वासः । भ्रमः । मलप्रवृत्तिः । उत्क्लेशः । एतत् पच्यमानस्य ज्वरस्य लक्षणं ॥ १३४ ॥

निरामज्वरस्य लक्षणमाह—क्षुत्क्षामतेति । क्षुत् क्षुधा । क्षामता गात्राणां क्षीणत्वं । लघुत्वं च गात्राणां । ज्वरस्य मार्दवं मृदुत्वं । दोषाणां प्रवृत्तिः । अष्टाहो वा । एतत् निरामस्य ज्वरस्य लक्षणं । क्षुधादयो दोषपाकात् भवन्ति । तेन क्षुधादीनां प्रवृत्तौ अष्टाहादर्वागपि ज्वरो निरामो ज्ञेयः । यत्र क्षुधादयो न भवन्ति तत्र अष्टाहेन निरामत्वं सप्तानां धातूनां धात्वग्निभिः सप्तरात्रेण आमपाकात् । यदुक्तं—सप्ताहेनैव पच्यन्ते सप्तधातुगता मलाः । निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि ॥ इति ॥१३५॥

औषधं सक्रियाक्रममिति प्रश्नः । सम्प्रति क्रियाक्रमं विवक्षुः आदौ नवज्वरे प्रतिषेध्यान्याह—नवज्वरे इति । नवज्वरे । दिवास्वप्नः । स्नानं । अभ्यंगः । अन्नं । मैथुनं च । तत् । क्रोधः । प्रवातः प्रवहद्वातः । व्यायामः । कषायः रसश्च । तान् विवर्जयेत् ज्वरितः पुमान् । सुश्रुतेनाप्युक्तं—परिषेकावगाहांश्च स्नेहान् संशोधनानि च । स्नानाभ्यङ्गदिवास्वप्नशीतव्यायामयोषितः ॥ कषायगुरुरूक्षाणि क्रोधादीनि तथैव च ॥ सारवन्ति च भोज्यानि वर्जयेत्तरुणे ज्वरे । तथैव नवधान्यादि वर्जयेच्च समासतः ॥ इति ( सु० उ० ३८ ) ॥ १३६ ॥

(ज्वरे लंघनमेवादावुपदिष्टमृते ज्वरात् ।
क्षयानिलभयक्रोधकामशोकश्रमोद्भवात् )॥१३७॥
(लंघनेन क्षयं नीते दोषे सन्धुक्षितेऽनले ।
विज्वरत्वं लघुत्वञ्च क्षुच्चैवास्योपजायते ॥१३८॥
प्राणाविरोधिना चैनं लंघनेनोपपादयेत् ।
बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥१३९॥

क्रियाक्रममाह—ज्वरे लंघनमिति। क्षयः धातुक्षयो राजयक्ष्मा वा। अनिलः वातः। क्षयानिलः धातुक्षयकुपितोऽनिलो वा। भयं। क्रोधः। कामः शोकः। श्रमश्च ते। तेभ्य उद्भवो यस्य तस्मात् ज्वरात् ऋते। क्षयादिभ्यो जातं ज्वरं वर्जयित्वा। क्षयादिजे ज्वरे लंघनं प्रतिषिध्यते। अन्यस्मिन् ज्वरे सर्वत्र आदौ प्रथमतः ज्वरारम्भदिनादारभ्य आ दोषपाकात् लंघनमेव उपदिष्टं। इह लंघनशब्देन अनशनमुच्यते ॥१३७॥

लंघनफलमाह—लङ्घनेनेति। लंघनेन। दोषे आमसम्पृक्ते क्षयं नीते क्षीणतां प्रापिते। अनले जाठरे सन्धुक्षिते उद्दीपिते च सति। अस्य ज्वरितस्य। पुंसः। विज्वरत्वं विगतज्वरत्वं ज्वरमोक्षः। देहस्य लघुत्वं। क्षुच्च उपजायते। तदुक्तं वृद्धवाग्भटेनापि—लंघनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति। स्वास्थ्यं क्षुत्तृड् रुचिः पक्ति र्बलमोजश्च जायते ॥ इति ( अ० सं० चि० १ ) ॥ १३८ ॥

लंघनं यथा कर्तव्यं तदाह—प्राणाविरोधिनेति। एनं ज्वरिणं पुमांसं प्राणस्य बलस्य अविरोधिना अनतिक्षयकारिणा लंघनेन उपपादयेत् चिकित्सेत्। ज्वरे तावदेव लंघनं कर्तव्यं यावता बलहानिर्न भवति। बलरक्षणे हेतुमाह—बलाधिष्ठानमिति। आरोग्यं। बलमधिष्ठानमाश्रयो यस्य तत् बलाधिष्ठानं। यदर्थः यन्निमित्तः आरोग्यार्थः अयं क्रियाक्रमः चिकित्साक्रमः। तत् आरोग्यं बलाधिष्ठानं। अतः बलरक्षां कुर्वन्नेव ज्वरिणं लंघयेत् ॥ १३९ ॥

लंघनं स्वेदनं कालो यवाग्वस्तिक्तको रसः ।
पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे ॥१४०॥
तृष्यते सलिलञ्चोष्णं दद्याद्वातकफज्वरे ।
मद्योत्थे पैत्तिके चाथ शीतलं तिक्तकैः शृतम् ॥१४१॥
दीपनं पाचनञ्चैव ज्वरघ्नमुभयञ्च तत् ।
स्रोतसां शोधनं बल्यं रुचिस्वेदकरं शिवम् ॥१४२॥
मुस्तपर्पकोशीरचन्दनोदीच्यनागरैः ।
शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये ॥१४३॥

नवज्वरे दोषाणां पाचनान्याह--लंघनमिति । लंघनमुपवासः । स्वेदनं स्वेदः । कालः अष्टाहलक्षणः । यवाग्वः पेयाः । तिक्तको रसः तिक्तरसोद्रव्यप्रयोगः । एतानि तरुणे ज्वरे नवज्वरे अविपक्वानां सामानां दोषाणां यथावस्थं क्रमेण वा पाचनानि पाककराणि स्युः ॥ १४० ॥

ज्वरे अवस्थाविशेषे देयं जलमाह—तृष्यते इति । वातकफज्वरे । इह वातकफयोः पृथक् संसृष्टयोश्च ग्रहणं । तेन वातज्वरे कफज्वरे वातकफसंसर्गज्वरे च । तृष्यते तृषार्ताय ज्वरिणे । उष्णं सलिलं दद्यात् । मद्योत्थे ज्वरे । पैत्तिके केवलपित्तकृते ज्वरे । पित्तोल्बणसंसर्गसन्निपातकृते चापि ज्वरे । तिक्तकैः तिक्तद्रव्यैः वक्ष्यमाणमुस्तपर्पट-कादिभिः शृतं सलिलं शीतलं कृत्वा दद्यात् । पित्तोल्बणे संसर्गे सन्निपाते च शीतमेव देयं । तत्र उष्णस्य जनपदोद्ध्वंसनीये विमाने नात्यर्थोत्सन्नपित्ते इत्यनेन प्रति-षिद्धत्वात् । दीपनमिति । तदुभयं उष्णं तिक्तकशृतशीतं च सलिलं ज्वरघ्नं । दीपनं अग्नेः । पाचनं दोषाणां । स्रोतसां शोधनं । बल्यं । रुचिस्वेदकरं रुचिकरं स्वेदकरं च । तेन शिवं शुभम् ॥ १४१-१४२ ॥

शीतलं तिक्तकैः शृतमित्युक्तं विवृत्याह—मुस्तेति । उदीर्णपित्तादौ पिपासाज्वर-शान्तये मुस्तपर्पटकादिभिः । चन्दनं रक्तचंदनं । उदीच्यं वालकं । नागरं शुण्ठी । तैः ।

१३६ । क्षुधायोऽहचित्तं मुखमिति क पुस्तके ।

कफप्रधानानुत्क्लिष्टात् दोषानामशयस्थितान् ।
बुद्ध्वा ज्वरकरान् काले वम्यानां वमनैर्हरेत् ॥१४४॥
अनुपस्थितदोषाणां वमनं तरुणे ज्वरे ।
हृद्रोगं श्वासमानाहं मोहञ्च जनयेद् भृशम् ॥१४५॥
सर्व्वदेहानुगाः सामा धातुस्थाश्चासुनिर्हराः ।
दोषाः फलेभ्य आमेभ्यः स्वरसा इव सात्ययाः ॥१४६॥

आदौ शृतं पश्चात् शीतं शृतशीतं । जलं दद्यात् । जलपाकविधिर्यथा—कर्षं गृहीत्वा द्रव्यस्य क्काथयेत् प्रास्थिकेऽम्भसि । अर्द्धशृतं प्रयोक्तव्यं जलपाके त्वयं विधिः ॥ इति ॥ १४३ ॥

ज्वरे यदवस्थदोषे वमनं कार्यं तदाह—कफप्रधानानिति । वम्यानां वमनार्हाणां । अनेन अवम्येषु गर्भिण्यादिषु वमनं प्रतिषिध्यते । वम्याः पश्चात् पञ्चकर्म्मीयसिद्धौ वक्ष्यमाणाः । ज्वरिणां ज्वरकरान् दोषान् । कफः प्रधानो येषां ते । तान् समुत्क्लिष्टान् स्थानात् समन्ताच्चलितान् हृल्लासादिना बहिर्गमनोन्मुखान् । आमाशयस्थितान् आमाशयस्य नाभिस्तनयोरन्तराललक्षणस्य ऊर्ध्वभागे कफस्थाने स्थितान् । कफोत्तरत्वात् कफस्थानगतत्वाच्च वातपित्तयोर्वमनं । बुद्ध्वा काले यथोक्तायामवस्थायां वमनैर्हरेत् । सुश्रुतेनाप्युक्तं—आमाशयस्थे दोषे च सोत्क्लेशे वमनं परं । इति ( सु० उ० ३९ ) । वमनं उत्क्लिष्टे श्लेष्मणि केवले पित्तसंसृष्टे वा । श्लेष्मस्थानगते पित्ते वाते च । श्लेष्मोत्तरे सन्निपाते चापि कार्यं । यदाहवृद्ध वाग्भटः—तत्रोत्क्लिष्टे श्लेष्मणि पित्तसंसृष्टे वा तत् स्थानगते वा पित्तेऽनिले वा श्लेष्मोत्तरे च वमनमाचरेत् । इति ( अ० सं० सू० २७ ) ॥ १४४ ॥

उक्तावस्थाव्यतिरेकेण वमने दोषमाह—अनुपस्थितदोषाणामिति । अनुपस्थिताः अनुत्क्लिष्टाः आमाशये अनुपस्थिताश्च दोषा येषां तेषां । तथाविधानां ज्वरिणां । तरुणे ज्वरे वमनं कर्तृ क्रियमाणं हृद्रोगं श्वासं आनाहं मोहं च भृशं जनयेत् ॥१४५॥

सर्वदेहेति । नवज्वरे तस्य प्रकृतत्वात् । दोषाः । सर्वदेहानुगाः सूक्ष्मसिरात्वगा-

---

१४४ । दोषप्रवृत्तिषुत् साहा निवासज्वरलक्षणं इति ङ पुस्तके ।

वमितं लंघितं काले यवागूभिरुपाचरेत् ।
यथास्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः ॥१४७॥
यावज्ज्वरमृदूभावात् षड़हं वा विचक्षणः ।
तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः ॥१४८॥
ताश्च भेषजसंयोगाल्लघुत्वाच्चाग्निदीपनाः ।
वातमूत्रपुरीषाणां दोषाणां चानुलोमनाः ॥१४९॥

धनुगताः । सामाः । धातुस्थाः धातुषु अनुप्रविष्टाः । तस्मात् ते आमेभ्यः अपक्वेभ्यः फलेभ्यः स्वरसा इव असुनिर्हराः न सुखेन निर्हर्तुं शक्याः । निर्हरणात् सात्यया अत्ययदाः । तदा वमनं सव्यापद् भवति ॥ १४६ ॥

ज्वरे यवागूरुक्ता—यवाग्वस्तिक्तको रस इति । सा यदा यथा वा देया तदाह—वमितमित्यादि । भिषक् ज्वरे सम्यक् वमितं लंघितं च ज्वरिणं । लंघनं सर्वत्र । वमनं निर्हरणं तु बहुदोषेषु कफप्रधानानित्यादिना उक्तावस्थेष्वेव । आदितः प्रथमतः षडहं यावत् । अथवा यावत् ज्वरमृदूभावात् यावत् ज्वरस्य मृदुता न स्यात् तावत् । तेन षडहादूर्ध्वमपि । षड़हादर्वागपि । शान्ते ज्वरे यूषादिभिरुपचारः । काले आहारयोग्ये । यथास्वौषधसिद्धाभिः यथास्वं औषधं यस्यां यावग्वां । यस्मिन् ज्वरे वा । यत् औषधं भेषजद्रव्यमुक्तं । तेन सिद्धाभिः । मण्डः पूर्वो यासां ताभिः मण्डपूर्वाभिः यवागूभिः । आदौ मण्डैः । ततो यवागूभिः । उपाचरेत् । वृद्धवाग्भटे च—युक्तं लंघितलिंगैस्तु तं पेयाभिरुपाचरेत् । यथास्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः ॥ षड़हं वा मृदुत्वं वा ज्वरो यावदवाप्नुयात् । इति ( अ० सं० चि० १ ) । तदा यवागूभिरुपचारे गुणमाह—तस्याग्निरिति । ताभिः यवागूभिः तस्य ज्वरिणः अग्निरन्तरग्निः समिद्भिः पावकः बहिरग्निरिव दीप्यते ॥ १४७-१४८ ॥

ताश्चेति । ताः यवाग्वः । भेषजसंयोगात् । लघुत्वाच्च । अग्निदीपनाः । वातमूत्रपुरीषाणां दोषाणाञ्चापि अनुलोमनाः स्वमार्गे प्रवर्तिकाः । द्रवोष्णत्वात् द्रवत्वात् उष्णत्वाच्च स्वेदनाय । द्रवत्वात् तृट्प्रशान्तये तृष्णाशान्तये । आहारभावात् आहाररूपत्वात् प्राणाय । प्राणो बलं । जीवनधारणञ्चापि । सरत्वात् देहस्य लाघवाय

स्वेदनाय द्रवोष्णत्वाद् द्रवत्वात् तृट्प्रशान्तये।
आहारभावात् प्राणाय सरत्वाल्लाघवाय च ॥१५०॥
ज्वरघ्न्यो ज्वरसात्म्यत्वात् तस्मात् पूर्वं समाचरेत्।
यवागूभिर्ज्वरान् विद्वानृते मद्यसमुत्थितात् ॥१५१॥
मदात्यये मद्यनित्ये ग्रीष्मे पित्तकफाधिके।
ऊर्ध्वगे रक्तपित्ते च यवागूर्न हिता ज्वरे ॥१५२॥
तत्र तर्पणमेवाग्रे प्रदेयं लाजसक्तुभिः।
ज्वरापहैः फलरसैर्युक्तं समधुशर्करम् ॥१५३॥

च भवन्ति। ताश्च यथास्वौषधसिद्धाः ज्वरसात्म्यत्वात् ज्वरे उपशयकरत्वात् ज्वरघ्न्यः। तस्मात् यवागूनामेवंगुणत्वात्। विद्वान् भिषक् मद्यसमुत्थितात् ज्वरात् ऋते मद्योत्थं ज्वरं वर्जयित्वा। तत्र यवागूर्न देया। ज्वरान् अन्यान् सर्वान् पूर्वं प्रथमं यवागूभिः समाचरेत् उपाचरेत् ॥ १४६-१५१ ॥

यवागूनामविषयमाह—मदात्यये इति। मदात्यये रोगे। मद्यनित्ये पुरुषे। ग्रीष्मे ऋतौ। पित्तकफाधिके दोषे। पित्तस्थानगते कफे चापि। तथाच—मद्योद्भवे मद्यनित्ये पित्तस्थानगते कफे। ग्रीष्मे तयोर्वाधिकयोस्तृट्छर्दिदाहपीडिते॥ ऊर्ध्वं प्रवृत्ते रक्ते च पेयां नेच्छन्ति। इति ( अ० सं० चि० १ )। तयोः पित्तकफयोः। ऊर्ध्वगे रक्तपित्ते च तत्तद्विधे ज्वरे यवागूर्न हिता। सुश्रुतोऽप्येवमाह—कफपित्तपरीतस्य ग्रीष्मेऽसृक्पित्तिनस्तथा। मद्यनित्यस्य न हिता यवागूः। इति। ( सु० उ० ३९ ) ॥१५२॥

तर्हि मदात्ययादौ किं विधेयमिति? अत आह—तत्र तर्पणमिति। तत्र मदात्ययादौ अग्रे प्रथमं ज्वरापहैः फलानां वक्ष्यमाणद्राक्षादाडिमादीनां रसैः युक्तं समधुशर्करं मधुशर्करायुक्तं लाजसक्तुभिः तर्पणं प्रयोज्यं ॥१५३॥

---

१४९। ज्वरघ्नमुभयं हितं इति ङ पुस्तके।
१५०। रुचिस्वेदकरं शिवं इति ङ य पुस्तकयोः।

द्राक्षादाड़िमखर्ज्जूरपियालैः सपरूषकैः ।
तर्पणार्हेषु कर्त्तव्यं तर्पणं ज्वरशान्तये ॥१५४॥
(ततः सात्म्यबलापेक्षी भोजयेज्जीर्णतर्पणम् ।
तनुना मुद्गयूषेण जांगलानां रसेन वा ॥१५५॥
अन्नकालेषु चाप्यस्मै विधेयं दन्तधावनम् ।
योऽस्य वक्त्ररसस्तस्माद्विपरीतं प्रियश्च यत् ॥१५६॥
तदस्य मुखवैशद्यं प्रकांक्षाश्चान्नपानयोः ।
धत्ते रसविशेषाणामभिज्ञत्वं करोति यत् ॥१५७॥

उक्तमर्थं विवृत्याह—द्राक्षादाडिमेति । तर्पणार्हेषु तर्पणयोग्येषु तेषु मदात्ययादिषु ज्वरशान्तये सपरूपकैः द्राक्षादाडिमखर्ज्जूरपियालैः फलैः तद्रसैः तर्पणं कर्तव्यं । तर्पणं तोयपरिप्लुता लाजसक्तवः । द्रवेणालोडितास्ते स्युस्तर्पणं लाजसक्तवः । इति ॥ १५४ ॥

तत इति । ततः जीर्णतर्पणं तर्पणार्हमातुरं । यवागूचितं तु जीर्णयवागूकं । यवाग्वां तर्पणे वा जीर्णे स चेत् तदहरेव क्षुद्वान् । तदा तं । भिषक् सात्म्यबलापेक्षी तस्य सात्म्यं बलं चापेक्ष्य । बलमग्निबलं वा । तनुना असान्द्रेण स्वच्छेन । मुद्गयूषेण । जाङ्गलानां मांसानां रसेन वा । सात्म्यबलापेक्षया विकल्पः । भोजयेत् । लब्वन्नमिति शेषः । तदुक्तं—ततो जीर्णे तु तर्पणे ॥ यवाग्वां वौदनं क्षुद्वानश्नीयाद्‌ भृष्टतण्डुलं । दक्षलावणिकेर्यूषैः रसैर्वा मुद्गलावजैः ॥ इति ( अ० सं० चि० १ ) ॥१५५॥

भोजनकाले रोचनार्थं दन्तधावनमाह—अन्नकालेष्विति । अन्नकालेषु अस्मै ज्वरिताय दन्तधावनं विधेयं । ननु किंरसद्रव्येण दन्तधावनं ? किमर्थं वा विधेयमिति ? अत आह—योऽस्येति । अस्य ज्वरितस्य । यः वक्त्रस्य मुखस्य रसः । तस्मात् विपरीतं विपरीतरसं । प्रियं मुखप्रियं च । यद्‌ द्रव्यं । तत् अस्य मुखवैशद्यं अन्नपानयोः प्रकांक्षामाकांक्षां च धत्ते जनयति । कुतः ? यत् यतः तत् दन्तधावनं रसविशेषाणां अभिज्ञत्वं करोति । मुखवैशद्यात् रसविशेषाभिज्ञानं । तत एव अन्नपानयोराकांक्षा ॥ १५६।१५७ ॥

विशोध्य द्रुमशाखाग्रैरास्यं प्रक्षाल्य चासकृत् ।
मस्त्विक्षुरसमद्याद्यैर्यथाहारमवाप्नुयात् ॥१५८॥
पाचनं शमनीयं वा कषायं पाययेद्भिषक् ।
ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितम् ॥१५९॥
स्तभ्यन्ते न च्यवन्ते च कुर्वन्ति विषमज्वरम् ।
दोषा बद्धाः कषायेण स्तम्भित्वात्तरुणे ज्वरे ॥१६०॥

विशोध्येति । द्रुमशाखाग्रैः दन्तधावनैः मुखरसविपरीतरसैः आस्यं मुखं विशोध्य । मस्त्विक्षुरसमद्याद्यैः इति छेदः । मस्तु दधिभवं मण्डं । दन्तकाष्ठभक्षणानन्तरं मस्तुना इक्षुरसेन मद्येन वा मुखं पुनः पुनः प्रक्षाल्य यथाहारं उचिताहारं अवाप्नुयात् ज्वरितः ॥ १५८ ॥

पाचनमिति । लंघनादिक्रमेण षडहे अतीते अतिक्रान्ते सति । षडह इति दोषपाककालस्य उपलक्षणं । तेन लंघनाद्यैः दोषेषु पक्वेषु इत्यर्थः । ज्वरितं लघ्वन्नं प्रतिभोजितं लघ्वन्नप्रतिभोजितं कृत्वा दोषशेषस्य पाचनं शमनीयं शमनं वा कषायं पञ्चविधकल्पनं स्वरसादिकं । न तु कषायं रसं तस्य प्राक् प्रतिषेधात् । पाययेत् । तदुक्तं—इत्ययं षडहो नेयो बलं दोषं च रक्षता । ततः पक्वेषु दोषेषु लंघनाद्यैः प्रशस्यते ॥ कषायो दोषशेषस्य पाचनः शमनोऽथवा । इति (अ० सं० चि० १) ॥१५९॥

ननु नवज्वरे दिवास्वप्नेत्यादिना कषायः प्रतिषिद्धः । इह पुनर्विधीयते—कषायं पाययेदिति । एकस्य विधिनिषेधयोः कथमुपपत्तिः स्यात्? कषायशब्दसामान्यात् । इत्याशंकायामाह—स्तभ्यन्ते इति । नवज्वरे दिवास्वप्नेत्यत्र कषायशब्दः कषायरसवचनः । स हि नवज्वरे वर्जनीयः । कुतः? यतः तरुणे ज्वरे दोषाः कषायेण रसेन स्तम्भित्वात् कषायरसस्य स्तम्भनस्वभावत्वात् । कषायः स्तम्भनः शीत इति । बद्धाः सन्तः स्तभ्यन्ते स्तब्धाः क्रियन्ते । न च्यवन्ते न शरीरान्निःसरन्ति । विषमज्वरं कुर्वन्ति च । अतः स्तम्भनत्वात् कषायाख्यो रस एव तत्र प्रतिषिध्यते । कल्पनं पञ्चविधं स्वरसकल्कशृतशीतफाण्टरूपं उद्दिश्य यः कषायः षड्विरेचनशतीये उक्तः

न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यते ।
यः कषायः कषायः स्यात् स वर्ज्यस्तरुणे ज्वरे ॥१६१॥
यूषैरम्लैरनम्लैर्वा जांगलैर्वा रसैर्हितैः ।
दशाहं यावदश्नीयाल्लघ्वन्नं ज्वरशान्तये ॥१६२॥
अत ऊर्ध्वं कफे मन्दे वातपित्तोत्तरे ज्वरे ।
परिपक्वेषु दोषेषु सर्पिःपानं यथामृतम् ॥१६३॥

स तु न प्रतिषिध्यते । कषायरसस्य नवज्वरे वर्जनीयत्वात् । यः कषायः स्वरसावि-लक्षणः कषायः कषायरसयोनिकः स्यात् सोऽपि नवज्वरे वर्ज्यः । कषायरसयोनिकं कषायं वर्जयित्वा तिक्ताद्यन्यरसयोनिकः कषायो योज्यः । तदुक्तं वृद्धवाग्भटेनापि—तिक्तः पित्ते विशेषेण प्रयोज्यः कटुकः कफे । पित्तश्लेष्महरत्वेऽपि कषायः स न शस्यते ॥ नवज्वरे मलस्तम्भात् कषायो विषमज्वरान् । कुरुतेऽरुचिहृल्लास-हिक्काध्मानादिकानपि ॥ न च्यवन्ते न पच्यन्ते कषायस्तम्भिता मलाः । तिर्य्यग्गता विमार्गा वा वर्द्धयन्त्यपि च ज्वरं ॥ बद्धामकफवाततत्वाच्छूलानाहादिकानपि ॥ इति ( अ० सं० चि० १ ) ॥ १६०-१६१ ॥

लघ्वन्नप्रतिभोजितमित्युक्तं । लघ्वन्नं यथा यावच्च भोज्यं तदाह—यूषैरिति । ज्वरितः पुमान् ज्वरशान्तये अम्लैः दाडिमादिभिरम्लैः । अनम्लैर्वा । अम्लविकल्पः अम्लसात्म्यापेक्षया । यूषैः । हितैः । जांगलैः रसैः जाङ्गलमांसकृतैः रसैः वा । लघु प्रकृत्या मात्रया च लघु । अन्नं पुराणरक्तशालिषष्टिकौदनं । दशाहं यावत् अश्नीयात् भुञ्जीत ॥ १६२ ॥

प्राक् निदानस्थाने जीर्णज्वरेषु तु सर्वेष्वेव सर्पिषः पानं प्रशस्यते यथास्वौषध-सिद्धस्य इत्युक्तं । जीर्णज्वरे यदवस्थदोषे सर्पिष्पाणं हितं सम्प्रति तदाह—अत ऊर्ध्वमिति । अत ऊर्ध्वं दशाहात् परं । कफे मन्दे क्षीणकफे । वातपित्तोत्तरे च ज्वरे । दोषेषु परिपक्वेषु सर्वथा पक्वेषु च । सर्पिषः यथास्वौषधसिद्धस्य पानं । यथा अमृतं अमृतमिव हितं भवति । अन्यथा तत् विषोपमं भवति । तदुक्तं निदान-

१६० । अयं श्लोको न पठ्यते ङ पुस्तके ।

निर्दशाहमपि ज्ञात्वा कफोत्तरमलंघितम् ।
न सर्पिः पाययेत् प्राज्ञः कषायैस्तमुपाचरेत् ॥१६४॥
यावल्लघुत्वादशनं दद्यान्मांसरसेन च ।
बलं ह्यलं निग्रहाय दोषाणां बलकृच्च तत् ॥१६५॥)

स्थाने—जीर्णज्वरेषु सर्वेषु सर्पिर्हितमुदकमिवाग्निप्लुष्टेषु द्रव्येषु । भवन्ति चात्र—यथा प्रज्वलितं वेश्म परिषिञ्चन्ति वारिणा । नराः शान्तिमभिप्रेत्य तथा जीर्णज्वरे घृतं ॥ स्नेहाद्वातं शमयति शैत्यात् पित्तं नियच्छति । घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत् कफं ॥ इति ( च० नि० १ ) । इह संस्कारात् घृतस्य यत् कफशमनत्वमुक्तं तत् कफस्य मन्दीभावे एव बोद्धव्यं । लंघनादिना कफे क्षीणे दोषेषु सम्यक् पक्वेष्वेव सर्पिर्देयं । तादृशी च अवस्था प्रायेण दशाहात् परं भवति ॥१६३॥

यत्र दशाहात् परमपि न तादृशी अवस्था तत्र सर्पिषः प्रतिषेधमाह—निर्दशाहमिति । निर्गतो दशाहः । तं निर्दशाहमपि । दशाहे अतीतेऽपि । ज्वरितं कफोत्तरं अलंघितं असञ्जातलंघितलिङ्गं ज्ञात्वा । ज्वरस्येयमवस्था प्रबलसामदोषारब्धत्वात् । असम्यगुपचाराच्च भवति । प्राज्ञो भिषक् सर्पिः न पाययेत् । यावल्लघुत्वादिति च्छेदः । यावत् लघुत्वात् यावत् कफस्य देहस्य च लघुत्वं न स्यात् तावत् तं कषायैः पाचनशमनैः उपाचरेत् । तदुक्तं वृद्धवाग्भटेनापि—कषायपानपथ्यान्नैर्दशाह इति लंघिते । सर्पिर्दद्यात् कफे मन्दे वातपित्तोत्तरे ज्वरे ॥ पक्वेषु दोषेष्वमृतं तद्विषोपममन्यथा । दशाहे स्यादतीतेऽपि ज्वरोपद्रववृद्धिकृत् ॥ लंघनादिक्रमं तत्र कुर्यादा कफसंक्षयात् । इति (अ० सं० चि० १) । तस्मै मांसरसेन अशनमाहारं दद्यात् । ननु कफोत्तरे अलंघितेऽपि निर्दशाहज्वरे मांसरसेन किमर्थमशनं कफविरुद्धं देयमिति ? अत आह—बलं ह्यलमिति । हि यतः बलं दोषाणां निग्रहाय अलं समर्थं । तत् मांसरसेन अशनं च बलकृत् भवति ॥ १६ । १६५ ॥

१६४ । यावल्लघुत्वादशनं दद्यान्मांसरसेन च । बलं ह्यलं दोषहरं परं तच्च बलप्रदं ॥ इति क्वचित्पुस्तके ।

दाहतृष्णापरीतस्य वातपित्तोत्तरं ज्वरम्।
बद्धप्रच्युतदोषं वा निरामं पयसा जयेत् ॥१६६॥
क्रियाभिराभिः प्रशमं न प्रयाति यदा ज्वरः।
अक्षीणबलमांसस्य शमयेत् तं विरेचनैः ॥१६७॥
ज्वरक्षीणस्य न हितं वमनं न विरेचनम्।
कामन्तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥१६८॥
निरूहो बलमग्निश्च विज्वरत्वं मुदं रुचिम्।
परिपक्वेषु दोषेषु प्रयुक्तः शीघ्रमावहेत् ॥१६९॥

दाहतृष्णेति। दाहतृष्णापरीतस्य आतुरस्य। वातपित्तोत्तरं। बद्धाः अप्रवर्तमानाः प्रच्युता वा दोषाः यस्मिन् तं। तथाविधं निरामं ज्वरं पयसा जयेत् शमयेत्। क्षीरं तावत् बद्धप्रवर्तकं। प्रच्युतेऽपि विविधदोषप्रवर्तकतया उपकारकं भवति। तथा च दीर्घंजीवितीये क्षीरगुणेषु—अतीसारे ज्वरे दाहे श्वयथौ च विशेषतः। इति। तथा पुरीषे ग्रथिते पथ्यं। इति च ( च० श्लो० १ )। किंवा बद्धदोषे गव्यं क्षीरं सरत्वात् देयं। प्रच्युते दोषे संग्राहित्वात् छागं देयं॥ १६६ ॥

एतेनापि ज्वरस्याप्रशान्तौ यत् कार्यं तदाह—क्रियाभिरिति। स ज्वरः यदा आभिः क्रियाभिः न प्रशमं प्रयाति तदा अक्षीणबलमांसस्यातुरस्य तं ज्वरं विरेचनैः शमयेत् भिषक्॥ १६७ ॥

अक्षीणस्य विरेचनमुक्तं। सम्प्रति क्षीणे वमनविरेचने प्रतिषेधति—ज्वरक्षीणस्येति। ज्वरक्षीणस्य पुंसः न वमनं हितं। न वा विरेचनं हितं। तर्हि कथं तस्य शोधनं कार्यमिति? अत आह—कामन्त्विति। कामं वरं पयसा पयःपानेन। पयस्तु अनुलोमकतया दोषहरं भवति। निरूहैरास्थापनैर्वा तस्य ज्वरक्षीणस्य मलान् हरेत्॥ १६८॥

निरूहगुणमाह—निरूह इति। निरूहः परिपक्वेषु दोषेषु प्रयुक्तः सन् शीघ्रं बलं अग्निं विज्वरत्वं मुदं हर्षं रुचिं च आवहेत् जनयेत्॥ १६९ ॥

पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत्।
स्रंसनं त्रीन् मलान् वस्तिर्हरेत् पक्वाशयस्थितान् ॥१७०॥
ज्वरे पुराणे संक्षीणे कफपित्ते दृढाग्नये।
रूक्षबद्धपुरीषाय प्रदद्यादनुवासनम् ॥१७१॥
गौरवे शिरसः शूले विबद्धेष्विन्द्रियेषु च।
जीर्णे ज्वरे रुचिकरं दद्याच्छीर्षविरेचनम् ॥१७२॥

पञ्चकर्मसु वमनं यत्र कर्तव्यं तत् कफप्रधानानित्यादिना उपदर्शितं। सम्प्रति विरेचनास्थापनयोर्विषयमाह—पित्तं वेति। स्रंसनमिति च्छेदः। स्रंसनं विरेचनं पित्तं केवलं कफपित्तं कफसंसृष्टं पित्तं वा। पित्ताशयः आमाशयस्य नाभिस्तनयोरन्तराललक्षणस्य अधोभागः। तद्गतं पित्ताशयगतं कफपित्तं कफं पित्तं च हरेत्। पित्ते केवले कफसंसृष्टे वा पित्तस्थानगते श्लेष्मणि चापि विरेचनं। तदुक्तं—पित्ते तु विरेचनं केवले कफसंसृष्टे वा। तत्स्थानगते वा श्लेष्मणि। इति (अ० सं० सू० २६)। वस्तिः आस्थापनाख्यः। स च दोषेषु परिपक्वेष्वेव कार्यः। परिपक्वेषु दोषेषु इति। पक्वाशयो वातस्थानं। तच्च श्रोणिगुदयोरुपरिष्टात् अधस्ताच्च नाभेः स्थितं। तत्र स्थितान् वातस्थानगतान् वातोत्तरांश्चापि त्रीन् अपि मलान् दोषान् हरेत्। वस्तिर्वाते वातोत्तरेषु वातस्थानगतेषु च दोषेष्वपि ॥ १७० ॥

अनुवासनस्य विषयमाह—ज्वरे पुराणे इति। ज्वरे पुराणे। कफपित्ते च संक्षीणे सति। दृढाग्नये अदुर्बलाग्नये। रूक्षं बद्धं च पुरीषं यस्य स रूक्षबद्धपुरीषः। तस्मै। तथाविधाय ज्वरिताय अनुवासनं प्रदद्यात् ॥ १७१ ॥

ज्वरे यदवस्थे शिरोविरेचनं कार्यं तदाह—गौरवे इति। जीर्णे पुराणे ज्वरे। शिरसः गौरवे शूले च। इन्द्रियेषु विबद्धेषु श्लेष्मणोपरुद्धेषु। स्वविषयप्रवृत्तिरहितेषु च। शीर्षविरेचनं दद्यात् भिषक्। तच्च रुचिकरं। रुचिः अन्नेषु रसग्रहणं। चक्षुरादीनां यथास्वविषयग्रहणेच्छापि। सुश्रुतेनाप्युक्तं—क्रमेण बलिने देयं वमनं श्लैष्मिके ज्वरे। पित्तप्राये विरेकस्तु कार्यः प्रशिथिलाशये॥ सरुजेऽनिलजे कार्यं सोदावर्त्ते निरूहणं। कटीपृष्ठग्रहार्त्तस्य दीप्ताग्नेरनुवासनं॥ शिरोगौरवशूलघ्नमिन्द्रियप्रतिबोधनं। कफाभिपन्ने शिरसि कार्यं मूर्धविरेचनं॥ इति ( सु० उ० ३९ ) ॥१७२॥

अभ्यङ्गांश्च प्रदेहांश्च परिषेकावगाहने ।
विभज्य शीतोष्णतया दद्याज्जीर्णज्वरे भिषक् ॥१७३॥
तैराशु प्रशमं याति वहिर्मार्गगतो ज्वरः ।
लभन्ते सुखमङ्गानि बलं वर्णश्च वर्द्धते ॥१७४॥
धूपनाञ्जनयोगैश्च यान्ति जीर्णज्वराः शमम् ।
त्वङ्मात्रशेषा येषाञ्च भवत्यागन्तुरन्वयः ॥१७५॥

अन्तः परिमार्जनं भेषजमभिधाय वहिःपरिमार्जनमाह । तत्र शीतोष्णज्वरे अभ्यंगादीनाह—अभ्यंगांश्चेति । भिषक् जीर्णे ज्वरे । जीर्णज्वरं शीतोष्णतया द्विधा विभज्य । उष्णाभिप्रायः शीतवहुलः शीतः । शीताभिप्राय उष्णवहुलश्च उष्णः । तत्र उष्णे जीर्णे ज्वरे शीतैः शीतवीर्यैः वक्ष्यमाणैः चन्दनादिभिः द्रव्यैः । शीते च उष्ण-रुष्णवीर्यैरगुर्वादिभिः । साधितैः स्नेहैः । कृतान् अभ्यंगान् । तैस्तैः शीतोष्णवीर्यैः द्रव्यैः श्लक्ष्णपिष्टैः कृतान् प्रदेहान् प्रलेपान् । परिषेकावगाहने तैस्तैः शीतोष्णवीर्यद्रव्यैः शृतशीतसलिलेन परिषेकं । तत्र अवगाहनं च दद्यात् । पश्चादपि वक्ष्यति— अभ्यङ्गांश्च प्रदेहांश्च परिषेकांश्च कारयेत् । यथाभिलाषं शीतोष्णं विभज्य द्विविधं ज्वरं ॥ इति ॥१७३ ॥

तैराशिवति । वहिर्मार्गगतः । वहिर्मार्गः रक्तादयो धातवस्त्वक् च । तथा च— त्रयो रोगमार्गा इति । शाखा मर्मास्थिसन्धयः कोष्ठश्च । तत्र शाखा रक्तादयो धातवस्त्वक् च । स च वाह्यो रोगमार्गः । इति ( च० श्लो० ११ ) । ज्वरः तैः अभ्यङ्गादिभिः वहिःपरिमार्जनैः हि आशु प्रशमं याति । अङ्गानि ज्वरितस्य सुखं लभन्ते । बलं वर्णश्च वर्द्धते ॥ १७४ ॥

धूपनाञ्जनेति । जीर्णज्वराः । ये । त्वङ्मात्रे दोषशेषो येषां ते त्वङ्मात्रशेषाः । धात्वन्तरत्यागेन त्वङ्मात्रावस्थितदोषजन्याः । येषां जीर्णज्वराणां आगन्तुः भूताद्यावेशः अन्वयः कारणं । तथाविधाः जीर्णज्वरा धूपनैः अञ्जनयोगैश्च शमं यान्ति ॥ १७५ ॥

---

१७५ । धूपनाञ्जनयोगैश्च यान्ति इति ख ग पुस्तकयोः ।

इति क्रियाक्रमः सिद्धो ज्वरघ्नः सम्प्रकाशितः ।
येषान्त्वेष क्रमस्तानि द्रव्याण्यूर्ध्वमतः शृणु ॥१७६॥

रक्तशाल्यादयः शस्ताः पुराणाः षष्टिकैः सह ।
यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः ॥१७७॥

लाजपेयां सुखजरां पिप्पलीनागरैः शृताम् ।
पिबेज्ज्वरी ज्वरहरां क्षुद्वानल्पाग्निरादितः ॥१७८॥

अम्लाभिलाषी तामेव दाड़िमाम्लां सनागराम् ।
सृष्टविट् पैत्तिको वाथ शीतां मधुयुतां पिबेत् ॥१७९॥

क्रियाक्रममुपसंहरति—इतीति । इति सिद्धः निश्चितफलः ज्वरघ्नः क्रियाक्रमः सम्प्रकाशितः । औषधं सक्रियाक्रममिति पृष्टं । तत्र क्रियाक्रम उक्तः । साम्प्रतमौषधद्रव्याणि वक्तुमारभते—येषान्त्विति । येषां यवाग्वादीनां एष क्रमः क्रियाक्रमः तानि तत्साधनानि द्रव्याणि औषधद्रव्याणि अतः ऊर्ध्वं अतः परं मया वक्ष्यमाणानि शृणु ॥ १७६ ॥

यवाग्वोदनलाजानां प्रकृतिभूतद्रव्याण्याह—रक्तशाल्यादय इति । पुराणाः संवत्सरातीताः । शूकधान्यं शमीधान्यं समातीतं प्रशस्यते । इति । रक्तशाल्यादयः रक्तशालिप्रभृतयः शालयः । षष्टिकैः सह षष्टिकाश्च । ज्वरितानां । यवागूः । ओदनः । लाजाश्च । तदर्थे शस्ताः प्रशस्ताः । कुतः ? यतः ते ज्वरापहाः ॥ १७७ ॥

यथास्वौषधसिद्धाभिरित्युक्तं । सम्प्रति यवागूनां यथास्वौषधद्रव्याण्याह—लाजपेयामिति । ज्वरी अल्पाग्निः क्षुद्वान् चेत् आदितः प्रथमतः । सुखजरां अल्पाग्नित्वात् सुखेन जरीतुं शक्यां । पिप्पलीनागरैः शृतां साधितां । नागरं शुण्ठी । ज्वरहरां लाजपेयां लाजकृतां यवागूं पिबेत् । अम्लाभिलाषीति । दाडिमाम्लामितिच्छेदः । अम्लाभिलाषी अम्लार्थी चेत् । तदा तामेव लाजपेयां दाडिमाम्लां दाडिमरसैः अम्लीकृतां पिबेत् । अथ चेत् सृष्टविट् पैत्तिकः बहुपित्तोवा तदा तामेव लाजपेयां सनागरां

पेयां वा रक्तशालीनां पार्श्ववस्तिशिरोरुजि ।
श्वदंष्ट्राकण्टकारीभ्यां सिद्धां ज्वरहरां पिवेत् ॥१८०॥
ज्वरातिसारी पेयां वा पिवेत् साम्लां शृतां नरः ।
शालपर्णीबलाबिल्वनागरोत्पलधान्यकैः ॥१८१॥
शृतां विदारिगन्धाद्यैर्दीपनीं स्वेदनीं नरः ।
कासी श्वासी च हिक्की च यवागूं ज्वरितः पिवेत् ॥१८२॥
विबद्धवर्चाः सयवां पिप्पल्यामलकैः शृताम् ।
सर्पिष्मतीं पिवेत् पेयां ज्वरी दोषानुलोमनीम् ॥१८३॥

नागरैः शुण्ठीभिः शृतां शीतां मधुयुक्तां च कृत्वा पिवेत् । उक्तं च वृद्धवाग्भटेन—सृष्टविट् बहुपित्तो वा सशुण्ठीमाक्षिकां हिमां । इति ( अ० सं० चि० १ ) ॥ १७८।१७९ ॥

पेयां वेति । पार्श्वयोः वस्तेः शिरसश्च रुक् शूलं । तस्यां पार्श्ववस्तिशिरोरुजि । श्वदंष्ट्रा गोक्षुरः । कण्टकारी च । ताभ्यां सिद्धां ज्वरहरां रक्तशालीनां पेयां पिवेत् ॥ १८० ॥

ज्वरातिसारीति । ज्वरातीसारी नरः । शालपर्णी । बला । बिल्वं बिल्वशलाटु । नागरं शुण्ठी । उत्पलं नीलोत्पलं । धान्यकं धन्याकं च । तैः शृतां सिद्धां पेयां साम्लां दाडिमाम्लां कृत्वा पिवेत् ॥ १८१ ॥

शृतामिति । कासी श्वासी हिक्की च कासश्वासहिक्कावान् ज्वरितो नरः विदारीगन्धाद्यैः ह्रस्वपञ्चमूलेन शृतां । दीपनीं । स्वेदनीं । यवागूं पेयां पिवेत् । वृद्धवाग्भटेन—ह्रस्वेन पञ्चमूलेन हिक्कारुक्श्वासकासवानिति । ( अ० सं० चि० १ ) ॥ १८२ ॥

विबद्धवर्चा इति । विबद्धं विष्टब्धं वर्चः पुरीषं यस्य स विबद्धवर्चाः । ज्वरी । सयवां यवसहितैः रक्तशाल्यादितण्डुलैः कृतां । पिप्पल्यामलकैः शृतां । सर्पिष्मतीं सर्पिषा भृशं संस्कृतां । दोषाणामनुलोमनीं स्वमार्गप्रवर्त्तनीं । पेयां पिवेत् ॥१८३॥

---

१८१ । पृश्निपर्णीबलाविल्व……इति ङ पुस्तके ।

कोष्ठे विबद्धे सरुजि पिबेत् पेयां शृतां ज्वरी।
मृद्वीकापिप्पलीमूलचव्यामलकनागरैः ॥१८४॥
पिबेत् सबिल्वां पेयां वा ज्वरे सपरिकर्त्तिके।
बलावृक्षाम्लकोलाम्लकलसीधावनीशृताम् ॥१८५॥
अस्वेदनिद्रस्तृष्णार्त्तः पिबेत् पेयां सशर्कराम्।
नागरामलकैः सिद्धां घृतभृष्टां ज्वरापहाम् ॥१८६॥
मुद्गान् मसूरांश्चणकान् कुलत्थान् समुकुष्टकान्।
यूषार्थं यूषसात्म्याय ज्वरिताय प्रदापयेत् ॥१८७॥

कोष्ठे विबद्धे इति। कोष्ठे विबद्धे। सरुजि च सति। मृद्वीकादिभिः शृतां पेयां पिबेत्॥ १८४ ॥

पिबेदिति। सपरिकर्तिके कोष्ठे परिकर्तनवद्वेदनायुक्ते। परिकर्तनं छेदनं। सबिल्वां। बिल्वं बिल्वशलाटु। बला। वृक्षाम्लः तिन्तिड़ी। कोलः बृहद्बदरीफलं। तदेव अम्लं। कलसी पृश्निपर्णी। धावनी कण्टकारी च। ताभिः शृतां बिल्वबलादिभिः साधितां पेयां पिबेत्॥ १८५ ॥

अस्वेदनिद्र इति। अस्वेदनिद्रः अस्वेदः अनिद्रश्च। तृष्णार्तः। ज्वरी। नागरामलकैः सिद्धां। घृतभृष्टां। ज्वरापहां। पेयां सशर्करां शर्करायुक्तां कृत्वा पिबेत्। यवागूसाधनद्रव्यपरिमाणं यथा—क्वाथ्यद्रव्याञ्जलिं शुष्कं श्रपयित्वा जलाढके। पादशेषेण तेनास्य यवागूमुपकल्पयेत्॥ कर्षार्द्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलं। विनीय पाचयेत् युक्त्या वारिप्रस्थेन चापरां॥ इति। अपरामिति क्वाथसाध्याया यवाग्वा भिन्नां। कल्कसाध्यामित्यर्थः॥ १८६ ॥

यूषद्रव्याण्याह—मुद्गानिति। यूषसात्म्याय ज्वरिताय यूपार्थं मुद्गान् मसूरान् चणकान् समुकुष्टकान् कुलत्थांश्च। मुकुष्टको वनमुद्गः। प्रदापयेत्। सुश्रुतेऽपि—मुद्गान् मसूरांश्चणकान् कुलत्थान् समुकुष्टकान्। आहारकाले यूपार्थं ज्वरिताय प्रदापयेत्॥ इति (सु० उ० ३९) ॥१८७॥

पटोलपत्रं सफलं कुलकं पापचेलिकम् ।
कर्कोटकं कठिल्लञ्च विद्याच्छाकं ज्वरे हितम् ॥१८८॥
लावान् कपिञ्जलानेणांश्चकोरानुपचक्रकान् ।
कुरङ्गान् कालपुच्छांश्च हरिणान् पृषताञ्छशान् ॥१८९॥
प्रदद्यान्मांससात्म्याय ज्वरिताय ज्वरापहान् ।
ईषदम्लाननम्लान् वा रसान् काले विचक्षणः ॥१९०॥
कुक्कुटांश्च मयूरांश्च तित्तिरिक्रौञ्चवर्त्तकान् ।
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः ॥१९१॥

ज्वरहरं शाकमाह—पटोलपत्रमिति । पटोलपत्रं । सफलं तत्फलञ्च । कुलकं कारवेल्लकं । पापचेलिकं पाठाशाकं । कर्कोटकं कठिल्लं कांकरोल इति वंगेषु ख्यातं शाकं । रक्तपुनर्नवाशाकं च । ज्वरे हितं विद्यात् । सुश्रुतेनाप्युक्तं— पटोलपत्रं वार्ताकं कठिल्लं पापचेलिकं । कर्कोटकं पर्पटकं गोजिह्वां बालमूलकं । पत्रं गुडूच्याः शाकार्थं ज्वरिताय प्रदापयेत् ॥ इति ( सु० उ० ३९ ) ॥ १८८ ॥

ज्वरहरमांसान्याह—लावानिति । विचक्षणो भिषक् मांससात्म्याय ज्वरिताय । लावान् लावः स्थलचरः पक्षिभेदः । कपिञ्जलान् कपिंजलो गौरतित्तिरिः । एणान् कृष्णहरिणान् । तथाच—एणः कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते । न कृष्णो न च ताम्रश्चेत् कुरङ्गः सोऽभिधीयते ॥ इति ( सु० सू० ४६ ) । चकोरान् प्रसिद्धान् । उपचक्रकान् । उपचक्रः क्रकरभेदः कृशचञ्चुर्मदाविलः । कुरङ्गान् । कुरङ्गो न कृष्णः न च ताम्रः चतुरगतिर्हरिणभेदः । कालपुच्छान् हरिणविशेषान् । हरिणान् ताम्रान् । पृषतान् विन्दुचित्रितहरिणान् । शशान् प्रसिद्धान् । लावादीनां मांसैः कृतान् ज्वरापहान् रसान् ईषदम्लनद्धान् दाडिमरसैरम्लीकृत्य । अनम्लान् । विकल्पोऽयं अम्लसात्म्यापेक्षया । काले रसदानयोग्ये प्रदद्यात् ॥ १८९ । १९० ॥

कुक्कुटांश्चेति । केचित् चिकित्सकाः । गुरूष्णत्वात् । गुरुत्वात् । उष्णत्वादुष्णवीर्यत्वाच्च । कुक्कुटान् । मयूरान् । कुक्कुटमयूरौ प्रसिद्धौ । तित्तिरिः कृष्णतित्ति-

लंघनेनानिलबलं ज्वरे यद्यधिकं भवेत् ।
भिषङ्मात्राविकल्पज्ञो दद्यात्तानपि कालवित् ॥१६२॥
घर्माम्बु चानुपानार्थं तृषिताय प्रदापयेत् ।
मद्यं वा मद्यसात्म्याय यथादोषं यथाबलम् ॥१६३॥
गुरूष्णस्निग्धमधुरकषायांश्च नवज्वरे ।
आहारान् दोषपक्त्यर्थं प्रायशः परिवर्जयेत् ॥१६४॥

रिः। क्रौंचः बकभेदः कोंचबक इति वंगेषु ख्यातः। घर्तकः बटेर इति ख्यातः पक्षी। तान् ज्वरे न शंसन्ति इच्छन्ति । लङ्घनेनेति । ज्वरे लङ्घनेन अनिलबलं यदि अधिकं भवेत् । तदा कालवित् । मात्राया विकल्पः । तज्ज्ञः भिषक् । तानपि दद्यात् । मात्राकालाभ्यामुपपाद्य । तदा वातबलाधिक्ये । वातस्य शैत्यात् मात्रया च दानात् तेषां उष्णत्वं गुरुत्वं च न स्यात् । सुश्रुतेनाऽप्युक्तं—लावान् कपिंजलान् एणान् पृषतान् शरभाञ्छशान् । कालपुच्छान् कुरङ्गांश्च तथैवमृगमातृकान् ॥ मांसार्थं मांससात्म्यानां ज्वरितानां प्रदापयेत् । सारसक्रौञ्चशिखिनः कुक्कुटांस्तित्तिरींस्तथा ॥ गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः । ज्वरितानां प्रकोपन्तु यदा याति समीरणः । तदैते ऽपि हि शस्यन्ते मात्राकालोपपादिताः । इति ( सु० उ० ३९ ) ॥१६१।१६२॥

यवाग्वादिभिरुपचारानन्तरं तृषितस्यानुपानार्थमाह–घर्माम्ब्विति । तृषिताय । अनु पश्चात् पेयादिपानानन्तरं। पानमनुपानं । तदर्थं घर्माम्बु उष्णाम्बु प्रदापयेत् । मद्यसात्म्याय यथादोषं यथाबलं दोषबलापेक्षया मद्यं वा प्रदापयेत् ॥ १६३ ॥

प्रसङ्गात् नवज्वरे वर्जनीयमाह–गुरूष्णेति । नवज्वरे गुरूष्णादीन् आहारान् । कषायः कषायरसः । दोषपक्त्यर्थं प्रायशः परिवर्जयेत् । प्रागप्युक्तं—नवज्वरे दिवास्वप्नस्नानाभ्यङ्गान्नमैथुनं । क्रोधप्रवातव्यायाम कषायांश्च विवर्जयेत् ॥ इति । सुश्रुतेनाप्युक्तं—परिषेकावगाहांश्च स्नेहान् संशोधनानि च । स्नानाभ्यङ्गदिवास्वप्नशीतव्यायामयोषिता ॥ कषायगुरुरूक्षाणि क्रोधदीनि तथैव च । सारवन्ति च भोज्यानि वर्जयेत् तरुणज्वरी ॥ तथैव नवधान्यादि वर्जयेच्च समासतः । इति (सु०उ०३९)॥१६४॥

अन्नपानक्रमः सिद्धो ज्वरघ्नः सम्प्रकाशितः ।
अत ऊर्ध्वं प्रवक्ष्यन्ते कषाया ज्वरनाशनाः ॥१९५॥

पाच्यं शीतकषायं वा मुस्तपर्पटकं पिबेत् ।
सनागरं पर्पटकं पिबेद्वा सदुरालभम् ॥१९६॥

किराततिक्तकं मुस्तं गुडूचीं विश्वभेषजम् ।
पाठामुशीरं सोदीच्यं पिबेद्वा ज्वरशान्तये ॥१९७॥

ज्वरघ्ना दीपनाश्चैते कषाया दोषपाचनाः ।
तृष्णाऽरुचिप्रशमना मुखवैरस्यनाशनाः ॥१९८॥

अनुपानमुपसंहरति—अनुपानक्रम इति । इति ज्वरघ्नः सिद्धः अनुपानक्रमः संप्रकाशितः । अत उर्ध्वं अतः परं ज्वरनाशनाः कषायाः प्रवक्ष्यन्ते ॥१९५॥

पाच्यमिति । मुस्तपर्पटकं । सनागरं पर्पटकं वा । नागरं शुंठी । सदुरालभं पर्पटकं वा । दोषादिविशेषापेक्षया कदाचित् मुस्तया कदाचित् शुंठ्या कदाचित् दुरालभया वा युक्तं पर्पटकं । तत्साधितं पाच्यं पाचनीयं क्वाथरूपं । शीतकषायं वा । शीतकषायः—द्रव्यं संक्षुन्नमुदके प्रक्षिप्य निशि संस्थितं । तदुक्तं—द्रव्यादापोथितात्तोये तत् पुनर्निशि संस्थितात् । कषायो योऽभिनिर्याति स शीतः समुदाहृतः ॥ इति । पिबेत् ज्वरितः । शृतकषायपानं कफानुबन्धवातज्वरे । पित्तानुबन्धे तु शीतकषायपानं । तदुक्तं—मुस्तया पर्पटं युक्तं शुंठ्या दुःस्पर्शयापि वा । पाच्यं शीतकषायं वा ॥ इति ( अ० सं० चि० १ ) ॥ १९६ ॥

किराततिक्तकमिति । किराततिक्तकं भूनिम्बं । मुस्तं । गुडुचीं । विश्वभेषजं शुंठीं च । अयमेको योगः । पाठां सोदीच्यं सबालकमुशीरं च । अयमन्यः । तत्तद्द्रव्यकृतं पाच्यं क्वाथं शीतं वा कषायं ज्वरशान्तये पिबेत् ज्वरितः ॥ १९७ ॥

उक्तकषायाणां गुणमाह—ज्वरघ्ना इति । एते उक्ताः कषायाः मुस्तपर्पटकादयः । दीपनाः अग्नेः । दोषाणां पाचनाः । तृष्णाया अरुचेश्च प्रशमनाः । मुखवैरस्यस्य नाशनाश्च । वृद्धवाग्भटोऽप्येवमाह—पाच्यं शीतकषायं वा पाठोशीरं सबालकं ।

वत्सकारग्वधौ पाठां षड्ग्रन्थां कटुरोहिणीम् ।
मूर्वां सातिविषां निम्बं पटोलं धन्वयासकम् ॥१९९॥
वचां मुस्तमुशीरं च मधुकं त्रिफलां बलाम् ।
पाक्यं शीतकषायं वा पिबेज्ज्वरहरं नरः ॥२००॥
कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी ।
पटोलं सारिवा मुस्तं पाठा कटुकरोहिणी ॥२०१॥
निम्बः पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ ।
किराततिक्तममृता चन्दनं विश्वभेषजम् ॥२०२॥
गुडूच्यामलकं मुस्तमर्द्धश्लोकसमापनाः ।
कषायाः शमयन्त्याशु पञ्च पञ्चविधान् ज्वरान् ॥२०३॥

पिबेत्तद्वच्च भूनिम्बगुडूचीमुस्तनागरं ॥ यथायोगमिमे योज्याः कषाया दोषपाचनाः । ज्वरारोचकतृष्णास्यवैरस्यापत्तिनाशनाः ॥ इति ( अ० सं० चि १ ) ॥१९८॥

वत्सकारग्वधावित्यादि । वत्सकारग्वधौ वत्सकं आरग्वधं च । पाठां । षड्ग्रंथां पीतवचां । कटुरोहिणीं कटुकां । मूर्वां । अतिविषां । निम्बं निम्बवृक्षत्वचं । पटोलं पटोलपत्रं । धन्वयासकं दुरालभां । वचां श्वेतां । मुस्तं । उशीरं । मधुकं यष्टीमधु । त्रिफलां । बलां च । एभिः पाक्यं शृतशीतं वा कषायं ज्वरहरं नरो ज्वरितः पिबेत् । वत्सकारग्वधावित्यादिबलामित्यन्तं योगत्रयमिति केचित् । केचिदेकमेव योगं वदन्ति ॥१९९ । २००॥

सन्ततादिपञ्चविधज्वरशमनान् पञ्चविधकषायानाह—कलिंगका इत्यादि । कलिंगकाः इन्द्रयवाः । पटोलस्य पत्रं । कटुकरोहिणी च । इति अर्धश्लोकसमापनः सन्ततज्वरशमनः प्रथमः कषायः । पटोलं पटोलपत्रं सारिवा अनन्तमूलं । मुस्तं । पाठा । कटुकरोहिणी च । इति अर्धश्लोकसमापनः सततकज्वरशमनः द्वितीयः कषायः । निम्बः निम्बवृक्षत्वक् । पटोलं पटोलपत्रं । त्रिफला । मृद्वीका द्राक्षा । मुस्तवत्सकौ मुस्तं वत्सकश्च । अयमन्येद्युष्कज्वरशमनः तृतीयः कषायः । किराततिक्तं ।

सन्ततं सततान्येद्युस्तृतीयकचतुर्थकान् ।
मधूकमुस्तमृद्वीकाकाश्मर्य्याणि परूषकम् ॥२०४॥
त्रायमाणामुशीरं च त्रिफलां कटुरोहिणीम् ।
पीत्वा निशि स्थितं जन्तुर्ज्वराच्छीघ्रं विमुच्यते ॥२०५॥
जात्यामलकमुस्तानि तद्वद्धन्वयवासकम् ॥२०६॥

अमृता गुडूची। चन्दनं रक्तचन्दनं। विश्वभेषजं शुंठी च। इति तृतीयकज्वर-शमनश्चतुर्थः कषायः। गुडूची आमलकं मुस्तं च। इति चतुर्थकशमनः पञ्चमः कषायः। अयं पादसमापनः। अर्द्धश्लोकेन समापनं येषां ते अर्द्धश्लोकसमापनाः। यद्यपि पञ्चमः पादसमापनः तथापि आद्यानां चतुर्णां अर्द्धश्लोकैः समापनात् अर्द्ध-श्लोकसमापना इत्युच्यते। अर्द्धश्लोकसमापनाः एते पञ्च कषायाः क्वाथरूपाः समात् पञ्चविधान्। तद्विवरणं—सन्ततमित्यादि। ज्वरान् आशु शीघ्रं शमयन्ति ॥ २०१—२०३ ॥

मधूकेत्यादि। मधूकं मधूकपुष्पं। मुस्तं। मृद्वीका द्राक्षा। काश्मर्यं गाम्भारीफलं च। तानि। परूपकं। त्रायमाणां। उशीरं। त्रिफलां। कटुरोहिणीं च। एतत् सर्वं संक्षुन्नं उदके प्रक्षिप्य निशि स्थितं मधूकादिभिः कृतं शीतकषायं पीत्वा जन्तुः ज्वरितः प्राणी ज्वरात् शीघ्रं विमुच्यते। वृद्धवाग्भटे—मधूकमुस्तेत्यत्र मधूकपुष्पेति पाठः। तथाच—मधूकपुष्पमृद्वीकात्रायमाणापरूपकं। सोशीरतिक्ता त्रिफला काश्मर्यं कल्पयेद्धिमम्। कषायं तं पिबन् काले ज्वरान् सर्वान् व्यपोहति। इति (अ० सं० चि० १)। हिमं कषायं शीतकषायं ॥ २०४। २०५ ॥

जात्यामलकेति। जाती जातीपल्लवः। आमलकं। मुस्तं। च। तानि। धन्वयवासकं दुरालभां च। तद्वत् निशि स्थितं। तत्कृतं शीतकषायं पीत्वा जन्तुः ज्वरात् शीघ्रं विमुच्यते। तदुक्तं—जात्यामलकमुस्तानि तद्वद् धन्वयवासकम्। इति (अ० सं० चि० १) ॥ २०६ ॥

---

२०१। सन्ततं सततान्येद्युस्तृतीयकचतुर्थकान् इति श्लोकार्धं न पठ्यते या पुस्तके।

विबद्धदोषो ज्वरितः कषायं सगुडं पिबेत् ।
त्रिफलां त्रायमाणां च मृद्वीकां कटुरोहिणीम् ।
पित्तश्लेष्महरस्त्वेष कषायोऽत्यानुलोमिकः ॥२०७॥

वत्सको मुस्तकं दारुबृहत्यौ समहौषधे ।
कोलवल्लीच योगोऽयं सन्निपातज्वरापहः ॥२०८॥

शटी पुष्करमूलञ्च व्याघ्री शृङ्गी दुरालभा ।
गुडूची नागरं पाठा किरातं कटुरोहिणी ॥२०९॥
एष शट्यादिको वर्गः सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्त्तिश्वासतन्द्रासु शस्यते ॥२१०॥

विबद्धदोष इति । विबद्धदोषः बद्धविट्कः । ज्वरितः । त्रिफलां । त्रायमाणां । मृद्वीकां । कटुरोहिणीं च । तत्कृतं कषायं सगुडं प्रक्षेपविधिना गुडयुक्तं कृत्वा । पिबेत् । उक्तं च—बद्धविट् कटुकाद्राक्षात्रायन्तीत्रिफलागुडान् । इति (अ०सं० चि० १)। पित्तश्लेष्मेति । एष उक्तः त्रिफलादिकृतः कषायः पित्तश्लेष्महरः । अत्यानुलोमिकः अतिशयेन आनुलोम्यकरश्चापि ॥ २०७ ॥

वत्सक इत्यादि । वत्सकः इन्द्रयवः । मुस्तकं । दारु देवदारु । बृहत्यौ समहौषधे बृहतीद्वयं महौषधं च । बृहतीद्वयं बृहती कण्टकारी च । महौषधं शुंठी । कोलवल्ली गजपिप्पलि च । अयं योगः वत्सकादिकृतः कषायः सन्निपातज्वरापहः ॥ २०८ ॥

शटीत्यादि । एष शट्यादिको वर्गः सन्निपातज्वरापहः । तथा कासः । हृद्ग्रहः । पार्श्वार्तिः पार्श्वरुक् । श्वासः । तन्द्रा च । तासु शस्यते । तासां निबर्हणः ॥ २०९—२१० ॥

---

२०६ । एतस्मादनन्तरं त्रिवृताशर्करायुक्तः पित्तश्लेष्मज्वरापहः इत्यधिकः पाठः क पुस्तके ।

बृहत्यौ पौष्करं भार्गी शटी शृङ्गी दुरालभा ।
वत्सकस्य च बीजानि पटोलं कटुरोहिणी ॥२११॥
बृहत्यादिर्गणः प्रोक्तः सन्निपातज्वरापहः ।
कासादिषु च सर्वेषु दद्यात् सोपद्रवेषु च ॥२१२॥
कषायाश्च यवाग्वश्च पिपासाज्वरनाशनाः ।
निर्दिष्टा भेषजाध्याये भिषक् तानपि योजयेत् ॥२१३॥
ज्वराः कषायैर्वमनैर्लंघनैर्लघुभोजनैः ।
रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितम् ॥२१४॥

बृहत्यावित्यादि । बृहत्यौ बृहतीद्वयं । पुष्करं पुष्करमूलं । पटोलं पटोलपत्रं । एष बृहत्यादिर्गणः सन्निपातज्वरापहः प्रोक्तः । तं कासादिषु कासहृद्ग्रहपार्श्वार्त्यादिषु सर्वेषु सोपद्रवेषु च दद्यात् भिषक् ॥ २११ । २१२॥

भेषजाध्यायोक्तानां भेषजानां यवागूनाञ्चातिदेशमाह—कषायाश्चेति । प्राक् भेषजाध्याये षड्विरेचनशतीये अपामार्गतण्डुलीये च पिपासाज्वरनाशनाः तृष्णाघ्नाः ज्वरघ्नाश्च ये कषायाः यवाग्वश्च निर्दिष्टाः उक्ताः । तथा च षड्विरेचनशतीये—नागरधन्वयासकमुस्तपर्पटकचन्दनकिराततिक्तकगुडुचीह्रीवेरधन्याकपटोलानीति दशेमानि तृष्णानिग्रहणानि भवन्ति । इति । सारिवाशर्करापाठामञ्जिष्ठाद्राक्षापरूषकाभयामलकविभीतकानीति दशेमानि ज्वरहराणि भवन्ति। इति च । एतौ तृष्णाज्वरहरौ महाकषायौ । अपामार्गतण्डुलीये च पिपासाघ्नी यवागूरुक्ता । यथा—मृद्वीका सारिवालाजपिप्पलीमधुनागरैः । पिपासाघ्नी ॥ इति । तत्रैव—गव्यमांसरसैः साम्ला विषमज्वरनाशिनी इत्यादि । भिषक् तानपि योजयेत् ॥ २१३ ॥

सर्पिष्पानं यथामृतमित्युक्तं । सम्प्रति सर्पिषः प्रयोगानभिधातुं सर्पिषो विषयमाह—ज्वरा इति । कषायैः वमनैः लंघनैः लघुभोजनैश्च रूक्षस्य पुंसः ये ज्वराः न शाम्यन्ति । सर्पिः यथास्वौषधसिद्धं तेषां भिषग्जितमौषधं उपशमनं भवति ॥ २१४ ॥

२११ । स्नेहपक्वः सपानजः इति क ग पुस्तकयोः ।

रूक्षं तेजो ज्वरकरं तेजसा रूक्षितस्य च ।
यः स्यादनुबलो धातुः स्नेहसाध्यः स चानिलः ॥२१५॥
कषायाः सर्व एवैते सर्पिषा सह योजिताः ।
प्रयोज्या ज्वरशान्त्यर्थमग्निसन्धुक्षणाः शिवाः ॥२१६॥
पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी ।
कलिङ्गकस्तामलकी शारिवाऽतिविषा स्थिरा ॥२१७॥

कथं तथाविधज्वरे सर्पिरुपशमनं स्यादिति ? अत आह—रूक्षमिति। ज्वरः सन्तापलक्षणः। तत्करं तेजः पित्ताख्यं। उष्णत्वात् पित्तं तेजः इत्युच्यते। तेनास्य वातसखत्वमपि द्योतितं भवति। ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना। इति। रूक्षं। सस्नेहमुष्णमित्यत्र पित्तं यत् सस्नेहमीषत्स्निग्धमित्युक्तं तत् सामावस्थायां। निरामे तु रूक्षं। रूक्षत्वात् स्नेहसाध्यं। तेजसा रूक्षितस्य ज्वरितस्य तेजसः प्राबल्यात् यः धातुः अनिलः वातः सहचरः अनुबलः प्रबलः स्यात्। अग्नेः साहचर्यात् बाह्यवायुरिव। स च सोऽपि स्नेहसाध्यः रूक्षत्वात्। लंघनादिना कफे क्षीणे यदा वातपित्तयोरुल्बणत्वं तदैव सर्पिर्देयं। तथाविधावस्था प्रायशः दशाहात् परं भवति। तदुक्तं प्राक्—अत ऊर्ध्वं कफे क्षीणे वातपित्तोत्तरे ज्वरे। परिपक्वेषु दोषेषु सर्पिष्पाणं यथामृतम्॥ इति॥ २१५॥

कषाया इति। एते प्रागुक्ताः ज्वरघ्नाः सर्व एव कषायाः सर्पिषा पुराणेन सह योजिताः मिश्रिताः ज्वरशान्त्यर्थं प्रयोज्याः। ते अग्नेः सन्धुक्षणाः दीपनाः। शिवाश्च स्युः॥ २१६॥

पिप्पल्य इत्यादि। पिप्पल्यः। चन्दनं रक्तचन्दनं। मुस्तं। उशीरं। कटुरोहिणी। कलिंगकः इन्द्रयवः। तामलकी भूम्यामलकी। सारिवा अनन्तमूलं। अतिविषा। स्थिरा शालपर्णी। द्राक्षा आमलकं। बिल्वं बिल्वशलाटु। तानि। त्रायमाणा। निदिग्धिका कण्टकारी च। इति पञ्चदश द्रव्याणि। एतैः द्रव्यैः कल्कीकृतैः स्नेहचतुर्गुणे तोये सिद्धं पुराणं घृतं गव्यं कल्काच्चतुर्गुणं। तथाच—द्रवकार्य्येऽपि चानुक्ते सर्वत्र सलिलं स्मृतम्। इति। जलस्नेहौषधानाञ्च प्रमाणं यत्र नेरितं। तत्र स्यादौषधात्

द्राक्षामलकबिल्वानि त्रायमाणा निदिग्धिका ।
सिद्धमेभिर्घृतं सद्यो ज्वरं जीर्णमपोहति ॥२१८॥
क्षयं कासं शिरःशूलं पार्श्वशूलं हलीमकम् ।
अंसाभितापमग्निञ्च विषमं सन्नियच्छति ॥२१६॥

इति पिप्पल्याद्यं घृतम् ।

वासां गुडूचीं त्रिफलां त्रायमाणां यवासकम् ।
पक्त्वा तेन कषायेण पयसा द्विगुणेन च ॥२२०॥
पिप्पलीमुस्तमृद्वीकाचन्दनोत्पलनागरैः ।
कल्कीकृतैश्च विपचेद् घृतं जीर्णज्वरापहम् ॥२२१॥

इति वासाद्यं घृतम् ।

बलां श्वदंष्ट्रां बृहतीं कलसीं धावनीं स्थिराम् ।
निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम् ॥२२२॥

स्नेहः स्नेहात्तोयं चतुर्गुणं ॥ इति च (च० क० १२)। द्रवस्य स्नेहौषधादीनां प्रमाणस्य च अनुक्तौ सर्वत्र स्नेहपाके एवं विज्ञेयं । सिद्धं तच्च घृतं सद्यः जीर्णज्वरमपोहति नाशयति । क्षयं यक्ष्माणं कासं शिरःशूलं पार्श्वशूलं हलीमकं अंसाभित्तापं विषमं अग्निं च अग्नेर्वैषम्यं संनियच्छति शमयति ॥२१७-२१९॥

वासामित्यादि । वासां गुडुचीं त्रिफलां त्रायमाणां यवासकं च क्वाथविधिना पक्त्वा तेन पादशेषेण कषायेण क्वाथेन घृतात् त्रिगुणेन घृतसमेन पयसा च । एवं हि द्रवः स्नेहाच्चतुर्गुणो भवति । स्नेहात्तोयं चतुर्गुणमिति । तोयमिति द्रवस्योपलक्षणं । पिप्पल्यादिभिः कल्कीकृतैः स्नेहचतुर्भागमितैः संवत्सरातीतं घृतं विपचेत् । तथा साधितं तच्च घृतं जीर्णज्वरापहं ॥ २२०।२२१ ॥

बलामित्यादि । बलां । श्वदंष्ट्रां गोक्षुरं । बृहतीं । कलसीं पृश्निपर्णीं । धावनीं कण्टकारीं । स्थिरां शालपर्णीं च । श्वदंष्ट्रादिस्थिरान्तं ह्रस्वपञ्चमूलं । इत्थं च कलसीं

२२१ । क्षयकासशिर शूल············इति ग ङ च पुस्तकेषु ।

कृत्वा कषायं पेष्यार्थे दद्यात् तामलकीं शटीम् ।
द्राक्षां पुष्करमूलञ्च मेदामामलकानि च ॥२२३॥
घृतं पयश्च तत् सिद्धं सर्पिर्ज्वरहरं परम् ।
तृष्णाकासशिरःशूलपार्श्वशूलांसतापनुत् ॥२२४॥
इति बलाद्यं घृतम् ।
ज्वरिभ्यो बहुदोषेभ्य ऊर्ध्वं चाधश्च बुद्धिमान् ।
दद्यात् संशोधनं काले कल्पे यदुपदेक्ष्यते ॥२२५॥

शालपर्णीं । धावनीं पृश्निपर्णीं । स्थिरामपि शालपर्णीविशेषं । शालपर्ण्या भागद्वयं वा । इति गङ्गाधरव्याख्यानं हेयं । निम्बं । पर्पटकं । मुस्तं । त्रायमाणां बलाडुमुर इति वंगेषु ख्यातां । दुरालभां च । कषायं कृत्वा क्वाथयित्वा तत्र पेष्यार्थे कल्कार्थं । तामलकीं । शटीं । द्राक्षां । पुष्करमूलं । मेदां । आमलकानि च । दद्यात् । घृतं पयश्च दद्यात् । बलादिभिः क्वाथं कृत्वा तस्मिन्क्वाथे स्नेहात् त्रिगुणे स्नेहसमे च पयसि कल्कितैः तामलक्यादिभिः स्नेहपादिकैः घृतं साधयेत् । सिद्धं तत् सर्पिः घृतं परमतीव ज्वरहरं । तृष्णादिनुच्च । तदुक्तं वृद्धवाग्भटेनापि—दुरालभाबलामुस्तात्रायन्तीनिम्बपर्पटं । पञ्चमूलं कनीयश्च क्वाथयित्वा घृतं पचेत् ॥ सक्षीरं कल्कितैर्द्राक्षामेदामलकपौष्करैः । शटीतामलकीयुक्तैस्तच्च ज्वरहरं परं ॥ क्षयकासशिरःपार्श्वहृच्छूलांसाभितापनुत् । इति । ( अ० सं० चि० २ ) ॥२२२-२२४॥

बहुदोषेषु ज्वरिषु ऊर्ध्वाधः संशोधनमाह—ज्वरिभ्य इति । बुद्धिमान् भिषक् बहुदोषेभ्यः ज्वरिभ्यः । बहुदोषेष्वेव शोधनस्य विहितत्वात् । तथाच—बहुदोषाणां पुनर्दोषावसेचनमेव कार्यं । न ह्यभिन्ने केदारसेतौ पल्वलप्रसेकोऽस्ति । तद्वद् दोषावसेचनं । इति ( च० वि० ३ ) । बहुदोषस्य लिंगानि चिकित्साप्राभृतीये—अविपाकोऽरुचिःस्थौल्यमित्यादिना उक्तानि । ऊर्ध्वमधश्च संशोधनं वमनविरेचनरूपं इह उपदिश्यमानं कल्पे कल्पस्थानेऽपि पश्चात् यत् उपदेक्ष्यते तच्चापि काले वमनविरेचनयोग्यावस्थायां दद्यात् ॥ २२५ ॥

मदनं पिप्पलीभिर्वा कलिंगैर्मधुकेन वा ।
युक्तमुष्णाम्बुना पेयं वमनं ज्वरशान्तये ॥२२६॥
क्षौद्राम्बुना रसेनेक्षोरथवा लवणाम्बुना ।
ज्वरे प्रच्छर्द्दनं शस्तं मद्यैर्वा तर्पणेन वा ॥२२७॥
मृद्वीकामलकानां वा रसं प्रच्छर्द्दनं पिबेत् ।
रसमामलकानां वा घृतभृष्टं ज्वरापहम् ॥२२८॥
लिह्याद्वा त्रैवृतं चूर्णं संयुक्तं मधुसर्पिषा ।
पिबेद्वा क्षौद्रमावाप्य सघृतं त्रिफलारसम् ॥२२९॥
आरग्वधं वा पयसा मृद्वीकानां रसेन वा ।
त्रिफलां त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥२३०॥

तत्रादौ ज्वरहरान् वमनयोगानाह—मदनमिति । आमाशयगते दोषे मदनं मदनफलं कल्कीकृतं । पिप्पलीभिर्युक्तं । कलिंगैरिन्द्रयवैर्वा युक्तं । मधुकेन यष्टीमधुना वा युक्तं । कल्कीकृतं वमनं वमनकरं ज्वरशान्तये उष्णाम्बुना पेयम् ॥ २२६ ॥

क्षौद्राम्बुनेति । ज्वरे क्षौद्राम्बुना क्षौद्रमिश्रेणाम्बुना । अथवा इक्षुरसेन । लवणाम्बुना वा । मद्यैः वा । तर्पणेन तत्तद्दोषहरद्रव्यक्वाथेनालोडितलाजसक्तुभिर्वा । प्रच्छर्द्दनं वमनं शस्तं ॥ २२७ ॥

वमनमुक्त्वा विरेचनमाह—मृद्वीकेति । मृद्वीकामलकानां रसं क्वाथं घृतभृष्टं । केवलानामामलकानां रसं वा घृतभृष्टं ज्वरापहं प्रच्छर्द्दनं । प्रच्छर्द्दनशब्देन इह विरेचनमुच्यते । पिबेत् ॥ २२८ ॥

लिह्याद्वेति । अथवा त्रैवृतं चूर्णं त्रिवृच्चूर्णं मधुसर्पिषा घृतमधुभ्यां संयुक्तं कृत्वा लिह्यात् । अथवा त्रिफलारसं सघृतं क्षौद्रं मधु आवाप्य प्रक्षिप्य घृतं मधु च प्रक्षिप्य पिबेत् ॥ २२९ ॥

आरग्वधमिति । ज्वरितः पुमान् आरग्वधं चतुरंगुलं । तस्य फलमज्जानं । चूर्णितं

---

२२६ । त्रिवृता त्रायमाणां वा इति ग घ ख पुस्तकेषु ।

ज्वराद्विमुच्यते पीत्वा मृद्वीकाभिः सहाभयाम् ।
पयोऽनुपानमुष्णं वा पीत्वा द्राक्षारसं नरः ॥२३१॥
कासाच्छ्वासाच्छिरःशूलात् पार्श्वशूलाच्चिरज्वरात् ।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥२३२॥
एरण्डमूलोत्क्वथितं ज्वरात् सपरिकर्त्तिकात् ।
पयो विमुच्यते पीत्वा तद्वद्विल्वशलाटुभिः ॥२३३॥

पयसा वा । मृद्वीकानां द्राक्षाणां रसेन वा पिबेत् । त्रिवृतां त्रायमाणां वा चूर्णितां पयसा पिबेत् ॥ २३० ॥

ज्वरादिति । नरः मृद्वीकाभिः सह अभयां हरीतकीं क्वथितां पीत्वा ज्वराद्विमुच्यते । उष्णं द्राक्षारसं पयोऽनुपानं यथा तथा पीत्वा वा । द्राक्षारसं पीत्वा पयः अनुपिबेत् । ज्वराद्विमुच्यते ॥ २३१ ॥

सम्प्रति जीर्णज्वरे क्षीरप्रयोगानाह—कासादिति । ज्वरितः पुमान् पञ्चमूलीशृतं । पञ्चानां मूलानां समाहारः पञ्चमूली । पञ्चमूली महती स्वल्पा वा ग्राह्या । तया कल्कितया अष्टमभागमितया शृतं चतुर्गुणे तोये पक्वं । तथाच—द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणं । क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः ॥ इति । पयः गव्यं पीत्वा कासात् श्वासात् शिरःशूलात् पार्श्वशूलात् चिरज्वरात् दीर्घकालानुबन्धिज्वराच्च मुच्यते ॥ २३२ ॥

एरण्डेति । एरण्डमूलेन उत्क्वथितं शृतं । तद्वत् विल्वशलाटुभिः बालविल्वैरुत्क्वथितं वा । पयः पीत्वा सपरिकर्त्तिकात् गुदे कर्त्तनवत् पीड़ायुक्तात् ज्वराद् विमुच्येत ज्वरितः ॥ २३३ ॥

---

२३२ । पार्श्वशूलात् सपीनसात् इति पुस्तके ।

त्रिकण्टकबलाव्याघ्री गुड़नागरसाधितम् ।
वर्च्चोमूत्रविबन्धघ्नं शोफज्वरहरं पयः ॥२३४॥
सनागरं समृद्वीकं सघृतक्षौद्रशर्करम् ।
शृतं पयः सखर्जूरं पिपासाज्वरनाशनम् ॥२३५॥
चतुर्गुणेनाम्भसा वा शृतं ज्वरहरं पयः ।
धारोष्णं वा पयः सद्यो वातपित्तज्वरं जयेत् ॥२३६॥
जीर्णज्वराणां सर्वेषां पयः प्रशमनं परम् ।
पेयं तदुष्णं शीतं वा यथास्वं भेषजैः शृतम् ॥२३७॥
प्रयोजयेज्ज्वरहरान् निरूहान् सानुवासनान् ।
पक्काशयगते दोषे वक्ष्यन्ते ये च सिद्धिषु ॥२३८॥

त्रिकण्टकेति । त्रिकण्टकः गोक्षुरः । बला । व्याघ्री कण्टकारी । गुडः । नागरः शुण्ठी च । तैः साधितं त्रिकण्टकादिभिः साधितं पयः पुराणगुडं प्रक्षिप्य पीतं वर्च्चोमूत्रविबन्धघ्नं शोफज्वरहरं च भवति ॥ २३४ ॥

सनागरमिति । सनागरं समृद्वीकं सखर्जूरं शृतं शुण्ठीद्राक्षाखर्जूरैः शृतशीतं पयः सघृतक्षौद्रशर्करं घृतमधुशर्करायुक्तं कृत्वा पीतं पिपासाज्वरनाशनं भवति ॥२३५॥

चतुर्गुणेनेति । चतुर्गुणेन अम्भसा केवलेन शृतं पयः ज्वरहरं । धारोष्णं वा पयः सद्यः वातपित्तज्वरं जयेत् ॥ २३६ ॥

जीर्णज्वराणामिति । पयः सर्वेषां जीर्णज्वराणां परं प्रशमनं । तत् पयः यथास्वं भेषजैः शृतं उष्णं शीतं वा यथादोषं विकल्प्य पेयं ॥ २३७ ॥

वमनं विरेचनञ्च उक्तं । सम्प्रति सानुवासनान् निरूहानाह—प्रयोजयेदिति । दोषे पक्वाशयगते पक्वे च सति । तदुक्तं प्राक्—परिपक्वेषु दोषेष्विति । त्रीन् मलान् बस्तिर्हरेत् । पक्वाशयस्थितानिति च । ज्वरहरान् ज्वरहरद्रव्यैः कृतान् निरूहान् सानुवासनान् अनुवासनानि च । इह उच्यमानान् । ये ज्वरहराः निरूहाः अनुवासनानि च पश्चात् सिद्धिषु सिद्धिस्थाने वक्ष्यन्ते । तानपि । प्रयोजयेत् भिषक् ॥ २३८ ॥

पटोलारिष्टपत्राणि सोशीरश्चतुरंगुलः ।
ह्रीवेरं रोहिणी तिक्ता श्वदंष्ट्रा मदनानि च ॥२३९॥
स्थिरा बला च तत् सर्वं पयस्यर्धोदके शृतम् ।
क्षीरावशेषं निर्यूहं संयुक्तं मधुसर्पिषा ॥२४०॥
कल्कैर्मदनमुस्तानां पिप्पल्या मधुकस्य च ।
वत्सकस्य च संयुक्तं वस्तिं दद्याज्ज्वरापहम् ॥२४१॥
शुद्धे मार्गे हृते दोषे विप्रसन्नेषु धातुषु ।
गताङ्गशूलो लघ्वङ्गः सद्यो भवति विज्वरः ॥२४२॥
आरग्वधमुशीरं च मदनस्य फलं तथा ।
पर्णीश्चतस्रो मधुकं निर्यूहमुपकल्पयेत् ॥२४३॥

तत्रादौ निरूहानाह—पटोलेत्यादि । पटोलस्य अरिष्टस्य निम्बस्य च पत्राणि । सोशीर उशीरसहितः चतुरंगुलः । आरग्वधः । ह्रीवेरं वालकं । रोहिणीं तिक्ता कटुरोहिणी । श्वदंष्ट्रा गोक्षुरकः । मदनानि मदनफलानि । स्थिरा शालपर्णी । बला च । तत्सर्वं कल्कितं क्षीरादष्टमांशं । अर्धं उदकं जलं यत्र तत् अर्धोदकं तस्मिन् । तथाविधे पयसि गोक्षीरे शृतं पक्वं तावत् यावत् क्षीरावशेषं स्यात् । क्षीरावशेषं तं निर्यूहं क्वाथं मधुसर्पिषा घृतमधुभ्यां संयुक्तं मदनमुस्तानां पिप्पल्याः मधुकस्य यष्टिमधुनः वत्सकस्य च कल्कैः संयुक्तं कृत्वा तेन कृतं ज्वरापहं वस्तिं निरूहाख्यं दद्यात् भिषक् ॥ २३९-२४१ ॥

तत्फलमाह—शुद्धे इति । तथाविधेन निरूहविधिना मार्गे स्रोतसि शुद्धे दोषे हृते धातुषु विप्रसन्नेषु विशेषरूपेण प्रसन्नेषु सत्सु च ज्वरितः पुमान् सद्यः गताङ्गशूलः गताङ्गव्यथः लघ्वङ्गः विज्वरश्च भवति ॥ २४२ ॥

आरग्वधमित्यादि । आरग्वधं चतुरंगुलं । उशीरं च । तथा मदनस्य फलं । चतस्रः पर्णीः शालपर्णीं पृश्निपर्णीं मुद्गपर्णीं माषपर्णीं च । मधुकं यष्टीमधु च । क्वाथयित्वा निर्यूहं क्वाथं उपकल्पयेत् । स च क्वाथः । कल्कः कल्कीकृतः । प्रियंगुः ।

---

२४१ । आरग्वधमुशीराणि मधुकं मधुराणि च इति ग पुस्तके ।

प्रियंगुर्मदनं मुस्तं शताह्वा मधुयष्टिका ।
कल्कः सर्पिर्गुड़ः क्षौद्रं ज्वरघ्नो वस्तिरुत्तमः ॥२४४॥
गुड़ूचीं त्रायमाणाञ्च चन्दनं मधुकं वृषम् ।
स्थिरां बलां पृश्निपर्णीं मदनं चेति साधयेत् ॥२४५॥
रसं जाङ्गलमांसस्य रसेन सहितं भिषक् ।
पिप्पलीफलमुस्तानां कल्केन मधुकस्य च ॥२४६॥
ईषत् सलवणं युक्तं निरूहं मधुसर्पिषा ।
ज्वरप्रशमनं दद्याद् बलस्वेदरुचिप्रदम् ॥२४७॥
जीवन्तीं मधुकं मेदां पिप्पलीं मदनं वचाम् ।
ऋद्धिं रास्नां बलां बिल्वं शतपुष्पां शतावरीम् ॥२४८॥

मदनं मदनफलं । मुस्तं । शताह्वा शतपुष्पा । मधुयष्टिका यष्टीमधु च । प्रियंग्वादीनां कल्कः । सर्पिः । गुडः । क्षौद्रं च । आरग्वधादीनां क्वाथे प्रियङ्ग्वादीनां कल्कं घृतं गुडं च मिश्रयित्वा वस्तिः कार्यः । स च वस्तिः उत्तमः ज्वरघ्नः ॥ २४३ । २४४ ॥

गुडूचीमित्यादि । गुडूचीं । त्रायमाणां । चन्दनं रक्तचन्दनं । मधुकं यष्टीमधु । वृषं वासकमूलं । स्थिरां शालपर्णीं । बलां । पृश्निपर्णीं । मदनञ्च । इति नव द्रव्याणि कल्कीकृतानि जाङ्गलमांसस्य रसं च साधयेत् । तेन रसेन क्वाथेन सहितं । पिप्पली-फलमुस्तानां कल्केन । फलो मदनं । तथा मधुकस्य च कल्केन सहितं । गुडूच्यादीनि जाङ्गलमांसं च क्वाथयित्वा तस्मिन् क्वाथे पिप्पल्यादीनि कल्कीकृत्य प्रक्षिपेत् । तेन कृतं । ईषत् सलवणं अल्पसैन्धवं । मधुसर्पिषा च युक्तं । ज्वरप्रशमनं बलस्वेद-रुचिप्रदं तथाविधं निरूहं वस्तिं दद्यात् ॥२४५--२४७॥

अनुवासनमाह—जीवन्तीमित्यादि । भिषक् । जीवन्तीं शाकविशेषं । मधुकं यष्टी-मधु । मेदां स्वनामख्यातां । पिप्पलीं । मदनं मदनफलं । वचां । ऋद्धिं स्वनामख्यातां । रास्नां । बलां । बिल्वं । बिल्वमूलत्वचं । शतपुष्पां शताह्वां । शतावरीं च । एतानि द्वादश द्रव्याणि स्नेहाच्चतुर्भागमितानि पिष्ट्वा कल्कीकृत्य । क्षीरं स्नेहसमं । जलं

पिष्ट्वा क्षीरं जलं सर्पिस्तैलञ्च विपचेद्भिषक् ।
आनुवासनिकं स्नेहमेवं दद्याज्ज्वरापहम् ॥२४९॥
पटोलपिचुमर्दाभ्यां गुडूच्या मधुकेन च ।
मदनैश्च श्रृतः स्नेहो जरघ्नमनुवासनम् ॥२५०॥
चन्दनागुरुकाश्मर्य्यपटोलमधुकोत्पलैः ।
सिद्धः स्नेहो ज्वरहरः स्नेहवस्तिः प्रशस्यते ॥२५१॥
यदुक्तं भेपजाध्याये विमाने रोगभेपजे ।
शिरोविरेचनं कुर्य्याद् युक्तिज्ञस्तज्ज्वरापहम् ॥२५२॥

त्रिगुणं । एवं स्नेहाच्चातुर्गुण्यं द्रवस्य कार्यं । स्नेहात्तोयं चतुर्गुणमिति। सर्पिः पुराणं गव्यघृतं । तैलं तिलतैलं च । विपचेत् इति घृततैलयोर्यमकं पचेत् । स्नेहपाकविधिना । एवं तथा साधितं ज्वरनाशनं आनुवासनिकं स्नेहं दद्यात् ॥ २४८ । २४९ ॥

पटोलेति । पटोलपिचुमर्दाभ्यां पटोलपत्रनिम्बपत्राभ्यां । पिचुमर्दो निम्बः । गुडुच्या । मधुकेन यष्टीमधुना । मदनैः मदनफलैश्च । सर्वैः कल्कीकृतैः स्नेहपादिकैः चतुर्गुणे जले श्रृतः स्नेहः घृतं श्रेष्ठत्वात् । घृतं तैलं च इति वा अधिकारात् । तत् अनुवासनं ज्वरघ्नं ॥ २५० ॥

चन्दनागुर्विति । चन्दनादिभिः । मधुकेत्यत्र मदनेति वृद्धवाग्भटधृतः पाठः ( अ० सं० चि० १ )। सिद्धः स्नेहपाकविधिना स्नेहः । तत्कृतः ज्वरहरः स्नेहवस्तिः अनुवासनं प्रशस्यते ॥ २५१ ॥

शिरोविरेचनमाह—यदुक्तमिति । भेपजाध्याये षड्विरेचनशतीये रोगभेपजे रोगभिषग्जितीये विमाने च यत् शिरोविरेचनं उक्तं । तथा च षड्विरेचनशतीये—(ज्योतिष्मतीक्षवकमरिचपिप्पलीविडङ्गशिग्रुसर्षपापामार्गतण्डुलश्वेतामहाश्वेता ) इति दशेमानि शिरोविरेचनोपगानि भवन्ति । इति । रोगभिषग्जितीये विमाने च शिरोविरेचनद्रव्याणि पुनरपामार्गपिप्पलीत्यादिना उक्तानि । युक्तिज्ञः भिषक् ज्वरापहं तत् शिरोविरेचनं तत्तद्द्रव्यकृतं युक्त्या बुद्ध्वा कुर्यात् ॥ २५२ ॥

यच्च नावनिकं तैलं याश्च प्राग् धूमवर्त्तयः ।
मात्राशितीये निर्दिष्टाः प्रयोज्यास्ता ज्वरेष्वपि ॥२५३॥
अभ्यङ्गांश्च प्रदेहांश्च परिषेकांश्च कारयेत् ।
यथाभिलाषं शीतोष्णं विभज्य द्विविधं ज्वरम् ॥२५४॥
सहस्रधौतं सर्पिर्वा तैलं वा चन्दनादिकम् ।
दाहज्वरप्रशमनं दद्यादभ्यञ्जनं भिषक् ॥२५५॥

अथ चन्दनाद्यं तैलमुपदेक्ष्यामः । चन्दनशैलेयभद्रश्री-कालानुसार्य्य-कालीयक-पद्मापद्मकोशीर-सारिवा-मधुक-प्रपौण्ड-रीक-नागपुष्पोदीच्य-पद्मोत्पलनलिनकुमुद-सौगन्धिकपुण्डरीक-शतपत्र-विसमृणाल-शालूक-शैवलकशेरुकानन्ताकुशकाशेक्षुद-

यच्च नावनिकमिति । प्राक् मात्राशितीये अध्याये यच्च नावनिकं नावनीयं तैलं अणुतैलं निर्दिष्टं । या धूमवर्त्तयश्च निर्दिष्टाः उक्ताः । तत् नावनिकं तैलं ताः धूमवर्त्तयश्च ज्वरेष्वपि प्रयोज्याः ॥ २५३ ॥

शीतोष्णज्वरे अभ्यङ्गांश्च प्रदेहांश्चेत्यादिना प्राक् अभ्यङ्गादिविधानमुक्तं । सम्प्रति तदेव निर्देष्टुमाह—अभ्यङ्गांश्चेति । ज्वरं यथाभिलाषं शीतोष्णमिति द्विविधं विभज्य शीतोष्णत्वेन द्विधा विभज्य । तत्र उष्णाभिप्रायः शीतः ज्वरः । शीताभिप्रायश्च उष्णः । तत्र अभ्यङ्गान् प्रदेहान् परिषेकान् । चकारात् अवगाहनानि च कारयेत् ॥ २५४ ॥

शीतोष्णज्वरे अभ्यङ्गादय उक्ताः । तत्र उष्णज्वरे यैरभ्यङ्गः कार्यः आदौ तान्याह—सहस्रधौतमिति । भिषक् सहस्रधौतं । इह सहस्रशब्दो बहुवाचकः । सहस्रशो धौतं बहुशः तापयित्वा शीतोदकेन स्त्यानीकृतं । तथाविधं सर्पिः । चन्दनादिकं वक्ष्यमाण-चन्दनादिशीतवीर्यद्रव्यैः साधितं वक्ष्यमाणं चन्दनाद्यं तैलं वा । तत्कृतं दाहज्वर-प्रशमनं अभ्यंजनं अभ्यङ्गं दद्यात् । शीताभिप्राये दाहबहुले उष्णज्वरे सहस्रधौतेन सर्पिषा चन्दनाद्यतैलेन वा अभ्यङ्गं कारयेत् ॥ २५५ ॥

तैलं वा चन्दनादिकमित्युक्तं । किंविधं चन्दनादिकं तैलमित्याकांक्षायां तदभि-

र्शरनलशालिमूलजम्बूवेत्रवेतसवानीरगुन्द्राककुभासनाश्वकर्ण-स्यन्दन-वातपोथ-शालतालधवतिनिशखदिरकदरकदम्बकाश्मर्य-फल-सर्ज्ज-प्लक्षकपीतनोदुम्बराश्वत्थन्यग्रोधलोध्रधातकीदूर्वेत्कट-शृङ्गाटकमञ्जिष्ठाज्योतिष्मतीपुष्करबीजक्रौञ्चादनबदरकोविदार-कदलीसंवर्त्तकारिष्टकशतपर्वाशीतकुम्भिकाशतावरीश्रीपर्णीरोहि-णी-श्रावणी-महाश्रावणी-शीतपाक्योदनपाकी-कालाबलापयस्या-विदारी-जीवकर्षभक-क्षुद्रसहा-मेदामहामेदा-मधुरसर्ष्यप्रोक्ता-तृणशून्य-मोचरसाटरूपक-बकुलकुटज-पटोल-निम्बशाल्मली-नारिकेल-खर्ज्जूर-मृद्वीकापियालप्रियंगुधन्वनात्मगुप्तामधूकाना-मन्येषाञ्च शीतवीर्य्याणां यथालाभमौषधानां कषायं कारयेत्। तेन कषायेण द्विगुणितपयसा तेषामेव च कल्केन कषायार्द्धमात्रं मृद्वग्निना साधयेत् तैलम्। एतत् तैलमभ्यङ्गा-देव सद्यो दाहज्वरमपनयति ॥२५६॥

धातुं प्रतिजानीते—अथेति। अथशब्दोऽधिकारे। चन्दनाद्यैर्द्रव्यैः साधितं तैलं चन्दना-द्यमुच्यते। चन्दनेत्यादि। चन्दनं रक्तं। शैलेयं शिलापुष्पं तदाख्यगन्धद्रव्यं। भद्रश्रीः श्वेतचन्दनं। कालानुसार्यं कृष्णचन्दनं। कालीयकं पीतचन्दनं। पद्मा भार्गी। पद्मकं पद्मकाष्ठं। उशीरं वीरणमूलं। सारिवा अनन्तमूलं। मधुकं यष्टीमधु। प्रपौण्डरीकं पुण्डरीककाष्ठं। नागपुष्पा नागदमनी। उदीच्यं बालकं। पद्मोत्पलनलिनानि क्रमात् ईषच्छ्वेतनीलरक्तानि क्षुद्रोत्पलानि। तथाच—ईषच्छ्वेतं विदुः पद्ममीषन्नीलमथोत्पलं। ईषद्रक्तं तु नलिनं क्षुद्रं तच्चोत्पलत्रयं॥ इति (राजनिघण्टु)। कुमुदं कैरवं। सौग-न्धिकं कुवलयं। पुण्डरीकं श्वेतपद्मं। शतपत्रं पद्मभेदः। बिसं स्थूलं। सूक्ष्मं मृणा-लमिति द्विविधं। शालूकं पद्मादीनां कन्दः। शैवलं प्रसिद्धं। कशेरुकं केशुर इति वंगेषु प्रसिद्धं। अनन्ता। यवासः। कुशादिशरान्तानां मूलं। तत्र कुशादिशरान्तमूलं तृण-

२५६। मधकेति तथा रोहिणीति न पठ्यते ६ पुस्तके।

एतैरेव चौषधैः सुश्लक्ष्णपिष्टैः सुशीतैः प्रदेहं कारयेत्। एतैरेव च शृतशीतं सलिलमवगाहपरिषेकार्थं प्रयुञ्जीत ॥२५७॥

इति चन्दनादि तैलादि।

पद्ममूलं। जम्बूवेत्रौ प्रसिद्धौ। वेतसो निचुलः। वानीरो जलवेतसः। गुन्द्रा पट्टरकः। ककुभः अर्जुनः। असनः पीतशालः। अश्वकर्णः शालभेदः। स्यन्दनः तिनिशभेदः। वातपोथः पलाशः। शालतालौ प्रसिद्धौ। धवः। तिनिशः। खदिरः। कदरः श्वेतखदिरः। कदम्बः। धवादयः प्रसिद्धाः। काश्मर्यं गाम्भारीफलं। फलो मदनफलं। सर्जः बृहच्छालः। प्लक्षवटौ प्रसिद्धौ। कपीतनः आम्रातकः। उदुम्बरः। अश्वत्थः। न्यग्रोधः वटभेदः। लोध्रः। धातकी धातृपुष्पा। दूर्वा। इत्कटः खरच्छदः। शृङ्गाटकः पानीयफलं। शिंगाडा इति ख्यातं। मञ्जिष्ठा। ज्योतिष्मती कटभी। पुष्करबीजं पद्मबीजं। क्रौञ्चादनः घेञ्चुलुकः। बदरः प्रसिद्धः। कोविदारः काञ्चनवृक्षः। कदली। संवर्त्तकः बिभीतकः। अरिष्टकः फेनिलवृक्षः। शतपर्वा श्वेतदूर्वा। शीतकुम्भिका कुम्भीरिका लता। शतावरी। श्रीपर्णी गाम्भारी। रोहिणी कटुरोहिणी। श्रावणी रक्तमुण्डोरी। महाश्रावणी श्वेतमुण्डीरी। शीतपाकी काकोली। ओदनपाकी नील झिण्टी। काला नीलिनी। बला पीतबला। पयस्या क्षीरकाकोली। विदारी विदारीकन्दः। जीवकर्षभकौ प्रसिद्धौ। क्षुद्रसहा मुद्गपर्णी। मेदामहामेदे स्वनामख्याते। मधुरसा मूर्वा। ऋष्यप्रोक्ता माषपर्णी। तृणशून्यं मल्लिका। मोचरसः शाल्मलीनिर्यासः। अटरूपकः वासकः। बकुलः। कुटजः। पटोलः। निम्बः। शाल्मली। नारिकेलः। तस्य फलाभ्यन्तरवर्त्ति जलं ग्राह्यं। खर्जूरः। मृद्वीका द्राक्षा। पियालः। प्रियंगुः। धन्वनः मरुजद्रुमः करीर इति ख्यातः। आत्मगुप्ता शूकशिम्बी। मधूकः मधूद्रुमश्च। तेषां अनुक्तसंग्रहार्थमाह—अन्येषामिति। उक्तानां चन्दनादीनां अनुक्तानामन्येषां शीतवीर्याणामौषधानां। यथालाभं यथा लभ्यते। सर्वगणः। अर्धगणः। तदंशो वा। तेन कषायं क्वाथं कारयेत् क्वाथविधिना। तेन कषायेण तैलात् द्विगुणेन। तैलात् द्विगुणितं पयः गोक्षीरं यत्र तेन द्विगुणपयसा। एवं हि स्नेहात् चातुर्गुण्यं द्रवस्य भवति। तेषां चन्दनादीनां यथालाभं कल्केन स्नेहपादिकेन कषायार्द्धमात्रं कषायार्द्धपरिमितं तैलं तिलप्रभवं स्नेहं मृद्वग्निना मृदुना अग्निना साधयेत् पचेत् भिषक्। स्नेहपाकविधिना। एतत् तथा साधितं तैलं चन्दनाद्यं अभ्यङ्गादेव सद्यः दाहज्वरमपनयति॥२५६॥

अभ्यङ्गमुक्त्वा प्रदेहादीनाह—एतैरेवेति। एतैरुक्तैः औषधैः चन्दनादिभिः अनु-

मद्यारनालक्षीरसौवीरक-दधि-घृत-सलिल-सेकावगाहाश्च सद्यो दाहज्वरमपनयन्ति । शीतस्पर्शत्वादिति ॥ २५८॥

भवन्ति चात्र ।

पौष्करेषु सुशीतेषु पद्मोत्पलदलेषु च ।
कदलीनाञ्च पत्रेषु क्षौमेषु विमलेषु च ॥२५६॥
चन्दनोदकशीतेषु शीते धारागृहेऽपि वा ।
हिमाम्बुसिक्ते सदने दाहार्त्तः संविशेत् सुखम् ॥२६०॥
हेमशङ्खप्रवालानां मणीनां मौक्तिकस्य च ।
चन्दनोदकशीतानां संस्पर्शानुरसान् स्पृशेत् ॥२६१॥

कैरन्यैश्चापि शीतवीर्यैः द्रव्यैः यथालाभं सुश्लक्ष्णपिष्टैः सुशीतः हिमस्पर्शैः प्रदेहं प्रलेपं कारयेत् । एतैरुक्तः चन्दनादिभिरौषधैः यथालाभं शृतशीतं आदौ शृतं पश्चात् शीतं सलिलं अवगाहपरिषेकार्थं अवगाहार्थं परिषेकार्थं च प्रयुञ्जीत । तैः शृतशीतसलिले अवगाहं तेन च परिषेकं कारयेत् ॥ २५७ ॥

मद्यारनालेति । मद्यं । आरनालं काञ्जिकं । क्षीरं । दधि । घृतं । सलिलञ्च । तैः सेकाः परिषेकाः । तेषु अवगाहाश्च । शीतस्पर्शत्वात् सद्यः दाहज्वरं अपनयन्ति शमयन्ति ॥ २५८ ॥

दाहज्वरे योगान्तराणि श्लोकैराह—भवन्ति चात्रेति । दाहार्दितः पुमान् सुशीतेषु पौष्करेषु पुष्करसम्बन्धिषु पत्रेषु । पुष्करं कमलं । पद्मस्य उत्पलस्य च दलेषु । पद्मोत्पले इषच्छ्वेतनीले क्षुद्रोत्पले । सुशीतेषु कदलीनां दलेषु । चन्दनोदकशीतेषु विमलेषु क्षौमेषु पट्टवस्त्रेषु । अथवा शीते धारागृहे । हिम्वाम्बुसिक्ते सदने गृहे । जलसेचनयन्त्र ( फोयारा ) निर्गतजलधारायुक्ते गृहे सुखं यथा स्यात्तथा संविशेत् स्वप्यात् ॥ २५६ । २६० ॥

हेमशंखेति । चन्दनोदकशीतानां हेमशङ्खप्रवालानां । हेम सुवर्णं । प्रवालो विद्रुमः । मणीनां चन्द्रकान्तादीनां । मौक्तिकस्य मुक्तायाश्च । संस्पर्शे अनुरसाः

स्रग्भिर्नीलोत्पलैः पद्मैर्व्यजनैर्विविधैरपि ।
शीतवातकरैर्वीज्यश्चन्दनोदकवर्षिभिः ॥२६२॥
नद्यस्तडागाः पद्मिन्यो ह्रदाश्च विमलोदकाः ।
अवगाहे हिता दाहतृष्णाग्लानिज्वरापहाः ॥२६३॥
प्रियाः प्रदक्षिणाचाराः प्रमदाश्चन्दनोक्षिताः ।
सान्त्वयेयुः परैः कामैर्मणिमौक्तिकभूषणाः ॥२६४॥
शीतानि चान्नपानानि शीतान्युपवनानि च ।
वायवश्चन्द्रपादाश्च शीता दाहज्वरापहाः ॥२६५॥

अनुकूलाः । तान् संस्पर्शानुरसान् सुखस्पर्शान् । तथाविधान् हारादीनिति शेषः । स्पृशेत् धारयेत् दाहार्दितः पुमान् ॥२६१॥

स्रग्भिरिति । स च दाहार्दितः पुमान् । स्रग्भिः पुष्पमालाभिः । नीलोत्पलैः चन्दनोदकवर्षिभिः । चन्दनोदकेन प्रोक्षणात् । अतः शीतवातकरैः विविधैः व्यजनैः तालवृन्तादिकृतैश्च वीज्यः ॥ २६२ ॥

नद्य इति । विमलोदकाः नद्यः प्रवाहिण्यः । तडागाः । तडागः अपौरुषखातः । पद्मिन्यः पुष्करिण्यः पौरुषकृताः । ह्रदाः महागाधजलाः जलाशयाः । दाहार्दितज्वरितस्य अवगाहे हिताः । यतस्ते दाहतृष्णाग्लानिज्वरापहाः ॥ २६३ ॥

प्रिया इति । प्रियाः प्रीतिप्रदाः । प्रदक्षिणः अनुकूलः आचारः आचरणं यासां ताः प्रदक्षिणाचाराः । चन्दनोक्षिताः चन्दनोदकसिक्ताः । परैः अधिकैः कामैः उपलक्षिताः अतीव सकामाः । मणिमौक्तिकभूषणाः । तथाविधाः प्रमदाः नार्यः । तं दाहार्दितं सान्त्वयेयुः गाढसाश्लिष्टाः । तासामालिंगनात् दाहज्वरः शाम्यति ॥ २६४ ॥

शीतानीति । शीतानि अन्नपानानि अभ्यवहार्याणि । शीतानि उपवनानि । शीता वायवः । शीताः चन्द्रपादाः चन्द्रकिरणाः । चन्द्रपादानां सर्वदा शीतत्वेऽपि पुनः शीता इति विशेषणं प्रक्रमानुरोधात् । उष्णकाले उष्णसम्पर्कात् कदाचिदुष्णा अपि ते भवन्ति । तन्निरासार्थं वा । सर्वे दाहज्वरापहाः ॥ २६५ ॥

अथोष्णाभिप्रायिणां ज्वरितानामभ्यङ्गादीनुपक्रमानुपदेक्ष्यामः ॥२६६॥

अगुरुकुष्ठतगरनलदपत्रशैलेयकध्यामकहरेणुकस्थौणेयकक्षेमकैलावराङ्गदलपुरतमालपत्र-भूतीक-रोहिष-सरलशल्लकीदेवदार्वग्निमन्थ-बिल्वश्योणाककाश्मर्यपाटला-पुनर्नवाबृहती-कण्टकारिका-वृश्चीरशालपर्णीपृश्निपर्णी-माषपर्णीमुद्गपर्णीगोक्षुरकैरण्ड शोभाञ्जनक-वरुणार्कचिरबिल्वतिल्वकशटीपुष्करमूलगण्डीरोरुबूकपत्तूराक्षीवाश्मन्तकशिग्रुमातुलुङ्गमूषकपर्णी-तिलपर्णीपीलुपर्णीमेषशृङ्गीहिंस्रा-दन्तशठैरावतक-भल्लातकास्फोतककाण्डीरात्मगुप्ताकाकाण्डेषीका-करञ्जधान्यकाजमोदापृथ्वीकासुमुखसुर-

शीताभिप्राये दाहबहुले उष्णज्वरे अभ्यङ्गादीनुक्त्वा उष्णाभिप्राये शीतबहुले शीतज्वरे तान् अभिधातुं प्रतिजानीते—अथोष्णाभिप्रायिणामिति। अथ उष्णाभिप्रायिणां ज्वरितानां शीतज्वरितानां पुंसां अभ्यङ्गादीन् उपक्रमानुपदेक्ष्यामः ॥ २६६ ॥

अगुर्वित्यादि। अगुरु कृष्णागुरु। कुष्ठं। तगरं तगरपादिकं। पत्रं तालीशपत्रं। नलदं लामज्जकं। शैलेयं। शैलेयं तिक्तकं शीतं सुगन्धि कफपित्तजिदिति ( राजनिघण्टु ) कफपित्तशमनतया शैलेयस्य उभयत्र पाठः। ध्यामकं कत्तृणं। हरेणुका रेणुका। स्थौणेयकं ग्रन्थिपर्णं। क्षेमिका हरिद्रा। एला स्थूला। वराङ्गदलं प्रियङ्गुपत्रं। पुरं गुग्गुलु। तमालपत्रं तेजपत्रं। भूतीकं यमानी। रोहिषः गन्धतृणभेदः। सरलः प्रसिद्धः। शल्लकी शिलारसः। देवदारु। अग्निमन्थः गणिकारिका। अग्निमन्थादिपाटलान्तं बृहत् पञ्चमूलं। पुनर्नवा। बृहती। कण्टकारिका। वृश्चीरः श्वेतपुनर्नवा। शालपर्णीपृश्निपर्णीमाषपर्णीमुद्गपर्ण्यः चतस्रः पर्णिन्यः। गोक्षुरः। एरण्डः श्वेतः। तस्य मूलं। शोभाञ्जनकः श्वेतः। वरुणः वरुणमूलं। अर्कः अर्कपत्रं। चिरबिल्वः नक्तमालः नाटाकरंजः इति बङ्गेषु। तिल्वकः लोध्रः। शटी। पुष्करमूलं पातालपद्मिनीति ख्यातं। गण्डीरः। समष्ठिला शमठशाकः। उरुबूकः रक्तैरण्डः। पत्तूरः शालिञ्चशाकः।

सकरककण्डीरकुठेरककालमालकपर्णासचवककणिज्भकभूस्तृणश्रृङ्गवेरपिप्पलीसर्षपाश्वगन्धारास्नारुहावरोहाबलातिबलागुडूची-शतपुष्पाशीतवल्लीनाकुलीगन्धनाकुलीश्वेताज्योतिष्मती-चित्रकाध्यण्डाम्लचांगेरी-तिल-बदर-कुलत्थमाषाणामेवंविधानामन्येषां चोष्णवीर्य्याणां यथालाभमौषधानां कषायं कारयेत्। तेन कषायेण तेषामेव च कल्केन सुरासौवीरकतुषोदकमैरेय-मेदकदधिमण्डारणालकट्वरप्रतिविनीतेन तैलपात्रं विपाचयेत्। तेन सुखोष्णेन तैलेनोष्णाभिप्रायिणं ज्वरितं सततमभ्यञ्ज्यात्। तथा तस्य शीतज्वरः प्रशाम्यति ॥२६७॥

अक्षीवः शोभांजनभेदः। अश्मन्तकः पाषाणभेदः। शिग्रुः रक्तशोभांजनः। मातुलुङ्गः जम्बीरभेदः। मूषकपर्णी मण्डूकपर्णी। तिलपर्णी रक्तचन्दनं। पीलुपर्णी मूर्वा। मेष-शृङ्गी। हिंस्रा जटामांसी। दन्तशठः जम्बीरः। ऐरावतः नागरङ्गः जम्बीरभेदः। भल्लातकः। आस्फोतकः हाफरमाली। काण्डीरः धारवेल्लः। स च त्रिधारः चतुर्धार इति द्विभेदः। आत्मगुप्ता शूकशिम्बी। काकाह्वा काकमाची। ईषिका शरमूलं। करंजः डहरकरंजः। धान्यकं धन्याकं। अजमोदा वनयमानी। पृथ्वीका सूक्ष्मैला। सुरसकुठेरककालमालकपर्णासफणिज्भकाः तुलसीभेदाः। करका वृहत्कारवेल्ली। करला इति ख्याता। कण्डीरः लघुकारवेल्लभेदः। क्षवकः हँचेता इति ख्यातः। राजिका वा। भूस्तृणः गन्धतृणः। शृङ्गवेरं शुन्ठी। पिप्पली। सर्षपः। अश्वगन्धा। रास्ना। रुहा वृक्षरुहा। अवरोहः वटावरोहः। बला। अतिबला। गुडूची। शतपुष्पा। शीतवल्ली नीलदूर्वा। नाकुलीगन्धनाकुल्यौ रास्नाभेदौ। श्वेता श्वेतापराजिता। ज्योतिष्मती कटभी। चित्रकः प्रसिद्धः। अध्यण्डा भूम्यामलकी। अम्लचांगेरी टक् आमरुलि इति वंगेषु ख्याता। तिलः। बदरः। कुलत्थः। माषश्च। ते। तेषां। अनुक्त-संग्रहार्थमाह—एवंविधानामिति। एषामुक्तानां अगुर्वादीनां एवंविधानामन्येषा-मनुक्तानां उष्णवीर्य्याणामौषधानाञ्च यथालाभं कषायं क्वाथं कारयेत् क्वाथविधिना। तेन कषायेण क्वाथेन तैलसमेन तेषां अगुर्वादीनां यथालाभं कल्केन स्नेहपादिकेन

एतैरेव चौषधैः श्लक्ष्णपिष्टैः सुखोष्णैः प्रदेहं कारयेत्। एतैरेव च शृतं सुखोष्णं सलिलमवगाहार्थं परिषेकार्थञ्च प्रयुञ्जीत शीतज्वरप्रशमार्थमिति ॥२६८॥

इति शीतज्वरेऽगुर्वादि तैलादि ।

भवन्ति चात्र ।

त्रयोदशविधः स्वेदः स्वेदाध्याये निदर्शितः ।
मात्राकालविदा युक्तः स च शीतज्वरापहः ॥२६९॥

च । सुरा प्रसिद्धा । सौवीरकं नितुषैः यवैः कृतं। सतुषैः कृतं तुषोदकं । एतत् कांजिकद्वयं । मैरेयं मध्वासवः। मेदकः मद्यभेदः । दधिमण्डं मस्तु । आरणालं कांजिकं। कट्वरं ससारकं तक्रं च । तानि । तैः प्रत्येकं स्नेहसमैः । तथाच—पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ । तज स्नेहसमान्याहुः ॥ इति । प्रतिविनीतेन आवापितेन । तत्र सुरासौवीरकादीनि प्रत्येकं स्नेहसमानि तैलस्य पात्रमाढकं पिपाचयेत् भिषक् । तेन तथा साधितेन तैलेन सुखोष्णेन कवोष्णेन उष्णाभिप्रायिणं ज्वरितं शीतज्वरिणं अभ्यञ्ज्यात् । तथा कृते सति शीतज्वरः प्रशाम्यति ॥ २६७ ॥

शीतज्वरे अभ्यङ्गमुक्त्वा प्रदेहादीनाह—एतैरेवेति । शीतज्वरशमनार्थं तैरेव औषधैः अगुर्वादिभिः तथाविधैरनुक्तैरन्यैश्चापि यथालाभं श्लक्ष्णपिष्टैः सुखोष्णैः प्रदेहं प्रलेपं कारयेत् । एतैरेव अगुर्वादिभिः औषधैः यथालाभः शृतं सलिलं क्वाथमित्यर्थः । तं क्वाथं सुखोष्णं अवगाहार्थं परिषेकार्थं च प्रयुंजीत ॥ १६८ ॥

अभ्यङ्गाश्च प्रदेहाश्च इत्यादिना शीतोष्णज्वरे अभ्यङ्गप्रदेहपरिषेकावगाहनान्युक्तानि । तानि यथोद्देशं विवृत्य सम्प्रति शीतज्वरे योगान्तराणि श्लोकैराह—भवन्ति चात्रेति । स्वेदाध्याये यः त्रयोदशविधः संकरादिः अग्निगुणसंश्रयः स्वेदः निदर्शितः । त्रयोदशसु परिषेकावगाहौ प्रागेव उक्तौ । पुनस्त्रयोदशविध इति सर्वेषामेव करणार्थं । अधिकाग्निस्वेदनिषेधार्थं वा । स त्रयोदशविधः स्वेदः मात्राकालविदा भिषजा युक्तः मात्राकालापेक्षया प्रयुक्तः सन् शीतज्वरापहो भवति ॥ २६९ ॥

सा कुटी तच्च शयनं तच्चावच्छादनं ज्वरम् ।
शीतं प्रशमयन्त्याशु धूपाश्चागुरुजा घनाः ॥२७०॥
चारूपचितगात्र्यश्च तरुण्यो यौवनोष्मणा ।
आश्लेषाच्छमयन्त्याशु प्रमदाः शिशिरं ज्वरम् ॥२७१॥
स्वेदनान्यन्नपानानि वातश्लेष्महराणि च ।
शीतज्वरं जयन्त्याशु संसर्गवलयोजनात् ॥२७२॥

शीतज्वरे त्रयोदशविधः स्वेदः उक्तः । तत्र कुटीस्वेदं पुनर्विशिष्याह शीतज्वरे-विशेषेण हितत्वात्—सा कुटीति । सा स्वेदाध्याये कुटीस्वेदे उक्ता कुटी । तच्च शयनं शय्या । तच्च अवच्छादनं आच्छादनं कुथकम्बलादिकं । तथाच—अनत्युत्सेधविस्तारां वृत्ताकारामलोचनां । घनभित्तिं कुटीं कृत्वा कुष्ठाद्यैः संप्रलेपयेत् ॥ कुटीमध्ये भिषक् शय्यां स्वास्तीर्णमुपकल्पयेत् । प्रावाराजिनकौशेयकुथकम्बलगोणिकैः ॥ हसन्तिकाभिरङ्गारपूर्णाभिस्तां च सर्वशः । परिवार्यान्तरारोहन्नभ्यक्तः स्विद्यते सुखं ॥ इति ( च० श्लो० १४ ) । तथा घना धूपाश्चापि शीतं ज्वरं आशु शमयन्ति ॥ २७० ॥

चारूपचितेति—चारु सुष्ठु यथा स्यात्तथा उपचितानि पुष्टानि गात्राणि यासां ताः । तथोक्ताः तरुण्यः प्रमदाः स्त्रियः आश्लेषादालिङ्गनात् यौवनोष्मणा शिशिरं शीतं ज्वरं आशु जयन्ति ॥ २७१ ॥

स्वेदनानीति । स्वेदनानि अन्नपानानि औषधानि च । तथा अन्यानि वातश्लेष्म-हराणि यानि तानि च । संसर्गवलयोजनात् संसर्गवलयोगे वातश्लेष्मणोः संसृष्टयो-र्बलवत्त्वे तत्कृतं शीतं ज्वरं आशु जयन्ति । उक्तं च—अग्न्यनग्निकृतान् स्वेदान् स्वेदि-भेषजभोजनं । संसर्गवलयोगे च वातश्लेष्मनिबर्हणं ॥ गर्भभूवेश्मशयनं कुथकम्बल-वल्लकान् । निर्धूमदीप्ताङ्गारैर्हसन्तीश्च हसन्तिकाः । मद्यं सत्र्यूषणं तक्रं कुलत्थव्रीहि-कोद्रवान् । संशीलयेत् वेपथुमान् यच्चान्यदपि पित्तलं ॥ इति (अ० सं० चि० २) ॥२७२॥

---

१७२ । निरामे वातगे चैव इति क पुस्तके ।

श्रमजे वातजे चैव पुराणे क्षयजे ज्वरे ।
लङ्घनं न हितं विद्याच्छमनैस्तमुपाचरेत् ॥२७३॥
विक्षिप्यामाशयोष्माणं यस्माद्गत्वा रसं नृणाम् ।
ज्वरं कुर्वन्ति दोषास्तु हीयतेऽग्निबलं ततः ॥२७४॥
यथा प्रज्वलितो वह्निः स्थाल्यामिन्धनवानपि ।
न पचत्योदनं सम्यगनिलप्रेरितो बहिः ॥२७५॥
पक्तिस्थानात् तथा दोषैरूष्मा क्षिप्तो बहिर्नृणाम् ।
न पचत्यभ्यवहृतं कृच्छ्रात् पचति वा लघु ॥२७६॥
अतोऽग्निबलरक्षार्थं लङ्घनादिक्रमो हितः ॥२७७॥

श्रमजे इति । श्रमजे । वातजे केवलवातजे । क्षयजे । पुराणे च । ज्वरे । चकारात् भयजक्रोधजादीनामपि ग्रहणं । तदुक्तं—ज्वरे लंघनमेवादावुपदिष्टमृते ज्वरात् । क्षयानिलभयक्रोधकामशोकश्रमोद्भवात् ॥ इति । लंघनं न हितं विद्यात् । तं श्रमजादिकं ज्वरं शमनैः अकर्शनैः शमनैः । तेषु हि हितं शमनं यन्न कर्शनमिति । कपायसर्पिष्पाणादिभिरुपाचरेत् ॥ २७३ ॥

ज्वरे लंघनादिक्रियाक्रम उक्तः । स च किमवस्थज्वरे कथं वा कर्तव्य ? इत्याकांक्षायामाह—विक्षिप्येत्यादि । यस्मात् यतः दोषा वातादयः यथास्वं प्रकोपणैः प्रकुपिताः नृणां रसं रसाख्यं आद्यधातुं आमाशयस्थितं गत्वा प्राप्य आमाशयोष्माणं आमाशयस्थितं आमाशये पक्तिस्थाने ग्रहण्यां स्थितं ऊष्माणं अन्तरग्निं विक्षिप्य बहिः निरस्य ज्वरं कुर्वन्ति । ततः तस्मात् पक्तिस्थानात् बहिः विक्षिप्ततया अग्नेर्बलं हीयते मन्दीभवति । मन्दीभावाच्च तदा अग्निः आहारं न पचति । तदेव सदृष्टान्तमाह—यथेत्यादि । यथा वह्निः बाह्योऽग्निः प्रज्वलितः इन्धनवान् चापि बहिः अनिलप्रेरितः वायुना चुल्ल्याः बहिः विक्षिप्तः सन् स्थाल्यां स्थितं ओदनं न सम्यक् पचति । तथा नृणां ऊष्मा अन्तरग्निः तदा दोषैः पक्तिस्थानात् बहिः क्षिप्तः सन् अभ्यवहृतं भुक्तमन्नपानं न पचति । लघु अभ्यवहृतं कृच्छ्राद् वा पचति ॥ २७४-२७६ ॥

अत इति । अतः कारणात् अग्निबलरक्षार्थं तदा लंघनादिक्रमो हितः ॥२७७॥

सप्ताहेन हि पच्यन्ते सर्वधातुगता मलाः ।
निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि ॥२७८॥
उदीर्णदोषस्त्वल्पाग्निरश्नन् गुरु विशेषतः ।
मुच्यते सहसा प्राणैश्चिरं क्लिश्यति वा नरः ॥२७९॥
एतस्मात् कारणाद्विद्वान् वातिकेऽप्यादितो ज्वरे ।
नाति गुर्वति वा स्निग्धं भोजयेत् सहसा नरम् ॥२८०॥
ज्वरे मारुतजे त्वादावनपेक्ष्यापि हि क्रमम् ।
कुर्य्यान्निरनुबन्धानामभ्यङ्गादीनुपक्रमान् ॥२८१॥
पाययित्वा कषायञ्च भोजयेद्रसभोजनम् ।
जीर्णज्वरहरं कुर्य्यात् सर्वशश्चाप्युपक्रमम् ॥२८२॥

सप्ताहेनेति । सर्वधातुगता मलाः सप्ताहेन सप्तभिर्दिनैः पच्यन्ते । अतः ज्वरः प्रायः अष्टमे अहनि निरामः प्रोक्तः ॥ २७८ ॥

उदीर्णदोष इति । उदीर्णदोषः अल्पाग्निः ज्वरितः नरः विशेषतः गुरु अन्नपानं अश्नन् सहसा प्राणैः मुच्यते म्रियते। आयुषः सावशेषत्वात् जीवंश्चेत् चिरं दीर्घकालं क्लिश्यति वा ॥ २७९ ॥

एतस्मादिति । एतस्मात् कारणात् तदा गुर्वन्नपानस्य विशेषेणाहितत्वात् वातिकेऽपि ज्वरे यत्र लंघनं प्रतिषिध्यते तत्रापि आदितः प्रथमतः नरं ज्वरितं सहसा अतिगुरु अतिस्निग्धं वा आहारं न भोजयेत् ॥ २८० ॥

ज्वरे मारुतजे इति । निरनुबन्धानां दोषान्तरानुबन्धरहितानां पुंसां मारुतजे केवलवातजे ज्वरे क्रमं लंघनादिक्रमं अनपेक्ष्यापि उल्लंघ्यापि आदौ अभ्यंगादीन् अभ्यंगप्रदेहपरिषेकादीन् उपक्रमान् कुर्यात् भिषक् ॥२८१ ॥

पाययित्वेति । तत्र ज्वरितं कषायं यथास्वौषधसिद्धं पाययित्वा रसभोजनं मांसरसेन भोजनं लघ्वन्नं भोजयेत् । जीर्णज्वरहरं सर्वशः उपक्रमं चापि कुर्यात् । तदुक्तं—केवलानिलवातसर्पविस्फोटाभिहतज्वरे । सर्पिष्पाणहिमालेपसेकमांसरसाशनं ॥ कुर्यात् । इति ( अ० सं० चि० २ ) ॥ २८२ ॥

श्लेष्मलानामवातानां ज्वरोऽनुष्णः कफाधिकः ।
परिपाकं न सप्ताहेनापि याति मृदूष्मणाम् । २८३॥
तं क्रमेण यथोक्तेन लङ्घनाल्पाशनादिना ।
आदशाहमुपक्रम्य कषायाद्यैरुपाचरेत् ॥२८४॥
सामा ये ये च कफजाः कफपित्तज्वराश्च ये ।
लंघनं लंघनीयोक्तं तेषु कार्यं प्रति प्रति ॥२८५॥
वमनैश्च विरेकैश्च वस्तिभिश्च यथाक्रमम् ।
ज्वरानुपाचरेद्धीमान् कफपित्तानिलोद्भवान् ॥२८६॥
संसृष्टान् सन्निपतितान् बुद्धा तरतमैः समैः ।
ज्वरान् दोषक्रमापेक्षो यथोक्तैरौषधैर्जयेत् ॥२८७॥

श्लेष्मलानामिति । श्लेष्मलानां श्लेष्मप्रकृतीनां । अवातानां अल्पवातानां । नञ् अत्राल्पार्थकः । मृदूष्मणां अल्पपित्तानां पुंसां । कफाधिकः अनुष्णः शीतः ज्वरः सप्ताहेनापि परिपाकं न याति चेत्तदा तं तथाविधं ज्वरं । यथोक्तेन । लंघनं । अल्पाशनञ्च । तदादिना क्रमेण आदशाहं दशाहपर्यन्तं उपक्रम्य कषायाद्यरुपाचरेत् ॥ २८३ । २८४ ॥

सामा इति । ये ज्वराः सामाः । ये ज्वराः कफजाः । ये च कफपित्तोद्भवाः कफसंयुक्तपित्तज्वराः । तेषु ज्वरेषु लंघनीयोक्तं लंघनबृंहणीये अध्याये प्रभूतश्लेष्मपित्तास्रमला इत्यादिना लंघनीयत्वेन उक्तं पुरुषं प्रति प्रति प्रतिलंघनीयपुरुषं लंघनं कार्यं । अनेन केवले पित्ते चापि सामावस्थायां लंघनं कार्यमिति बोद्धव्यं । सामे निरामे वा कफे सर्वत्र लंघनं । पित्ते पुनः निरामेऽपि कफसंसृष्टे लंघनं ॥ २८५ ॥

सम्प्रति एकैकदोषजानां चिकित्सासूत्रमाह— वमनैश्चेति । धीमान् भिषक् कफपित्तानिलोद्भवान् ज्वरान् यथाक्रमं वमनैः विरेकैः वस्तिभिरास्थापनानुवासनैः कफोद्भवान् वमनैः पित्तोद्भवान् विरेकैः अनिलोद्भवान् वस्तिभिरुपाचरेत् ॥ २८६ ॥

संसर्गसंन्निपातयोश्चिकित्सामाह—संसृष्टानिति । ज्वरान् संसृष्टान् सन्नि-

वर्द्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य वा ।
कफस्थानानुपूर्व्या वा सन्निपातज्वरं जयेत् ॥२८८॥
सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥२८९॥
रक्तावसेचनैः शीघ्रं सर्पिष्पानैश्च तं जयेत् ।
प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः ॥२९०॥

पतितान् दोषैः संसृष्टैः युग्मभूतैः सन्निपतितैः त्रिभिः मिलितैः तैः पुनः तरतमैः एक-द्युल्बणैः समैर्वा जातान् बुद्ध्वा भिषक् दोषक्रमापेक्षी दोषक्रमापेक्षया प्रयुक्तैः यथा दोषाः संसृष्टाः सन्निपतिताः एकद्युल्बणाः समा वा तथा प्रयुक्तैः यथोक्तैः वातिकादि-ज्वरोक्तैरेव औषधैः जयेत् ॥ २८७ ॥

वर्द्धनेनेति । दोषाणां न्यूनाधिकभावे एकस्य दोषस्य । क्षीणस्य क्षीणयोर्वा । वर्द्धनेन । उच्छ्रितस्य प्रवृद्धस्य उच्छ्रितयोर्वा क्षपणेन । क्षीणवृद्धयोः वर्धनक्षपणाभ्यां साम्यमुत्पाद्य । सुश्रुतेऽपि—यथादोषोच्छ्रयं वापि ज्वरान् सर्वानुपाचरेत् । इति (सु० उ० ३९ ) । साम्ये च । कफस्य स्थानमामाशयः । तस्यानुपूर्वी क्रमः । तया । दोषाः यथाएवं प्रकोपणैः प्रकुपिताः आमाशयं प्रविश्य ज्वरं कुर्वन्ति । इति ज्वरः आमाशय-समुत्थः । अतः प्रथमं तदनुगुणतयैव चिकित्सा कर्तव्या । तदनुगुणा च लंघनपाचना-दिक्रिया । तया सन्निपातज्वरं जयेत् । अष्टाङ्गहृदये च—वर्द्धनेनैकदोषस्य क्षपणेनो-च्छ्रितस्य च । कफस्थानानुपूर्व्या वा तुल्यकक्षान् जयेन् मलान् ॥ इति (चि० १)॥२८८॥

सन्निपातज्वरस्येति । सन्निपातज्वरस्य अन्ते अवसाने कर्णमूले सुदारुणः अति-कृच्छ्रसाध्यः शोथः संजायते । तेन शोथेन उत्पन्नेन कश्चिदेव आशु उपक्रान्तः प्रमु-च्यते । तस्य सुदारुणत्वात् प्रायः सर्वे म्रियन्ते । अतः त्रिशोथीये तस्यान्तकर्तृत्व-मुक्तं । तथाच—ज्वरान्ते दुर्जयोऽन्ताय शोथस्तस्योपजायते ॥ इति ( च० श्लो० ॥ १९ ) २८९ ॥

तत्र चिकित्सामाह—रक्तावसेचनैरिति । रक्तावसेचनैः रक्तमोक्षणैः । सर्पिषां

२९० । शाखानुसारी रक्तस्य सोऽवसेकात् प्रशाम्यति इति वा पुस्तके ।

शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति ।
शाखानुसारी तस्याशु मुञ्चेद्बाह्वोः क्रमात् सिराम् ॥२९१॥
वीसर्पेणाभिघातेन यश्च विस्फोटकैर्ज्वरः ।
तत्रादौ सर्पिषः पानं कफपित्तोत्तरो न चेत् ॥२९२॥
दौर्बल्याद्देहधातूनां ज्वरो जीर्णोऽनुवर्त्तते ।
बल्यैः संबृंहणैस्तस्मादाहारैस्तमुपाचरेत् ॥२९३॥

ज्वरोक्तानां पानैः सर्पिष्पाणैः । कफपित्तघ्नैः कफपित्तघ्नद्रव्यकृतैः प्रदेहैः । नावनैर्ज्वरनाशनैः । कवलग्रहैः तैलगण्डूषधारणैः । तं शोथं शीघ्रमुत्पन्नमात्रं जयेत् ॥ २९० ॥

शीतोष्णेति । शीतोष्णस्निग्धरूक्षाद्यैः । आद्यशब्देन स्तम्भनस्वेदनादयो गृह्यन्ते । उपक्रमैः यथायथं पृथक् संसर्गसन्निपातज्वरप्रशमनैः सम्यक् प्रयुक्तैरपि यो ज्वरः न शाम्यति । तस्य स ज्वरः शाखानुसारी । शाखा रक्तादयो धातवः त्वक् च । इह शाखाशब्देन केवलं रक्तं विवक्षितं । न तु मांसादयः । यतः रक्तस्यैव चिकित्सा वक्ष्यते । तस्येति । तस्यातुरस्य बाह्वोः भुजयोः द्वयोः । क्रमात् एकैकस्य । न तु युगपत् द्वयोः । सिरां मुञ्चेत् । सिरामोक्षणं रक्तजानां चिकित्सा । मांसजानां तु शस्त्रक्षाराग्निकर्मादि ॥ २९१ ॥

वीसर्पेणेति । यो ज्वरः वीसर्पेण रोगेण । अभिघातेन । विस्फोटकैर्वा भवति । स चेत् यदि न कफपित्तोत्तरः । अर्थात् वातोत्तरः स्यात् । तदा तत्र आदौ सर्पिषः पानं । ज्वरे मारुतजे त्वादावित्यादिना प्रागुक्तं अभ्यंगादिकं चापि कार्यं । तथाच वृद्धवाग्भटः —केवलानिलवीसर्पविस्फोटाभिहतज्वरे । सर्पिष्पाणहिमालेपसेकमांसरसाशनम् ॥ इति । ( अ० सं० चि० २ ) ॥ २९२ ॥

दौर्बल्यादिति । देहधातूनां दौर्बल्यात् दुर्बलत्वात् जीर्णः ज्वरोऽनुवर्तते । तस्मात् बल्यैः बलकरैः संबृंहणैः धातुपुष्टिकरैश्च आहारैः तं जीर्णज्वरं उपाचरेत् भिषक् ॥२९३॥

कर्म्म साधारणं कुर्यात् तृतीयकचतुर्थके ।
आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे ॥२६४॥
वातप्रधानं सर्पिर्भिर्वस्तिभिः सानुवासनैः ।
स्निग्धोष्णैरन्नपानैश्च शमयेद्विषमज्वरम् ॥२६५॥
विरेचनेन पयसा सर्पिषा संस्कृतेन च ।
विषमं तिक्तशीतैश्च ज्वरं पित्तोत्तरं जयेत् ॥२६६॥
वमनं पाचनं रूक्षमन्नपानं विलंघनम् ।
कषायोष्णञ्च विषमे ज्वरे शस्तं कफोत्तरे ॥२६७॥

जीर्णज्वरे चिकित्सा उक्ता । सम्प्रति विषमज्वरचिकित्सां वक्तुमारभते । तत्रादौ भूतानुबन्धिविषमज्वरे चिकित्सां ब्रूते—कर्म साधारणमिति । तृतीयकचतुर्थके तृतीयकचतुर्थकयोः साधारणं भूतोन्मादसाधारणं उन्मादचिकित्सिते वक्ष्यमाणं कर्म दैवव्यपाश्रयं युक्तिव्यपाश्रयं च कुर्यात् । कुतः ? हि यतः विषमज्वरे प्रायशः आगन्तुः भूतावेशादिः अनुबन्धीभवति । उक्तं च—धूपनस्याञ्जनोत्त्रासा ये चोक्ताश्चित्तवैकृते । दैवाश्रयं च भैषज्यं ज्वरान् सर्वान् अपोहति ॥ विशेषात्तु विषमान् प्रायस्ते ह्यागंत्वनुबन्धजाः । इति (अ० सं० चि० २) । कुर्यादित्यत्र जह्यादिति जल्पकल्पतरुधृतः पाठः । तच्चिन्त्यं ॥ २६४ ॥

वातपित्तोत्तरे विषमज्वरे चिकित्सामाह—वातप्रधानमिति । सर्पिर्भिः वातहरद्रव्यसाधितैः । सानुवासनैः वस्तिभिः निरुहाद्यैः । स्निग्धोष्णैरन्नपानैश्च । वातप्रधानं वातोत्तरं विषमज्वरं शमयेत् ॥ २६५ ॥

पित्तोत्तरे चिकित्सामाह—विरेचनेनेति । विरेचनेन । संस्कृतेन पित्तहरद्रव्यैः श्रृतेन पयसा सर्पिषा च । तिक्तशीतैरन्नपानैश्च । पित्तोत्तरं विषमज्वरं जयेत् ॥२६६॥

श्लेष्मोत्तरे चिकित्सामाह—वमनमिति । कफोत्तरे विषमे ज्वरे । वमनं । पाचनं । विलंघनं लंघनं । रूक्षं । कषायं कषायरसमुष्णं च कषायोष्णं । अन्नपानं च शस्तं ॥२६७॥

योगाः पराः प्रवक्ष्यन्ते विषमज्वरनाशनाः ।
प्रयोक्तव्या मतिमता दोषादीन् प्रविभज्य ते ॥२९८॥
सुरा समण्डा पानार्थे भक्ष्यार्थे चरणायुधः ।
तित्तिरिश्च मयूरश्च प्रयोज्या विषमज्वरे ॥२९९॥
पिबेद्वा षट्पलं सर्पिरभयां वा प्रयोजयेत् ।
त्रिफलायाः कषायं वा गुडूच्या रसमेव वा ॥३००॥
नीलिनीमजगन्धाञ्च त्रिवृतां कटुरोहिणीम् ।
पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः ॥३०१॥
सर्पिषो महतीं मात्रां पीत्वा वा च्छर्दयेत् पुनः ।
उपयुज्यान्नपानं वा प्रभूतं पुनरुल्लिखेत् ॥३०२॥

विषमज्वरेषु योगान्तराण्याह—योगाः परा इति । विषमज्वरनाशनाः पराः श्रेष्ठाः योगाः वक्ष्यन्ते । ये च योगाः मतिमता भिषजा दोषादीन् । आदिना देशकालप्रकृतिसत्त्वसात्म्यादीनां ग्रहणं । प्रविभज्य अपेक्ष्य प्रयोज्याः ॥ २९८ ॥

सुरेति । विषमज्वरे सततकादौ पानार्थे समण्डा सुरा प्रयोज्या । भक्ष्यार्थे च चरणायुधः कुक्कुटः । तित्तिरिश्च मयूरश्च । तेषां मांसरसाः अन्नेन सह प्रयोज्याः ॥ २९९ ॥

पिबेद्वेति । विषमज्वरे षट्पलं पञ्चकोलयवक्षारषट्पलसाधितं गुल्मचिकित्सिते वक्ष्यमाणं सर्पिः पिबेत् । अभयां हरीतकीं केवलां वा प्रयोजयेत् । त्रिफलायाः कषायं क्वाथं गुडुच्या रसं क्वाथं स्वरसं वा प्रयोजयेत् ॥ ३०० ॥

नीलिनीमिति । ज्वरस्य आगमने आगमनदिने विषमज्वरे ज्वरितः पुमान् । स्नेहस्वेदोपपादितः स्निग्धस्विन्नः सन् । नीलिनीं अजगन्धां त्रिवृतां कटुरोहिणीं च नील्यादिकृतं विरेचनयोगं पिबेत् । प्रकोपदिने दोषे प्रकुपिते कोष्ठमागते क्रियमाणाः वमनादयः सम्यक् सिद्धाः भवन्तीति ज्वरागमनदिने वमनादयः क्रियन्ते ॥३०१॥

सर्पिष इति । सर्पिषः घृतस्य महतीं अहोरात्रजरणलक्षणां मात्रां पीत्वा वा पुनः

सान्नं मद्यं प्रभूतं वा पीत्वा स्वप्याज्ज्वरागमे ।
आस्थापनं यापनं वा कारयेद्विषमज्वरे ॥३०३॥
पयसा वृषदंशस्य शकृद्वेगागमे पिबेत् ।
वृषस्य दधिमण्डेन सुरया वाथ सैन्धवम् ॥३०४॥
पिप्पल्यास्त्रिफलायाश्च दध्नस्तक्रस्य सर्पिषः ।
पञ्चगव्यस्य पयसः प्रयोगो विषमज्वरे ॥३०५॥
रसोनस्य सतैलस्य प्राग्भक्तमुपसेवनम् ।
मेध्यानामुष्णवीर्याणामामिषाणाञ्च भक्षणम् ॥३०६॥

छर्द्दयेत् वमेत् । प्रभूतं अन्नपानं उपयुज्य वा पुनः उल्लिखेत् वमेत् । सान्नमिति । ज्व-रागमे ज्वरागमनदिने सान्नं अन्नेन सह प्रभूतं मद्यं पीत्वा स्वप्यात् । पुनः उल्लिखेत् वा । उक्तं च—सुरां तीक्ष्णं च यन्मद्यं शिखितित्तिरिदक्षजं । मांसं मेध्योष्णवीर्यं च सहान्नेन प्रकामतः ॥ सेवित्वा तदहः स्वप्यादथवा पुनरुल्लिखेत् । सर्पिषो महतीं मात्रां पीत्वा वाच्छर्द्दयेत् पुनः ॥ इति ( अ० सं० चि० २) । आस्थापनमिति । विषम-ज्वरे ज्वरागमनदिने आस्थापनं यापनं यापनाख्यं वस्तिं सिद्धौ वक्ष्यमाणं वा कार-येत् । उक्तं च—आस्थापनं वा तदहर्दद्यात् । स्विन्नस्य यापनम् । इति (अ०सं० चि०२) ॥ ३०२ । ३०३ ॥

पयसेत्यादि । तदहः ज्वरागमनदिने पयसा दुग्धेन वृषदंशस्य माज्जारस्य शकृत् पुरीषं वा पिबेत् । अथवा दधिमण्डेन मस्तुना वृषस्य शकृत् पिबेत् । अथवा सैन्धवं सुरया पिबेत् । उक्तं च--पयसा वृषदंशस्य शकृद्वा तदहः पिबेत् । मस्तुना वा वृष-शकृत् सुरया वाथ सैन्धवम् ॥ इति ( अ० सं० चि० २ ) ॥ ३०४ ॥

पिप्पल्या इति । विषमज्वरे पिप्पल्याः त्रिफलायाश्च प्रयोगो रसायनोक्तविधिना शस्तः । दध्नः तक्रस्य पञ्चगव्यस्य सर्पिषः अपस्मारचिकित्सिते वक्ष्यमाणस्य पयसो गव्यदुग्धस्य च प्रयोगः शस्तः ॥ ३०५ ॥

रसोनस्येति । विषमज्वरे रसोनस्य दृषदि पिष्टस्य सतैलस्य तिलतैलमिश्रितस्य

हिंगुतुल्या तु वैयाघ्री वसा नस्यं ससैन्धवा ।
पुराणसर्पिः सिंहस्य वसा तद्वत् ससैन्धवा ॥३०७॥
सैन्धवं पिप्पलीनाञ्च तण्डुलाः समनःशिलाः ।
नेत्राञ्जनं तैलपिष्टं शस्यते विषमज्वरे ॥३०८॥
पलंकषा निम्बपत्रं वचा कुष्ठं हरीतकी ।
सर्षपः सयवः सर्पिर्धूपनं ज्वरनाशनम् ॥३०९॥
ये धूमा धूपनं यच्च नावनञ्चाञ्जनञ्च यत् ।
मनोविकारे निर्दिष्टं कार्य्यं तद्विषमज्वरे ॥३१०॥

प्राग्भक्तं भोजनात् पूर्वमुपसेवनं शस्तं । तथा मेध्यानां मेदुराणां पवित्राणां वा उष्ण-वीर्याणां आमिषाणां मांसानां भक्षणं शस्तं ॥३०६॥

हिंगुतुल्येति । हिंगुतुल्या हिंगुसमभागा वैयाघ्री व्याघ्रीसम्बन्धिनी वसा । योज्या । हिंगुसमा व्याघ्रीवसा नस्ये ससैन्धवा । इति (अ० सं० चि० २) स्त्रीलिंगनिर्देशात् स्त्रिया एव वसा ग्राह्या । न तु पुंसः । सा च हिता प्रभावात् । हिंगुतुल्या व्याघ्रीवसा ससैन्धवा सैन्धवेन स्तोकेन युक्ता नस्यं योज्यं । तथा पुराणसर्पिः केवलं नस्यं योज्यं । सिंहस्य वसा ससैन्धवा च तद्वत् । नस्यार्थे प्रयोज्या ॥ ३०७ ॥

सैन्धवमिति । सैन्धवं । पिप्पलीनां तण्डुलाः । समनःशिलाः मनःशिला च । तत् सर्वं तैलेन तिलतैलेन पिष्टं तत्कृतं नेत्राञ्जनं विषमज्वरे शस्यते ॥ ३०८ ॥

धूपनमाह—पलंकषेति । पलंकषा गुग्गुलु । निम्बपत्रं । वचा । कुष्ठं । हरीतकी । सयवः सर्षपः सर्षपो यवश्च । सर्पिः । पलंकषादिकं घृताभ्यक्तं धूपनं ज्वरनाशनं भवति ॥ ३०९ ॥

विषमज्वरे उन्मादापस्मारोक्तधूमधूपादीनामतिदेशमाह—ये धूमा इति । मनोविकारे चित्तवैकृते उन्मादापस्मारयोः ये धूमा निर्दिष्टाः उक्ताः । यत् धूपनं । यत् नावनं नस्यं । यच्च अञ्जनं । निर्दिष्टं । तत् सर्वं विषमज्वरे कार्यं ॥ ३१० ॥

मणीनामोषधीनाञ्च मङ्गल्यानां विषस्य च ।
धारणादगदानाञ्च सेवनान्न भवेज्ज्वरः ॥३११॥
सोमं सानुचरं देवं समातृगणमीश्वरम् ।
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात् ॥३१२॥
विष्णुं सहस्रमूर्धानं चराचरपतिं विभुम् ।
स्तुवन् नामसहस्रेण ज्वरान् सर्वानपोहति ॥३१३॥
ब्रह्माणमश्विनाविन्द्रं हुतभक्षं हिमाचलम् ।
गङ्गां मरुद्गणांश्चेष्टान् पूजयञ्जयति ज्वरान् ॥३१४॥
भक्त्या मातुः पितुश्चैव गुरूणां पूजनेन च ।
ब्रह्मचर्येण तपसा सत्येन नियमेन च ॥ ३१५॥

मणीनामिति । मणीनां पद्मरागादीनां । ओषधीनामपामार्गादीनां । मंगल्यानामन्येषां द्रव्याणां । मणीनां इत्यस्य ओषधीनामित्यस्य च विशेषणं वा । विषस्य मौलविषस्य । न तु हालाहलस्य । धारणात् । अगदानां तदाख्यौषधविशेषाणां सेवनाच्च । अगदो विषचिकित्सिते वक्ष्यमाणः । ज्वरो न भवेत् । न उत्पद्येत । उत्पन्नश्च विनश्येत् । मण्यादीनां ज्वरघ्नत्वं प्रभावात् ॥ ३११ ॥

सोममिति । प्रयतः सन् । सह उमया वर्तमानः सोमः । तं सोमं । सानुचरं सनन्द्यादिगणं । समातृगणं ब्राह्म्यादिमातृगणसहितं । देवं ईश्वरं महेश्वरं पूजयन् ज्वरितः पुमान् विषमज्वरात् मुच्यते ॥ ३१२ ॥

विष्णुमिति । सहस्रमूर्द्धानं सहस्रशिरसं चराचरस्य स्थावरजंङ्गमस्य जगतः पतिं विभुं विष्णुं नामसहस्रेण महाभारतोक्तेन स्तुवन् सर्वान् ज्वरान् अपोहति ॥३१३॥

ब्रह्माणमिति । ब्रह्माणं हिरण्यगर्भं । अश्विनौ । इन्द्रं सुरपतिं । हुतभक्षं हुताशनमग्निं । हिमाचलं हिमगिरिं । गंगां । ईष्टान् मरुद्गणान् देवगणान् । ईष्टान् देवांश्च । पूजयन् । ज्वरान् सर्वान् जयति ॥ ३१४ ॥

भक्त्येत्यादि । मातुः पितुश्च भक्त्या । गुरूणां पूज्यानां पूजनेन । ब्रह्मचर्येण ।

जपहोमप्रदानेन वेदानां श्रवणेन च ।
ज्वराद्विमुच्यते शीघ्रं साधूनां दर्शनेन च ॥३१६॥
ज्वरे रसस्थे वमनमुपवासञ्च कारयेत् ।
सेकप्रदेहौ रक्तस्थे तथा संशमनानि च ॥३१७॥
विरेचनं सोपवासं मांसमेदःस्थिते हितम् ।
अस्थिमज्जगते देया निरूहाः सानुवासनाः ॥३१८॥
शापाभिचाराद्भूतानामभिषङ्गाच्च यो ज्वरः ।
दैवव्यापाश्रयं तत्र सर्व्वमौषधमिष्यते ॥३१६॥

ब्रह्मचर्यमुपस्थसंयमः । तपसा । सत्येन । नियमेन शौचादिना । तथाच—शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः । इति ( पातञ्जल, साधन, ३२ ) जपः मन्त्राणां । होमः । प्रदानं दानं च । तत् । तेन जपहोमप्रदानेन । वेदानां पाठ्यमानानां श्रवणेन । साधूनां दर्शनेन च । ज्वरात् शीघ्रं विमुच्यते पुमान् ॥ ३१५ । ३१६ ॥

विषमज्वरे चिकित्सामुक्त्वा रसादिधातुस्थे ज्वरे चिकित्सामाह—ज्वरे रसस्थे इति । रसस्थे रसधातुस्थे ज्वरे वमनं उपवासं च कारयेत् भिषक् । रक्तस्थे ज्वरे सेकः परिषेकः प्रदेहश्च तौ । तथा संशमनानि औषधानि च हितानि । मांसमेदःस्थिते ज्वरे विरेचनं सोपवासं विरेचनमुपवासश्च । हितं । अस्थिमज्जगते ज्वरे सानुवासनाः निरूहाः देयाः । शुक्रगतज्वरस्यासाध्यत्वात् चिकित्सा नोक्ता ॥३१७।३१८॥

दोषजज्वराणां चिकित्सामुक्त्वा आगन्तुकज्वरे चिकित्सामाह—शापाभिचारादिति । शापाभिचारात् शापाभिचाराभ्यां । शापादभिशापात् अभिचारात् भूतानामभिषंगाच्च यो ज्वरो जायते । तत्र दैवव्यपाश्रयं सर्वं औषधं मन्त्रौषधिमणिमंगलहोमप्रायश्चित्तादिकं इष्यते ॥ ३१९ ॥

---

३१९ । अभिघातज्वरो न स्यात् इति ग पुस्तके ।

अभिघातज्वरो नश्येत् पानाभ्यङ्गेन सर्पिषः ।
रक्तावसेकैर्मेध्यैश्च सात्म्यैर्मांसरसौदनैः ॥३२०॥
सानाहो मद्यसात्म्यानां मदिरारसभोजनैः ।
क्षतानां व्रणितानाञ्च क्षतव्रणचिकित्सया ॥३२१॥
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ।
हर्षणैश्च शमं यान्ति कामशोकभयज्वराः ॥३२२॥
काम्यैरर्थैर्मनोज्ञैश्च पित्तघ्नैश्चाप्युपक्रमैः ।
सद्वाक्यैश्च शमं याति ज्वरः क्रोधसमुत्थितः ॥३२३॥

अभिघातेति । अभिघातज्वरः सर्पिषः यथास्वौषधसिद्धस्य पानाभ्यंगेन पानेन अभ्यंगेन च । रक्तावसेकैः । मेध्यैः मेदुरैः सात्म्यैः मांसरसौदनैश्च नश्येत् ॥३२०॥

सानाह इति । मद्यसात्म्यानां पुंसां सानाहः अभिघातज्वरः मदिरारसभोजनैः । नश्येदिति पूर्वेणान्वयः । क्षतानां व्रणितानां च ज्वरः क्रमात् क्षतव्रणचिकित्सया क्षतानां क्षतचिकित्सया व्रणितानाञ्च व्रणचिकित्सया नश्येत् । तत्र ज्वरो ह्युपद्रवरूपः । तेन मूलव्याधिचिकित्सयैव तस्य प्रशमः ॥ ३२१ ॥

भूताभिषंगज्वरे चिकित्सोक्ता । सम्प्रति कामाद्यभिषंगजानां चिकित्सामाह—आश्वासेनेति । कामशोकभयज्वराः आश्वासेन सान्त्वनया । इष्टस्य लाभेन प्राप्त्या । वायोः प्रशमनेन । कामादिज्वरेषु वातस्यानुबन्धात् । हर्षणैः मनःप्रहर्षकरैश्च विषयैः शमं यान्ति ॥ ३२२ ॥

काम्यैरिति । क्रोधसमुत्थितः ज्वरः क्रोधाभिषंगज्वरः काम्यैः कामनीयैः मनोज्ञैः रम्यैः अर्थैः विषयैः । पित्तघ्नैः उपक्रमैश्चापि । क्रोधजे पित्तमिति क्रोधजे ज्वरे पित्तस्य प्रकोपात् । सद्वाक्यैश्च शोभनैर्वचनैश्च । शमं याति शाम्यति ॥ ३२३ ॥

---

३२१ । पानाद्वामद्यसात्म्यानां इति च पुस्तके ।

कामात् क्रोधज्वरो नाशं क्रोधात् कामसमुद्भवः ।
याति ताभ्यामुभाभ्याञ्च भयशोकसमुत्थितः ॥३२४॥
ज्वरस्य वेगं कालञ्च चिन्तयन् ज्वर्यते तु यः ।
तस्येष्टैस्तु विचित्रैश्च विषयैर्नाशयेत् स्मृतिम् ॥३२५॥
ज्वरप्रमोक्षे पुरुषः कूजन् वमति चेष्टते ।
श्वसन् विवर्णः स्विन्नाङ्गो वेपते लीयते मुहुः ॥३२६॥
प्रलपत्युष्णसर्वाङ्गः शीताङ्गश्च भवत्यपि ।
विसंज्ञो ज्वरवेगार्त्तः सक्रोध इव वीक्ष्यते ॥३२७॥

कामादिजानां प्रतिद्वन्द्वेन चिकित्सामाह—कामादिति । क्रोधज्वरः कामात् नाशं याति । कामसमुद्भवो ज्वरः क्रोधात् नाशं याति । भयशोकसमुत्थितः ज्वरः ताभ्यामुभाभ्यां कामक्रोधाभ्यां नाशं याति । एवं कामक्रोधसमुत्थितोऽपि ज्वरः भयशोकाभ्यां नाशं याति । तदुक्तं-क्रोधजो याति कामेन शान्तिं क्रोधेन कामजः । भयशोकोद्भवौ ताभ्यां भीशोकाभ्यां तथेतरौ ॥ इति ( अ० सं० चि० २ ) ॥ ३२४ ॥

अभिषंगज्वरप्रसंगात् ज्वरवेगकालचिन्ताजे ज्वरे चिकित्सामाह—ज्वरस्येति । ज्वरस्य वेगं कालं आगमनकालं च चिन्तयन् यः पुमान् ज्वर्यते । इष्टैः विचित्रैश्च विषयैः तस्य स्मृतिं ज्वरस्य वेगकालयोः स्मरणं नाशयेत् । ज्वरवेगस्य ज्वरागमनकालस्य च विस्मरणं कारयेत् । ज्वरवेगागमनकालविस्मरणात् ज्वरो न जायते ॥३२५॥

औषधं सक्रियाक्रममुक्तं । सम्प्रति विमुञ्चतो ज्वरस्य चिह्नमाह—ज्वरप्रमोक्षे इत्यादि । ज्वरप्रमोक्षे ज्वरमोक्षकाले पुरुषः कूजन् अव्यक्तं शब्दं कुर्वन् वमति । चेष्टते शय्यायां विलुण्ठति । श्वसन् श्वासं मुञ्चन् । विवर्णः हतप्रभः । स्विन्नांगः स्वेदाक्तदेहश्च भवति । मुहुः वेपते कम्पते । मुहुः लीयते शय्यायां लीनो भवति । न तादृग्रूपेण उपलभ्यते । प्रलपति असम्बद्धं ब्रूते । कदाचित् उष्णसर्वांगः कदाचित् शीतांगश्चापि भवति । कानिचिदंगानि उष्णानि कानिचित् शीतानि भवन्ति । इति वा । विगता संज्ञायस्य स विसंज्ञः संज्ञाहीनः । ज्वरवेगार्त्तश्च भवति । सक्रोध इव वीक्ष्यते

सदोषशब्दश्च शकृद्द्रवं सृजति वेगवत् ।
लिङ्गान्येतानि जानीयाज्ज्वरमोक्षे विचक्षणः ॥३२८॥
बहुदोषस्य बलवान् प्रायेणाभिनवो ज्वरः ।
स क्रियादोषपक्त्या चेद्विमुञ्चति सुदारुणम् ॥३२९॥
कृत्वा दोषवशाद्वेगं क्रमादुपरमन्ति ये ।
तेषामदारुणो मोक्षो ज्वराणां चिरकारिणाम् ॥३३०॥
विगतक्लमसन्तापमव्यथं विमलेन्द्रियम् ।
युक्तं प्रकृतिसत्त्वेन विद्यात् पुरुषमज्वरम् ॥३३१॥

दृश्यते । वीक्षते इति पाठे सरोष इव आलोकनं करोति । सदोषशब्दं सदोषं सशब्दं च । दोषशब्देन इह आमो विवक्षितः । तेन सामं सस्वनञ्च द्रवमकठिनं शकृत् पुरीषं वेगवत् यथा तथा सृजति मुञ्चति । ज्वरमोक्षे विमुञ्चतो ज्वरस्य एतानि उक्तानि कूजनादीनि लिंगानि जानीयात् विचक्षणो भिषक् ॥ ३२७ । ३२८ ॥

बहुदोषस्येति । बहुदोषस्य पुंसः अभिनवः ज्वरः प्रायेण बलवान् । स ज्वरः क्रियादोषपक्त्या क्रियया लंघनाद्युक्तक्रमेण दोषस्य पक्त्या पाकेन चेत् यदि विमुञ्चति तदा सुदारुणं अतिदारुणं यथा तथा विमुञ्चति । बलवतो नवज्वरस्य सहसा मोक्षः प्रायेण सव्यापद् भवति ॥ ३२९ ॥

कृत्वेति। ये ज्वराः दोषस्य ज्वरारम्भकस्य वशात् वेगं कृत्वा। दोष आदौ बलवान् तदा ज्वरवेगोऽपि बलवान् । ततः क्रमेण पाकात् दोषः अल्पः अल्पतरः । तदा वेगोऽप्यल्पोऽल्पतरश्च । एवं दोषवशात् वेगं कृत्वा ये ज्वराः क्रमात् उपरमन्ति विरमन्ति । तेषां चिरकारिणां दोषानुरूपं वेगं कृत्वा क्रमेण उपरमतां । न तु सहसा । ज्वराणां मोक्षः अदारुणः न दारुणो भवति ॥ ३३० ॥

प्रशान्तज्वरस्य लक्षणमाह—विगतक्लमेति । विगतौ क्लमः अनायासश्रमः सन्तापश्च तौ यस्य तं तथोक्तं । अव्यथं वेदनारहितं विमलेन्द्रियं प्रसन्नेन्द्रियं । प्रकृतिसत्त्वेन सहजसत्त्वेन । सत्त्वं मनः । यस्य यादृक् सत्त्वं रजोबहुलं तमोबहुलं वा

सज्वरो ज्वरमुक्तश्च विदाहीनि गुरूणि च ।
असात्म्यान्यन्नपानानि विरुद्धानि च वर्ज्जयेत् ॥३३२॥
व्यवायमतिचेष्टाश्च स्नानमत्यशनानि च ।
तथा ज्वरः शमं याति प्रशान्तो जायते न च ॥३३३॥
व्यायामश्च व्यवायश्च स्नानं चंक्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत् ॥३३४॥
असञ्जातबलो यस्तु ज्वरमुक्तो निषेवते ।
वर्ज्ज्यमेतन्नरस्तस्य पुनरावर्त्तते ज्वरः ॥३३५॥

पूर्वमासीत् तेन युक्तं । तथाविधं पुरुषं अज्वरं प्रशान्तज्वरं ज्वरमुक्तं विद्यात् जानीयात् ॥ ३३१ ॥

ज्वरावसृष्टो रक्ष्यश्च यावत् कालं यतो यतः इति प्रश्नस्योत्तरमाह—सज्वर इत्यादि । सज्वरः ज्वरितः ज्वरमुक्तश्च । इह ज्वरमुक्त एवाधिकृतः । सज्वरग्रहणं वर्जनीय प्रसंगात् । विदाह्यादीनि ज्वरमुक्तेनैव सज्वरेणापि वर्जनीयानि । विदाहीनि । गुरूणि इह प्रकृतिगुरूणि । मात्रागुरूणि अत्यशनानि पृथगुक्तानि । असात्म्यानि । विरुद्धानि । यथा पयसा सह मत्स्या विरुध्यते । तथाविधानि अन्नपानानि । व्यवायं मैथुनं । अतिचेष्टाः अतिगमनादिकं । स्नानं । अत्यशनानि अतिभोजनानि । दिवास्वप्नादिकञ्चापि विवर्जयेत् । तथा विदाह्यादीनां वर्जने कृते सज्वरस्य ज्वरः शमं याति । ज्वरमुक्तस्य च प्रशान्तः ज्वरः न जायते न पुनरावर्त्तते ॥ ३३२ । ३३३ ॥

व्यवायमिति । ज्वरमुक्तः पुमान् यावत्कालं न बलवान् भवेत् । तावत्कालं । व्यायामं शरीरायासजननं कर्म । व्यवायं । स्नानं । चंक्रमणानि अत्यर्थं पुनः पुनर्वा क्रमणानि गमनानि । चकारात् विदाह्यादीनि च न सेवेत ॥ ३३४ ॥

प्रशान्तः कारणैर्यैश्च पुनरावर्तते ज्वर इत्यस्योत्तरमाह—असंजातबल इति । यस्तु ज्वरमुक्तः नरः असंजातबलः सन् एतत् वर्ज्यं वर्ज्यनीयत्वेन उक्तं व्यायामव्यवायादिकं विदाहिगुर्वन्नपानादिकं च निषेवते । तस्य प्रशान्तोऽपि ज्वरः पुनरावर्त्तते ॥ ३३५ ॥

दुर्हृतेषु च दोषेषु यस्य वा विनिवर्त्तते।
स्वल्पेनाप्यपचारेण तस्य व्यावर्त्तते पुनः ॥३३६॥
चिरकालपरिक्लिष्टं दुर्बलं हीनतेजसम्।
अचिरेणैव कालेन स हन्ति पुनरागतः ॥३३७॥
अथवा विपरीपाकं धातुष्वेव क्रमान्मलाः।
यान्ति ज्वरमकुर्वन्तस्ते तथाप्यपकुर्वते ॥३३८॥
दीनतां श्वयथुं ग्लानिं पाण्डुतां नान्नकामताम्।
कण्डूरुत्कोठपिड़काः कुर्वन्त्यग्निञ्च ते मृदुम् ॥३३९॥

दुर्हृतेष्विति। दोषेषु दुर्हृतेषु न सम्यङ्निर्हृतेषु। तेन सावशेषेषु सत्सु एव। यस्य ज्वरः निवर्त्तते। तस्य स ज्वरः स्वल्पेनापि अपचारेण अपथ्यसेवया पुनः व्यावर्त्तते आवर्तते ॥ ३३६ ॥

चिरकालेति। पुनरागतः स ज्वर चिरकालं परिक्लिष्टं पूर्वं दीर्घकालज्वरक्लिष्टं दुर्बलं हीनतेजसं आतुरं अचिरेणैव कालेन शीघ्रमेव हन्ति ॥ ३३७ ॥

अथवेति। अथवा ते दुर्हरणात् सावशेषाः मलाः ज्वरं अकुर्वन्तः धातुषु रसादिषु एव क्रमात् विपरीपाकं लयं यान्ति। तथापि ज्वरमकुर्वन्तोऽपि धातुषु लीनत्वेन ते मलाः अपकुर्वते बाधन्ते। वक्ष्यमाणान् दैन्यप्रभृतीनन्यान् व्याधीन् जनयन्ति ॥ ३३८ ॥

किमपकुर्वते इति अत आह—दीनतामिति। ते मलाः। दीनतां दैन्यं। श्वयथुं। ग्लानिं। पाण्डुता देहस्य पाण्डुवर्णत्वं। नान्नकामतां अनन्नकामतां। अरुचिं। कण्डूः। उत्कोठाः पिडकाश्च। नाः। उत्कोठः—असम्यग् वमनोदीर्णपित्तश्लेष्मानिलग्रहैः। मण्डलानि सकण्डूनि रागवन्ति बहूनि च ॥ सानुबन्धास्तु स प्रोक्तः उत्कोठ इति कथ्यते। इति। अग्निं च मृदु अग्निमान्द्यं च कुर्वन्ति ॥ ३३९ ॥

एवमन्येऽपि च गदा व्यावर्त्तन्ते पुनर्गताः ।
अनिर्घातेन दोषाणामल्पैरप्यहितैर्नृणाम् ॥३४०॥
निवृत्तेऽपि ज्वरे यस्माद्यथावस्थं यथाबलम् ।
यथाप्राणं हरेद्दोषं प्रयोगैर्वा शमं नयेत् ॥३४१॥
मृदुभिः शोधनैः शुद्धिर्यापना बस्तयो हिताः ।
हिताश्च लघवो यूषा जाङ्गलामिषजा रसाः ॥३४२॥
अभ्यंगोद्वर्त्तनस्नानधूपनान्यञ्जनानि च ।
हितानि पुनरावृत्ते ज्वरे तिक्तघृतानि च ॥३४३॥
गुर्व्यभिष्यन्द्यसात्म्यानां भोजनात् पुनरागते ।
लङ्घनोष्णोपचारादिः क्रमः कार्यश्च पूर्ववत् ॥३४४॥

एवमन्येऽपीति । एवं ज्वरवत् नृणां अन्येऽपि गदा रोगाः गताः निवृत्ताः दोषाणां अनिर्घातेन असम्यङ् निर्हरणात् अल्पैरपि अहितैः अपथ्यैः स्वल्पैरप्यपथ्यसेवया पुनर्व्यावर्तन्ते आवर्त्तन्ते आगच्छन्ति ॥ ३४० ॥

तत्र प्रतीकारमाह—निवृत्तेऽपीति । यत्र दोषः दुर्हृतः तत्र स्वल्पेनाऽप्यपचारेण ज्वरः पुनरावर्तते यस्मात् तस्मात् पुनरावर्तनभयात् तत्र ज्वरे निवृतेऽपि यथावस्थं यथाबलं यथाप्राणं च पुंसां दोषं सावशेषं हरेत् । प्रयोगैः शमनैर्वा तं शमं नयेत् भिषक् ॥ ३४१ ॥

याश्चापि पुनरावृत्तं क्रियाः प्रशमयन्ति तमित्यस्योत्तरमाह—मृदुभिरित्यादि । निवृत्ते ज्वरे पुनरावृत्ते मृदुभिः शोधनैः शुद्धिः हिता । यापनाः वस्तयः सिद्धिस्थाने उत्तरवस्तिसिद्धौ वक्ष्यमाणाः । हिताः । लघवः मुद्गादीनां यूषाः जांगलामिषजाः जांगलमांसकृताः रसाश्च हिताः । अभ्यंगादीनि अंजनानि तिक्तघृतानि तिक्तद्रव्यैः साधितानि घृतानि पंचतिक्तघृतादीनि च हितानि ॥ ३४२ । ३४३ ॥

गुर्वभिष्यन्दीति । गुरूणां प्रकृत्या मात्रया च । अभिष्यन्दिनां दोषधातुमलादीनां क्लेदजननानां । असात्म्यानां च अन्नपानानां भोजनात् । पुनरागते ज्वरे । पूर्ववत् पूर्वं नवज्वरे यथा कृतः तथा लंघनं उष्णोपचारश्च तदादिक्रमः कार्यः ॥३४४॥

किराततिक्तकं तिक्ता मुस्तं पर्पटकोऽमृता ।
घ्नन्ति पीतानि चाभ्यासात् पुनरावर्त्तकं ज्वरम् ॥३४५॥
तस्यां तस्यामवस्थायां ज्वरितानां विचक्षणः ।
ज्वरक्रियाक्रमापेक्षी कुर्य्यात् तत्तच्चिकित्सितम् ॥३४६॥
रोगराट् सर्व्वभूतानामन्तकृद्दारुणो ज्वरः ।
तस्माद्विशेषतस्तस्य यतेत प्रशमे भिषक् ॥३४७॥

तत्रः श्लोकः ।

यथाक्रमं यथाप्रश्नमुक्तं ज्वरचिकित्सितम् ।
आत्रेयेणाग्निवेशाय भूतानां हितमिच्छता ॥३४८॥

किराततिक्तकमिति । किराततिक्तकं । तिक्ता कटुरोहिणी । मुस्तं । पर्पटकः । अमृता गुडूची । एतानि क्वाथविधिना क्वथितानि पीतानि अभ्यासात् सततोपयोगात् पुनरावर्तकं ज्वरं घ्नन्ति ॥ ३४५ ॥

अवस्थाविशेषे चिकित्सामाह—तस्यामिति । विचक्षणो भिषक् ज्वरितानां पुनरावृत्तज्वरवतां पुंसां तस्यां तस्यां अवस्थायां ज्वरे यः क्रियाक्रमः तदपेक्षी तत्तदवस्थाविशेषे यत् यत् योग्यं तत् तत् चिकित्सितं कुर्यात् । उक्तं च—निवृत्तोऽपि ज्वरः शीघ्रं व्यापादयति दुर्बलं । सद्यः प्राणहरो यस्मात् तस्मात्तस्य विशेषतः ॥ तस्यां तस्यामवस्थायां कुर्यात्तत्तद् भिषगजितं । इति ( अ० सं० चि० २ ) ॥ ३४६॥

सम्प्रति ज्वरस्य प्रतिकारे भिषजां प्रयत्नाधानार्थमाह—रोगराडिति । यस्मात् ज्वरः रोगराट् रोगाणां राजा सर्वरोगेषु प्रधानः । सर्वभूतानां अन्तकृत् नाशकृत् । दारुणो दुश्चिकित्स्यः । तस्मात् भिषक् ज्वरस्य प्रशमे विशेषतः विशेषेणैव यतेत यत्नं कुर्यात् ॥ ३४७ ॥

अध्यायार्थसंग्रहश्लोकमाह—तत्र श्लोक इति । भूतानां सर्वेषां हितमिच्छता आत्रेयेण भगवता पुनर्वसुना अग्निवेशाय शिष्याय ज्वरचिकित्सितं यथाप्रश्नं अग्निवे-

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
ज्वरचिकित्सितं नाम तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ।

अथातो रक्तपित्तचिकित्सितं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ॥१॥

विहरन्तं जितात्मानं पञ्चगङ्गे पुनर्वसुम् ।
प्रणम्योवाच निर्मोहमग्निवेशोऽग्निवर्चसम् ॥२॥

भगवन् रक्तपित्तस्य हेतुरुक्तः सलक्षणः
वक्तव्यं यत् परं तस्य वक्तुमर्हसि तद्गुरो ॥३॥

शेन प्रकृतिं च प्रवृतिं च इत्यादि यथा पृष्टं तदनतिक्रम्य तथैव यथाक्रमं क्रमेण प्रश्नक्रमानुसारेण उक्तं ॥ ३४८ ॥

इति वैद्यरत्नश्रीयोगीन्द्रनाथविद्याभूषणकृते चरकोपस्कारे चिकित्सितस्थाने तृतीयोऽध्यायः ॥ ३ ॥

चतुर्थोऽध्यायः ।

ज्वरस्तु खलु महेश्वरललाटाद्भवत् । तत्सन्तापाद् रक्तपित्तमिति । ( च० नि० ८ ) ज्वरसन्तापात् रक्तपित्तोत्पत्तेः ज्वरचिकित्सितादनन्तरं रक्तपित्तचिकित्सितमभिधीयते—अथात इति । पूर्ववत् सर्वं व्याख्येयं ॥ १ ॥

विहरन्तमिति । पंच गङ्गाः पुण्यनद्यो यत्र सः । तस्मिन् पञ्चगंगे देशविशेषे । विहरन्तं । जितात्मानं । निर्मोहं । अग्नेर्वच्च इव वर्चो यस्य सः अग्निवर्चाः । वर्च्चः तेजः । तं । तथाविधं पुनर्वसुं भगवन्तमात्रेयं गुरुं प्रणम्य अग्निवेशः उवाच ॥२॥

अग्निवेशः पृच्छति—भगवन्निति । हे भगवन् । रक्तपित्तस्य तदाख्यव्याधिभेदस्य सलक्षणः । लक्षणमिह प्रागुत्पत्तिलक्षणं पूर्वरूपापरनाम । निदानस्थाने तस्यैव उक्तत्वात् । हेतुः निदानं । प्राक् निदानस्थाने रक्तपित्तनिदाने उक्तः । तस्य सम्बन्धे परमन्यत् यत् वक्तव्यमस्ति हे गुरो साम्प्रतं तत् सर्वं मे मह्यं वक्तुमर्हसि युज्यसे॥३॥

गुरुरुवाच ।

महागदं महावेगमग्निवच्छीघ्रकारि च ।
हेतुलक्षणविच्छीघ्रं रक्तपित्तमुपाचरेत् ॥४॥
तस्योष्णं तीक्ष्णमम्लञ्च कटूनि लवणानि च ।
घर्मश्चान्नविदाहश्च हेतुः पूर्वं निदर्शितः ॥५॥
तैर्हेतुभिः समुत्क्लिष्टं पित्तं रक्तं प्रपद्यते ।
तद्योनित्वात् प्रपन्नश्च वर्द्धते तत् प्रदूषयत् ॥६॥

एवं पृष्टो भगवानात्रेयः प्रत्युवाच—गुरुरुवाचेत्यादि । महावेगं । अतः अग्निवत् शीघ्रकारि आशु मारकं । एतत् रक्तपित्तमित्यस्य विशेषणं । महागदं महान्तं रोगं महत्त्वं चास्य आशु मारकत्वात् । दुश्चिकित्स्यत्वाच्च । रक्तपित्तं हेतुलक्षणवित् भिषक् शीघ्रं उत्पन्नमात्रमेव उपाचरेत् चिकित्सेत् ॥ ४ ॥

हेतुलक्षणविदिति हेत्वादिज्ञानपूर्वकत्वाच्चिकित्सायाः आदौ हेत्वादीन् निदान-स्थाने प्रागुक्तानपि चिकित्साप्रसंगात् पुनराह—तस्योष्णमिति । तस्य रक्तपित्तस्य उष्णं तीक्ष्णं अम्लं च अन्नपानं । कटूनि लवणानि च कटुलवणरसानि द्रव्याणि । घर्मः आतपः । अन्नविदाहः विदाह्यन्नभक्षणात् जातः । इत्यादिः हेतुः पूर्वं निदानस्थाने निदर्शितः उक्तः । सुश्रुते च—क्रोधशोकभयायासविरुद्धान्नातपानलात् । कट्वम्लल-वणक्षारतीक्ष्णोष्णातिविदाहिनः ॥ नित्यमभ्यस्यतो दुष्टो रसः पित्तं प्रकोपयेत् । विदग्धं स्वगुणैः पित्तं विदहत्याशु शोणितं ॥ इति ( सु० उ० ४५ ) । उष्णादीनि पित्त-प्रकोपणानि । रक्तपित्तं प्रति तेषां हेतुत्वं तद्द्वारेण परम्परया । दोषप्रकोप एव सर्वत्र साक्षात् हेतुः । तथा चोक्तं—तत्र निदानं वाय्वादिप्रकोपः । तस्य पुनरहिताहारविहार-सेवा । इति ( अ० सं० नि० १ ) । तत्र रोगे । एवं सर्वत्र बोद्धव्यं ॥ ५ ॥

हेतुमुक्त्वा सम्प्राप्तिमाह—तैर्हेतुभिरिति । तैरुक्तैरुष्णादिभिः हेतुभिः समुत्क्लिष्टं समुद्रिक्तं पित्तं शरीरमनुसर्पत् यदा यकृत्प्लीहप्रभवाणां रक्तवाहिनां स्रोतसां मुखान्यासादयति तदा रक्तं प्रपद्यते प्राप्नोति । तद्योनित्वादिति । तत् रक्तं योनिः

४ । हेतुलक्षणवच्छीघ्रं इति क पुस्तके ।

तस्योष्मणा द्रवो धातुर्धातोर्धातोः प्रसिच्यते ।
स्विद्यतस्तेन संवृद्धिं भूयस्तदधिगच्छति ॥७॥
संयोगाद् दूषणात् तत् तु सामान्याद्गन्धवर्णयोः ।
रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः ॥८॥
प्लीहानञ्च यकृच्चापि तदधिष्ठाय वर्त्तते ।
स्रोतांसि रक्तवाहीनि तन्मूलानि हि देहिनाम् ॥९॥

उत्पत्तौ कारणं यस्य पित्तस्य तत् तद्योनि । तथाच—असृजः पित्तमिति ( च० चि० १५ ) । तस्य भावः तत्त्वं । तस्मात् तद्योनित्वात् हेतोः कार्यकारणयोरभेदात् उभयोर्द्रवतया तुल्यरूपत्वात् पित्तं तत् रक्तं प्रपन्नं प्राप्तं सत् । तत् प्रदूषयत् दुष्टत्वात् । वर्द्धते सामान्यात् ॥ ६ ॥

तस्योष्मणेति । तस्य पित्तस्य ऊष्मणा स्विद्यतः स्विन्नोभवतः धातोः धातोः प्रतिधातु मांसादिभ्यो धातुभ्यः द्रवो धातुः द्रवरूपः अंशः प्रसिच्यते क्षरति । तत् पित्तं रक्तसंसर्गात् प्रवृद्धं पुनः तेन धातुभ्यः क्षरता द्रवांशेन भूयः अधिकतरं संवृद्धिं अधिगच्छति प्राप्नोति ॥ ७ ॥

पित्तस्य रक्तपित्तसंज्ञानिमित्तमाह—संयोगादिति । रक्तस्य संयोगात् । रक्तस्य दूषणात् । रक्तस्य गंधवर्णयोः सामान्यात् रक्ततुल्यगंधत्वात् । रक्ततुल्यवर्णत्वाच्चापि । पित्तं रक्तपित्तमाख्यातं रक्तपित्तमित्युच्यते । तदुक्तं निदानस्थानेऽपि—तल्लोहितसंयोगाल्लोहितप्रदूषणाल्लोहितवर्णगन्धानुविधानाच्च पित्तं लोहितपित्तमित्याचक्षते । इति ( च० नि० २ ) । रक्तसंयुक्तं रक्तदूषितं रक्तगन्धि रक्तवर्णं वा पित्तं इति रक्तपित्तं । शाकपार्थिवादिवत् समासः ॥ ८ ॥

रक्तपित्तस्य स्थानमाह—प्लीहानञ्चेति । तत् रक्तपित्तमाख्यातं पित्तं प्लीहानं यकृच्च अधिष्ठाय वर्त्तते । तेन यकृत्प्लीहभ्यां तत् प्रवर्त्तते । कथमिति चेत् ? आह—स्रोतांसीति । हि यतः देहिनां रक्तवाहीनि स्रोतांसि ते प्लीहयकृती एव मूलं येषां तानि तन्मूलानि प्लीहयकृत्प्रभवाणि । उक्तं च—शोणितवाहिनां स्रोतसां यकृन्मूलं । प्लीहा

८। दूषणात्तत्र इति क पुस्तके ।

सान्द्रं सपाण्डु सस्नेहं पिच्छिलञ्च कफान्वितम्।
श्यावारुणं सफेनञ्च तनु रूक्षञ्च वातिकम् ॥१०॥
रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभम्।
मेचकागारधूमाभमञ्जनाभञ्च पैत्तिकम् ॥११॥
संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम्।
एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ॥१२॥

च। इति (च० चि० ५)। तदुक्तं वृद्धवाग्भटेनापि—प्रभवत्यसृजः स्थानात् प्लीहतो यकृतश्च तत्। इति (अ० सं० नि० ३)। सुश्रुते च—आमाशयाद् व्रजेदूर्ध्वमधः पक्वाशयाद् व्रजेत्। विदग्धयोर्द्वयोश्चापि द्विधा भागं प्रवर्त्तते॥ केचित् सयकृतः प्लीह्नः प्रवदन्त्यसृजो गतिं॥ इति (सु० उ० ४५)॥ ९॥

तस्य वातिकादिलिंगान्याह—सान्द्रमित्यादि। सान्द्रं घनं। सपाण्डु ईषत् पाण्डुवर्णं। सस्नेहं ईषत्स्निग्धं। पिच्छिलं च। यत् रक्तपित्तं तत् कफान्वितं कफजं। यत् श्यावारुणं श्यावारुणान्यतरवर्णं। सफेनं। तनु अघनं। रूक्षं च। तत् वातिकं। यत् रक्तपित्तं कषायवदाभा यस्य तत् कषायाभं वटादिक्वाथवर्णं। कृष्णं। गोमूत्रसन्निभं गोमूत्रसदृशं। मेचकागारधूमाभं मेचकं अगारधूमाभं च। मेचकं स्निग्धकृष्णं मसृणीकृतकृष्णमणिसदृशवर्णं। अगारधूमाभं गृहधूमतुल्यवर्णं। अञ्जनाभं सौवीराञ्जनसदृशवर्णं च। तत् पैत्तिकं॥

ननु सर्वमेव रक्तपित्तं दुष्टेन पित्तेनारभ्यते। तत् कथं तस्य वातिकत्वादिव्यपदेश इति चेत्? सत्यं। यदा तत् स्वकारणोद्भूतेन वातेन श्लेष्मणा वा स्वलक्षणकारिणा संसृष्टं भवति तदा वातिकमिति श्लैष्मिकमिति च व्यपदिश्यते। यदा पुनः दोषान्तरासंसृष्टं केवलपित्तारब्धं तदा पैत्तिकमिति॥ १०। ११॥

एकैकदोषजानां लक्षणान्युक्तानि। सम्प्रति द्वान्द्विकसान्निपातिकानां लक्षणान्याह—संसृष्टलिंगमिति। संसर्गात् युग्मभूतैर्दोषैर्जातं रक्तपित्तं संसृष्टलिंगं यथोक्त-

---

११। रक्तपित्तं कषायं च इति ख पुस्तके।

१२। संपूर्णलिंगं संसर्गात् इति ख पुस्तके।

यत् त्रिदोषमसाध्यं तन्मन्दाग्नेरतिवेगवत् ।
व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥१३॥
गतिरूर्ध्वमधश्चैव रक्तपित्तस्य दर्शिता ।
ऊर्ध्वा सप्तविधद्वारा द्विद्वारा त्वधरा गतिः ॥१४॥
सप्त च्छिद्राणि शिरसि द्वे चाधः साध्यमूर्ध्वगम् ।
याप्यन्त्वधोगं मार्गौ तु द्वावसाध्यं प्रपद्यते ॥१५॥

द्विदोपलक्षणं ज्ञेयं । एवं सान्निपातिकं त्रिदोषजं रक्तपित्तं त्रिलिंगं यथोक्तत्रिदोष-लक्षणं ज्ञेयं ॥

साध्यासाध्यविभागमाह—एकदोषानुगमिति । एकदोषानुगं रक्तपित्तं साध्यं । द्विदोषं रक्तपित्तं याप्यमुच्यते । याप्यमप्यसाध्यं । द्विविधं चाप्यसाध्यं स्याद् याप्यं यच्चानुपक्रमं । इति ( च० श्लो० १० ) । यत् रक्तपित्तं त्रिदोषं सान्निपातिकं तत् असाध्यं उच्यते । असाध्यमिह अनुपक्रमाख्यं प्रत्याख्येयापरनाम । मन्दाग्नेः । व्याधिभिः क्षीणदेहस्य । वृद्धस्य । अनश्नतः अरुच्यादिना आहारमकुर्वतश्च । तथाविधस्य पुंसो यत् रक्तपित्तं । यच्च अतिवेगवत् वापि । तत् सर्वमसाध्यमुच्यते ॥ १२ । १३ ॥

दोषसम्बन्धकृतं लक्षणं साध्यासाध्यत्वञ्चोक्त्वा सम्प्रति गतिभेदं तत्कृतं साध्यासाध्यविभागञ्चाह—गतिरित्यादि । रक्तपित्तस्य गतिः ऊर्ध्वं अधश्च इति द्विविधा दर्शिता निदानस्थाने रक्तपित्तनिदाने प्राग् उक्ता । तथा च मार्गौ पुनरस्य द्वौ । ऊर्ध्वं च । अधश्च । इति ( च० नि० २ ) । तत्र ऊर्ध्वा गतिः सप्तविधद्वारा । अधरा अधोगतिस्तु द्विद्वारा । ऊर्ध्वा सप्तविधद्वारेत्यस्य विवरणं—शिरसि सप्त च्छिद्राणीति । शिरसि सप्त छिद्राणि, यथा कर्णौ नासे नेत्रे मुखं च इति सप्त । द्विद्वारा त्वधरेत्यस्य विवरणं— द्वे चाधः इति । अधः द्वे छिद्रे मूत्रपुरीषमार्गौ । तद्व बहुश्लेष्मणि शरीरे श्लेष्मसंसर्गात् ऊर्ध्वं प्रतिपद्यमानं कर्णनासानेत्रास्यात् प्रच्यवते । बहुवाते तु शरीरे वातसंसर्गादधः प्रतिपद्यमानं मूत्रपुरीषमार्गाभ्यां प्रच्यवते । बहुश्लेष्मवाते तु शरीरे श्लेष्मवातसंसर्गाद्द द्वावपि मार्गौ प्रतिपद्यते । इति ( च० नि० २ ) । गतिमुक्त्वा तत्कृतसाध्यादिभेदमाह—साध्यमूर्ध्वगमित्यादि । तत्र ऊर्ध्वगं रक्तपित्तं साध्यं ।

यदा तु सर्वच्छिद्रेभ्यो रोमकूपेभ्य एव च ।
वर्त्तते तामसंख्येयां गतिं तस्याहुरान्तिकीम् ॥१६॥
यच्चोभयाभ्यां मार्गाभ्यामतिमात्रं प्रवर्त्तते ।
तुल्यं कुणपगन्धेन रक्तं कृष्णमतीव च ॥१७॥
संसृष्टं कफवाताभ्यां कण्ठे सज्जति चापि यत् ।
यच्चाप्युपद्रवैः सर्वैर्यथोक्तैः समुपद्रुतम् ॥१८॥

अधोगं याप्यं । यत् उभौ मार्गौ ऊर्ध्वमधश्च प्रपद्यते तत् असाध्यं प्रत्याख्येयाख्यं । उक्तं च—तत्र यदूर्ध्वभागं तत् साध्यं। विरेचनोपक्रमणीयत्वात् । बह्वौषधत्वाच्च । यद-धोभागं तद् याप्यं । वमनोपक्रमणीयत्वात् । अल्पौषधत्वाच्च । यदुभयभागं तदसाध्यं । वमनविरेचनायोगित्वात् । अनौषधत्वाच्च । इति ( च० नि० २ ) । सुश्रुतेनाऽप्युक्तं—ऊर्ध्वं साध्यमधो याप्यमसाध्यं युगपद्गतम् । इति ( सु० उ० ४ ) ॥ १८ । १५ ॥

यदा त्विति । यदा तु रक्तपित्तं ऊर्ध्वमधः सर्वेभ्यः छिद्रेभ्यः मुखनासानेत्रकर्ण-विवरेभ्यः मलमूत्रमार्गाभ्यां च तथा रोमकूपेभ्यश्च प्रवर्तते । तथाच—तौ मार्गौ प्रति-पद्यमानं सर्वेभ्य एव खेभ्यः प्रच्यवते शरीरस्य । इति ( च० नि० २) । तस्य तां असं-ख्येयां गतिं आन्तिकीं अन्तकरीं आहुः भिषजः । तदसाध्यमित्यर्थः ॥ १६ ॥

साध्यादिभेदः सामान्यतः उक्तः । पुनर्विशिष्याह । तत्रादौ असाध्यं ब्रूते—यच्चो-भयाभ्यामित्यादि । यत् रक्तं रक्तपित्तं उभयाभ्यां मार्गाभ्यां ऊर्ध्वाधोमार्गाभ्यां प्रव-र्तते । यदुभयगं । तन्न सिध्यति इति परेणान्वयः । एवं परत्रापि । उभयमार्गप्रवृत्तिस्तु कफवातसंसर्गाद् भवति । तथाच—श्लेष्मवातसंसर्गाद् द्वावपि मार्गौ प्रतिपद्यते । इति ( च० नि० २ ) । इत्यत्र उभयगस्यासाध्यत्ववचनात् कफवातसंसृष्टस्या-साध्यत्वसिद्धौ यत् पुनर्वक्ष्यति संसृष्टं कफवाताभ्यामिति तत् दोषानुबन्धद्वारेणा-साध्यत्वमभिधित्सयैव । यच्च अतिमात्रं प्रवर्तते अतिवेगवत् । तन्न सिध्यति तदसाध्यं । एवं यत् । कुणपः शवः । तद्गन्धेन तुल्यं तुल्यगन्धं कुणपगन्धि । यत् अतीव कृष्णं

१७। रक्तं कृत्स्नमतीव च इति च पुस्तके ।

हारिद्रनीलहरिततात्रैर्वर्णैरुपद्रुतम् ।
क्षीणस्य कासमानस्य यद्वा तच्च न सिध्यति ॥१९॥
यद् द्विदोषानुगं यद्वा शान्तं भूयः प्रवर्त्तते ।
मार्गान्मार्गं चरेद् यद्वा याप्यं पित्तमसृक् च तत् ॥२०॥
एकमार्गं बलवतो नातिवेगं नवोत्थितम् ।
रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् ॥२१॥

कृष्णवर्णं । यत् कफवाताभ्यां संसृष्टं । यच्च कण्ठे सज्जति लगति न कण्ठात् बहिर्निः-सरति । यच्चापि यथोक्तः प्राक् निदानस्थाने रक्तपित्तनिदाने यथा उक्तैः सर्वैः उपद्रवै-दौर्बल्यादिभिः स्वरभेदान्तैः समुपद्रुतं । तथाच—उपद्रवास्तु खलु दौर्बल्यारोचकाबि-पाकश्वासकासज्वरातिसारशोषशोथपाण्डुरोगस्वरभेदाः । इति ( च० नि० २ ) । यच्च हारिद्रनीलहरिततात्रैः वर्णैः उपद्रुतं युतं । क्षीणस्य कासमानस्य कासिनश्च पुंसः यच्च रक्तपित्तं । क्षयकासावुपद्रवौ । प्राक् सर्वैरुपद्रवैरुपद्रुतस्यासाध्यत्वमुक्तं । इह केवलेन क्षयेण कासेन वा उपद्रुतमप्यसाध्यमित्युच्यते । तत् सर्वं न सिध्यति असाध्यं ॥१७–१९॥

याप्यमाह—यद् द्विदोषानुगमिति । यत् रक्तपित्तं द्विदोषानुगं संसृष्टलक्षणं । यच्च शान्तं निवृत्तं भूयः प्रवर्तते स्वल्पं कारणं प्राप्य पुनः प्रवर्तते । यच्च मार्गादेकस्मात् मार्गमन्यं चरेत् । यथा ऊर्ध्वगं मुखं परित्यज्य नासां गच्छति । इत्यादिरूपं । ऊर्ध्व-गस्याधोगमने तदा अधोगत्वात् तस्य याप्यत्वं स्वत एव सिद्धं । याप्यं त्वधोगमिति । तत् सर्वं असृक्पित्तं रक्तपित्तं याप्यं ॥ २० ॥

साध्यमाह—एकमार्गमिति । यत् रक्तपित्तं एकमार्गं । सामान्यवचनेऽपि मार्ग इह ऊर्ध्वमार्ग एव बोद्धव्यः । अधोगस्य याप्यत्वात् । याप्यं त्वधोगमिति । ऊर्ध्वगं हि साध्यं । साध्यमूर्ध्वगमिति । बलवतः पुंसो यत् रक्तपित्तं । एवं यत् रक्तपित्तं नाति-वेगं । यत् नवोत्थितं अचिरोत्पन्नं । यत् सुखे काले तद्व्याधिप्रतिपक्षभूते काले हेमन्ते शिशिरे च जातं । यच्च निरुपद्रवं उपद्रवरहितं । उपद्रवाः दौर्बल्यादयः । तत् सर्वं साध्यं ॥ २१ ॥

स्निग्धोष्णमुष्णरूक्षञ्च रक्तपित्तस्य कारणम् ।
अधोगस्योत्तरं प्रायः पूर्वं स्यादूर्ध्वगस्य तु ॥२२॥
ऊर्ध्वगं कफसंसृष्टमधोगं मारुतानुगम् ।
द्विमार्गं कफवाताभ्यामुभाभ्यामनुबध्यते ॥२३॥
अक्षीणबलमांसस्य रक्तपित्तं यदश्नतः ।
तद्दोपदुष्टमुत्क्लिष्टं नादौ स्तम्भनमर्हति ॥२४॥

गतिभेदस्तत्कृतसाध्यादिविभागश्चोक्तः । सम्प्रति तत्कारणमाह—स्निग्धोष्णमिति । स्निग्धोष्णं उष्णरूक्षं च अन्नपानं रक्तपित्तस्य ऊर्ध्वाधोगत्वेन द्विविधस्य कारणं । किं कस्य कारणमित्याकांक्षायामाह—अधोगस्येति । तत्र उत्तरं उष्णरूक्षं अधोगस्य रक्तपित्तस्य प्रायः कारणं स्यात् । उष्णरूक्षाभ्यां पित्तवातयोः प्रवृद्ध्या । वातस्य पक्वाशयस्थानत्वात् तत् संसर्गादधोगमनं । उक्तं च—बहुवाते तु शरीरे वातसंसर्गादधः प्रपद्यमानं मूत्रपुरीषमार्गाभ्यां प्रच्यवते । इति ( च० नि० २ ) । पूर्वं प्रथमं स्निग्धोष्णं ऊर्ध्वगस्य रक्तपित्तस्य प्रायः कारणं स्यात् । स्निग्धोष्णाभ्यां श्लेष्मपित्तयोः प्रवृद्धत्वात् । श्लेष्मणः उरःस्थानतया तत्संसर्गात् ऊर्ध्वगमनं । उक्तं च—तद् बहुश्लेष्मणि शरीरे श्लेष्मसंसर्गादूर्ध्वं प्रतिपद्यमानं कर्णनासानेत्रास्येभ्यः प्रच्यवते । इति ( च० नि० २ ) । प्रायोग्रहणात् कदाचित् रूक्षोष्णं ऊर्ध्वगस्यापि कारणं भवति । स्निग्धोष्णञ्चापि अधोगस्य । इति दर्शयति ॥ २२ ॥

दोषानुबन्धमाह—ऊर्ध्वगमिति । ऊर्ध्वगं रक्तपित्तं स्निग्धोष्णकारणत्वात् कफसंसृष्टं । उष्णरूक्षकारणत्वात् अधोगं रक्तपित्तं मारुतानुगं वातसंसृष्टं । द्विमार्गं रक्तपित्तं उभाभ्यां कारणाभ्यां स्निग्धोष्णरूक्षोष्णाभ्यां जातत्वात् कफवाताभ्यां उभाभ्यां अनुबध्यते संसृज्यते । तदुक्तं—बहुश्लेष्मवातेषु शरीरे श्लेष्मवातसंसर्गाद् द्वावपि मार्गौ प्रतिपद्यते । इति ( च० नि० २ ) ॥ २३ ॥

चिकित्सासौकर्यार्थं रक्तपित्तस्य दोषजत्वेन निदानं लिंगं साध्यासाध्यत्वञ्चोक्तं । ऊर्ध्वाधःप्रवृत्तत्वात् गतिभेदः तन्निदानं दोषानुबन्धस्तत्कृतसाध्यादिविभागश्चापि दर्शितः । सम्प्रति तच्चिकित्सामाह—अक्षीणेति । अक्षीणबलमांसस्य । बलिन इत्यर्थः ।

गलग्रहं पूतिनस्यं मूर्च्छायमरुचिं ज्वरम् ।
गुल्मं प्लीहानमानाहं किलासं कृच्छ्रमूत्रताम् ॥२५ ॥
कुष्ठान्यर्शांसि वीसर्पं वर्णनाशं भगन्दरम् ।
बुद्धीन्द्रियोपरोधश्च कुर्यात् स्तम्भितमादितः ॥२६॥
तस्मादुपेक्ष्यं बलिनां बलदोषौ प्रपश्यता ।
रक्तपित्तं प्रथमतः प्रवृत्तं सिद्धिमिच्छता ॥२७॥

तथा अश्नतश्च पुंसः । यद् रक्तपित्तं सन्तर्पणोत्थमित्यर्थः । तथा दोषेण कफादिना दुष्टं दोषदुष्टमशुद्धं । उत्क्लिष्टं आमदोषात् प्रवृत्त्युन्मुखं । तत् तथाविधं रक्तपित्तं आदौ प्रथमतः न स्तम्भनमर्हति न स्तम्भनीयं । उक्तं च—अश्नतो बलिनोऽशुद्धं न धार्यं तद्धि रोगकृत् । इति ( अ० सं० चि० ३ ) ॥ २४ ॥

स्तम्भने दोषमाह—गलग्रहमित्यादि । तथाविधं रक्तपित्तं आदितः प्रथमतः स्तम्भितं चेत् तदा । गलग्रहं । यस्य श्लेष्मा प्रकुपितस्तिष्ठत्यन्तर्गले स्थितः । आशु संजनयच्छोफं जायतेऽस्य गलग्रहः॥ इति ( च० श्लो० १८ )। पूतिनस्यं । दोषैर्विदग्धैर्गलतालुमूले संवासितो यस्य समीरणस्तु । निरेति पूतिर्मुखनासिकाभ्यां तं पूतिनस्यं प्रवदन्ति रोगं॥ इति (सु० उ० २२) । मूर्च्छायं । अरुचिं । ज्वरं। गुल्मं। प्लीहानं। आनाहं । किलासं । कृच्छ्रमूत्रतां मूत्रकृच्छ्रं। कुष्ठानि । अर्शांसि। वीसर्पं । वर्णनाशं । भगन्दरं । बुद्धीन्द्रियोपरोधं बुद्धेः इन्द्रियाणां चक्षुरादीनां । बुद्धीन्द्रियाणां वा । उपरोधमप्रसादं च । कुर्यात् । सुश्रुतेऽपि—नादौ संग्राह्यमुद्रिक्तं यदसृग् बलिनोऽश्नतः । तत् पाण्डुग्रहणीकुष्ठप्लीहगुल्मज्वरावहं ॥ इति ( सु० उ० ४५ ) ॥२५।२६॥

तस्मादिति । तस्मात् सिद्धिमिच्छता भिषजा बलदोषौ बलं दोषं च प्रपश्यता बलाधिक्यं दोषाधिक्यं च दृष्ट्वा बलिनां प्रथमतः प्रवृद्धमारब्धं रक्तपित्तं उपेक्ष्यं । प्रथमतः न स्तम्भनीयं । यदा बलह्रासः हीनदोषत्वं वा तदैव स्तम्भनं कार्यं ॥ २७ ॥

प्रायेण हि समुत्क्लिष्टमामदोषाच्छरीरिणाम् ।
वृद्धिं प्रयाति पित्तासृक् तस्मात्तल्लङ्घ्यमादितः ॥२८॥)
(मार्गौ दोषानुबन्धञ्च निदानं प्रसमीक्ष्य च ।
लंघनं रक्तपित्तादौ तर्पणं वा प्रयोजयेत् ॥२९॥
ह्रीबेरचन्दनोशीरमुस्तपर्पटकैः श्रृतम् ।
केवलं श्रृतशीतं वा दद्यात् तोयं पिपासवे ॥३०॥
ऊर्ध्वगे तर्पणं पूर्वं पेयां पूर्वमधोगते ।
कालसात्म्यानुबन्धज्ञो दद्यात् प्रकृतिकल्पवित् ॥३१॥

तर्हि तदा किं कर्तव्यमिति ? अत आह—प्रायेण हीति । हि यस्मात् शरीरिणां प्राणिनां पित्तासृक् रक्तपित्तं प्रायेण आदौ आमदोषात् समुत्क्लिष्टं अत्यर्थप्रवृत्त्युन्मुखं वृद्धिं प्रयाति । तस्मात् आदितः प्रथमतः तत् लंघ्यं लंघनीयं ॥ २८ ॥

नन्वेवं किमादौ सर्वत्र लंघनं कार्यमिति ? अत आह—मार्गाविति । मार्गौ । दोषानुबन्धं दोषयोरनुबलत्वं । निदानं । चकारात् देशकालाद्यवस्थाञ्चापि । प्रसमीक्ष्य दृष्ट्वा भिषक् । रक्तपित्तादौ रक्तपित्तस्यादौ । तस्य प्रकृतत्वात् । रक्तपित्तादौ व्याधौ वापि । लंघनं । तर्पयतीति तर्पणमशनं । बृंहणमिति यावत् । तर्पणं वा प्रयोजयेत् । तदुक्तं वृद्धवाग्भटेनापि—ज्ञात्वा निदानमयनं मलावनुबलौ बलं । देशकालाद्यवस्थाञ्च रक्तपित्ते प्रयोजयेत् । लंघनं बृंहणं चादौ शोधनं शमनं तथा ॥ इति ( अ० सं० चि० ३ ) ॥ २९ ॥

ह्रीवेरेति । पिपासवे तृष्णावते रक्तपित्तिने ह्रीवेरादिभिः श्रृतं तोयं दद्यात् भिषक् । जलपाकविधिर्यथा—कर्षं गृहीत्वा द्रव्यस्य क्वाथयेत् प्रास्थिकेऽम्भसि । अर्द्धश्रृतं प्रयोक्तव्यं जलपाके त्वयं विधिः ॥ इति ॥ औषधद्वेषिणे पुरुषाय केवलं ह्रीवेरादिरहितं श्रृतशीतं आदौ श्रृतं पश्चात् शीतं शीतीकृतं । स्नातानुलिप्तवत् समासः । तोयं वा दद्यात् ॥ ३० ॥

शोधनं शमनं च वक्ष्यति । तत्र शोधनशुद्धस्य रक्तपित्तिनः संसर्जनक्रममन्नपानप्रसंगादादौ प्राह—ऊर्ध्वगे इति । कालः हेमन्तादिः । सात्म्यं । अनुबन्धः दोषा-

जलं खर्ज्जूरमृद्वीकामधूकैः सपरूषकैः ।
शृतशीतं प्रयोक्तव्यं तर्पणार्थे सशर्करम् ॥३२॥
तर्पणं सघृतक्षौद्रं लाजचूर्णैः प्रदापयेत् ।
ऊर्ध्वगं रक्तपित्तं तत् पीतं काले व्यपोहति ॥३३॥
मन्दाग्नयेऽम्लसात्म्याय तत् साम्लमपि कल्पयेत् ।
दाड़िमामलकैर्विद्वानम्लार्थञ्चानु दापयेत् ॥३४॥
शालिषष्टिकनीवारकोरदूषप्रशांतिकाः ।
श्यामाकश्च प्रियंगुश्च भोजनं रक्तपित्तिनाम् ॥३५॥

नुबन्धः । कफवातयोरनुबलत्वं । तज्ज्ञः । प्रकृतिः स्वभावः । कल्पो द्रव्याणां कल्पना तद्वित् । भिषक् शोधनशुद्धस्य रक्तपित्तिनः ऊर्ध्वगे रक्तपित्ते पूर्वं प्रथमं तर्पणं । तर्पणं द्रवेणालोडिताः लाजसक्तवः । दद्यात् । अधोगते तु पूर्वं पेयां यवागूं दद्यात् । ऊर्ध्वगे तर्पणादिः क्रमः । अधोगते तु पेयादिः । तथा च पश्चात् वक्ष्यति—ऊर्ध्वगे शुद्धकोष्ठस्य तर्पणादिः क्रमो हितः । अधोगते यवाग्वादिर्न चेत् स्यान्मारुतो बली ॥ इति ॥ ३१ ॥

तर्पणार्थं जलमाह—जलमिति । सपरूषकैः खर्ज्जूरमृद्वीकामधूकैः शृतशीतं जलं सशर्करं शर्करायुक्तं कृत्वा तर्पणार्थे प्रयोक्तव्यं ॥ ३२ ॥

तर्पणमिति । लाजचूर्णैः लाजसक्तुभिः मृद्वीकादिशृतशीतसशर्करजलेनालोडितैः कृतं तर्पणं सघृतक्षौद्रं घृतमधुप्रक्षेपयुक्तं कृत्वा प्रदापयेत् ऊर्ध्वगरक्तपित्तिने भिषक् । ऊर्ध्वगे तर्पणं पूर्वमिति । तत् तथाविधं तर्पणं काले पीतं सत् ऊर्ध्वगं रक्तपित्तं व्यपोहति नाशयति ॥ ३३ ॥

मन्दाग्नये इति । विद्वान् भिषक् मन्दाग्नये अम्लसात्म्याय अम्लाभिलाषिणे रक्तपित्तिने । तदर्थं । तत् तर्पणं । दाडिमामलकैः साम्लं अम्लरसयुक्तमपि कल्पयेत् कुर्यात् । साम्लं कृत्वा च अनु पश्चात् अम्लसात्म्याय तस्मै अम्लार्थं तद् दापयेत् ॥ ३४ ॥

रक्तपित्तिनां तर्पणार्थलाजपेयौदनद्रव्याण्याह—शालिषष्टिकेति । शालिषष्टिकौ

मुद्गा मसूराश्चणकाः समुकुष्ठाढ़कीफलाः ।
प्रशस्ताः सूपयूषार्थे कल्पिता रक्तपित्तिनाम् ॥३६॥)
पटोलनिम्बवेत्राग्रप्लक्षवेतसपल्लवाः।
किराततिक्तकं शाकं गण्डीरं सकठिल्लकम् ॥३७॥
कोविदारस्य पुष्पाणि काश्मर्य्यस्याथ शाल्मलेः ।
अन्नपानविधौ शाकं यच्चान्यद्रक्तपित्तनुत् ॥३८॥

प्रसिद्धौ । नीवारः उड़िधान्यं । कोरदूपः कोद्रवः । यवकोद्दालककोरदूषप्रायाण्यन्नानि भुङ्क्ते इति ( च० नि० २ ) निदानस्थाने कोरदूषस्य यत् रक्तपित्तहेतुत्वमुक्तं तत् तस्य माषकुलत्थसूपयुक्तस्यैव । संयोगमहिम्ना । केवलस्य तु तस्य कषायमधुरशीतलघुत्वात् रक्तपित्तहरत्वं । तथाच --सकोरदूषः श्यामाकः कषायमधुरो लघुः । वातलः श्लेष्मपित्तघ्नः शीतः संग्राहिशोषणः ॥ इति ( च० श्लो० २७ ) । अभिनवस्यैव तस्य रक्तपित्ताहेतुत्वमित्यन्ये । प्रशान्तिका प्रायो जलमध्ये भवति । श्यामाकः । प्रियगुंः कंगुः । एतत् सर्वं रक्तपित्तिनां । भुज्यते यत् तत् भोजनमाहारः । रक्तपित्तिनां लाजपेयौदनार्थे शालिपष्टिकादयः प्रशस्ताः इत्यर्थः ॥ ३५ ॥

रक्तपित्तिनां सूपयूषद्रव्याण्याह—मुद्गा इति । मुद्गाः । मसूराः । समुकुष्टाढकीफलाः मुकुष्टाढकीफलसहिताः । चणकाः । मुकुष्टाः वनमुद्गाः । तथा च—मधुरा मधुराः पाके ग्राहिणो रूक्षशीतलाः । मुकुष्टकाः प्रशस्यन्ते रक्तपित्तज्वरादिषु ॥ इति ( च० श्लो० २७ ) । आढकी तुवरी अड़हड़ इति ख्याता । तस्याः फलं आढकीफलं । मुद्गादयः रक्तपित्तिनां सूपयूषसात्म्यानां सूपयूषार्थे सूपार्थे यूषार्थे च कल्पिताः प्रशस्ताः ॥ ३६ ॥

शाकसात्म्यानां रक्तपित्तिनां शाकार्थमाह—पटोलनिम्बेत्यादि । पटोलनिम्बौ प्रसिद्धौ । वेत्राग्रं वेत्रलतायाः कोमलं अग्रं । प्लक्षवेतसयोः पल्लवाः । किराततिक्तकं शाकं किराततिक्तको भूनिम्बः । सकठिल्लकः गंडीरः । गंडीरः शमठशाकः । कठिल्लकः दीर्घपत्रा वर्षाभुः । कारवेल्लको वा । कोविदारस्य रक्तकांचनस्य । काश्मर्यस्य गाम्भार्याः । अथ शाल्मलेश्च पुष्पाणि । इह पटोलादीनि कतिचित् उक्तानि । अनुक्त-

शाकार्थं शाकसात्म्यानां तच्छस्तं रक्तपित्तिनाम् ।
स्विन्नं वा सर्पिषा भृष्टं यूषवद्वा विपाचितम् ॥३६॥
पारावतान् कपोतांश्च लावान् रक्ताक्षवर्त्तकान् ।
शशान् कपिञ्जलानेणान् हरिणानं कालपुच्छकान् ॥४०॥
रक्तपित्ते हितान् विद्याद्रसांस्तेषां प्रयोजयेत् ।
ईषदम्लाननम्लान् वा घृतभृष्टान् सशर्करान् ॥४१॥
कफानुगे यूषशाकं दद्याद्वातानुगे रसम् ।
रक्तपित्ते यवागूनामतः कल्पः प्रवक्ष्यते ॥४२॥

संग्रहार्थमाह—अन्नपानविधाविति । अन्यत् रक्तपित्तनुत् रक्तपित्तहरं यत् शाकं अन्नपानविधौ अध्याये प्राक् श्लोकस्थाने उक्तं तच्चापि । अन्नपानविधौ च—मण्डूकपर्णी वेत्राग्रं कुचेला वनतिक्तकं । कर्कोटकावल्गुजकौ पटोलं शकुलादनी ॥ वृषपुष्पाणि शार्ङ्गेष्टा केम्बुकं सकठिल्लकं । नाडीकलायं गोजिह्वा वार्ताकी तिलपर्णिका ॥ कौलकं कार्कशं नैम्बं शाकं पार्पटकं च यत् । कफपित्तहरं तिक्तं शीतं कटु विपच्यते ॥ इति । शणस्य कोविदारस्य कर्बुदारस्य शाल्मलेः । पुष्पं ग्राहि प्रशस्तं च रक्तपित्ते विशेषतः ॥ न्यग्रोधोदुम्बराश्वत्थप्लक्षपद्मादिपल्लवाः । कषायाः स्तम्भनाः शीता हिता रक्तातिसारिणां ॥ इति च ( च० श्लो० २७ ) । एतत् सर्वं स्विन्नं सर्पिषा भृष्टं किंचित् जलेन उत्स्वेद्य ततो निष्पीड्य पश्चात् सर्पिषा घृतेन भृष्टं वा । यूषवत् विपाचितं जले यूषवत् पक्वं वा । शाकसात्म्यानां शाकाभिलाषिणां रक्तपित्तिनां शाकार्थं शस्तं ॥३७—३६॥

मांससात्म्यानां रक्तपित्तिनां मांसार्थमाह—पारावतानित्यादि । पारावतः गृहदेवकुलालयः प्रसिद्धः । कपोतः वनवासी । घुघु इति ख्यातः । लावः प्रसिद्धः । रक्ताक्षः चकोरः । वर्तकः बटेर इति ख्यातः पक्षी । शशः प्रसिद्धः । कपिंजलः गौरतित्तिरिः । एणः कृष्णः । हरिणस्ताम्रः । एणः कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते । इति ( सु० सू० ४६ ) । कालपुच्छको मृगभेदः । पारावतादीन् रक्तपित्ते हितान् विद्यात् जानीयात् । तेषां रसान् मांसरसान् ईषदम्लान् अम्लसात्म्यानां सम्बन्धे दाडिमामलकरसैः ईषत् किंचिदम्लान् कृत्वा । इतरेषां तु अनम्लान् वा ।

पद्मोत्पलानां किञ्जल्कः पृश्निपर्णी प्रियंगुका ।
जले साध्या रसे तस्मिन् पेया स्याद्रक्तपित्तिनाम् ॥४३॥
चन्दनोशीरलोध्राणां रसे तद्वत् सनागरे ।
किराततिक्तकोशीरमुस्तानां तद्वदेव च ॥४४॥
धातकीधन्वयासाम्बु विल्वानां वा रसे शृता ।
मसूरपृश्निपर्ण्योर्वा स्थिरामुद्गरसेऽथवा ॥४५॥

सर्वान् घृतभृष्टान् घृते भृष्टान् घृते गव्ये भृष्ट्वा सशर्करान् शर्करायुतान् कृत्वा शर्करां प्रक्षिप्य च प्रयोजयेत् भिषक् ॥ ४० । ४१ ॥

सात्म्यापेक्षया यूषो रसः शाकं च उक्तं । सम्प्रति दोषापेक्षया तेषां विषयभेदमाह—कफानुगे इति । कफानुगे कफसंसृष्टे रक्तपित्ते । यूषशाकं यूषं शाकं च । यूषवत् विपाचितं शाकं वा । दद्यात् । वातानुगे वातसंसृष्टे तु रसं मांसरसं दद्यात् । अत ऊर्ध्वं रक्तपित्ते यवागूनां कल्पः विधिः प्रवक्ष्यते ॥ ४२॥

पद्मोत्पलानामिति । पद्मोत्पलानां पद्मानां उत्पलानां च किंजल्काः केसराः । पृश्निपर्णी । प्रियंगुका च । जले साध्याः पाच्याः । तस्मिन् रसे क्वाथे शृता रक्तपित्तिनां पेया स्यात् । चन्दनोशीरेति । तद्वत् चन्दनोशीरलोध्राणां । चन्दनं इह कुचन्दनं । पक्कम इति ख्यातं । लोध्रं शावरलोध्रं । सनागरे । नागरं शुंठी। रसे चन्दनोशीरलोध्रशुंठीनां क्वाथे पेया स्यात् । किराततिक्तकोशीरेति । तद्वत् किराततिक्तकोशीरमुस्तानां रसे क्वाथे पेया स्यात् । किराततिक्तको भूनिम्बः । धातकीति । धातकी धातकीपुष्पं । धन्वयासः दुरालभा । अम्बु बालकं । विल्वं विल्वशलाटु च । तेषां रसे क्वाथे शृता सिद्धा रक्तपित्तिनां पेया स्यात् । मसूरेति । मसूरपृश्निपर्ण्योः रसे वा शृता । अथवा स्थिरायाः शालपर्ण्याः मुद्गस्य च रसे क्वाथे शृता पेया स्यात् । इह योगद्वयं । रसे चेति । वा अथवा सबलारसे बलारससहिते हरेणुकानां रसे सघृते बलाहरेणुकानां क्वाथे शृता घृते संतलिता च पेया स्यात् । सिद्धा इति । अथवा पारावतादीनां पारावतकपोतप्रभृतीनां रक्तपित्ते हिततया प्रागुक्तानां पृथक् पृथक् रसे मांसरसे सिद्धाः पेयाः स्युः । वृद्धवाग्भटेनाप्युक्तं—कमलोत्पलकिंजल्कपृश्निपर्णी

रसे हरेणुकानां वा सघृते सव्रलारसे ।
सिद्धाः पारावतादीनां रसे वा स्युः पृथक् पृथक् ॥४६॥
इत्युक्ता रक्तपित्तघ्न्यः शीताः समधुशर्कराः ।
यवाग्वः कल्पना चैषा कार्या मांसरसेष्वपि ॥४७॥
शशः सवास्तुकः शस्तो विबन्धे रक्तपित्तिनाम् ।
वातोल्वणे तित्तिरिः स्यादुदुम्बररसे शृतः ॥४८॥

प्रियंगुकाः । उशीरं शाबरं लोध्रं शृङ्गवेरं कुचन्दनं ॥ ह्रीवेरं धातकीपुष्पं बिल्वमध्यं दुरालभा । अर्द्धार्द्धैर्विहिताः पेया वक्ष्यन्ते पादयौगिकाः ॥ भूनिम्बसेव्यजलदाश्चन्दनाम्बुप्रियंगवः । शालपर्ण्या युता मुद्‌गाः पृश्निपर्ण्या मसूरकाः । तुवर्यो वातिवलया वलया वा हरेणवः। तत्कषाये हिताः पेया मांसपेयास्तथा रसाः॥ अनम्लाः किंचिदम्ला वा सघृतक्षौद्रशर्कराः ॥ इति ( अ० सं० चि० ३ ) । अर्द्धार्द्धैरिति प्रतिश्लोकार्द्धोक्तैर्वर्गैरेकैको योगः । पादयौगिका इति प्रतिपादोक्तैः ॥ ४३-४६ ॥

उपसंहरति—इत्युक्ता इति । यवाग्वः इति छेदः । इति रक्तपित्तघ्न्यः । शीताः शीतीकृताः । समधुशर्कराः मधुशर्कराप्रक्षेपयुक्ताः । तास्तथा प्रयोक्तव्याः । यवाग्वः पद्मोत्पलकिंजल्कादीनां क्वाथे पारावतादीनां मांसरसे चापि साध्याः पेयाः उक्ताः । एषा उक्ता पद्मोत्पलकिंजल्कादीनां कल्पना क्वाथरूपा न केवलं पेयादिषु। किन्तु पारावतादीनां मांसरसेषु अपि कार्या कर्तव्या । पद्मोत्पलकिंजल्कादीनां क्वाथेषु मांसरसा अपि कार्याः इत्यर्थः ॥ ४७ ॥

रक्तपित्तिनामवस्थाभेदे मांसरसमाह—शशः सवास्तुकः इति । रक्तपित्तिनां विबन्धे सवास्तुकः वास्तूकशाकक्वाथे सिद्धः शशः तन्मांसरसः शस्तः । वास्तूकस्य भेदित्वात् । भिन्नवर्चस्तु वास्तुकमिति ( च० श्लो० २७ ) । तन्त्रान्तरे च—विपचेद् वास्तूकरसे शशं विबन्धे पुरीषस्येति । वातोल्वणे वाताधिके रक्तपित्ते उदुम्बररसे उदुम्बरक्वाथे शृतः तित्तिरिः शस्तः स्यात् । मयूर इति । क्वचित् वातोल्वणे प्लक्षस्य निर्यूहे क्वाथे शृतः मयूरः प्लक्षस्य क्वाथे मयूरमांसं पक्त्वा कृतो रसः हितः । एवं न्यग्रधस्य निर्यूहे शृतः कुक्कुटः हितः। तथा विसोत्पलादीनां रसे क्वाथे शृतौ वर्त्तकः

मयूरः प्लक्षनिर्यूहे न्यग्रोधस्य च कुक्कुटः ।
रसे बिसोत्पलादीनां वर्त्तकक्रकरौ हितौ ॥४९॥
तृष्यते तिक्तकैः सार्द्धं तृष्णाघ्नं वा फलोदकम् ।
सिद्धं विदारिगन्धाद्यैः शृतशीतमथापि वा ॥५०॥
ज्ञात्वा दोषावनुबलौ बलमाहारमेव च ।
जलं पिपासवे दद्याद् बहुशो वाल्पशोऽपि वा ॥५१॥

क्रकरश्च तौ । क्रकरः लावान्तकः । हितौ । अष्टांगसंग्रहे च—अभीरोरंकुरैर्लावाः सह मुद्गाः पटोलजैः । मुकुष्टा धन्वयासोत्थैरस्रपित्ते परं मताः ॥ शशः सवास्तुकः शस्तो वियन्धे तित्तिरिः पुनः । उदुम्बरस्य निर्यूहे साधितो मारुतेऽधिके ॥ प्लक्षस्य बर्हिणस्तद्वन्न्यग्रोधस्य च कुक्कुटः । बिसोत्पलमृणालानां वर्तकक्रकरौ हितौ ॥ वर्त्तिकाम्भोजनालानामश्वत्थस्य कपिंजलः । इति ( चि० ३ ) । बिसं स्थूलं । मृणालं सूक्ष्मं ॥४८ । ४९॥

रक्तपित्तिनां पानार्थं जलमाह—तृष्यते इति । तृष्यते रक्तपित्तिने तिक्तकैः द्रव्यैः मुस्तपर्पटकादिभिः सार्धं सह सिद्धं । तेन तृष्णाघ्नं । तृष्णाघ्नमित्येतत् अन्यत्रापि योज्यं । जलं दद्यादिति शेषः । जलपाकविधिर्यथा—कर्षं गृहीत्वा द्रव्यस्य क्वाथयेत् प्रास्थिकेऽम्भसि । अर्द्धशृतं प्रयोक्तव्यं जलपाके त्वयं विधिः॥ इति । फलोदकं जलेन सार्धं द्राक्षादिभिः पित्तघ्नैः फलैः मृदितैः कृतमुदकं फलोदकं वा दद्यात् । विदारीगन्धाद्यैः वर्गैः लघुना पंचमूलेन सिद्धं वा जलं दद्यात् । अथवा केवलं जलं शृतशीतं आदौ शृतं पश्चात् शीतं । तत् दद्यात् ॥ ५० ॥

पानीयस्य नातिपथ्यत्वात् तत् यथा देयं तदाह—ज्ञात्वेति । दोषौ वातकफौ । पित्तं नायकं । न त्वनुबलं । अनुबलौ ज्ञात्वा दोषयोरनुबलत्वं ज्ञात्वा । तथा बलं पुंसः शारीरबलं । आहारं अभ्यवहारसामर्थ्यं । तेन अग्निबलमित्यर्थः । ज्ञात्वा । पिपासवे रक्तपित्तिने जलं पानीयं । यदि बलवानग्निः शरीरं च बलवत् तदा बहुशः बहून् वारान् । विपर्यये अल्पशः स्तोकं स्तोकं वा । दद्यात् भिषक् ॥ ५१ ॥

---

४९ । वर्तककुररौ हितौ इति ख ग पुस्तकयोः ।

निदानं रक्तपित्तस्य यत् किञ्चित् संप्रकाशितम् ।
जीविताारोग्यकामैस्तन्न सेव्यं रक्तपित्तिभिः ॥५२॥
इत्यन्नपानं निर्दिष्टं क्रमशो रक्तपित्तनुत् ।
वक्ष्यते बहुदोषाणां कार्य्यं बलवताञ्च यत् ॥५३॥
अक्षीणबलमांसस्य यस्य सन्तर्पणोत्थितम् ।
बहुदोषं बलवतो रक्तपित्तं शरीरिणः ॥५४॥

निदानवर्जनमाह—निदानमिति । प्राक् रक्तपित्तनिदाने । अस्मिन् रक्तपित्तचिकित्सिते चापि । यत् किंचित् रक्तपित्तस्य निदानं संप्रकाशितमुक्तं । आयुरारोग्यकामैः । आयुर्जीवितं । आरोग्यं च । तत्कामैः तदाकांक्षिभिः । आयुरारोग्यं च कामयमानैः रक्तपित्तिभिः तत् सर्वं न सेव्यं । तत् सर्वं वर्जनायं ॥ ५२ ॥

अन्नपानमुपसंहरति—इत्यन्नपानमिति । इति रक्तपित्तनुत् रक्तपित्तघ्नं अन्नपानं क्रमशः निर्दिष्टमुक्तं । बहुदोषाणां बलवतां च रक्तपित्तिनां सम्बन्धे यत् कर्म शोधनरूपं कार्यं कर्तव्यं सम्प्रति तच्चापि क्रमशः वक्ष्यते ॥ ५३ ॥

अक्षीणबलेति । अक्षीणबलमांसस्य बलवतः । अक्षीणबलमांसस्येत्यत्र बलं सहजं । बलवत इत्यत्र च कालकृतं । एवमपौनरुक्त्यं । बलवत इति परत्र योज्यं वा । बलवतः संशोधनार्हस्येति । तथाविधस्य यस्य शरीरिणः प्राणिनः रक्तपित्तं सन्तर्पणोत्थितं बहुदोषञ्च । अनेन शोधनविषयो दर्शितो भवति । तथाच—सन्तर्पणोत्थं बलिनो बहुदोषस्य साधयेत् । ऊर्ध्वभागं विरेकेण वमनेन त्वधोगतं ॥ इति ( अ० सं० चि० ३ ) । संशोधनार्हस्य शोधनयोग्यस्य तस्य तत् सन्तर्पणोत्थं बहुदोषं रक्तपित्तं काले शोधनयोग्ये । नात्युष्णशीते । ऊर्ध्वभागं ऊर्ध्वगं चेत् विरेचनेन । अधोगतं तु वमनेन । प्रतिमार्गनिर्हरणस्य रक्तपित्ते हितत्वात् । प्रतिमार्गं च हरणं रक्तपित्ते विधीयते ।

५२ । जलं पिपासिते दद्याद्विसर्गादल्पशोऽपि वा इति ख ग पुस्तकयोः ।

काले संशोधनाहस्य तद्धरेन्निरुपद्रवम् ।
विरेचनेनोर्ध्वभागमधोगं वमनेन च ॥५५॥
त्रिवृतामभयां प्राज्ञः फलान्यारग्वधस्य वा ।
त्रायमाणां गवाक्ष्या वा मूलमामलकानि वा ॥५६॥
विरेचनं प्रयुञ्जीत प्रभूतमधुशर्करम् ।
रसः प्रशस्यते तेषां रक्तपित्ते विशेषतः ॥५७॥
वमनं मदनोन्मिश्रो मन्थः सक्षौद्रशर्करः ।
सशर्करं वा सलिलमिक्षूणां रस एव वा ॥५८॥

इति । निरुपद्रवं यथा तथा । रक्तपित्तविशेषणं वा । हरेत् भिषक् । सुश्रुतेनाप्युक्तं—अधःप्रवृत्तं वमनैरूर्ध्वगं च विरेचनैः । जयेदन्यतरद्धापि क्षीणस्य शमनैरसृक् ॥ इति ( सु० उ० ४५ ) ॥ ५४ । ५५ ॥

अथ विरेचनयोगानाह—त्रिवृतामिति । प्राज्ञो भिषक् । त्रिवृतां । अभयां हरीतकीं । आरग्वधस्य फलानि । त्रायमाणां । गवाक्ष्या मूलं । आमलकानि आमलकफलानि वा । विरेचनं त्रिवृतादिभिः पृथक् पृथक् कृतं । विरेचनयोगं प्रभूते मधुशर्करे यत्र तत् प्रभूतमधुशर्करं मधुशर्कराढ्यं कृत्वा यथायोगं प्रयुंजीत । रक्तपित्ते तेषां त्रिवृतादीनां रसः क्वाथः स्वरसो वा विशेषतः विशेषेण प्रशस्यते । उक्तं च—त्रिवृता त्रिफला धात्री त्रायन्त्यारग्वधाभयाः । गावाक्षीक्षुरसक्षीरद्राक्षाः क्षौद्रसितोत्कटाः । यथास्वं कल्पविहिता विरेकार्थं प्रयोजयेत् । इति ( अ० सं० चि० ३ ) ॥ ५६ । ५७ ॥

वमनयोगानाह—वमनमिति । मदनोन्मिश्रः मदनफलसंयुक्तः सक्षौद्रशर्करः मधुशर्करायुक्तः मन्थः तर्पणं । तर्पणं द्रवेणालोडिता लाजसक्तवः । तद्धि वमनं वमनकारको योगः । योगान्तराण्याह—सशर्करं वेति । सशर्करं सलिलं जलं वा । इक्षूणां रसो वा । वत्सकस्य फलं इन्द्रयवः । मुस्तं । मदनं मदनफलं । मधुकं यष्टीमधु । मधु च । वत्सकफलमुस्तमदनमधुकानां क्वाथो मधुयुक्तो वा वमनं । उक्तं च—वमनं फलसंयुक्तं तर्पणंससितामधु । ससितं वा जलं क्षौद्रयुक्तं वा मधुकोदकं ॥ फलेन्द्रयवगांगेयी मधुकं वा समाक्षिकं । क्षीरं वा रसमिक्षोर्वा ॥ इति (अ० सं० चि० ३) । गांगेयी

वत्सकस्य फलं मुस्तं मदनं मधुकं मधु ।
अधोगे रक्तपित्ते तु वमनं परमुच्यते ॥५९॥
ऊर्ध्वगे शुद्धकोष्ठस्य तर्पणादिः क्रमो हितः ।
अधोगते यवाग्वादिर्न चत् स्यान्मारुतो वली ॥६०॥
वलमांसपरिक्षीणं शोकभाराध्वकर्शितम् ।
ज्वलनादित्यसन्तप्तमन्यैर्वा क्षीणमामयैः ॥६१॥
गर्भिणीं स्थविरं वालं रूक्षाल्पप्रमिताशिनम् ।
अवम्यमविरेच्यं वा यं पश्येद्रक्तपित्तिनम् ॥६२॥

मुस्तं। अधोगे रक्तपित्ते तु वमनं परं श्रेष्ठमुच्यते । प्रतिमार्गहरणरूपत्वात् । प्रतिमार्गं तु हरणं रक्तपित्ते विधीयते । इति ॥५८।५९॥

शोधनयोगानुक्त्वा शोधनशुद्धस्य संसर्जनक्रममाह—ऊर्ध्वगे इति । ऊर्ध्वगे रक्तपित्ते शुद्धकोष्ठस्य विरेचनेन शुद्धकोष्ठस्य रक्तपित्तिनः तर्पणादिः तर्पणपूर्वः क्रमो हितः । एतदुक्तं प्रागपि । ऊर्ध्वगे तर्पणं पूर्वं पेया पूर्वमधोगते । इति । अधः प्रवृत्तिस्तु वातसंसर्गात् भवति । तत्र अधोगते रक्तपित्ते वातसंसर्गजे चेत् यदि मारुतो वातः वली वलवान् न स्यात् तदैव यवाग्वादिः क्रमो हितः । यदि मारुतो वली स्यात् तदा मांसरसो देयः । उक्तं च—दद्याद्वातानुगे रसमिति । वातोल्वणे तित्तिरिः स्यादित्याद्यपि ॥ ६० ॥

शोधनमुक्तं । शमनं वक्ष्यते । तत्रादौ शमनविषयमाह—वलमांसपरिक्षीणमित्यादि । यं रक्तपित्तिनं वलमांसपरिक्षीणं परिक्षीणवलमांसं । शोकः इष्टविरहजं दुःखं । भारः भारवहनं । अध्वा अध्वगमनं च । तैः कर्शितः कृशीकृतः । तं । ज्वलनः अग्निः । आदित्यः सूर्यश्च । तौ । ताभ्यां सन्तप्तः अग्न्यातपाभ्यां संतप्तः । तं । अन्यैः आमयैः व्याधिभिः । क्षीणं वा । गर्भिणीं । स्थविरं वृद्धं । वालं । रूक्षाल्पप्रमिताशिनं रूक्षाशि। अल्पाशिनं । प्रमिताशिनं एकरसभोजिनं च। अल्पप्रमिताशिनं अल्पपरिमितभोजिनं वा। अवम्यं वमनायोग्यं। अविरेच्यं विरेचनानर्हं । अवम्या अविरेच्याश्च पश्चात्

शोषेण सानुबन्धं वा तस्य संशमनी क्रिया ।
शस्यते रक्तपित्तस्य परं ह्यात प्रवक्ष्यते ॥६३॥
अटरूषकमृद्वीकापथ्याक्वाथः सशर्करः ।
मधुमिश्रः श्वासकासरक्तपित्तनिबर्हणः ॥६४॥
अटरूषकनिर्यूहे प्रियंगुं मृत्तिकाञ्जने ।
विनीय लोध्रं चौद्रञ्च रक्तपित्तहरं पिबेत् ॥६५॥

कर्मीयसिद्धौ वक्ष्यमाणाः । शोषेण यक्ष्मणा सानुबन्धं अनुबध्यमानं शोषानुबन्धयुक्तं वा । शोषेणेत्यत्र तृतीया धान्येन धनवानित्यादाविव । एवंविधं यं रक्तपित्तिनं पश्येत् भिषक् । तस्य तथाविधस्य रक्तपित्तिनः रक्तपित्तवतः पुंसः संशमनी क्रिया प्रशस्यते । अतः परं अत ऊर्ध्वं सा संशमनी क्रिया प्रवक्ष्यते ॥ ६१—६३ ॥

शमनयोगानाह—अटरूषकेत्यादि । अटरूषकः वासकः । मृद्वीका द्राक्षा । पथ्या हरीतकी च । तासां क्वाथः क्वाथविधिना कृतः । सशर्करः शर्करायुक्तः । मधुमिश्रः । शर्करामधुनी तत्र प्रक्षिप्य पीतः सन् श्वासकासरक्तपित्तनिबर्हणः श्वासं कासं रक्त-पित्तं च शमयति ॥ ६४ ॥

अटरूषकनिर्यूहे इति । अटरूषकस्य वासकस्य निर्यूहः क्वाथः । स्वरसो वा । वासास्वरसेनेत्यादि वक्ष्यमाणवृद्धवाग्भटवचनात् । तस्मिन् प्रियंगुं । मृत्तिका अंजनं च ते मृत्तिकाञ्जने । मृत्तिका सौराष्ट्री । तदभावे कृष्णपंकपर्पटी । अञ्जनं रसांजनं । लोध्रं प्रियंग्वादीनि चत्वारि चूर्णीकृतानि क्षौद्रं मधु च पंचमं विनीय प्रक्षिप्य । अत्र प्रियंग्वादीनां मिलितानां चूर्णस्य कर्षः । क्षौद्रस्य च कर्षो ग्राह्यः । परिभाषाबलात् । तदुक्तं—कर्षश्चूर्णस्य कल्कस्य गुटिकानां च सर्वशः । मात्रा क्षौद्रघृतादीनां स्नेह-क्वाथेषु चूर्णवत् ॥ इति । प्रियंग्वादीनां प्रत्येकं कर्षमानत्वे भेषजभूयस्त्वं स्यात् । एवं पश्चादपि बोद्धव्यं । रक्तपित्तहरं तं निर्यूहं पिबेत् रक्तपित्ती पुमान् । उक्तं च वृद्ध-वाग्भटेन—वासारसेन फलिनीमृल्लोध्रांजनमाक्षिकं । पित्तासृक् शमयेत् पीतं निर्या-सो वाऽटरूषकात् ॥ शर्करामधुसंयुक्तः केवलो वा शृतोऽपि वा । वृषः सद्यो जयत्यस्रं स ह्यस्य परमौषधं ॥ इति ( अ० सं० चि० ३ )। वृषो वासकः ॥६५॥

---

६५। अटरूपकनिर्यासे इति ख ग पुस्तकयोः ।

पद्मकं पद्मकिञ्जल्कं दूर्वां वास्तूकमुत्पलम् ।
नागपुष्पञ्च लोध्रञ्च तेनैव विधिना पिवेत् ॥६६॥
प्रपौण्डरीकं मधुकं मधु चाश्वशकृद्रसे ।
यवासभृङ्गरजसोर्मूलं वा गोशकृद्रसे ॥६७॥
विनीय रक्तपित्तघ्नं पेयं स्यात् तण्डुलाम्बुना ।
युक्तं वा मधुसर्पिभ्यां लिह्याद् गोऽश्वशकृद्रसम् ॥६८॥

पद्मकमिति । पद्मकं पद्मकाष्ठं । पद्मस्य कमलस्य किंजल्कं केशरं । दूर्वां । वास्तूकशाकं । उत्पलं नीलोत्पलं । नागपुष्पं नागकेशरपुष्पं । लोध्रं च । तेन प्रागुक्तेनैव विधिना । अर्थात् अटरूषकनिर्यूहे पद्मकादिलोध्रान्तानि सप्त कल्कीकृतानि क्षौद्रं चापि प्रक्षिप्य तं निर्यूहं पिवेत् । उक्तं च—तेनैव वा क्षौद्रयुतं पद्मकेसरपद्मकं । सलोध्रनागकुसुमशाद्वलोत्पलवास्तुकं ॥ इति ( अ० सं० चि० ३ ) ॥ ६६ ॥

प्रपौण्डरीकमित्यादि । अश्वस्य शकृत् पुरीषं । तस्य रसः । तस्मिन् । प्रपौण्डरीकं पुण्डरीककाष्ठं । मधुकं यष्टीमधु च । तद्द्वयं चूर्णितं विनीय प्रक्षिप्य । मधु च विनीय । रक्तपित्तघ्नं तत् तण्डुलाम्बुना तण्डुलधावनोदकेन पेयं स्यात् । अथवा गोः शकृतो रसे यवासभृङ्गरजसोः यवासस्य दुरालभायाः भृङ्गरजसः भृङ्गराजस्य च मूलं कल्कितं कर्षमात्रं विनीय प्रक्षिप्य रक्तपित्तघ्नं तत् तण्डुलाम्बुना पेयं स्यात् । इह योगद्वयं । अथवा गोश्वशकृद्रसं । गौः अश्वश्च तौ गोऽश्वौ । न तु गोऽश्वं । गवाश्वप्रभृतीनि च ( पाणिनि २ । ४ । ११ ) इत्यत्र यथोच्चारित एव विधिः । गोऽश्वयोः गवाश्वस्य तयोः प्रत्येकं मिलितयोर्वा । शकृतो रसं मधुसर्पिभ्यां घृतमधुभ्यां युक्तं लिह्यात् रक्तपित्ती । तदुक्तं—लिह्याद्वा मधुसर्पिभ्यां । गवाश्वशकृतो रसं । इति ( अ० सं० चि० ३ ) ॥ ६७ । ६८ ॥

---

६८ । गोऽश्वसकृद्रसे इति ठ पुस्तके ।

खदिरस्य प्रियंगूणां कोविदारस्य शाल्मलेः ।
पुष्पचूर्णानि मधुना लिह्याद्वा रक्तपित्तिकः ॥६९॥
शृङ्गाटकाणां लाजानां मुस्तखर्जूरयोरपि ।
लिह्याच्चूर्णानि मधुना पद्मानां केशरस्य च ॥७०॥
रक्तं लिह्याद्धन्वजानां मधुना मृगपक्षिणाम् ।
सक्षौद्रं ग्रथिते रक्ते लिह्यात् पारावतं शकृत् ॥७१॥
उशीरकालीयकलोध्रपद्मकप्रियङ्गुकाकट्फलशङ्खगैरिकाः ।
पृथक्पृथक्चंदनतुल्यभागिकाःसशर्करास्तण्डुलधावनाप्लुताः॥७२॥

खदिरस्येति । रक्तपित्ती एव रक्तपित्तिकः । स्वार्थे कः । खदिरस्य । प्रियंगूणां । बहुवचनमविवक्षितं । कोविदारस्य । रक्तकांचनस्य शाल्मलेश्च । पुष्पचूर्णानि । खदिरादीनां चतुर्णां यथासम्भवं प्रत्येकं मिलितानां वा पुष्पाणि चूर्णयित्वा तानि पुष्पचूर्णानि मधुना लिह्यात् वा । वृद्धवाग्भटे च--फलिनीलोध्रखदिरशाल्मलीकोविदारजं । शिरीषशेलुककुभसिन्धुवारातिमुक्तजं ॥ पलाशयूथिकाशिग्रुमधूकासनजन्म च । मधुना चूर्णितं पुष्पमेकत्र पृथगेव वा ॥ इति ( अ० सं० चि० ३ ) ॥ ६९ ॥

शृङ्गाटकाणामिति । शृङ्गाटकाणां । शृङ्गाटकं पानीयफलं । लाजानां । मुस्तखर्जूरयोः मुस्तस्य खर्जूरस्य च । पद्मानां केसरस्य च चूर्णानि यथासंभवं व्यस्तसमस्तानि मधुना लिह्यात् । वृद्धवाग्भटे च--लिह्यात् क्षौद्रेण पथ्यां वा किंजल्कं कमलस्य वा । लाजान् शृङ्गाटकं मुस्तां खर्जूरं कृष्णमृत्तिकां ॥ इति ( अ० सं० चि० ३ ) ॥ ७० ॥

रक्तं लिह्यादिति । धन्वजानां जांगलानां मृगपक्षिणां मृगाणां पक्षिणां च रक्तं मधुना लिह्यात् । ग्रथिते संहते रक्ते पारावतं पारावतसम्बन्धि शकृत् सक्षौद्रं मधुयुक्तं मधुना आलोड्य लिह्यात् ॥ ७१ ॥

रक्तपित्तशमनकषाययोगानाह--उशीरेत्यादि । उशीरं । कालीयकं कालीयकाष्ठं । लोध्रं । पद्मकं पद्मकाष्ठं । प्रियंगुका फलिनी । कट्फलः । शंखं । गैरिकश्च । ते ।

रक्तं सपित्तं तमकं पिपासां दाहञ्च पीताः शमयन्ति सद्यः।
किराततिक्तं क्रमुकं समुस्तं प्रपौण्डरीकं कमलोत्पले च ॥७३॥
ह्रीवेरमूलानि पटोलपत्रं दुरालभा पर्पटको मृणालम्।
धनञ्जयोदुम्बरवत्सकत्वङ्न्यग्रोधशालेययवासकत्वक् ॥ ७४ ॥
तुगालताकेशरतण्डुलीयं ससारिवं मोचरसः समंगा।
पृथक् पृथक् चन्दनयोजितानि तेनैव कल्पेन हितानि तत्र॥७५॥

उशीरादयः गैरिकान्ताः अष्टौ ते पृथक् पृथक् व्यस्ताः समस्ता वापि । वक्ष्यति च—एते समस्ता गणशः पृथग् वा । इति । चन्दनतुल्यभागिकाः चन्दनतुल्यभागाः चन्दनेन समांशाः । ते स्वरसीकृताः चूर्णिताः शृताः शीताः फांटीकृता वा । तथा च पश्चात् वक्ष्यति—निशि स्थिता वा स्वरसीकृता वा फांटीकृता वा मृदिताः शृता वा । इति । सशर्कराः शर्कराप्रक्षेपयुक्ताः तंडुलधावनाप्लुताः तंडुलधावनाम्बुना आप्लुताः । ते तथा पीताः सन्तः सपित्तं रक्तं रक्तपित्तं तमकं श्वासं पिपासां दाहं च शमयन्ति । किराततिक्तमिति। किराततिक्तं भूनिम्बं। क्रमुकं गुवाकं। समुस्तं प्रपौण्डरीकं मुस्तं प्रपौण्डरीकं च । कमलं पद्मं । उत्पलं नीलोत्पलं च । ते कमलोत्पले । ह्रीवेरं वालकं । तस्य मूलानि । पटोलस्य पत्रं । दुरालभा । पर्पटकः । मृणालं च । धनंजयः अर्जुनः । उदुम्बरः । वत्सकश्च । ते । तेषां त्वक् । न्यग्रोधः । शालेयः जम्बूः । यवासकः दुरालभा च । ते । तेषां त्वक् । तुगा वंशलोचना । लता श्यामालता । ससारिवं सारिवासहितं । केसरतंडुलीयं केसरो नागकेसरः तंडुलीयः शाकश्च । तयोः समाहारः । तत् केसरतण्डुलीयं । सारिवा अनन्तमूलं । मोचरसः मोचनिर्यासः । समंगा-वराहकान्ता । एतानि द्रव्याणि प्रागुक्तकिराततिक्तादीनि पृथक् पृथक् प्रत्येकं अर्द्धगणः सर्वगणो वापि यथालाभं चन्दनेन योजितानि युक्तानि । तेन प्रागुक्तेनैव कल्पेन विधिना विहितानि अर्थात् सशर्कराणि तण्डुलधावनोदकाप्लुतानि च कृत्वा पीतानि तत्र रक्तपित्ते हितानि स्युः ॥ ७२-७५ ॥

---

७४ । धनंजयोदुम्बरवेतसस्त्वक् इति ख ग घ पुस्तकेषु ।

७४ । न्यग्रोधजम्बूद्वयसाह्वयत्वक् इति ख ग च घ पुस्तकेषु ।

७५ । उदुगालताकेसरतण्डुलीयं इति च पुस्तके ।

निशि स्थिता वा स्वरसीकृता वा फांटीकृता वा मृदिताः शृता वा।
एते समस्ता गणशः पृथग्वा रक्तं सपित्तं शमयन्त्युदीर्णम् ॥७६॥
मुद्गाः सलाजाः सयवाः सकृष्णाः सोशीरमुस्ताः सह चन्दनेन।
बलाजले पर्युषिताः कषाया रक्तं सपित्तं शमयन्त्युदीर्णम् ॥७७॥

द्रव्याण्युक्त्वा सम्प्रति तेषां व्यस्तसमस्तानां प्रयोगं। कल्पनञ्चाह—निशि स्थिता वेति। एते प्रागुक्ता उशीरादयो गणाः। गणशः गणो वर्गः। इह उशीरादिः किराततिक्तादिश्च इत्येवं। गणशः समस्ताः सर्वो गणः अर्द्धगणो वापि पृथक् पृथक् एकैकं द्रव्यं वा यथालाभं। ते समस्ता व्यस्ता वापि सर्वे एव चन्दनयोजिताः। निशि स्थिता आपोथ्य तोये निक्षिप्य रात्रौ स्थापिताः अर्थात् शीतकषायीकृता वा। स्वरसीकृताः। फाण्टीकृताः फाण्टकषायीकृताः वा। मृदिताः चूर्णिताः। शृताः क्वथिताः क्वाथीकृताः वा। अस्मत्संगृहीतेषु सर्वेषु चरक पुस्तकेषु कल्कीकृता इति पाठः। वृद्धवाग्भटवचनात् पुनः कल्कीकृता इत्यत्र फांटीकृता इति पाठः अवगम्यते। स एव पाठः अस्माभिरादृतो व्याख्यातश्च॥

कल्कचूर्णयोरभेदात् चूर्णमादाय इह पञ्चविधमेव कषायकल्पनमुक्तं भवति। स्वरसादीनां लक्षणानि प्राक् षड्विरेचनशतीये उक्तानि। तद्यथा—यन्त्रनिष्पीडिताद् द्रव्याद् रसः स्वरस उच्यते। इति। वह्नौ तु क्वथितं द्रव्यं शृतमाहुश्चिकित्सकाः। द्रव्यादापोथितात् तोये तत्पुनर्निशि संस्थितात्। कषायो योऽभिनिर्याति स शीतः समुदाहृतः। क्षिप्त्वोष्णतोये मृदितं तत्फाण्टं परिकीर्तितं॥ इति च। स्वरसादिरूपास्ते सशर्कराः तण्डुलधावनाम्बुना आप्लुताश्च पीताः उदीर्णं सपित्तं रक्तं तमकादींश्चापि शमयन्ति। अष्टांगसंग्रहे च—लोध्रकालीयकोशीरफलिनीशंखगैरिकं। पटोलपत्रं दुःस्पर्शा समंगा सारिवा लता॥ त्वग्जम्बूवेतसाश्वत्थह्यक्षोदुम्बरार्ज्जुनात्। किराततिक्तमधुकमुस्तकट्फलपद्मकं। प्रपौण्डरीकह्रीवेरकमलोत्पलपर्पटं। चन्दनेन पृथग् युक्तं समस्तं वा सशर्करं॥ फाण्टीकृतं शृतं शीतं चूर्णितं तण्डुलाम्भसा। पीतमाशु जयत्यस्रं तृड्दाहतमकानपि॥ इति (अ० सं० चि० ३)॥ ७६॥

मुद्गाः सलाजा इति। सलाजाः सयवाः सकृष्णाः। कृष्णा पिप्पली। सह उशीरमुस्ताभ्यां वर्तमानाः सोशीरमुस्ताः। चन्दनेन सह सचन्दनाश्च। मुद्गाः बला-

वैदूर्यमुक्तामणिगैरिकाणां मृच्छङ्खहेमामलकोदकानाम्।
मधूदकस्येक्षुरसस्य चैव पानाच्छमं गच्छति रक्तपित्तम्॥७८॥
उशीरपद्मोत्पलचन्दनानां पक्वस्य लोष्टस्य च यः प्रसादः।
सशर्करः क्षौद्रयुतः सुशीतो रक्तातियोगप्रशमाय पेयः॥७९॥

जले बलासाधिते शीतजले पर्युषिताः निशि स्थिताः कषायाः शीतकषायीकृताः। मुद्गादीनि चन्दनान्तानि द्रव्याणि शीतकषायविधिना बलाजले पर्युषितानि कृत्वा तेभ्यः निःसारिताः कषायाः पीताः उदीर्णं सपित्तं रक्तं शमयन्ति। उक्तं च:—चन्दनोशीरजलदलाजमुद्गकणायवैः। बलाजले पर्युषितैः कषायो रक्तपित्तहा॥ इति (अ० सं० चि० ३)॥ ७७॥

वैदूर्येति। वैदूर्यं विदूरभूमिजं रत्नं। मुक्ता मणिः गैरिकं च तानि। तेषां तदुदकानामित्यर्थः। वैदूर्याद्युदकानि वैदूर्यादिसहस्थितजलानि। तेषां पानात्। तथा मृत् मृत्तिका। शंखः। हेम सुवर्णं। आमलकं च तानि। तेषामुदकानि जलानि। तेषां पानात्। तथा मधूदकस्य मधुमिश्रितजलस्य इक्षुरसस्य च पानात्। रक्तपित्तं शमं गच्छति शाम्यति। तदुक्तं—वैदूर्यमुक्तामृच्छंखगैरिकामलकोदकं। मधूदकं रसं चेक्षोः पिबञ्जयति शोणितं॥ इति (अ० सं० चि० ३)॥ ७८॥

उशीरेति। उशीरादीनां पक्वस्य भृष्टस्य लोष्टस्य च यः सुशीतः प्रसादः उशीरादीनि संक्षुद्य जलेनालोड्य निशि स्थापितानां तेषां उपरिभवः प्रसन्नः जलभागः उशीरादीनां शीतकषायः। स च सशर्करः क्षौद्रयुतः मधुशर्कराप्रक्षेपयुक्तः। रक्तस्यातियोगः अतिप्रवृत्तिः। तत्प्रशमाय पेयः। तदुक्तं—प्रसादश्चन्दनाम्भोजसेव्यमृद्भृष्टलोष्टजः। सुशीतः ससिताक्षौद्रः शोणितातिप्रवृत्तिजित्॥ इति (अ० सं० चि० ३)॥ ७९॥

---

७९। पंकस्य लोष्टस्य च यः प्रसादः इति क च पुस्तकयोः।

७९। लोष्टस्य वरः प्रसादः इति च पुस्तके।

प्रियंगुकाचन्दनलोध्रसारिवामधूकमुस्ताभयधातकीजलम् ।
समृत्प्रसादं सह यष्टिकाम्बुना सशर्करं रक्तनिबर्हणं परम् ॥८०॥
कषाययोगैर्विविधैर्यथोक्तैर्दीप्तेऽनले श्लेष्मणि निर्जिते च ।
यद्रक्तपित्तं प्रशमं न याति तत्रानिलः स्यादनु तत्र कार्यम् ॥८१॥
छागं पयः स्यात् परमं प्रयोगे गव्यं श्रृतं पञ्चगुणे जले वा ।
सशर्करं माक्षिकसंप्रयुक्तं विदारिगन्धादिगणैः श्रृतं वा ॥८२॥

प्रियंगुकेति । प्रियंगुका । चन्दनं । लोध्रं । सारिवा । मधूकं । मुस्ता । अभयमुशीरं । धातकी च । ताः । तासां जलं । मृत् मृत्तिका सौराष्ट्री । तस्याः मृदः प्रसादः स्वच्छजलं । तेन सह वर्तमानं समृत्प्रसादं मृत्प्रसादेन सह । यष्टिकाम्बुना यष्टीमधुकजलेन सह । सशर्करं शर्कराप्रक्षेपयुक्तं कृत्वा । पीतं परं श्रेष्ठं रक्तनिबर्हणं रक्तपित्तशमनं भवति । प्रियंगुकादीनां यष्टिकान्तानां यः सुशीतः प्रसादः स च शर्कराप्रक्षेपयुक्तः पेयः । उक्तं च—तद्वदच्छः सितालोध्रमधूकोशीरचन्दनात् । मृच्छ्यामासारिवामुस्ताधातकीयष्टिकान्वितात् ॥ इति ( अ० सं० चि० ३ ) ॥ ८० ॥

कषाययोगैरिति । यथोक्तैः प्राक् यथा उक्तैः विविधैः नानाप्रकारैः कषाययोगैः स्वरसश्रृतशीतादिरूपैः श्लेष्मणि निर्जिते सति अनले अन्तरग्नौ च दीप्ते समिद्धे सत्यपि यत् रक्तपित्तं न प्रशमं याति न शाम्यति । तत्र अनिलः वातः अनु अनुबलः प्रबलः स्यात् । अनेन क्षीरपानविषयो दर्शितो भवति । तत्र तथाविधे वातोल्बणे रक्तपित्ते कार्यं कर्तव्यं यत् तत् पश्चात् वक्ष्यते ॥ ८१ ॥

छागं पय इति । तत्र छागं पयः । गव्यं पयो वा । केवलं । पञ्चगुणे जले श्रृतं क्वथितं । विदारिगन्धादिगणैः ह्रस्वपञ्चमूलेन श्रृतं वा । तच्च शीतं । सशर्करं माक्षिकेण मधुना संप्रयुक्तं युक्तं च । प्रयोगे परमं श्रेष्ठं तत्र प्रयोज्यं । द्राक्षाश्रृतमिति । द्राक्षया श्रृतं वा । नागरकैः शुण्ठीभिः श्रृतं वा । बलया श्रृतं वा । गोक्षुरकैः श्रृतं वा । सजीवकं जीवकेन श्रृतं वा । सर्षभकं ऋषभकेण श्रृतं वा । जीवकर्षभकौ प्रसि-

---

८० । समृत्प्रसादं सह यष्टिकाम्बुना इति ग पुस्तके ।

द्राक्षाशृतं नागरकैः शृतं वा बलाशृतं गोक्षुरकैः शृतं वा।
सजीवकं सर्षभकं ससर्पिः पयः प्रयोज्यं सितया शृतं वा ॥८३॥
शतावरीगोक्षुरकैः शृतं वा शृतं पयो वाप्यथ पर्णिनीभिः।
रक्तं निहन्त्याशु विशेषतस्तु यन्मूत्रमार्गात् सरुजं प्रयाति॥८४॥
विशेषतो विट्पथसंप्रवृत्ते पयो हितं मोचरसेन सिद्धम्।
वटावरोहैर्वटशुङ्गकैर्वा ह्रीवेरनीलोत्पलनागरैर्वा ॥८५॥

द्धौ। सितया शर्करया शृतं वापि। शीतं पयः छागं गव्यं वा। ससर्पिः सघृतं तत्र प्रयोज्यं। अथवा सजीवकं सर्षभकं शृतं जीवकर्षभकाभ्यां पृथक् शृतं। सितया सह प्रयोज्यं। उक्तं च—कषायैर्विविधैरेभिर्दीप्तेऽग्नौ विजिते कफे। रक्तपित्तं न चेच्छाम्येत् तत्र वातोल्बणे पयः॥ युञ्ज्याच्छागं शृतं तद्वद् गव्यं पञ्चगुणेऽम्भसि। पंचमूलेन लघुना शृतं वा ससितामधु॥ जीवकर्षभकद्राक्षाबलागोक्षुरनागरैः। पृथक् पृथक् शृतं शीतं सघृतं सितयाऽथवा॥ इति ( अ० सं० चि० ३ )॥ ८२। ८३॥

शतावरीति। शतावरीगोक्षुरकैः शतावरीगोक्षुराभ्यां। शृतं क्वथितं वा। पर्णिनीभिः चतसृभिः शालपर्णीपृश्निपर्णीमुद्गपर्णीमाषपर्णीभिः शृतं वापि। पयः पीतं रक्तं रक्तपित्तं आशु शीघ्रं निहन्ति। विशेषतस्तु यत् रक्तपित्तं मूत्रमार्गात् सह रुजया वर्तमानं तत् सरुजं सवेदनं प्रयाति प्रवर्त्तते तत् तथाविधं मूत्रमार्गप्रवृत्तं सरुजं रक्तपित्तं पुनः विशिष्यैव आशु निहन्ति तत् पयः। उक्तं च—गोकण्टकाभीरुशृतं पर्णिनीभिस्तथा शृतं। हन्त्याशु रक्तं सरुजं विशेषान्मूत्रमार्गगम्॥ इति ( अ० सं० चि० ३ )। अभीरुः शतावरी॥ ८४॥

विशेषत इति। विट्पथात् गुदात् संप्रवृत्तं तस्मिन् विट्पथसंप्रवृत्ते विण्मार्गगे रक्ते। मोचरसेन शाल्मलिनिर्यासेन सिद्धं शृतं वा। वटस्य अवरोहाः अधोविलम्बिलताकारावयवविशेषाः नामूना इति वंगेषु ख्याताः। तैः वटावरोहैः सिद्धं वा। अष्टांगसंग्रहे तु—वटप्ररोहैरिति पाठः। वटस्य शुङ्गकाः नवोद्भूतमुकुलितपल्लवाः। तैः वटशुङ्गकैः सिद्धं वा। ह्रीवेरनीलोत्पलनागरैः सिद्धं वा। नागरं शुण्ठी। पयः विशेषतः हितं। उक्तं च—विण्मार्गगे विशेषण हितं मोचरसेन तु। वटप्ररोहैः शुङ्गैर्वा शुण्ठ्युदीच्योत्पलैरपि॥ इति ( अ० सं० चि० ३ )॥ ८५॥

कषाययोगान् पयसा पुरा वा पीत्वा तु चाद्यात् पयसैव शालीन् ।
कषाययोगैरथवा विपक्वमेतैः पिवेत् सर्पिरतिस्रवे च ॥८६॥
वासां सशाखां सपलाशमूलां कृत्वा कषायं कुसुमानि चास्याः ।
प्रदाय कल्कं विपचेद् घृतं तत् सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥८७॥

इति वासाघृतम् ।

पलाशवृन्तस्वरसेन सिद्धं तस्यैव कल्केन मधुद्रवेण ।
लिह्याद् घृतं वत्सककल्कसिद्धं तद्वत् समङ्गोत्पललोध्रसिद्धम् ॥८८॥

कषाययोगानिति । रक्तस्य अतिस्रवे अनिस्रावे कषाययोगान् प्रागुक्तान् पयसा पुरा पीत्वा वा पयसैव शालीन् शाल्योदनं अद्यात् भुञ्जीत । अथवा एतैः उक्तैः कषाययोगैः विपक्वं साधितं सर्पिः घृतं पिवेत् रक्तपित्ती ॥ ८६ ॥

वासाघृतमाह—वासां सशाखामिति । सशाखां सपलाशमूलां वासां कुट्टितां अष्टगुणे जले पक्त्वा अष्टमभागावशेषं कषायं क्वाथं कृत्वा तस्मिन्क्वाथे अस्याः वासायाः कुसुमानि कल्कितानि चतुष्पलमितानि प्रदाय घृतं पचेत् । तथाच गुल्मचिकित्सिते वक्ष्यमाणं वचनं—वृषं समूलमापोथ्य पचेदष्टगुणेऽम्भसि । शेषेऽष्टभागे तस्यैव पुष्पकल्कं प्रदापयेत् ॥ तेन सिद्धं घृतं शीतं सक्षौद्रं पित्तगुल्मनुत् । रक्तपित्तज्वरश्वासकासहृद्रोगनाशनं ॥ इति ( च० चि० ५ ) । वृषं वासकं । शणस्य कोविदारस्य वृषस्य ककुभस्य च । फल्काढ्यत्वात् प्रशंसन्ति पुष्पकल्कं चतुष्पलं ॥ इति ( सिद्धयोग ) । तथा पाचितं तत् घृतं शीतं सक्षौद्रं मधुप्रक्षेपयुक्तं । मधुप्रक्षेपश्च पादिकः कार्यः । तथाच—स्नेहपादः स्मृतः कल्कः कल्कवन्मधुशर्करे ।. इति । पीतं आशु रक्तं रक्तपित्तं निहन्ति ॥ ८७ ॥

पलाशवृन्तेति । पलाशवृन्तस्य स्वरसेन तस्य पलाशवृन्तस्यैव कल्केन मधुद्रवेण मधुना द्रवीकृतेन । मधुद्रवत्वं तु सिद्धशीतस्य घृतस्यैव विज्ञेयं । सिद्धं घृतं लिह्यात् । सामान्यपरिभाषया स्वरसस्य घृताच्चातुर्गुण्यं । कल्कस्य मधुनश्च पादिकत्वं बोद्धव्यं । एवं परत्रापि । तथाच—पलाशवृन्तस्वरसे घृतात् चतुर्गुणे पलाशवृन्तस्य

८८ । तस्यैव कल्केन मधूद्‌भेण इति क पुस्तके ।

स्यात् त्रायमाणाविधिरेष एव सोदुम्बरे चैव पटोलपत्रे ।
सर्पीँषि पित्तज्वरनाशनानि सर्वाणि शस्तानि च रक्तपित्ते॥८९॥
अभ्यङ्गयोगाः परिषेचनानि सेकावगाहाः शयनानि वेश्म ।
शीतो विधिर्वस्तिविधानमग्र्यं पित्तज्वरे यत् प्रशमाय दिष्टम्॥९०॥
तद्रक्तपित्ते निखिलेन कार्यं कालञ्च मात्राञ्च पुरा समीक्ष्य ।
सर्पिर्गुडा ये च हिताः क्षतेभ्यस्ते रक्तपित्तं शमयन्ति सद्यः ॥९१॥

कल्कं पादिकं दत्त्वा घृतं पचेत् । ततः तत् शीतीकृत्य तत्र पादिकं मधु प्रक्षिप्य लिह्यात् । जल्पकल्पतरौ तु—मधुद्रवेणेत्यत्र मधुद्रुमेण इति पाठः । तद्व्याख्यानं तत्र मधूकवृन्तस्वरसेन चतुर्गुणेनेति । स च पाठो निर्मूलकः । वक्ष्यमाणवृद्धवाग्भटवचने मधूकस्यापरिपठितत्वात् सक्षौद्रमिति च पाठात् मधुद्रवेणेति पाठ एव समूलकः । तद्वत् वत्सककल्कसिद्धं चतुर्गुणे जले वत्सककल्केन सिद्धं घृतं मधुप्रक्षेपयुक्तं लिह्यात् । तद्वत् समंगोत्पललोध्रसिद्धं । समंगा वराहक्रान्ता । समंगादीनां स्वरसेषु क्वाथेषु वा । तत्तत्कल्केन सिद्धं घृतं मधुयुक्तं लिह्यात् । वृद्धवाग्भटेनाप्युक्तं— पलाशवृन्तस्वरसे तद्गर्भं च पचेद् घृतं । सक्षौद्रं तच्च रक्तघ्नं तद्वद् वत्सकसाधितं ॥ लोध्रोत्पलसमंगाभिस्तथैव त्रायमाणया । इति ( अ० सं० चि० ३ ) ॥८८॥

स्यात् त्रायमाणेति । एषः उक्त एव त्रायमाणायां विधिः स्यात् । त्रायमाणायाः स्वरसे क्वाथे वा तत्कल्केन सिद्धं घृतं सक्षौद्रं लिह्यात् । सोदुम्बरे पटोलपत्रे च एष एव विधिः । एवं उदुम्बरपटोलपत्रयोः क्वाथे स्वरसे वा तत्तत्कल्केन सिद्धं घृतं मधुयुतं लिह्यात् । प्राग् ज्वरचिकित्सिताध्याये उक्तानि सर्वाणि पित्तज्वरनाशनानि सर्पींषि रक्तपित्ते शस्तानि हितानि स्युः ॥ ८९ ॥

अभ्यंगयोगा इत्यादि । पित्तज्वरे प्रशमाय दाहज्वरप्रशमनाय ज्वरचिकित्सिते ये अभ्यंगयोगाः अभ्यंजनानि । परिषेचनानि परिषेकाः । सेकाः अवगाहाः अवगाह-नानि च । ते सेकावगाहाः । परिषेचनं शीतवीर्यैर्द्रव्यैः शृतशीतसलिलेन परिषेकः । मध्वारनालसलिलादिभिरभ्युक्षणं सेकः । शयनानि शय्याः पद्मादिदलकल्पिताः । वेश्म गृहं शीतसलिलसिक्तं । धारागृहं वापि । अन्यो यश्च शीतो विधिरुक्तः । यथापि

कफानुबन्धे रुधिरे सपित्ते कण्ठागते स्याद् ग्रथिते प्रयोगः।
युक्तस्य युक्त्या मधुसर्पिषोश्च क्षारस्य चैवोत्पलनालजस्य ॥ ९२॥
मृणालपद्मोत्पलकेशराणां तथा पलाशस्य तथा प्रियङ्गोः।
तथा मधूकस्य तथासनस्य क्षाराः प्रयोज्या विधिनैव तेन ॥९३॥

अग्र्यं श्रेष्ठं वार्त्तिविधानं वस्तिविधिः दिष्टमुक्तं। तत् एतत् दाहज्वरोक्तमभ्यंगादिकं। कालं मात्रां च। एतत् परीक्षणीयानामुपलक्षणं। पुरा अग्रे समीक्ष्य दृष्ट्वा रक्तपित्ते निखिलेन कात्स्न्येन कार्यं। तत् सर्वं रक्तपित्ते कार्यं भिषजा। ये च सर्पिर्गुडाः क्षतक्षीणचिकित्सिते पश्चात् वक्ष्यमाणाः क्षतेभ्यः क्षतक्षीणेभ्यो हिताः। क्षतेभ्य इत्यत्र हितशब्दयोगात् चतुर्थी। ते रक्तपित्तं सद्यः शमयन्ति ॥९० । ९१॥

कफानुवन्ध इति। सपित्ते रुधिरे रक्ते। वृद्धवाग्भटे तु सपिच्छे इति पाठः। रुधिरे सपिच्छे पिच्छिले। कफानुवन्धे कण्ठागते कण्ठमार्गगे ग्रथिते ग्रन्थिले संहते च सति। मधुसर्पिषोः युक्त्या युक्तस्य मधुसर्पिर्योगयुक्तस्य। युक्त्या युक्तस्य मात्राद्युपपादितस्य वा। उत्पलनालजस्य क्षारस्य प्रयोगः स्यात्। उत्पलनालं दग्ध्वा तं क्षारं मधुसर्पिर्भ्यां लिह्यात्। मृणालेति। मृणालं। पद्मोत्पलयोः केसराः किंजल्काश्च ते। जल्पकल्पतरुकारस्तु इह केसरशब्दं नागकेसरवचनतया व्याचष्टे। मृणालपद्मनीलोत्पलनागकेसराणीति। तच्चिन्त्यं। मृणालाम्भोजकिंजल्केति वक्ष्यमाणवृद्धवाग्भटवचनात् तेषां मृणालपद्मोत्पलकेसराणां क्षारा इत्यनेन सम्बन्धः। एवं सर्वत्र। तथा पलाशस्य। तथा प्रियंगोः। तथा मधूकस्य मधूकद्रुमस्य। तथा असनस्य। असनः पीतशालः। क्षाराः। मृणालाद्यसनान्तानां पृथक् पृथक् क्षाराः। तेन उक्तेनैव विधिना प्रयोज्याः। मधुसर्पिर्भ्यां लेह्याः। वृद्धवाग्भटेनाप्युक्तं—रक्ते सपिच्छे सकफे ग्रथिते कण्ठमार्गगे। लिह्यान्माक्षिकसर्पिर्भ्यां क्षारमुत्पलनालजं॥ मृणालाम्भोजकिंजल्कश्यामासनमधूकजं। तद्वत् पृथक् पृथक् क्षारं॥ इति (अ० सं० चि० ३) ॥९२।९३॥

---

९२। सपित्ते कण्ठामये स्याद्ग्रथिते इति या पुस्तके।

शतावरीदाड़िमतिन्तिड़ीकं काकोलिमेदे मधुकं विदारीम् ।
पिष्ट्वा च मूलं फलपूरकस्य घृतं पचेत् क्षीरचतुर्गुणं ज्ञः ॥९४॥
कासज्वरानाहविबन्धशूलं तद्रक्तपित्तञ्च घृतं निहन्यात् ॥
यत् पञ्चमूलैरथ पञ्चभिर्वा सिद्धं घृतं तच्च तदर्थकारि ॥९५॥
इति शतावर्यादिघृतं पञ्चमूलघृतं च ।
कषाययोगा य इहोपदिष्टास्ते चावपीड़े भिषजा प्रयोज्याः ।
घ्राणात् प्रवृत्तं रुधिरं सपित्तं यदा भवेन्निःसृतदुष्टदोषम् ॥९६॥

शतावरीत्यादि। शतावरी। दाडिमः दाडिममूलत्वक् । तिन्तिडीकं च । तेषां समाहारः । तत् शतावरीदाडिमतिन्तिडीकं । काकोली च मेदा च ते कोकोलिमेदे । ह्रस्वच्छान्दसः । मधुकं यष्टीमधु । विदारीं विदारीकन्दं । फलपूरकस्य वीजपूरकस्य मूलं च । पिष्ट्वा कल्कीकृत्य तत्सर्वं । क्षीरं चतुर्गुणं यत्र तत् क्षीरचतुर्गुणं । घृतं पचेत् । शतावर्यादीनि कल्कीकृत्य तत्कल्कं पादिकं घृतं च चतुर्गुणे क्षीरे पचेत् ज्ञो विज्ञो भिषक् । तत् तथा पक्वं घृतं कासादिकं रक्तपित्तं च निहन्यात् । अथवा पञ्चभिः पञ्चमूलैः आद्ये रसायनपादे विदारिगन्धां बृहतीमित्यादिना प्राक् उक्तैः ह्रस्वमहन्मध्यजीवनतृणाख्यैः कल्कीकृतैः स्नेहपादिकैः चतुर्गुणे जले क्षीरे वा सिद्धं यत् घृतं तच्चापि । तस्य शतावर्यादिघृतस्य अर्थकारि तदर्थकारि । शतावर्यादिघृतवत् तदपि कासादिकं रक्तपित्तं च शमयति । तदुक्तं—घृतं क्षीरेण साधयेत् । पिष्टैरभीरुकाकोलीमेदावृक्षाम्लदाडिमैः ॥ फलपूरकमूलेन विदार्या मधुकेन च । तद्विबन्धज्वरानाहशूलकासास्रपित्तजित् ॥ पंचभिः पञ्चमूलैश्च सिद्धमाज्यं तदर्थकृत् । इति ( अ० सं० चि० ३ ) ॥ ९४ । ९५ ॥

कषाययोगा इति । घ्राणात् प्रवृत्तं सपित्तं रुधिरं । यदा निःसृताः निर्गताः दुष्टाः दोषाः पित्तादयो यस्य तत् निःसृतदुष्टदोषं । शुद्धमित्यर्थः । भवेत् । तदा ये कषाययोगाः क्वाथादयः अटरूपकमृद्वीकेत्यादिना इह प्राक् उपदिष्टाः । ते अवपीडे । द्रव्यं कल्कीकृतमवपीड्य स्रुतो रसो यत् नासायां दीयते सोऽवपीडसंज्ञः नस्तःकर्मभेदः । अवपीडकरूपेण भिषजा प्रयोज्याः । नासायामवसेच्याः इत्यर्थः । घ्राणगे रुधिरे

रक्ते प्रदुष्टे ह्यवपीड़बन्धे दुष्टप्रतिश्यायशिरोविकाराः ।
रक्तं सपूयं कुणपैः सगन्धं स्याद् घ्राणनाशः क्रिमयश्च दुष्टाः ॥९७॥)
नीलोत्पलं गैरिकशङ्खयुक्तं सचन्दनं स्यात् तु सिताजलेन ।
नस्यं तथाम्रास्थिरसः समङ्गा सधातकी मोचरसः सलोध्रः ॥९८॥
द्राक्षारसस्येक्षुरसस्य नस्यं क्षीरस्य दूर्वास्वरसस्य चैव ।
यवासमूलानि पलाण्डुमूलं नस्यं तथा दाड़िमपुष्पतोयम् ॥९९॥

निःसृतदुष्टदोषे सत्येव ते अवपीड़रूपेण देयाः। विपर्यये दोषमाह—रक्ते प्रदुष्टे इति। प्रदुष्टे रक्ते अवपीड़बन्धे अवपीडेन रुद्धे सति। दुष्टाः। प्रतिश्यायः। शिरोविकाराः शिरोरोगाश्च। ते भवेयुः। रक्तं सपूयं। कुणपैः शवैः सगन्धं समानगन्धं च स्यात्। तथा घ्राणनाशः दुष्टाः क्रिमयश्च स्युः॥ ९६।९७॥

घ्राणगे रुधिरे योगान्तराण्याह—नीलोत्पलमिति। नीलोत्पलं। गैरिकशंखाभ्यां युक्तं गैरिकशंखयुक्तं। सचन्दनं च। नस्यं स्यात्। नीलोत्पलादीनि कल्कीकृतान्यवपीड्य तेभ्यो निःस्रुतो रसः नासायां देयः। सिताजलेन शर्करामिश्रितजलेन नस्यं स्यात्। तदुक्तं सुश्रुतेन—घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकया पयो वा। इति (सु० उ० ४५)। नीलोत्पलादिसिताजलान्त एको योगः इति केचित्। तथा आम्रास्थिरसः आम्रास्थिमज्जास्वरसो नस्यं स्यात्। सधातकी समंगा धातकी समंगा च। तयोः स्वरसो नस्यं स्यात्। तथा सलोध्रः मोचरसः नस्यं स्यात् ॥९८॥

द्राक्षारसस्येति। द्राक्षारसस्य नस्यं स्यात्। तथा इक्षुरसस्य नस्यं। क्षीरस्य पयसः नस्यं। दूर्वास्वरसस्य नस्यं। यवासस्य दुरालभायाः मूलानि नस्यं। यवासमूलानि कल्कीकृत्य अवपीड्य च तेभ्यो निर्गतो रसो नासायामासेच्यः। एवं पलाण्डुमूलं नस्यं। तथा दाडिमपुष्पतोयं दाडिमपुष्पं तोयं च। तयोः समाहारः तत्। दाडिमपुष्पं दाडिमपुष्पोत्थरसः नस्यं। तोयं केवलं जलं वा नस्यं। दाडिमपुष्पतोयं दाडिमपुष्पक्वाथजलमिति केचित्। उक्तं च—नस्यं दाडिमपुष्पोत्थो रसो दूर्वाभवोऽथवा। आम्रास्थिजः पलाण्डोर्वा नासिकास्रुतरक्तजित्॥ इति। वृद्धवाग्भटेनाप्युक्तं—घ्राणगे रुधिरे शुद्धे नावनं चानुषेचयेत्। कषाययोगान् पूर्वोक्तान् क्षीरेक्ष्वादिरसाप्लुतान्॥ क्षीरादीन् ससितं तोयं केवलं वा हितं जलं। रसो दाडिमपुष्पाणामाम्रास्थ्नः शाद्वलस्य च॥ इति (अ० सं० चि० ३)॥९९॥

प्रियालतैलं मधुकं पयश्च सिद्धं घृतं माहिषमाजिकं वा ।
आम्रास्थिपूर्वैः पयसा च नस्यं ससारिवैः स्यात् कमलोत्पलैश्च ॥१००॥
भद्रश्रियं लोहितचन्दनञ्च प्रपौण्डरीकं कमलोत्पले च ।
उशीरवानीरजलं मृणालं सहस्रवीर्य्या मधुकं पयस्या ॥१०१॥
शालीक्षुमूलानि यवासगुन्द्रामूलं नलानां कुशकाशयोश्च ।
कुचन्दनं शैवलमप्यनन्ता कालानुसार्य्या तृणमूलमृद्धिः ॥१०२॥
मूलानि पुष्पाणि च वारिजानां प्रलेपनं पुष्करिणीमृदश्च ।
उदुम्बराश्वत्थमधूकलोध्राः कषायवृक्षाः शिशिराश्च सर्वे ॥१०३॥

पियालतैलमिति । पियालतैलं मधुकं पयश्च एकत्र सिद्धं । यष्टीमधुकल्केन स्नेहपादिकेन चतुर्गुणे पयसि साधितं पियालतैलं पियालबीजोद्भवं तैलं नस्यं स्यात् । आम्रास्थिपूर्वैः ससारिवैः कमलोत्पलैश्च आम्रास्थिमज्जसारिवाकमलोत्पलैः कल्कितैः स्नेहपादिकैः पयसा द्रवेण चतुर्गुणेन च सिद्धं माहिषं आजिकं अजाभवं वा घृतं नस्यं स्यात् ॥ १०० ॥

प्रलेपार्थमाह—भद्रश्रियमित्यादि । भद्रश्रियं श्वेतचन्दनं । लोहितचन्दनं । प्रपौण्डरीकं पुण्डरीककाष्ठं । कमलं पद्मं । उत्पलं नीलोत्पलं च । ते कमलोत्पले । उशीरं । वानीरं वेतसं । जलं वालकं च । तेषां समाहारः । तत् । मृणालं । सहस्रवीर्या दूर्वाभेदः । मधुकं यष्टीमधु । पयस्या क्षीरकाकोली । शालीनां इक्षुणां च मूलानि । यवासः दुरालभा । गुन्द्रा च । तयोर्मूलं । गुन्द्रा परका । रोचनिका वा । नलानां मूलं । कुशकाशयोर्मूलं च । कुचन्दनं पत्रांगं वकम इतिख्यातः चन्दनभेदः । शैवलं सेवालं । अनन्ता अनन्तमूलं । कालानुसार्या पिण्डीतगरं । तृणमूलं गन्धतृणमूलं । ऋद्धिः स्वनामख्याता । वारिजानां जले जातानां पद्मादीनां मूलानि पुष्पाणि च । पुष्करिण्याः मृदः मृत्तिकाश्च प्रलेपनं । भद्रश्रियादिभिः कल्कितैः प्रलेपनं कार्यं । उदुम्बराश्वत्थमधूकलोध्राः । तथा अन्ये च कषायवृक्षाः वटादयः । तथा शिशिराः शीतवीर्याः शीतस्पर्शाश्च सर्वे प्रलेपनं । तैः प्रलेपः कार्यः ॥ १०१—१०३॥

---

१०२ । सवन्दनं शैवलमप्यनन्ता इति ख ग च पुस्तकेषु ।

प्रदेहकल्पे परिषेचने च तथावगाहे घृततैलसिद्धौ ।
रक्तस्य पित्तस्य च शान्तिमिच्छन् भद्रश्रियादीनि भिषक् प्रदद्यात् १०४

धारागृहं भूमिगृहं सुशीतं वनञ्च रम्यं जलवातशीतम् ।
वैदूर्यमुक्तामणिभाजनानां स्पर्शाश्च दाहे शिशिराम्बुशीताः॥१०५॥

पुष्पाणि पत्राणि च वारिजानां क्षौमञ्च शीतं कदलीदलञ्च ।
प्रच्छादनार्थं शयनासनानां पद्मोत्पलानाञ्च दलाः प्रशस्ताः॥१०६॥

प्रियंगुकाचन्दनरूषितानां स्पर्शाः प्रियाणाञ्च वराङ्गनानाम् ।
दाहे प्रशस्ताः सजलाः सुशीताः पद्मोत्पलानाञ्च कलापवाताः॥१०७॥

प्रदेहकल्पे इति । रक्तस्य च पित्तस्य च शान्तिमिच्छन् भिषक् प्रदेहकल्पे प्रलेपविधौ परिषेचने परिषेके अवगाहे तथा घृततैलयोः सिद्धौ पाके च भद्रश्रियादीनि प्रागुक्तानि यथालाभं प्रदद्यात् क्वाथकल्कीकृत्य । तथाच प्रदेहे कल्कीकृत्य । परिषेचने अवगाहे च क्वाथीकृत्य । घृततैलसिद्धौ क्वाथीकृत्य कल्कीकृत्य च ॥१०४॥

धारागृहमिति । धारागृहं यन्त्रमुखनिष्पतत्सलिलधारं गृहं । सुशीतं भूमिगृहं मृद्गृहं । जलाशयासन्नतया जलवातेन जलसम्पृक्तवातेन शीतं गुंजदलिकुलाकुलितकुसुमिततरुलताभिः रम्यं । तथाविधं वनमुपवनं च रक्तपित्तिनो दाहे प्रशस्तं । तथा वैदूर्यमुक्तामणिभाजनानां । भाजनं पात्रं । शिशिराम्बुशीताः स्पर्शाः शीतसलिलभृतवैदूर्यादिपात्राणां स्पर्शाः इत्यर्थः। वैदूर्यादिभाजनानां प्रकृतिशीतत्वेऽपि शीतसलिलभृतत्वं पुनरधिकशैत्यकरणाय । दाहे प्रशस्ता इति शेषः ॥ १०५ ॥

पुष्पाणीति । दाहे शयनासनानां शय्यासनानां प्रच्छादनार्थं वारिजानां पद्मादीनां पत्राणि पुष्पाणि च शस्तानि । शीतं क्षौमं वस्त्रं कदलीदलं च प्रशस्तं । वारिजानामिति । सामान्यतोऽभिधाय पुनर्विशिष्याह—पद्मोत्पलानामिति । पद्मोत्पलानां च दलाः दलानि पत्राणि दाहे शयनासनानां प्रच्छादनार्थं प्रशस्ताः ॥२०६॥

प्रियंगुकेति । प्रियंगुकाभिश्चन्दनैश्च रूपितानां भूपितानां लिप्तांगीनां प्रियाणां वरांगनानां उत्तमस्त्रीणां स्पर्शाः आश्लेषाः । सजलाः सुशीताः पद्मोत्पलानां कलापवाताः जलार्द्रपद्मोत्पलसमूहकृतशीतवाता इत्यर्थः । कलापो भूषणे वर्हे तूणीरे संहते-

सरिद्ध्रदानां हिमवद्दरीणां चन्द्रोदयानां कमलाकराणाम् ।
मनोऽनुकूलाःशिशिराश्चसर्वाःकथाःसरक्तं शमयन्ति पित्तम् ।१०८।

तत्र श्लोकौ ।

हेतुं वृद्धिं संख्यां स्थानं लिंगं पृथक् प्रदुष्टस्य ।
मार्गौ साध्यमसाध्यं याप्यं कार्यक्रमञ्चैव ॥१०९॥
पानान्नमिष्टमेव च वर्ज्यं संशोधनं च शमनञ्च ।
गुरुरुक्तवान् यथावच्चिकित्सिते रक्तपित्तस्य ॥११०॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
रक्तपित्तचिकित्सितं नाम चतुर्थोऽध्यायः ॥४॥

ऽपि च । इत्यमरः । संहते समूहे । अथवा पद्मोत्पलानां स्पर्शाः वाता वापि । सजलाः सुशीताः कलापवाताः वर्हिवर्हकृतव्यंजनवाताः । दाहे प्रशस्ताः ॥ १०७ ॥

सरिद्ध्रदानामिति । सरिद्ध्रदानां । सरितां नदीनां । ह्रदानां अगाधजलजलाशयानां । हिमवतो हिमालयस्य दरीणां कन्दराणां । चन्द्रोदयानां । कमलाकराणां पद्माकराणां सरसां च । कथाः । सरिद्ध्रदादयः स्वयं तत्सम्बन्धिन्यः कथा अपि । तथा अन्याः मनोऽनुकूलाः शिशिराः सौम्याः सर्वाः कथाश्च सपित्तं रक्तं रक्तपित्तं शमयन्ति ॥१०८॥

अध्यायार्थसंग्रहं करोति—तत्रश्लोकावित्यादि । रक्तपित्तस्य हेतुं । वृद्धिं । संज्ञां । संयोगाद्दूषणात्तत्त्वित्यादिना । स्थानं प्लीहानञ्च यकृच्चैवेत्यादिना । प्रदुष्टस्य कफादिदोषदुष्टस्य तस्य कफवातपित्तात्मकतया पृथक् पृथक् लिंगं लक्षणं । संसर्ग-सन्निपातेषु तस्यैव यथायथमतिदेशः । न तु तेषु पृथक् लिंगमुक्तं । मार्गौ ऊर्ध्वमधश्च द्वौ । रक्तपित्तं यत् साध्यं याप्यं असाध्यञ्च तत् । रक्तपित्तस्य साध्यत्वादिकं । कार्यं कर्म चिकित्सालक्षणं । तस्य क्रमः । तं कार्यक्रमं । इष्टं हितं पानान्नं अन्नपानं । रक्त-पित्तिनां यत् वर्ज्यं वर्जनीयं । रक्तपित्तस्य यत् किंचित् निदानं तत् । तत्र शोधनं शमनं च कर्म । एतत् सर्वं गुरुः भगवान् आत्रेयः पुनर्वसुः अस्मिन् रक्तपित्तस्य चिकित्सिते अध्याये उक्तवान् । उभयत्र आर्या पथ्या नाम ॥१०९ । ११० ॥

इति वैद्यरत्नश्रीयोगीन्द्रनाथविद्याभूषणकृते चरकोपस्कारे चिकित्सितस्थाने चतुर्थोऽध्यायः ॥

## पञ्चमोऽध्यायः ।

अथातो गुल्मचिकित्सितं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ॥ १ ॥

सर्वप्रजानां पितृवच्छरण्यः पुनर्वसुर्भूतभविष्यदीशः ।
चिकित्सितं गुल्मनिवर्हणार्थं प्रोवाच सिद्धं वदतां वरिष्ठः ॥२॥
विट्श्लेष्मपित्तातिपरिस्रवाद्वा तैरेव वृद्धैरतिपीड़नाद्वा ।
वेगैरुदीर्णैर्विहतैरधो वा बाह्याभिघातैरतिपीड़नैर्वा ॥३॥

पंचमोऽध्यायः ।

निदानोक्तक्रमानुरोधात् रक्तपित्तचिकित्सितानन्तरं गुल्मचिकित्सितमारभ्यते —अथात इति । सर्वं पूर्ववद्व्याख्येयं ॥ १ ॥

सर्वप्रजानामिति। सर्वप्रजानां सर्वासां प्रजानां लोकानां । पितृवत् पितेव । शरणे रक्षणे साधुः इति शरण्यः । भूतभविष्यदीशः । भूते भविष्यति च ईशः प्रभुः अव्याहतार्षज्ञानतया भूतं भविष्यदपि ज्ञातुं समर्थः । वदतां वक्तॄणां आप्तानां मध्ये वरिष्ठः ऊरुतमः श्रेष्ठः । प्रियस्थिरस्फिरोरुबहुलेत्यादिना ( पाणिनि ६ । ४ । १५७ ) ऊरुशब्दस्य वरादेशः । पुनर्वसुर्भगवानात्रेयः । गुल्मस्य निवर्हणं नाशो निवृत्तिः । तदेव अर्थः प्रयोजनं यस्य तत् । सिद्धं निश्चितफलं साध्येषु अव्यभिचारि । चिकित्सितं अग्निवेशाय प्रोवाच प्रोक्तवान् ॥ २ ॥

तत्रादौ सामान्यतो गुल्मस्य हेतुमाह—विट्श्लेमपित्तेत्यादि । विट् पुरीषं । श्लेष्मा । पित्तं च । तानि । तेषामतिस्रवः अतिसरणं वमनविरेचनाभ्यामतिनिर्हरणम् । तस्मात् वा । वृद्धैः तैः विट्श्लेष्मपित्तैरेव अतिपीडनात् वा । उदीर्णैः अधोवेगैः वातमूत्रपुरीषवेगैः विहतैः निरुद्धैः हेतुभिर्वा । बाह्याभिघातैः दण्डाद्यभिहननैर्वा । अतिपीडनैः

३ । बाह्याभिघातैरतिपूरणैर्वा इति ङ ठ पुस्तकयोः ।

रूक्षान्नपानैरतिसेवितैर्वा शोकेन मिथ्याप्रतिकर्मणा वा ।
विचेष्टितैर्वा विषमातिमात्रैः कोष्ठे प्रकोपं समुपैति वायुः ॥४॥
कफञ्च पित्तञ्च स दुष्टवायुरुद्धूय मार्गान् विनिबध्य ताभ्याम् ।
हृन्नाभिपार्श्वोदरवस्तिशूलं करोत्यधो याति न बद्धमार्गः ॥५॥
पक्वाशये पित्तकफाशये वा स्थितः स्वतन्त्रः परसंश्रयो वा ।
स्पर्शोपलभ्यः परिपिण्डितत्वाद् गुल्मो यथादोषमुपैति नाम ॥६॥

पाण्यादिभिरतिपीडनैर्वा । अथवा बाह्याभिघातैरतिपीडनैः । रूक्षान्नपानैः रूक्षैः अन्नपानैः अतिसेवितैर्वा । शोकेन वा । मिथ्या प्रतिकर्मणा मिथ्या अयथावत् कृतेन प्रतिकर्मणा वमनादिकर्मणा शोधितस्य उत्तरकर्मणा वापि । तथा च वृद्धवाग्भटः—अस्नेहपूर्वं वा वमनविरेचने करोति । तथा शोधित एवातिविदाहिनोऽभिष्यन्दिनो वा निषेवते । इति (अ० सं० नि० ११) । विषमातिमात्रैः । विषमैः अतिमात्रैश्च विचेष्टितैः शारीरव्यापारैः धावनलंघनादिभिर्वा । वाशब्दैः प्रत्येकशः कारणत्वं ख्यापयति । उक्तैः कारणैः वायुः कोष्ठे शरीरमध्ये आमपक्वाशयस्थाने प्रकोपं समुपैति प्रकुप्यति ॥ ३ । ४ ॥

हेतुमुक्त्वा सम्प्राप्तिमाह—कफं च पित्तञ्चेति । स च दुष्टो वायुः कफं च पित्तं च कदाचित् कफं कदाचित् पित्तं उद्धूय स्वस्थानात् चालयित्वा ताभ्यां कफपित्ताभ्यां मार्गान् ऊर्ध्वमधश्च मार्गं विनिबध्य निरोध्य हृन्नाभिपार्श्वोदरवस्तिशूलं हृदि नाभौ पार्श्वयोः उदरे वस्तौ च शूलं करोति । न अधः ऊर्ध्वं चापि याति । यतः बद्धमार्गः रुद्धमार्गः । स च पक्वाशये स्वस्थाने स्वतन्त्रः स्वाधीनः । पित्तकफाशये परसंश्रयः परतन्त्रो वा । स्पर्शोपलभ्यः अमूर्तत्वात् । परिपिण्डितत्वात् अमूर्तोऽपि मूर्ततामिवोपगतः । ग्रन्थिरूपेणावस्थानात् गुल्मः गुल्मसंज्ञः । अनेन सर्वगुल्मेषु वायुरेव कर्ता इत्युपदर्शितं भवति । सर्वेषां वातारब्धत्वेऽपि यथा पैत्तिकादिव्यपदेशः स्यात् तदाह—यथादोषमिति । यथादोषं दोषमुल्बणमनतिक्रम्य उल्बणतत्तद्दोषानुसारेण नाम वातजपित्तजादिसंज्ञां उपैति प्राप्नोति । गुल्मो वातारब्धोऽपि यदा स्वकारणोद्भूतेन पित्तेन

५ । कफं च पित्तं च स दूषयित्वा प्रोद्धयमार्गान् इति ख ग ङ पुस्तकेषु ।

६ । पक्वाशये पित्तकफाशये वा इति ठ ग पुस्तकयोः ।

वस्तौ च नाभ्यां हृदि पार्श्वयोर्वा स्थानानि गुल्मस्य भवन्ति पंच ।
पञ्चात्मकस्य प्रभवन्तु तस्य वक्ष्यामि लिङ्गानि चिकित्सितं च॥७॥
रूक्षान्नपानं विषमातिमात्रं विचेष्टितं वेगविनिग्रहश्च ।
शोकोऽभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः ॥८॥

कफेन वा स्वलक्षणकारिणा संसृज्यते तदा पित्तज इति कफज इति च व्यपदिश्यते । यदा पुनः दोषान्तरासंसृष्टः केवलो वातः आरम्भकः तदा हि वातज इति ॥५।६॥

गुल्मस्य स्थानमाह—वस्तौ इति । वस्तौ नाभ्यां हृदि पार्श्वयोर्द्वयोर्वा गुल्मस्य स्थानानि अवस्थानानि पञ्च भवन्ति । निदानेऽपि—अवस्थानं कुरुते हृदि वस्तौ पार्श्वयोर्नाभ्यां । इति ( च० नि० ३ ) । वस्तिः नाभिः हृत्पार्श्वे द्वे च इति पञ्च गुल्मस्य स्थानानि भवन्ति । तदुक्तं तन्त्रान्तरेऽपि— पञ्च गुल्माश्रया नॄणां पार्श्वे हृन्नाभिवस्तयः। इति ( सु० उ० ४२ ) । पार्श्वे द्वे । गुल्मस्य सामान्यतो हेतुः सम्प्राप्तिश्चोक्ता । सम्प्रति तस्य पञ्चविधस्य पृथक् हेतुलिंगं विकित्सितान्यभिधातुं प्रतिजानीते—पञ्चात्मकस्येति । पञ्चात्मकस्य वातजपित्तजकफजसन्निपातजरक्तजत्वेन पञ्चविधस्य । तदुक्तं प्राक् अष्टोदरीये—पञ्च गुल्मा भवन्ति वातपित्तकफसन्निपातरक्तजा इति । सुश्रुतेनाप्युक्तं—स व्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितैः । पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरः ॥ इति ( सु० उ० ४२ ) । व्यामिश्रलिंगानपरांस्तु गुल्मानित्यादिना वक्ष्यमाणा ये च संसर्गजास्त्रयः तेषामिह वातजादिष्ववरोधः कृतः । वृद्धवाग्भटस्तु संसर्गजान् त्रीन् पृथक् कृत्वा गुल्ममष्टविधमाह । तथाच—गुल्मोऽष्टधा पृथग् दोषैः संसृष्टैर्निचयं गतैः । आर्तवस्य च दोषेण नारीणां जायतेऽष्टमः ॥ इति ( अ० सं० नि० ११ ) । निचयं गतैः सन्निपतितैः । पंचात्मकस्य वातजत्वादिना पञ्चविधस्य तस्य गुल्मस्य । प्रभवत्यस्मादिति प्रभवः कारणं । तं । लिंगानि चिकित्सितं च वक्ष्यामि । गुल्मस्य पञ्चविधस्य हेतुलिंगानि निदानस्थाने प्रागुक्तानि यद्यपि तथापि तेषां पुनरिहाभिधानं चिकित्साप्रसंगात् ॥७॥

तत्रादौ वातिकगुल्मस्य हेतुमाह—रूक्षान्नपानमिति । रूक्षं अन्नपानं । विषममतिमात्रं च विचेष्टितं । वेगानामधोवेगानां वातमूत्रपुरीषवेगानामुदीर्णानां विनिग्रहः निरोधः । शोकः । अभिघातः दण्डादिना ताडनं । अतिमलक्षयः । निरन्नता निराहारता अनशनं च । एतत् सर्वं अनिलगुल्मस्य वातगुल्मस्य हेतुर्निदानं भवति ॥ ८ ॥

यः स्थानसंस्थानरुजाविकल्पं विड्वातसंगं गलवक्त्रशोषम् ।
श्यावारुणत्वं शिशिरज्वरञ्च हृत्कुक्षिपार्श्वांसशिरोरुजश्च ॥९॥
करोति जीर्णेऽभ्यधिकं प्रकोपं भुक्ते मृदुत्वं समुपैति यश्च ।
वातात् स गुल्मो न च तत्र रूक्षं कषायतिक्तं कटु चोपशेते ॥१०॥
कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्रोधातिमद्यार्कहुताशसेवा ।
श्रमाभिघातौ रुधिरञ्च दुष्टं पैत्तस्य गुल्मस्य निदानमुक्तम् ॥११॥

वातिकगुल्मस्य निदानमुक्त्वा लक्षणमाह—यः स्थानसंस्थानरुजेत्यादि । यो गुल्मः । स्थानं । संस्थानमाकृतिः । रुजा वेदना च । ताः । तासां विकल्पः अन्यथात्वं अनियतत्वं । तं । परश्लोकस्थितकरोतीत्यनेनान्वयः । स्थानविकल्पः वस्त्यादिषु कदाचित् एकत्र तिष्ठति । कदाचिदन्यत्र । एकत्रापि इतस्ततश्चलति । न नियतमेकत्र तिष्ठति । वायोश्चलत्वात् । संस्थानविकल्पः अनियतसंकोचविस्तारः । कदाचित् अल्पः । कदाचित् महान् । कदाचित् वर्तुलः । कदाचित् दीर्घः । इत्येवं । रुजाविकल्पः कदाचित् अल्पा रुक् । कदाचित् महती । कदाचित् तोदरूपा भेदरूपा वापि इत्येवं । विड्वातसंगं विषः पुरीषस्य वातस्य च संगं विवन्धं करोति । श्यावारुणत्वं शरीरस्य श्यावारुणान्यतरवर्णत्वं करोति । वायोः श्यावारुणवर्णकारित्वात् । श्यावारुणावभासतेति (च० श्लो० २०) । शिशिरज्वरं शीतज्वरं करोति । तथा हृत् । कुक्षिः । पार्श्वं । अंसौ भुजशिरसी । शिरश्च । तत् । तस्य रुक् वेदना । तां च करोति । यश्च गुल्मः अन्ने भुक्ते भुक्तमात्रे मृदुत्वं समुपैति याति । जीर्णे तु अभ्यधिकं प्रकोपं समुपैति । स तथाविधः गुल्मः वातात् भवति वातजः । व्याध्युपलब्धिहेतुत्वादुपशयमप्याह—न चेति । तत्र रूक्षं कषायं तिक्तं च कटु च अन्नपानं न उपशेते सुखयति । विपरीतं तु उपशेते । सुश्रुतेऽपि—हृत्कुक्षिशूलं मुखकण्ठशोषो वायोर्निरोधो विषमाग्निता च । ते ते विकाराः पवनात्मकाश्च भवन्ति गुल्मेऽनिलसम्भवे तु ॥ इति ( सु० उ० ४२ ) ॥ ९ । १० ॥

पैत्तिकगुल्मस्य निदानमाह—कट्वम्लेति । कटु अम्लं तीक्ष्णं उष्णं विदाहि रूक्षं अन्नपानं । क्रोधः । आर्त्तिः क्लेशः । मद्यं । अर्कः सूर्यः । आतप इत्यर्थः । हुताशः अग्नि-

९ । विड्वातशोषं इति ठ पुस्तके ।

११ । आमाभिघातोरुधिरं च दुष्टं इति ण पुस्तके ।

ज्वरः पिपासा वदनाङ्गरागः शूलं महज्जीर्यति भोजने च ।
स्वेदो विदाहो व्रणवच्च गुल्मः स्पर्शासहः पैत्तिकगुल्मरूपम् ॥१२॥
शीतं गुरु स्निग्धमचेष्टनञ्च सम्पूरणं प्रस्वपनं दिवा च ।
गुल्मस्य हेतुः कफसम्भवस्य सर्वस्तु दिष्टो निचयात्मकस्य ॥१३॥
स्तैमित्यशीतज्वरगात्रसादहृल्लासकासारुचिगौरवाणि ।
शैत्यं रुगल्पा कठिनोन्नतत्वं गुल्मस्य रूपाणि कफात्मकस्य ॥१४॥

श्च । ते । तेषां सेवा सेवनं । श्रमः अभिघातश्च । तौ । क्वचित् आमाभिघाताविति पाठः । आमः अजीर्णो रसः । विधिशोणितीये च—श्रमाभिघातात्सन्तापादजीर्णाध्यशनात्तथा । इति । पित्तरक्ते तुल्यप्रकोपणे । दुष्टं रुधिरं च । एतत् पैत्तस्य गुल्मस्य निदानमुक्तं ॥ ११ ॥

निदानमुक्त्वा रूपमाह—ज्वरः पिपासेति । ज्वरः । पिपासा । वदनाङ्गरागः वदनस्य मुखस्य अंगानामन्येषां नयनादीनां रागः रक्तवर्णत्वं । हरितहारिद्रत्वं चापि । भोजने भुक्ते आहारे जीर्यति पच्यमाने सति महत् शूलं । स्वेदः । विदाहः आहारविदाहः अम्लिकादिसद्भावः । स च गुल्मः व्रणवत् व्रण इव । न सहते इत्यसहः । स्पर्शस्य असहः स्पर्शासहः । स्पर्शं न सहते । एतत् सर्वं पैत्तिकगुल्मस्य रूपं लिंगं । सुश्रुतेऽपि—स्वेदज्वराहारविदाहदाहास्तृष्णांगरागः कटुवक्त्रता च । पित्तस्य लिंगान्यखिलानि यानि पित्तात्मके तानि भवन्ति गुल्मे ॥ इति ( सु० उ० ४२ ) ॥१२॥

श्लेष्मिकगुल्मस्य निदानमाह—शीतमिति । शीतं । गुरु प्रकृतिगुरु । स्निग्धं च । अन्नं पानं । अचेष्टनं सर्वदा अवस्थानं । संपूरणं कुक्षेः सम्यक् पूरणं अतिभोजनं । दिवा प्रस्वपनं निद्रा च । इति कफसम्भवस्य गुल्मस्य हेतुः दिष्टः । अत्रान्तरे सान्निपातिकस्य निदानं वातिकादित्रयोक्तहेतुसंमिश्रणरूपमाह—सर्वस्त्विति । वातजादिषु त्रिषु यः पृथक् पृथक् हेतुरुक्तः स सर्वः समस्तः मिलितः निचयात्मकस्य सान्निपातिकस्य गुल्मस्य हेतुर्दिष्टः ॥ १३ ॥

कफजस्य लिंगमाह—स्तैमित्येति । स्तैमित्यं स्तिमितता जाड्यं । शीतज्वरः । गात्रसादः । हृल्लासः । कासः । अरुचिः । गौरवं गुरुगात्रत्वं च । तानि । शैत्यं ।

१४ । शैत्यं रुगल्प इति ग च पुस्तकयोः ।

निमित्तलिङ्गान्युपलभ्य गुल्मे द्विदोषजे दोषबलाबलञ्च ।
व्यामिश्रलिङ्गानपरांश्च गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम् ॥१५॥
महारुजं दाहपरीतमश्मवद्घनोन्नतं शीघ्रविदाहिदारुणम् ।
मनःशरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥१६॥

श्वैत्यमिति पाठे त्वङ्नखनयनादीनां श्वेतता। अल्पा रुक् वेदना। कठिनोन्नतत्वत्वं गुल्मस्य कठिनत्वं उन्नतत्वं च। एतानि कफात्मकस्य गुल्मस्य रूपाणि लिंगानि भवन्ति। सुश्रुतेऽपि—स्तैमित्यमन्नेऽरुचिरङ्गसादश्छर्दिः प्रसेको मधुरास्यता च। कफस्य लिंगानि च यानि तानि भवन्ति गुल्मे कफसम्भवे तु॥ इति ( सु० उ० ४२ ) ॥१४॥

यथोक्तद्विदोषजहेतुलिंगातिदेशेन संसर्गजांस्त्रीनाह—निमित्तलिंगानीति। द्विदोषजे द्वाभ्यां दोषाभ्यां जाते गुल्मे। द्विदोषजस्य गुल्मस्य निमित्तलिंगानि उपलभ्य एकैकदोषजानां त्रयाणां हेतुलिंगानि यानि प्राक् पृथक् पृथगुक्तानि तान्येव द्वयोर्द्वयोः मिलितानि उपलभ्य। तथा दोषयोर्बलमबलञ्च तत् दोषबलाबलं च। उपलभ्य। दोषबलाबलज्ञानं च औषधकल्पनार्थं। तथाच—यथोक्तयोरेकैकदोषजयोर्द्वयोर्द्वयोर्निमित्तलिंगानि एकत्र मिलितान्युपलभ्य व्यामिश्रलिंगान् संसृष्टलिंगान् यथोक्तद्विदोषलिंगान् अपरान् उद्दिष्टपञ्चविधव्यतिरिक्तान् त्रीन् वातपित्तजवातकफजपित्तकफजान् गुल्मान् दोषबलाबलमुपलभ्य औषधकल्पनार्थं आदिशेत्। औषधं एकैकदोषजेषु यद् यदुक्तं तदेव व्यामिश्रलिंगे व्यामिश्ररूपं। कल्पनं पुनर्दोषबलाबलापेक्षया। व्यामिश्रलिंगेषु दोषयोर्युग्मभूतत्वादयं विशेषः। एतन्मात्रोपदेशार्थं इह संसर्गजानां पृथक् वचनं। वस्तुतस्तु यथोक्तद्विदोषतुल्यहेतुलिङ्गौषधत्वात् ते नातिरिच्यन्ते। निचयगुल्मस्तु यथोक्तत्रिदोषतुल्यहेतुरपि वक्ष्यमाणविशिष्टलक्षणः असाध्यत्वादिप्रभावयुक्तश्च। इति तस्य भेदेनोपादानं॥ १५॥

निचयगुल्मस्य लक्षणमाह—महारुजमिति। महारुजं। दाहपरीतं दाहयुक्तं। अश्मवत् पाषाणवत् घनोन्नतं घनं कठिनमुन्नतं च। शीघ्रविदाही शीघ्रपाकी। दारुणश्च। तं शीघ्रविदाहिदारुणं। शीघ्रविदाही शीघ्रं पच्यते। मनः। शरीरं। अग्निश्च। ते। तेषां बलं। तदपहारिणं। तथाविधं गुल्मं त्रिदोषजं सान्निपातिकं। तं असाध्यं च

११। शीघ्रविदाहि दारयं इति क पुस्तके।

ऋतावनाहारतया भयेन विरूक्षणैर्वेगविनिग्रहैश्च ।
संस्तम्भनोल्लेखनयोनिदोषैर्गुल्मः स्त्रियं रक्तभवोऽभ्युपैति ॥१७॥
यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात् सशूलः समगर्भलिङ्गः ।
स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः ॥१८॥

आदिशेत् । सुश्रुतेऽपि—सर्वात्मकः सर्वविकारयुक्तः सोऽसाध्य उक्तः । इति ( सु० उ० ४२ )। नन्वेवं सान्निपातिकगुल्मस्यासाध्यत्वे कथं पुनस्तत्र चिकित्सा उच्यते ? सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः। इति (सु० उ० ४२)। इति चेत् ? उच्यते—सन्निपातजस्य गुल्मस्य यदसाध्यत्वं तत् विषमदोषजस्य चिरोत्थितस्य दुर्बले पुंसि जातस्य च बोद्धव्यं । यः पुनरभिनवः समदोषजः बलवति पुरुषे च जातः स कृच्छ्रसाध्यः । तथाच—सन्निपातोत्थितो गुल्मश्चिरोत्थोऽसमदोषजः । वर्जनीयोऽन्यथा कृच्छ्रसाध्यो बलवतो मतः ॥ इति । कृच्छ्रसाध्ये त्रिदोषघ्नो विधिः ॥ १६ ॥

दोषजाश्चत्वारो हेतुलिंगैरुक्ताः । सम्प्रति पञ्चमस्य शोणितगुल्मस्य हेतुमाह—ऋतावनाहारतयेति । ऋतौ रजसि प्रवर्त्तमाने । नवप्रसूतौ वा । आमगर्भे अचिरपतिते वापि । अनाहारतया अनशनेन । भयेन । विरूक्षणैः आहारैः । वेगानामुदीर्णानां विनिग्रहैः धारणैः । तथा संस्तम्भनं स्तम्भनं । उल्लेखनं वमनं । योनिदोषो योनिरोगश्च । ते । तैः संस्तम्भनोल्लेखनयोनिदोषैश्च । एभिर्हेतुभिः रक्तभवो गुल्मः स्त्रियं अभ्युपैति प्राप्नोति स्त्रिया जायते। तथाच—अनाहारादिभिर्वायुः प्रकोपमापन्नः योन्या मुखमनुप्रविश्य आर्त्तवमुपरुणद्धि । वायुना उपरोधात् मासि मासि तदार्तवं वहिरप्रवर्त्तमानं कुक्षौ पिण्डितं वर्द्धते ॥१७॥

हेतुमुक्त्वा लिंगमाह—यः स्पन्दते इति । यो गुल्मः पिण्डितः पिण्डाकारः समुदित एव स्पन्दते । न अंगैः करचरणादिभिः स्पन्दते । चिरात् स्पन्दते । सशूलश्च । गर्भस्तु करचरणाद्यंगैः अचिराच्च स्पन्दते । निःशूलश्च । इति गर्भाद् भेदः । एवं भेदेऽपि समगर्भलिंगः गर्भसमलक्षणः आर्तवादर्शनस्तन्यागमनस्तनमण्डलकृष्णत्वादिभिरन्यैर्गर्भलक्षणैर्युक्तः । स गुल्मः रौधिरः रक्तजः । स स्त्रीभवः स्त्रिया एव भवति । न तु

१८। यः स्पन्दते पीडित एव इति च पुस्तके।

क्रियाक्रममतः सिद्धं गुल्मिनां गुल्मनाशनम् ।
प्रवक्ष्याम्यत ऊर्ध्वञ्च योगान् गुल्मनिवर्हणान् ॥१९॥
रूक्षव्यायामजं गुल्मं वातिकं तीव्रवेदनम् ।
बद्धविण्मारुतं स्नेहैरादितः समुपाचरेत् ॥२०॥
भोजनाभ्यञ्जनैपानैः निरूहैसानुवासनैः ।
स्निग्धस्य भिषजा स्वेदः कर्त्तव्यो गुल्मशान्तये ॥२१॥

पुंसः । स च गुल्मः दशमे मासे प्रसवकाले व्यतीते अतिक्रान्ते सति । चिकित्स्यः । तदा रक्तगुल्मत्वेनावधारणात् सुखसाध्यत्वाच्च । दशममासादर्वाक् रक्तगुल्मो वा गर्भो वा इति संशयः । प्रसवकालापगमे तु रक्तगुल्म एव इत्यवधारणं भवति । रक्तगुल्मः पुराणो हि सुखसाध्यः । तथा च—ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता । रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणं ॥ इति । सुश्रुते च—नवप्रसूताऽहितभोजना या या चामगर्भं विसृजेदृतौ वा । वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहं ॥ पैत्तस्य लिंगेन समानलिंगं विशेषणं चाप्यपरं निबोध । न स्पन्दते नोदरमेति वृद्धिं भवन्ति लिंगानि च गर्भिणीनां । तं गर्भकालातिगमे चिकित्स्यमसृग्भवं गुल्ममुशन्ति तज्ज्ञाः ॥ इति ( सु० उ० ४२ ) ॥ १८ ॥

गुल्मस्य पञ्चविधस्य हेतुलिंगान्युक्तानि । सम्प्रति चिकित्सिते वाच्ये आदौ क्रियाक्रमं ततो गुल्मप्रयोगान् वक्तुं प्रतिजानीते—क्रियाक्रममिति । हेतुलिंगान्युक्तानि । अतः परं प्राक् गुल्मिनां पुंसां गुल्मनाशनं सिद्धं सिद्धफलं क्रियाक्रमं क्रियायाश्चिकित्सायाः क्रमं इतिकर्तव्यतां प्रवक्ष्यामि । अत ऊर्ध्वं च ततः परं क्रियाक्रमाभिधानानन्तरं सिद्धान् गुल्मनिवर्हणान् योगान् प्रवक्ष्यामि ॥ १९ ॥

आदौ वातिके क्रियाक्रममाह—रूक्षव्यायामजमिति । रूक्षव्यायामजं रूक्षजं व्यायामजं च । तीव्रवेदनं । बद्धविण्मारुतं बद्धवातशकृतं । वातिकं गुल्मं आदितः प्रथमतः उत्पन्नमात्रं स्नेहैः उपाचरेत् भिषक् ॥ २० ॥

स्नेहो यथा कार्यस्तद् दर्शयन् स्निग्धस्य स्वेदमाह—भोजनाभ्यंजनैरिति । भोजना-

२१ । पानैः सर्पिषः सानुवासनैः इति ग पुस्तके ।

स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्वणम् ।
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥२२॥
स्नेहपानं हितं गुल्मे विशेषेणोर्ध्वनाभिजे ।
पक्वाशयगते वस्तिरुभयं जठराश्रये ॥२३॥
दीप्तेऽग्नौ वातिके गुल्मे विबन्धेऽनिलवर्चसोः ।
बृंहणान्यन्नपानानि स्निग्धोष्णानि प्रयोजयेत् ॥२४॥

भ्यंजनैः भोजनैः अभ्यंजनैरभ्यंगैश्च । पानैः । निरूहैः सानुवासनैः अनुवासनैश्च । भोजनादिभिरवचारितैः स्नेहैः स्निग्धस्य गुल्मिनः गुल्मशान्तये भिषजा स्वेदः कर्तव्यः। स्नेहानन्तरं स्वेदः कार्यः ॥ २१ ॥

स्रोतसामित्यादि। स्निग्धस्य स्वेदः स्नेहपूर्वकः स्वेदः स्रोतसां मार्दवं मृदुत्वं कृत्वा उल्वणं मारुतं वातं जित्वा वातवर्च्चसोः विबन्धं भित्त्वा च गुल्मं अपोहति ॥ २२ ॥

स्नेहपानमिति। ऊर्ध्वनाभिजे नाभेरूर्ध्वे उपरिष्टात्। हृदीत्यर्थः। जाते गुल्मे। स्नेहपानं विशेषेण हितं। पक्वाशयगते पक्वाशयस्याधोभागगते गुल्मे। वस्तिजे इत्यर्थः। वस्तिः निरूहः सानुवासनः विशेषेण हितः। जठराश्रये नाभिगते पार्श्वगते च गुल्मे उभयं स्नेहपानं वस्तिश्च एतदुभयं विशेषेण हितं। तथाच—तत्र हृदयजे विशेषेण स्नेहपानमिच्छन्ति। 'वस्तिजे वस्तिं। उभयं नाभिपार्श्वाश्रये। इति ( अ० सं० चि० १६ ) ॥ २३ ॥

दीप्तेऽग्नाविति। वातिके गुल्मे अग्नौ दीप्ते अनिलवर्चसोः विबन्धे वातशकृतोः विबन्धे। विबद्धवातवर्चा वातगुल्मी दीप्ताग्निश्चेत् तदा तस्मै। स्निग्धोष्णानि बृंहणानि च अन्नपानानि प्रयोजयेत् भिषक् कफपित्तानुरक्षी। कफपित्तौ यथा न वर्धेयातां तथा कुर्वन् ॥ २४ ॥

पुनः पुनः स्नेहपानं निरूहाः सानुवासनाः ।
प्रयोज्या वातगुल्मेषु कफपित्तानुरक्षिणा ॥२५॥
कफो वाते जितप्राये पित्तं शोणितमेव च ।
यदि कुप्यति वा तस्य क्रियमाणे चिकित्सिते ॥२६॥
यथोल्वणस्य दोषस्य तत्र कार्यं भिषग्जितम्
आदावन्ते च मध्ये च मारुतं परिरक्षता ॥२७॥
वातगुल्मे कफो वृद्धो हत्वाग्निमरुचिं यदि ।
हृल्लासं गौरवं तन्द्रां जनयेदुल्लिखेत् तु तम् ॥२८॥

पुनः पुनरिति । वातगुल्मेषु अग्नौ दीप्ते अनिलवर्चसोः विबन्धे भिषजा कफपित्तानुरक्षिणा कफपित्तयोः रक्षणं कुर्वता सतैव । कफपित्ते यथा न वर्द्धयातां तथा कुर्वता । पुनः पुनः स्नेहपानं सानुवासनाः निरूहाश्च प्रयोज्याः । स्निग्धोष्णानि बृंहणानि च अन्नपानानि चापि तथा प्रयोज्यानि ॥ २५ ॥

वातगुल्मे यथा दोषान्तरानुबन्धो भवति दोषान्तरानुबन्धे च यथा कार्यं तदाह—कफ इत्यादि । तस्य वातस्य चिकित्सिते क्रियमाणे सति । तेन च वाते जितप्राये सत्यपि यदि कफः पित्तं शोणितं चापि कुप्यति । कफादीनां रक्षणमकृत्वा स्निग्धोष्णबृंहणान्नपानादीनामुपयोगात् । शोणितस्य पृथग् ग्रहणं दोषवत्तस्य पृथक् चिकित्साख्यापनार्थं । तदा तत्र गुल्मे यथोल्वणस्य दोषस्य अनुबन्धरूपो यो दोषः कफः पित्तं शोणितं वा उल्वणः प्रवृद्धः तस्य भिषग्जितं चिकित्सितं । आदौ मध्ये अन्ते च सर्वकालमित्यर्थः । मारुतं वातं नेतारं परिरक्षता सतैव । उल्वणतत्तद्दोषचिकित्सया यथा वातवृद्धिर्न स्यात् तथा कार्यं कर्तव्यं ॥२६।२७॥

कफवृद्धौ लिंगं क्रियाक्रमं चाह—वातगुल्मे इति । वातगुल्मे कफः वृद्धः सन् यदि अग्निं हत्वा अग्निसादं कृत्वा अरुचिं हृल्लासं गौरवं गुरुगात्रत्वं तन्द्रां च जनयेत् । कफवृद्धौ अग्निसादादयः । तदा तं उल्लिखेत् वमनेन हरेत् ॥२८॥

---

२५ । कफपित्तानुरक्षिणः इति ठ पुस्तके ।
२६ । कफे वाते जितप्राये इति ग ट ग पुस्तकेषु ।

शूलानाहविबन्धेषु गुल्मे वातकफोल्वणे ।
वर्त्तयो गुड़िकाश्चूर्णं कफवातहरं हितम् ॥२९॥
पित्तं वा यदि संवृद्धं सन्तापं वातगुल्मिनः ।
कुर्य्याद्विरेच्यः स भवेत् सस्नेहैरानुलोमिकैः ॥३०॥
गुल्मो यद्यनिलादीनां कृते सम्यग्भिषग्जिते ।
न प्रशाम्यति रक्तस्य सोऽवसेकात् प्रशाम्यति ॥३१॥
स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम् ।
रूक्षोष्णेन तु सम्भूते सर्पिः प्रशमनं परम् ॥३२॥

शूलानाहेति । वातकफोल्वणे गुल्मे कफोल्वणे वातगुल्मे । शूलानाहविबन्धेषु । वर्तयः । गुडिकाः । कफवातहरं चूर्णं । निर्यूहश्चापि । हितं । कफवातहरमिति हितमिति च वर्त्यादिष्वपि यथालिंगवचनं योज्यं । यथोक्तघृतानामौषधैर्वर्त्तिचूर्णगुडिकाक्वाथान् कोलदाडिममातुलुंगरससुरामण्डधान्याम्लोष्णोदकानामन्यतमेन प्रकल्पयेत् । तच्च पश्चात् घृतानामौषधगणा इत्यादिना वक्ष्यते ॥ २९ ॥

पित्तवृद्धौ लिंगं क्रियाक्रमञ्चाह—पित्तं वेति । अथवा पित्तं यदि संवृद्धं सत् वातगुल्मिनः अन्तः सन्तापं जनयेत् । तदा स पित्तोल्वणवातगुल्मी सस्नेहैः आनुलोमिकैः विरेचनयोगैः विरेच्यः । तदा स विरेचनार्थं सपयस्कं एरण्डतैलं पिबेत् । हितं पित्तानुगे परमिति ॥ ३० ॥

रक्तवृद्धौ शोणितमोक्षणमाह—गुल्म इति । अनिलादीनां वातपित्तयोः पित्तोल्वणवातगुल्मस्य भिषग्जिते चिकित्सिते विरेचनरूपे सम्यक् कृतेऽपि गुल्मो यदि न प्रशाम्यति । विरिक्तस्यापि यदि सन्तापानुवृत्तिः स्यात् । अनेन रक्तवृद्धिर्ज्ञेया । तदा स गुल्मः रक्तस्य अवसेकात् मोक्षणात् प्रशाम्यति । तदा रक्तमवसेचयेत् । वातगुल्मे क्रियाक्रम उक्तः ॥ ३१ ॥

पित्तगुल्मे क्रियाक्रममाह—स्निग्धोष्णेनेति । पैत्तिके गुल्मे स्निग्धोष्णेन उदिते उत्पन्ने सति स्रंसनं विरेचनं हितं । स्निग्धोष्णेन सम्भूते जाते पित्तगुल्मे स्रंसनार्थं

पित्तं वा पित्तगुल्मं वा ज्ञात्वा पक्वाशयस्थितम् ।
कालविन्निर्हरेत् सद्यः सतिक्तैः क्षीर वस्तिभिः ॥३३॥
पयसा वा सुखोष्णेन सतिक्तेन विरेचयेत् ।
भिषगग्निबलापेक्षी सर्पिषा तैल्वकेन वा ॥७४॥
तृष्णाज्वरपरीदाहशूलस्वेदाग्निमार्द्दवे ।
गुल्मिनामरुचौ चापि रक्तमेवावसेचयेत् ॥३५॥

मधुना कम्पिल्लकमवलिह्यात् । द्राक्षाभयारसं वा सगुडं पिबेत् । वक्ष्यमाणवचनञ्च—द्राक्षाभयारसमित्यादि । रूक्षोष्णेन सम्भूते जाते तु पैत्तिके गुल्मे सर्पिः परं प्रशमनं । रूक्षोष्णसमुद्भूते पुनः संशमनार्थं तिक्तकं घृतं वासाद्यं घृतं वा त्रायमाणाद्यं द्राक्षाद्यं वापि वक्ष्यमाणं पिबेत् ॥ ३२ ॥

पित्तं वेति । पित्तं वा पित्तगुल्मं वा पक्वाशये स्थितं ज्ञात्वा कालवित् भिषक् सद्यः तत्क्षणात् सतिक्तैः क्षीरवस्तिभिः पटोलारिष्टपत्राणीत्यादिना ज्वरचिकित्सिते प्रागुक्तैः निर्हरेत् शोधयेत् । पित्ते वस्तिः वातस्थानस्थितत्वात् । अथवा भिषक् अग्निबलापेक्षी अग्निबलापेक्षया सतिक्तेन तिक्तद्रव्यशृतेन सुखोष्णेन कोष्णेन पयसा तिक्तकेन सर्पिषा वा विरेचयेत् ॥ ३३ । ३४ ॥

तृष्णाज्वरेत्यादि । एवमसिद्धौ । तृष्णा । ज्वरः । परीदाहः परि समन्तात् दाहः । शूलं । स्वेदः । अग्निमार्द्दवं अग्निमांद्यं च । तेषां समाहारः तत् । तस्मिन् सति । अरुचौ च सत्यां । विदाहपूर्वरूपेषु । तृष्णादीनि विदाहपूर्वरूपाणि । गुल्मिनां रक्तमेव अवसेचयेत् स्रावयेत् । रक्तमोक्षे कृते । छिन्नं मूलं विदाहस्य कारणं रक्ताख्यं येषां ते छिन्नमूलाः सन्तः । गुल्माः न विदह्यन्ते न पच्यन्ते । किन्तु क्षयं यान्ति च । कुतः ?

---

३३ । सपित्तैः क्षीरवस्तिभिः इति ङ पुस्तके ।

३३ । काले विनिर्हरेत् सद्यः सतिक्तैः क्षारवस्तिभिः इति ख पुस्तके ।

३४ । सर्पिषा तिक्तकेन वा इति ठ पुस्तके । सर्पिषा तिल्वकेन वा इति ग पुस्तके ।

छिन्नमूला विदह्यन्ते न गुल्मा यान्ति च क्षयम् ।
रक्तं हि व्यम्लतां याति तच्च नास्ति न चास्ति रुक् ॥३६॥
हृतदोषं परिम्लनं जांगलैस्तर्पितं रसैः ।
समाश्वस्तं सशेषार्त्तिं सर्पिरभ्यासयेत् पुनः ॥३७॥
रक्तपित्तातिवृद्धत्वात् क्रियामनुपलभ्य च ।
यदि गुल्मो विदह्येत शस्त्रं तत्र भिषग्जितम् ॥३८॥
गुरुः कठिनसंस्थानो गूढ़मांसोऽन्तराश्रयः ।
अविवर्णः स्थिरः स्निग्धो ह्यपक्वो गुल्म उच्यते ॥३९॥

हि यतः रक्तं व्यम्लतां व्यम्लीभावं पाकं याति । रक्तं हि विदाहहेतुः । तच्च रक्तं न अस्ति चेत् स्रावितत्वात् । तदा तदुत्था रुगपि न अस्ति निवर्त्तते ॥३५ । ३६॥

हृतदोषमिति । हृतदोषं स्रुतरक्तं । तेन परिम्लानं क्षीणवलं । ततः जांगलैः रसैः जांगलमांसरसैः तर्पितं । समाश्वस्तं लब्धवलं । गुल्मिनं । सशेषार्त्तिं । स चेत् सावशेषार्त्तिः स्यात् तदा । तं अर्त्तिशेषनाशाय पुनः सर्पिः अभ्यासयेत् ॥ ३७ ॥

रक्तपित्तेति । रक्तपित्तयोरतिवृद्धत्वात् वा । क्रियां रक्तमोक्षणरूपां अनुपलभ्य अनासाद्य वा । रक्तावसेकस्याकरणात् । करणेऽपि रक्तपित्तयोरतिवृद्धत्वात् वा । गुल्मो यदि विदह्येत पच्येत तदा तत्र पक्वे गुल्मे शस्त्रं शस्त्रकर्म भिषग्जितं चिकित्सितं ॥ ३८ ॥

विदाहप्रसंगात् गुल्मानामामपच्यमानपक्वानां लक्षणानि क्रमेणाह । तत्रादौ आमस्य लक्षणं—गुरुरिति । गुरुः । कठिनसंस्थानः कठिनाकृतिः । गूढमांसः मांसेन गूढः दुर्लक्ष्यः । अन्तराश्रयश्चेति गूढमांसोऽन्तराश्रयः । न विवर्णः अविवर्णः गात्रसवर्णः । त्वक्सवर्णतेति सुश्रुतः ( सु० सू० १७ ) । स्थिरः । स्निग्धश्च । एवंविधो गुल्मः अपक्वः आमः उच्यते ॥ ३९ ॥

---

३७। हृतदोषं परिम्लानं इति ठ पुस्तके ।

दाहशूलार्त्तिसंक्षोभस्वप्ननाशारतिज्वरैः ।
विदह्यमानं जानीयाद् गुल्मं तमुपनाहयेत् ॥४०॥
विदाहलक्षणे गुल्मे वहिस्तुंगे समुन्नते ।
श्यावे सरक्तपर्यन्ते संस्पर्शे वस्तिसन्निभे ॥४१॥

पच्यमानस्य लक्षणमाह—दाहशूलेति । दाहः । शूलं विच्छिन्ना रुक् । अर्त्तिभिः तोदच्छेदभेदादिरूपविविधवेदनाभिः संक्षोभः । अर्तीनां प्रादुर्भावः इत्यर्थः । स्वप्ननाशः अनिद्रा । अरतिः चेतसः अनवस्थितत्वं । स्थानाशनसयनादिषु न शान्तिमुपैति । अरतीत्यत्र क्वचित् अरुचीति पाठः । ज्वरश्च । तैः । एभिर्लिंगैः गुल्मं विदह्यमानं पच्यमानं जानीयात् भिषक् । तथाच आमपक्वैषणीये सुश्रुतः—सूचिभिरिव निस्तुद्यते । दश्यत इव पिपीलिकाभिः । ताभिश्च संसर्प्यत इव । छिद्यत इव शस्त्रेण । भिद्यत इव शक्तिभिः । ताड्यत इव दण्डेन । पीड्यत इव पाणिना घट्ट्यत इव चांगुल्या । दह्यते । पच्यत इव चाग्निक्षाराभ्यां । ओपचोषपरीदाहाश्च भवन्ति । वृश्चिकविद्ध इव च स्थानासनशयनेषु न शान्तिमुपैति । आध्मातवस्तिरिवाततश्च शोफो भवति । त्वग्वैवर्ण्यं । शोफाभिवृद्धिः । ज्वरः । दाहः । पिपासा । भक्तारुचिश्च पच्यमानलिंगं । इति (सु० सू० १७) । विदह्यमानं ज्ञात्वा तं उपनाहयेत् साधुपाकार्थं पिण्डैर्वध्नीयात् ॥ ४० ॥

पक्वस्य लक्षणमाह—विदाहलक्षण इति । विदाहलक्षणे उक्तदाहशूलादिविदह्यलक्षणयुक्ते गुल्मे वहिस्तुंगे वहिरागते । आमस्तु गूढमांसोऽन्तराश्रयः । समुन्नते मध्ये सम्यक् उन्नते । मध्योन्नततेति वृद्धवाग्भटः ( अ० सं० सू० ३८ ) । तेन प्रान्तेषु निम्ने । तदुक्तं—नामोऽन्तेषून्नतिर्मध्ये । इति ( अ० हृ० सू० २९ ) । श्यावे सरक्तपर्यन्ते ईषद्रक्तप्रान्ते । संस्पर्शे वस्तिसन्निभे वस्तिसदृशस्पर्शे पूयपूरितत्वात् जलपूर्णवस्तिसमस्पर्शे । वस्तिश्चर्मपुटकं । तथाच वक्ष्यति—रुग्दाहरागतोदैश्च विदग्धं शोफमादिशेत् । जलवस्तिसमस्पर्शं सम्पक्वं पिण्डितोन्नतं ॥ इति ( च० चि० २५ ) । निपीडितोन्नते निपीडितमुक्ते प्रत्युन्नते । अंगुल्या निपीडितः अधो गच्छति । मुक्तः

निपीड़ितोन्नते स्तब्धे सुप्ते तत्पार्श्वपीड़नात् ।
तत्रैव पिण्डिते शूले संपक्वं गुल्ममादिशेत् ॥४२॥
तत्र धन्वन्तरीयाणामधिकारः क्रियाविधौ ।
वैद्यानां कृतयोगानां व्यधशोधनरोपणे ॥४३॥

पुनरुन्नमति । स्तब्धे च । एवंविधे सति । तथा तत्पार्श्वपीडनात् गुल्मिनि सुप्ते लब्धनिद्रे सति । गुल्मस्य पार्श्वपीडनेन पुंसः सुखेन निद्रायां प्राप्तायां । एतदपि पक्वस्य लक्षणं । शूले । तत्रैव पिंडिते स्थानान्तरत्यागेन तत्रैव संहते सति । तदुक्तं—तत्रैव पिंडिते शूले तत्पार्श्वपीडनेन लब्धसुप्तौ शस्त्रकर्मविधिनिर्दिष्टैश्च चिह्नैः पक्वमुपलक्ष्य । इति ( अ० सं० चि० १५ ) । गुल्मं संपक्वं सम्यक् पक्वं आदिशेत् ॥ ननु इह गुल्मस्य पाक उच्यते । सुश्रुतः पुनस्तं प्रतिषेधति । तथाच—विशेषमथ वक्ष्यामि स्पष्टं विद्रधिगुल्मयोः । 'तुल्यदोषसमुत्थानाद् विद्रधेर्गुल्मकस्य च ॥ कस्मान्न पच्यते गुल्मो विद्रधिः पाकमेति च ।न निबन्धोऽस्ति गुल्मानां विद्रधिः सनिबन्धनः ॥ गुल्माकाराः स्वयं दोषा विद्रधिर्मांसशोणिते । विचरानुचरो ग्रन्थिरप्सुबुद्बुदको यथा । एवंप्रकारो गुल्मस्तु तस्मात् पाकं न गच्छति । मांसशोणितबाहुल्यात् पाकं गच्छति विद्रधिः ॥ मांसशोणितहीनत्वाद् गुल्मः पाकं न गच्छति । गुल्मस्तिष्ठति दोषे स्वे विद्रधिर्मांसशोणिते ॥ विद्रधिः पच्यते तस्मात् गुल्मश्चापि न पच्यते । इति ( सु० नि० ६ ) । तर्हि सुश्रुतवचनेन विरोधः स्यात् । इति चेत् ? न विरोधः । तत्र गुल्मस्य विद्रधिवत् पाकः प्रतिषिध्यते । अयमाशयः । भृशदुष्टरक्ताश्रयत्वात् विद्रधिर्यथा शीघ्रपाको भवति । दुष्टरक्तातिमात्रत्वात् स वै शीघ्रं विदह्यते । ततः शीघ्रविदाहित्वाद् विद्रधीत्यभिधीयते ॥ इति (च० सू० १७) । नैवं गुल्मः । स्वदोषाधिष्ठानो हि सर्वो भवति गुल्मः । तदा चिरेण पाकमेति । नैव वा पाकं । गुल्मश्चापि न पच्यते इति अपिशब्देन गुल्मः पच्यतेऽपि इति गुल्मस्य पाकित्वं तत्रापि समुच्चीयते ॥४१।४२॥

तत्रेति । तत्र तस्मिन् सम्पक्वे गुल्मे क्रियाविधौ क्रियानुष्ठाने चिकित्साकरणे

४२ । निपिण्डितोन्नतत्वे च स्वप्ने तत्पार्श्व पीडनात् इति ख पुस्तके ।
४२ । तत्रैव पीडिते शूले इति ख ग पुस्तकयोः ।

अन्तर्भागस्य चाप्येतत् पच्यमानस्य लक्षणम् ।
हृत्क्रोड़शूलमन्तःस्थे वहिःस्थे पार्श्वनिर्गतिः ॥४४॥
पक्वः स्रोतांसि संक्लिद्य वहत्यूर्ध्वमधोऽपि च ।
स्वयं प्रवृत्तं तं दोषमुपेक्षेत हिताशनैः ॥४५॥
दशाहं द्वादशाहं वा रक्षन् भिषगुपद्रवात् ।
तत ऊर्ध्वं हितं पानं सर्पिषः सविशोधनम् ॥४६॥

धन्वंन्तरीयाणां धन्वन्तरितन्त्राध्यायिनां शल्यतन्त्रविदां । व्यधशोधनरोपणे । व्यधे व्यधने । शोधने अन्तर्दोषाहरणे । रोपणे क्षतादेः पूरणे च । कृतयोगानां कृताभ्यासानां । दक्षाणामित्यर्थः । वैद्यानां भिषजामेव अधिकारः । ॥ ४३ ॥

अन्तर्भागस्येति । वहिर्भागस्य गुल्मस्य पच्यमानस्य यत् लक्षणं दाहशूलादिकमुक्तं तत् एतदेव लक्षणं अन्तर्भागस्य अन्तःस्थस्यापि गुल्मस्य पच्यमानस्य ज्ञेयं । यद्यपि गुल्मः सर्व एवान्तः स्थितः । तथापि यो वहिरुन्नतो न भवति स इहान्तर्भागोऽभिप्रेतः । विशेषमाह—हृत्क्रोडशूलमिति । तत्र अन्तःस्थे गुल्मे पच्यमाने सति हृत्क्रोडस्य हृदः क्रोडस्य उदरस्य च शूलं वेदना । वहिःस्थे तु पच्यमाने पार्श्वनिर्गतिः पार्श्वाभ्यां निर्गतिः स्फीतत्वेन निर्गमः वहिस्तुंगता । उक्तञ्च—गुल्मेऽन्तराश्रये वस्तिकुक्षिहृत्प्लीहवेदना । अग्निवर्णवलभ्रंशो वेगानां चाप्रवर्त्तनं ॥ अतोविपर्ययो वाह्ये कोष्ठांगेषु तु गतिरुक् । वैवर्ण्यमवकाशस्य वहिरुन्नतताधिकं ॥ इति (अ०सं०नि ११) ॥४४॥

पक्व इति । गुल्मः अन्तः पक्वः स्वयं भिन्नश्चेत् स्रोतांसि संक्लिद्य स्वयं ऊर्ध्वं-उर्ध्वमार्गेण अधः अधोमार्गेण वा वहति पूयं । तदा भिषक् उपद्रवात् रक्षन् । उपद्रवा ज्वरादयो यथा न जायेरन् तथा कुर्वन् । उपद्रवेभ्यः आतुरं रक्षन् स्वयं ऊर्ध्वं अधो वा प्रवृत्तं तं दोषं पूयं दशाहं द्वादशाहं वा यावत् पूयस्य सम्यक् आस्रावः हिताशनैः उपेक्षेत । यथा उपद्रवेभ्यो रक्षा भवति तथा केवलं हितमन्नपानं दद्यात् । न तु किंचित् भेषजं कुर्यात् । अत ऊर्ध्वं दशाहात् द्वादशाहात् वा परं सविशोधनं सर्पिषः पानं

४४ । अन्तर्भागस्य चाप्यन्तं समलिंगं विदह्यतः इति ढ पुस्तके ।

४४ । हृत्क्लोमशून्यतान्तः स्थे इति ख पुस्तके ।

शुद्धस्य तिक्तं सक्षौद्रं प्रयोगे सर्पिरिष्यते ।
अन्तर्विद्रधिवच्चात्र कार्ये शोधनरोपणे ॥४७॥
शीतलैर्गुरुभिः स्निग्धैर्गुल्मे जाते कफात्मके ।
अवम्यस्याल्पकायाग्नेः कुर्य्याल्लङ्घनमादितः ॥४८॥
मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता ।
सोत्क्लेशा चारुचिर्यस्य स गुल्मी वमनोपगः ॥४९॥
उष्णैरेवोपचर्यश्च कृते वमनलंघने ।
योज्यश्चाहारसंसर्गो भेषजैः कटुतिक्तकैः ॥५०॥

सर्पिषा शोधनं हितं मतं । ततः परं तैल्वकघृतेन त्रायमाणाघृतेन वा यथाबलं शोधयेत् ॥ ४५ । ४६ ॥

शुद्धस्येति । शुद्धस्य गुल्मिनः तिक्तं तिक्तद्रव्यसाधितं सर्पिः सक्षौद्रं मधुयुतं प्रयोगे इष्यते प्रयोज्यं । विशुद्धश्च तिक्तकं सर्पिः मधुना उपेतमल्पमल्पमुपयुंजीत । अत्र अन्तः पक्वे गुल्मे अन्तर्विद्रधिवत् अन्तर्विद्रधाविव शोधनरोपणे कार्ये शोधनं रोपणं च कर्त्तव्यं । पित्तगुल्मे क्रियाक्रमः उक्तः ॥४७॥

कफगुल्मे क्रियाक्रममाह—शीतलैरिति । शीतलैः गुरुभिः स्निग्धैः अन्नपानैः अचेष्टनादिभिश्चापि । एभिर्हेतुभिः जाते कफात्मके गुल्मे अवम्यस्य वमनानर्हस्य । अवम्या बालवृद्धगर्भिण्यादयः पञ्चकर्मीयसिद्धौ वक्ष्यमाणाः । अल्पकायाग्नेः गुल्मिनः आदितः प्रथमतः लंघनं कुर्यात् । कफगुल्मिनं अवम्यं प्राक् उपवासयेत् । वम्यं च वामयेत् ॥ ४८ ॥

वम्यं दर्शयति—मन्दोऽग्निरिति । यस्य कफगुल्मिनः अग्निः कायाग्निः मन्दः अल्पः । वेदना मन्दा । गुरुस्तिमितकोष्ठता कोष्ठस्य गुरुत्वं स्तैमित्यं च । सोत्क्लेशा उत्क्लेशसहिता अरुचिः उत्क्लेशोऽरुचिश्च । तथाविधो गुल्मी कफगुल्मी वमनोपगः वमनयोग्यः । तथाविधं कफगुल्मिनं वामयेत् ॥ ४९ ॥

उष्णैरिति । वमनं लंघनं च तत् । तस्मिन् वमनलंघने वम्यस्य वमने अवम्यस्य च लंघने सम्यक् कृते सति । स कफगुल्मी उष्णैरेव उपचर्यः । तस्य आहारसंसर्गः

४७ । शुद्धं सतिक्तं सक्षौद्रं इति ङ पुस्तके ।
४७ । अयं श्लोको न पठ्यते ख ग च ठ ण पुस्तकेषु ।

सानाहं सविबन्धश्च गुल्मं कठिनमुन्नतम् ।
दृष्ट्वादौ स्वेदयेद्युक्त्या स्विन्नश्च विलयेद्भिषक् ॥५१॥
लङ्घनोल्लेखने स्वेदे कृतेऽग्नौ संप्रधुक्षिते ।
कफगुल्मी पिबेत् काले सक्षारकटुकं घृतम् ॥५२॥
स्थानादपसृतं ज्ञात्वा कफगुल्मं विरेचनैः ।
सस्नेहैर्वस्तिभिर्वापि शोधयेद्दाशमूलिकैः ॥५३॥

पेयादिक्रमश्च उष्णैः कटुतिक्तकैः दीपनैश्च भैषजैः योज्यः । सम्यक् लंघितो वान्तो वा श्लेष्मगुल्मी उष्णकटुतिक्तदीपनमाहारसंसर्गमाचरेत् ॥५०॥

सानाहमिति । भिषक् गुल्मं सानाहं सविबन्धं कठिनमुन्नतञ्च आदौ युक्त्या मात्रया यावत् शैथिल्यं न स्यात् तावत् बहुधा बहुशश्चापि स्वेदयेत् । स्विन्नं तं विलयेत् । स्विन्नस्य शिथिलतां गतस्य च तस्य विलयनं स्थानादपसारणं कुर्यात् स्निग्धस्विन्नशरीरावेत्यादिना वक्ष्यमाणविधिना । तथा च स्विन्ने शैथिल्यमागते च गुल्मे प्रज्वलितकुशादिगर्भां घटीं लागयेत् । तया संगृहीते गुल्मे तां घटीं बलादपसारयेत् । भिन्द्याद्वा । ततो गुल्मं वस्त्रव्यवहितं कृत्वा विमार्गाजपदादर्शानामन्यतमेन प्रपीडयेत् । प्रमृज्याच्च । ततस्तिलादिभिरुपलिप्तैर्लोहपात्रैः सुखोष्णैः स्वेदयेत् । एवममुना क्रमेण स्थानादपसरणं गुल्मस्य भवति । अष्टांगहृदये च—निगूढं यदि चोन्नद्धं स्तिमितं कठिनं स्थिरं । आनाहादियुतं गुल्मं संशोध्य विनयेदनु ॥ इति ( अ० हृ० चि १४ ) । विनयेदुपशमयेदित्यरुणदत्तः । इह संशोध्य विनयेदित्यत्र संस्वेद्य विलयेदिति पाठे हि चरकवचनेन संगतिः स्यात् ॥ ५१ ॥

लंघनोल्लेखने इति । अवम्यवम्ययोर्लंघनोल्लेखने लंघने उल्लेखने वमने च कृते स्वेदे च कृते अग्नौ अन्तरग्नौ च संप्रधुक्षिते उष्णकटुतिक्तदीपनाहारसंसर्गेण सम्यक् उद्दीपिते सति । कफगुल्मी काले योग्ये सक्षारकटुकं क्षारकटुकसाधितं घृतं पिबेत् ॥५२॥

विलयनानन्तरं यत्कार्यं तदाह—स्थानादिति । कफगुल्मं उक्तक्रमेण स्थानात् अपसृतं विलीनं ज्ञात्वा विरेचनैः सस्नेहैः स्नेहवद्भिः दाशमूलिकैः दशमूलकृतैः वस्तिभिः वस्तिसूत्रीयसिद्धौ वक्ष्यमाणैः वा शोधयेत् । स्थानादपसृते च गुल्मे विरेकान् स्नेहवतो दाशमूलिकांश्च वस्तीन् विदध्यात् ॥ ५३ ॥

५१ । स्विन्नं च विनयेद्भिषक् इति ग ठ पुस्तकयोः ।
५३ । वस्तिभिर्वापि साधयेद्दाशमूलिकैः इति ठ पुस्तके ।

मन्देऽग्नावनिले मूढ़े ज्ञात्वा सस्नेहमाशयम् ।
गुड़िकाचूर्णनिर्यूहाः प्रयोज्याः कफगुल्मिनाम् ॥५४॥
कृतमूलं महावास्तुं कठिनं स्तिमितं गुरुम् ।
जयेत् कफकृतं गुल्मं चारारिष्टाग्निकर्मभिः ॥५५॥
दोषप्रकृतिगुल्मर्त्तुयोगं बुद्ध्वा कफोल्वणे ।
बलदोषप्रमाणज्ञः चारं गुल्मे प्रयोजयेत् ॥५६॥

मन्देऽग्नाविति । कफगुल्मिनां आशयं कोष्ठं सस्नेहं स्निग्धाशनात् ज्ञात्वा स्निग्धेन अन्नपानेन जाते कफगुल्मे अग्नौ मन्दे अनिले वाते च मूढे रुद्धमार्गे सति । अग्नेरुद्दीपनार्थं । वातस्य कफरुद्धमार्गशुद्ध्यर्थं च । गुडिका वटिका । चूर्णं । निर्यूहः क्वाथश्च । ते प्रयोज्याः । मद्यसात्म्यानां पुनः अरिष्टाः । तथा च वक्ष्यति—मन्देऽग्नावरुचौ सात्म्ये मद्ये सस्नेहमश्नतां । प्रयोज्या मार्गशुद्ध्यर्थमरिष्टाः कफगुल्मिनां ॥ इति । जल्पकल्पतरुकारस्तु इह वृद्धेऽग्नावनिलेऽमूढे इति पठित्वा एवमुपचारेण वृद्धे अग्नौ अनिले वाते च अमूढे अधोगे इति व्याचष्टे । तत् सर्वथैव हेयं ॥ ५४ ॥

कृतमूलमिति । कृतमूलमन्तर्बद्धमूलं महावास्तु बह्वाभोगं भूरिदेशव्यापिनं । कठिनं । स्तिमितं । गुरुं । तथाविधं कफकृतं गुल्मं । क्षारः । अरिष्टः । अग्निकर्म च । तानि । तैः क्षारारिष्टाग्निकर्मभिः जयेदुपशमयेत् भिषक् ॥ ५५ ॥

क्षारारिष्टाग्निकर्मभिरित्युक्तं । तत्रादौ क्षारो यथा प्रयोज्यः तदाह—दोषप्रकृतीति । शरीरबलदोषाणां शरीरबलस्य दोषाणां च वृद्धिक्षपणयोः शरीरबलस्य वृद्धौ दोषाणां क्षपणे ह्रासे च कोविदः पण्डितः भिषक् । दोषः कफः । प्रकृतिः श्लेष्मला । गुल्मः स्तिमितो गुरुः । स च क्षारयोग्यो व्याधिः । ऋतुः कालः शीतोष्णवर्षदुर्दिनभिन्नः । पुमांश्चापि दुर्बलबालस्थविरादिभ्योऽन्यः । तेषां योगं क्षारकृत्यानुगुणं बुद्ध्वा कफोल्वणे गुल्मे बलदोषयोः प्रमाणज्ञः । बलदोषप्रमाणापेक्षया मात्रया । उक्तं च—तेषां यथाव्याधिबलमुपयोगः । इति ( सु० सू० ११ ) एकान्तरं एकाहान्तरं । द्व्यन्तं

एकान्तरं द्व्यन्तरं वा त्र्यहं विश्रम्य वा पुनः ।
शरीरबलदोषाणां वृद्धिक्षयणकोविदः ॥५७॥
श्लेष्माणं मधुरं स्निग्धं मांसक्षीरघृताशिनः ।
छित्त्वा छित्त्वाशयात् क्षारः क्षारत्वात् क्षारयत्यधः ॥५८॥
मन्देऽग्नावरुचौ सात्म्ये मद्ये सस्नेहमश्नताम् ।
प्रयोज्या मार्गशुद्ध्यर्थमरिष्टाः कफगुल्मिनाम् ॥५९॥
लङ्घनोल्लेखनैः स्वेदैः सर्पिःपानैर्विरेचनैः ।
वस्तिभिर्गुडिकाचूर्णक्षारारिष्टगणैरपि ॥६०॥

द्व्यहान्तरं वा । पुनस्त्र्यहं विश्रम्य त्र्यहान्तरं वा । बलदोषापेक्षया च विकल्पः । क्षारं प्रयोजयेत् । क्षीररसर्पिर्मांसरसाहारस्य ॥ ५६।५७ ॥

तत्फलमाह—श्लेष्माणमिति । मांसक्षीरघृताशिनः शरीरक्लेदनाय सक्षीरमांसरसं स्निग्धमाहारमश्नतः गुल्मिनः प्रयुक्तः क्षारः । मधुरं स्निग्धं स्थिरं च श्लेष्माणं विपरीतगुणं आशयात् स्थानात् । छित्त्वा छित्त्वा क्षारयति चालयति दोषान् इति क्षारः । क्षरणात् क्षार इति (च० श्लो० २६) । क्षरणात् क्षणनाद् वा क्षार इति सुश्रुतः । ( सु०सू ११ ) क्षारत्वात् क्षारणप्रकृतिकत्वात् श्लेमाणं आशयात् छित्त्वा छित्त्वा अधः क्षारयति पातयति ॥ ५८ ॥

क्षारमुक्त्वा अरिष्टमाह—मन्देऽग्नाविति । सस्नेहं स्निग्धमाहारमश्नतां कफगुल्मिनां । कफगुल्मे स्निग्धाहारसमुत्थे अग्नौ मन्दे सति । तथा अरुचौ सत्यां । अनिले मूढे चापि । मद्ये सात्म्ये । स च गुल्मी चेत् मद्यसात्म्यः तदा । मार्गशुद्ध्यर्थं वातस्य कफरुद्धमार्गशुद्ध्यर्थं अग्नेः संधुक्षणार्थं चापि अरिष्टाः प्रयोज्याः ॥५९॥

सम्प्रति अग्निकर्मोच्यते—लंघनोल्लेखनैरित्यादि । लंघनोल्लेखनैः । लंघनैः । उल्लेखनैर्वमनैश्च । स्वेदैः । सर्पिःपानैः । विरेचनैः । वस्तिभिः गुडिकाचूर्णारिष्टगणैः । गुडिकाभिः । चूर्णैः । निर्यूहैश्चापि । क्षारैः । अरिष्टगणैः विविधैररिष्टैश्च प्रयुक्तैरपि । यस्य पुंसः श्लैष्मिको गुल्मः कृतमूलत्वात् अन्तर्बद्धमूलत्वात् न शाम्यति

श्लैष्मिकः कृतमूलत्वाद् गुल्मो यस्य न शाम्यति ।
तस्य दाहो हृते रक्ते शरलोहादिभिर्हितः ॥६१॥
औष्ण्यात् तैक्ष्ण्याच्च शमयेदग्निर्गुल्मे कफानिलौ ।
तयोः शमाच्च सङ्घातो गुल्मस्य विनिवर्त्तते ॥६२॥
दाहे धन्वन्तरीयाणामत्रापि भिषजां बलम् ।
क्षारप्रयोगे भिषजां क्षारतन्त्रविदां बलम् ॥६३॥

लंघनवमनादिकर्मणां निष्फलत्वात् । तस्य रक्ते हृते स्राविते प्राक् रक्तमोक्षणं कारयित्वा । ततः गुल्मस्य अन्ते । शरः प्रसिद्धः । लोहः । तदादिभिः । आदिना अग्निमन्थतिन्दुककाष्ठादीनां ग्रहणं । प्रदीप्तैः दाहः हितः । तथा च—पिच्छिलमन्नं भुक्तवतो गुल्मिनः सपर्यन्तं गुल्मनिचयं वस्त्रान्तरितं कृत्वा नाभिवस्तिहृदयान्तरोमराजीः परिहरन् प्रदीप्तेन शरलोहाग्निमन्थाद्यन्यतमेन नातिगाढं परामृशेत् ॥ ६० । ६१ ॥

कथं दाहेन गुल्मस्य प्रशमो भवतीति? अत आह—औष्ण्यादिति । अग्निः । औष्ण्यात् उष्णत्वात् । तैक्ष्ण्यात् तीक्ष्णत्वाच्च । विपरीतगुणः । गुल्मे कफानिलौ कफवातौ शमयेत् । कफः शीतो मन्दः । वातः शीतो मन्दश्चापि कफसाहचर्यात् । विपरीतगुणत्वादग्निना कफवातयोः प्रशमः । ह्रासहेतुर्विशेषश्चेति । तयोः कफानिलयोः शमाच्च संघातः गुल्मस्य संहतत्वं निचयः विनिवर्त्तते ॥ ६२ ॥

दाहे इति । शस्त्रकर्मवत् अत्रापि दाहे धन्वन्तरीयाणां शल्यतन्त्रविदां भिषजां बलमधिकारः । क्षारप्रयोगे चापि । क्षारतन्त्रं क्षाराभिधायकं तन्त्रं । तत् शल्यतंत्रमेवं । अनुशस्त्रतया अग्निक्षारयोस्तत्रैव उक्तत्वात् । इत्थं च तत् अष्टांग आयुर्वेदे अवरुध्यते । तद्विदां भिषजां बलं । शस्त्रक्षाराग्निकर्मसु धन्वन्तरीयाणामधिकारात् इह तानि उद्दिष्टमात्राणि चिकित्साप्रसंगात् । विस्तारस्तु तत्र तंत्रानुसन्धेयः । कफगुल्मे क्रियाक्रम उक्तः ॥ ६३ ॥

व्यामिश्रदोषे व्यामिश्र एष एव क्रियाक्रमः ।
सिद्धानतः प्रवक्ष्यामि योगान् गुल्मनिवर्हणान् ॥६४॥
त्र्यूषणत्रिफलाधान्यविडङ्गचव्यचित्रकैः ।
कल्कीकृतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत् ॥६५॥

इति त्र्यूषणादिघृतम् ।

एत एव च कल्काः स्युः कषायः पञ्चमूलिकः ।
द्विपञ्चमूलिको वापि तद्‌ घृतं गुल्मनुत् परम् ॥६६॥

इति त्र्यूषणादिघृतमपरम् ।

सम्प्रति द्वान्द्विकसान्निपातिकेषु क्रियाक्रममाह—व्यामिश्रदोषे इति । एकैक-दोषजानां सम्बन्धे यः पृथक् पृथक् क्रियाक्रमः उक्तः स एष एव क्रियाक्रमः व्यामिश्र-दोषे संसर्गसन्निपातजे गुल्मे व्यामिश्रः यथादोषं मिलितः संसृष्टसन्निपतितरूपो ज्ञेयः । इति क्रियाक्रम उक्तः । सिद्धानिति । अतः परं क्रियाक्रमकथनानन्तरं सिद्धान् निश्चितफलान् गुल्मनिवर्हणान् गुल्मनाशनान् योगान् प्रवक्ष्यामि । तथैव प्राक् प्रति-ज्ञातत्वात् । प्रवक्षास्यतं उर्ध्वञ्च योगान् गुल्मनिवर्हणानिति ॥ ६४ ॥

अथ वातगुल्मे योगाः । तत्र त्र्यूषणाद्यं घृतमाह—त्र्यूषणेति । त्र्यूषणं त्रिकटु-शुण्ठी पिप्पली मरिचं च । पिप्पल्या पिप्पली तन्मूलञ्च गृह्यते । वक्ष्यमाणवृद्धवाग्भट-वचने पञ्चकोलेति श्रुतेः । त्रिफला । धान्यं धन्याकं । विडंगं । चव्यं । चित्रकश्च । ते । तैः त्र्यूषणादिभिः कल्कीकृतैः घृतपादिकैः । द्रवौषधानां विशिष्टपरिमाणानभिधाने सर्वत्र—जलस्नेहौषधानां तु प्रमाणं यत्र नेरितं । तत्र स्यादौषधात् स्नेहः स्नेहात्तोयं चतुर्गुणं ॥ इति ( च० क० १२ ) सामान्यपरिभाषाबलात् स्नेहात् औषधस्य पादि-कत्वं । द्रवस्य च चातुर्गुण्यं बोद्धव्यं । सक्षीरं सिद्धं क्षीरे चतुर्गुणे सिद्धं घृतं वात-गुल्मनुत् । तदुक्तं—विडंगपञ्चकोलमरिचत्रिफलाधान्यकगर्भं सपयः सर्पिर्विपक्वमिति ( अ० सं० चि० १६ ) ॥ ६५ ॥

त्र्यूषणाद्यं घृतं सक्षीरमुक्तं । सम्प्रति तदेव कषायसिद्धमाह—एत एवेति । एते

प्रसन्नया वा चीरार्थं सुरया दाड़िमेन वा ।
दध्नः सरेण वा कार्यं घृतं मारुतगुल्मनुत् ॥६७॥
हिंगुसौवर्च्चलव्योषविड़दाड़िमदीप्यकैः ।
पुष्कराजाजिधन्याकवेतसक्षारचित्रकैः ॥६८॥
शटीवचाजगन्धैलासुरसैश्च विपाचितम् ।
शूलानाहहरं सर्पिर्दध्ना चानिलगुल्मिनाम् ॥६९॥
इति हिंगुसौवर्च्चलाद्यं घृतम् ।

एव कल्काः प्रागुक्ताः त्र्यूषणादीनां कल्काः । पञ्चमूलिकः बृहत्पञ्चमूलकृतः स्वल्प-पञ्चमूलकृतो वा कषायः । द्विपञ्चमूलिकः दशमूलकृतः कषायो वा । प्रागुक्तैः त्र्यूषणा-दिभिः चित्रकान्तैः कल्कीकृतैः घृतपादिकैः पञ्चमूलकषाये दशमूलकषाये वा चतुर्गुणे सिद्धं यद् घृतं तत् परमत्यर्थं वातगुल्मनुत् ॥ ६६ ॥

प्रसन्नयेति । मारुतगुल्मनुत् घृतं यत् सक्षीरमुक्तं तत् क्षीरायोग्यस्य गुल्मिनः सम्बन्धे क्षीरार्थं क्षीरकार्यसाधनार्थं । क्षीरस्थाने प्रसन्नया अच्छया सुरया । दाडि-मेन दाडिमरसेन वा । दध्नः सरेण वापि । कार्यं पाच्यं । त्र्यूषणाद्यं घृतं एवमन्यत् यत् सक्षीरमुक्तं गुल्मी चेत् क्षीरायोग्यः तदा तत् सुरादाडिमरसदधिसराणामन्यतमेन साधयेत् ॥ ६७ ॥

हिंगुसौवर्चलाद्यं घृतमाह—हिंगुसौवर्चलेत्यादि । हिंगु । सौवर्चलविडे लवणभेदौ । व्योषं त्रिकटु । दाडिमः दाडिममूलत्वक् । दीप्यकः । अजमोदश्च । तैः । पुष्करं पुष्कर-मूलं । अजाजिः अजाजी धन्याकं । वेतसः अम्लवेतसः । क्षारः यवक्षारः । चित्रकश्च । ते । तैः । शटी । वचा । अजगन्धा । एला । सुरसं श्वेतपर्णासश्च । तैः च । तैः सर्वैः । कल्कितैः दध्ना चतुर्गुणेन च विपाचितं सर्पिः घृतं अनिलगुल्मिनां वातगुल्मिनां शूलानाहहरं । एवमेवाह सुश्रुतः—हिंगुसौवर्चलाजाजीविडदाडिमदीप्यकैः । पुष्कर-

६७ । प्रसन्नया वा चीरोत्थं इति क पुस्तके ।
६७ । दध्नो रसेन वा कार्यो घृते मारुतगुल्मिनां इति ग पुस्तके ।

हवुषाव्योषपृथ्वीकाचव्यचित्रकसैन्धवैः ।
साजाजीपिप्पलीमूलदीप्यकैर्विपचेद्घृतम् ॥७०॥
सकोलमूलकरसं सक्षीरदधिदाड़िमम् ।
तत्परं वातगुल्मघ्नं शूलानाहविमोक्षणम् ॥७१॥
योन्यर्शोग्रहणीदोषश्वासकासारुचिज्वरान् ।
वस्तिहृत्पार्श्वशूलञ्च घृतमेतद्व्यपोहति ॥७२॥
इति हवुषाद्यं घृतम् ।

व्योषधान्याम्लवेतसक्षारचित्रकैः ॥ शटीवचाजगन्धैलासुरसैश्च विपाचितं । शूला-
नाहहरं सर्पिर्दध्ना चानिलगुल्मिनां ॥ इति ( सु० चि० ४२ ) ॥६८।६९॥

हवुषाद्यं धृतमाह—हवुषेत्यादि । हवुषा मरिचवृ'तवत् दीर्घकृष्णवर्णद्रव्यभेदः । हवुषफल इति ख्याता । व्योषं त्रिकटु । पृथ्वीका हिंगुपत्री । चव्यं । चित्रकः । सैन्धवं च । तानि । तैः । अजाजी । पिप्पली । तन्मूलञ्च । दीप्यकश्च । सह अजाज्यादिभिः वर्तमानाः । तैः साजाजीपिप्पलीमूलदीप्यकैः । सकोलमूलकरसं । कोलं वदरं । सक्षीरदधिदाडिमं । तत्र दाडिमस्य रसः द्रवसाहचर्यात् । कोलमूलकदाडिमरस-दधिक्षीरयुक्तं घृतं विपचेत् । तथाच—हवुषादिभिः दीप्यकान्तैः सर्वैः कल्कितैः घृत-पादिकैः । कोलमूलकदाडिमरसदधिक्षीरेषु प्रत्येकं घृतसमेषु । तथाच—पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ । तत्र स्नेहसमान्याहुः ॥ इति ( सिद्धयोग ) । घृतं विप-चेत् । तत् तथा विपक्वं घृतं परमतीव वातगुल्मघ्नं । शूलानाहविमोक्षणं शूलानाह-विनाशनञ्च भवति । शूलानाहविबन्धनुदिति वृन्दमाधवधृतः पाठः । एतत् घृतं पीतं । योनिः योनिरोगः । अर्शांसि । ग्रहणीदोषः । श्वासः । कासः । अरुचिः । ज्वरश्च । तान् । वस्तिहृत्पार्श्वशूलञ्चापि । व्यपोहति नाशयति । अष्टांगसंग्रहे चापि—

---

७० । हवुषाव्योषपृथ्वीरचव्य……इति ङ पुस्तके ।

७१ । सकोलमूलकरसं सक्षीरदधिदाडिमं इति ख पुस्तके ।

७२ । वास्तिहृत्पार्श्वशूलं च इति ख ग पुस्तकयोः । वातहृत्पार्श्वशूलं इति ङ पुस्तके । वातासृक् पार्श्वशूलं इति ठ पुस्तके ।

पिप्पल्याः पिचुरध्यर्द्धो दाड़िमाद्द्विपलं पलम् ।
धान्यात् पञ्च घृताच्छुण्ठ्याः कर्षः क्षीरं चतुर्गुणम् ॥७३॥
सिद्धमेतैर्घृतं सद्यो वातगुल्मं व्यपोहति ।
योनिशूलं शिरःशूलमर्शांसि विषमज्वरम् ॥७४॥
इति पिप्पल्याद्यं घृतम् ।

घृतानामौषधगणा य एते परिकीर्त्तिताः ।
ते चूर्णयोगा वर्त्यस्ताः कषायास्ते च गुल्मिनाम् ॥७५॥
कोलदाड़िमघर्माम्बुसुरामण्डाम्लकाञ्जिकैः ।
शूलानाहहरी पेया बीजपूररसेन वा ॥७६॥

हवुषामरिचयाण्पिकासैन्धवदीप्यकाजाजीपञ्चकोलैः कोलमूलकदाडिमरसदधिक्षीरवत् सर्पिः सिद्धं सिद्धं शूलविबन्धहिकाध्मानप्लीहहृद्रोगग्रहणीहतनामक्रिमिव्रध्नपाण्डु-क्षयश्वासकासयोनिरोगोदरज्वरारोचकेषु । इति ( अ० सं० चि० १६ ) । याण्पिका हिंगुपत्री ॥ ७०-७२ ॥

पिप्पल्याद्यं घृतमाह—पिप्पल्या इत्यादि । पिप्पल्या अध्यर्धः पिचुः सार्द्धकर्षः । दाडिमात् दाडिममूलत्वचः द्विपलं । धान्यात् धन्याकात् पलं । घृतात् पञ्च पलानि । शुंठ्याः कर्षः । घृतात् चतुर्गुणं क्षीरं । एतैः पिप्पल्यादिभिः तत्तत्प्रमाणैः कल्कितैः चतुर्गुणे क्षीरे सिद्धं घृतं वातगुल्मं योनिशूलं शिरःशूलं अर्शांसि विषमज्वरञ्च सद्यो व्यपोहति ॥ ७३ । ७४ ॥

घृतानामित्यादि । ये एते घृतानां औषधगणाः त्र्यूषणादयः परिकीर्त्तिताः उक्ताः । ते गुल्मिनां शूलानाहनुदः चूर्णयोगाः । ताः वर्त्यः । ते च कषायाः । ताः गुडिकाश्चापि । घृतानां पाके यानि भेषजद्रव्याणि उक्तानि । गुल्मिनां शूलानाह-विबन्धेषु तैरेव चूर्णवर्त्तिगुडिकाक्वाथाः कार्याः । ते च । कोलं बदरं । दाडिमः ।

७३ । पिप्पल्याः कर्षमध्यर्धं इति ठ पुस्तके ॥ धान्यात् पंच घृतात् इति छ घ ग पुस्तकेषु ।
७६ । सुराशुक्ताम्लकांजिकैः इति ख ग पुस्तकयोः ।

चूर्णानि मातुलुङ्गस्य भावितानि रसेन वा ।
कुर्य्याद्वर्त्तीः सगुडिका गुल्मानाहार्त्तिशान्तये ॥७७॥
हिंगु त्रिकटुकं पाठां हवुषामभयां शटीम् ।
अजमोदाजगन्धे च तिन्तिडीकाम्लवेतसौ ॥७८॥
दाडिमं पुष्करं धान्यमजाजीं चित्रकं वचाम् ।
द्वौ क्षारौ लवणे द्वे च चव्यञ्चैकत्र चूर्णयेत् ॥७९॥
चूर्णमेतत् प्रयोक्तव्यमन्नपानेष्वनत्ययम् ।
प्राग्भक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥८०॥
पार्श्वहृद्वस्तिशूलेषु गुल्मे वातकफात्मके ।
आनाहे मूत्रकृच्छ्रे च गुदयोनिरुजासु च ॥८१॥

तयोः रसः । घर्माम्बु उष्णोदकं । सुरामण्डः । अम्लकाञ्जिकञ्च । तानि । तैः । वीजपूरकस्य मातुलुंगस्य रसेन वा । कोलदाडिमवीजपूरकरससुरामण्डाम्लकांजिकोष्णोदकानामन्यतमेन पेयाः ॥ ७५ । ७६ ॥

वर्त्तिगुडिकयोः कल्पनमाह—चूर्णानीति । गुल्मानाहार्त्तिशान्तये गुल्मे आनाहार्त्योः आनाहशूलयोः शान्तये भिषक् चूर्णानि यथोक्तघृतानामौषधैः कृतानि मातुलुंगस्य वीजपूरकस्य रसेन भावितानि कृत्वा तैः वर्त्तीः सगुडिकाः गुडिकाश्च कुर्यात् । चूर्णक्वाथयोः कल्पनं तु प्रसिद्धं ॥ ७७ ॥

हिंग्वादिचूर्णमाह—हिंग्वित्यादि । हिंगु । त्रिकटुकं व्योषं । पाठां । हवुषां । अभयां हरीतकीं । शटीं । अजमोदाजगन्धे अजमोदां अजगन्धां च । तिंत्तिडीकाम्लवेतसौ तिन्तिडोकं अम्लवेतसञ्च । दाडिमं । पुष्करं पुष्करमूलं । धान्यं । अजाजीं । चित्रकं । वचां । द्वौ क्षारौ स्वर्ज्जिकायवक्षारौ । द्वे लवणे सैन्धवसौवर्चले । चव्यं च । तत् सर्वं एकत्र चूर्णयेत् । अनत्ययं अनत्ययकरं अव्यापत्तिकरं एतत् चूर्णं पार्श्वहृद्वस्तिशूलेषु वातकफात्मके गुल्मे आनाहे मूत्रकृच्छ्रे गुदयोनिरुजासु गुदयोनिशूलेषु ग्रह-

८० । पेयं मन्थेनोष्णोदकेन वा इति इति ख पुस्तके ।

ग्रहण्यर्शोविकारेषु प्लीह्नि पाण्ड्वामयेऽरुचौ ।
उरोविबन्धे हिक्कायां कासे श्वासे गलग्रहे ॥८२॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन च ।
बहुशो गुड़िकाः कार्य्याः कार्म्मुकाः स्युस्ततोऽधिकम् ॥८३॥
इति हिंग्वादिगुड़िका ।
(मातुलुङ्गरसो हिंगु दाड़िमं विड़सैन्धवे ।
सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥८४॥)
शटीपुष्करहिंग्वम्लवेतसक्षारचित्रकान् ।
धान्यकञ्च यमानीञ्च विडङ्गं सैन्धवं वचाम् ॥८५॥

ण्यर्शोविकारेषु प्लीह्नि पाण्ड्वामये अरुचौ उरोविबन्धे हिक्कायां कासे श्वासे गलग्रहे च। एषु रोगेषु अन्नपानेषु आहारकाले। अथवा प्राग्भक्तं भक्तभोजनात् प्राक् प्रातः प्रयोक्तव्यं। यथा प्रयोक्तव्यं तदाह—पेयमिति। तत् मद्येन उष्णोदकेन वा पेयम् ॥ ७८-८२ ॥

हिंग्वादिगुडिकामाह—भावितमिति। एतत् चूर्णं प्रागुक्तहिंगुत्रिकटुकादि-चूर्णं मातुलुंगस्य रसेन बहुशः असकृत् भावितं कृत्वा तेन गुडिकाः कार्याः। ताः पार्श्वहृद्बस्तिशूलादिषु तथा प्रयुक्ताः ततः चूर्णादपि अधिकं कार्मुकाः कर्मणि समर्थाः उपकारिण्यः स्युः ॥ ८३ ॥

मातुलुंगेति। मातुलुंगस्य रसः। हिंगु। दाडिमं। विडसैन्धवे लवणद्वयं। हिंग्वादिकं चूर्णितं। तत् सर्वं सुरामण्डेन पातव्यं। तत् वातगुल्मरुजापहं ॥८४॥

शटीत्यादि। शटी। पुष्करं पुष्करमूलं। हिंगु। अम्लवेतसः। क्षारः यवक्षारः। चित्रकश्च। ते। तान्। धान्यकं। यमानीं। विडंगं। सैन्धवं। वचां। सचव्यपिप्पली-मूलां सदाडिमां अजगन्धां वनयमानीं। अजाजीं अजमोदां च। सर्वं चूर्णं कृत्वा

८४-८९। इमे षट्श्लोका न पठ्यन्ते ग ङ ठ य पुस्तकेषु।

सचव्यपिप्पलीमूलामजगन्धां सदाड़िमाम् ।
अजीजाश्चाजमोदाश्च चूर्णं कृत्वा प्रयोजयेत् ॥८६॥
रसेन मातुलुङ्गस्य मधुशुक्तेन वा पुनः ।
भावितं गुड़िकां कृत्वा सुपिष्टां कोलसम्मिताम् ॥८७॥
गुल्मं प्लीहानमानाहं श्वासं कासमरोचकम् ।
हिक्कां हृद्रोगमर्शांसि विविधां शिरसो रुजाम् ॥८८॥
पाण्ड्वामयं कफोत्क्लेशं सर्वजाश्च प्रवाहिकाम् ।
पार्श्वहृद्वस्तिशूलञ्च गुड़िकैषा व्यपोहति ॥८९॥
नागरार्द्धपलं पिष्ट्वा द्वे पले लुञ्चितस्य च ।
तिलस्यैकं गुड़पलं क्षीरेणोष्णेन ना पिबेत् ॥९०॥
पिबेदेरण्डतैलं वा वारुणीमण्डमिश्रितम् ।
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः ॥९१॥

चूर्णयित्वा। पुनः मातुलुंगस्य बीजपूरकस्य रसेन मधुशुक्तेन वा भावितं कृत्वा। मधुशुक्तं सन्धानभेदः। जम्बीरस्य फलरसं पिप्पलीमूलसंयुतं। मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत्। त्र्यहेण तज्जातरसं मधुशुक्तमुदाहृतं॥ इति। तेन सुपिष्टां कोलसंमितां गुडिकां कृत्वा। तत् पिष्ट्वा तेन बदरप्रमाणां गुडिकां कृत्वा तां प्रयोजयेत्। गुल्ममित्यादि। एषा गुडिका गुल्मं प्लीहानं आनाहं श्वासं कासं अरोचकं हिक्कां हृद्रोगं अर्शांसि विविधाः शिरसः रुजाः पाण्ड्वामयं पाण्डुरोगं कफस्य उत्क्लेशं सर्वजां सर्वविधां प्रवाहिकां। अतिसार एव अवस्थाभेदेन प्रवाहिकेत्युच्यते। प्रवाहिका इह श्लेष्मातिसारस्य रूपभेदः। पार्श्वहृद्वस्तिशूलञ्च व्यपोहति ॥८५-८९॥

नागरार्द्धपलमित्यादि। नागरस्य शुण्ठ्या अर्द्धपलं। लुंचितस्य निस्तुषीकृतस्य तिलस्य द्वे पले। एकं गुडपलं च। शुण्ठ्यर्धपलं लुंचिततिलपलद्वयं च पिष्टं गुडपलयुक्तं कृत्वा उष्णेन क्षीरेण ना वातगुल्मी पुमान् पिबेत्। तत् पीतं वातगुल्मं उदावर्तं योनिशूलञ्च नाशयेत्॥ ९० । ९१ ॥

---

८७। मधुयुक्तेन वा पुनः इति च पुस्तके।

श्लेष्मण्यनुबले पूर्व्वं हितं पित्तानुगे परम् ॥६२॥

(साधयेच्छुद्धशुष्कस्य लशुनस्य चतुःपलम् ।
क्षीरोदकेऽष्टगुणिते क्षीरशेषञ्च ना पिबेत् ॥६३॥
वातगुल्ममुदावर्त्तं गृध्रसीं विषमज्वरम् ।
हृद्रोगं विद्रधिं शोथं साधयत्याशु तत् पयः ॥६४॥)

इति लशुनक्षीरम् ।

(तैलं प्रसन्ना गोमूत्रमारनालं यवाग्रजं ।
गुल्मं जठरमानाहं पीतमेकत्र साधयेत् ॥६५॥

इति तैलपञ्चकम् ।

पिबेदिति । वातगुल्मी नरः वारुणीमण्डेन सुरामण्डेन मिश्रितं एरण्डतैलं पिबेत् । तदेव तैलं एरण्डतैलं पयसा वा पिबेत् । श्लेष्मणि अनुबले सति सकफश्चेत् तदा पूर्वं प्रथमं अर्थात् वारुणीमण्डमिश्रितं एरण्डतैलं पिबेत् । पित्तानुगे गुल्मे । उद्रिक्तपित्तश्चेत् तदा परमन्त्यं अर्थात् पयसा एरण्डतैलं विरेचनार्थं पिबेत् ॥ ६२ ॥

साधयेदिति । शुद्धस्य निस्तुषीकृतस्य । शुष्कस्य आपूर्णवीर्यत्वात् । लशुनस्य पिष्टस्य चतुःपलं । लशुनादष्टगुणिते क्षीरमुदकञ्च तस्मिन् क्षीरोदके । भागानुक्तेः क्षीरनीरयोः समभागत्वं । अष्टगुणत्वं च तयोर्मिलितयोरेव । साधयेत् क्षीरशेषं यावत् । ना वातगुल्मी पुमान् क्षीरशेषं क्षीरावशेषं तत् पिबेत् । तत् तथा पक्वं पयः पीतं वातगुल्मं उदावर्त्तं गृध्रसीं विषमज्वरं हृद्रोगं विद्रधिं शोथञ्च आशु साधयति शमयति ॥ ६३ । ६४ ॥

तैलमिति । तैलमेरण्डतैलं । प्रसन्ना मदिरा । गोमूत्रं । आरनालं काञ्जिकभेदः । यवाग्रजं यवक्षारश्च । सर्वं समभागं एकत्र एकीकृत्य पीतं गुल्मं जठरमुदरं आनाहञ्च साधयेत् शमयेत् ॥ ६५ ॥

पञ्चमूलीकषायेण सक्षीरेण शिलाजतु ।
पिबेत् तस्य प्रयोगेण वातगुल्मात् प्रमुच्यते ॥९६॥
इति शिलाजतुप्रयोगः ।

वाट्यं यूषेण पिप्पल्या मूलकानां रसेन वा ।
भुक्त्वा स्निग्धमुदावर्त्ताद्वातगुल्माद्विमुच्यते ॥९७॥
शूलानाहविबंधार्त्तं स्वेदयेद्वातगुल्मिनम् ।
स्वेदैः स्वेदविधावुक्तैर्नाडीप्रस्तरसङ्करैः ॥९८॥
वस्तिकर्म्म परं विद्यात् गुल्मघ्नं तद्धि मारुतम् ।
स्वे स्थाने प्रथमं जित्वा सद्यो गुल्ममपोहति ॥९९॥

पञ्चमूलीति । सक्षीरेण पंचमूलीकषायेण क्षीरसाधितमहापञ्चमूलकषायेन शिलाजतु पिबेत् वातगुल्मी । तस्य प्रयोगात् स वातगुल्मात् प्रमुच्यते । उक्तं च—क्षीरशृतेन महापञ्चमूलेन शिलाह्वयमिति ( अ॰ सं॰ चि॰ १६ ) । .१ह्रस्वञ्च शालपर्ण्यादिपञ्चमूली-ग्रहणमिति चक्रपाणिवचनं चिन्त्यं ॥ ९६ ॥

वाट्यमिति । वाट्यं यवौदनं स्निग्धं सस्नेहं पिप्पल्या यूषेण मूलकानां रसेन वा भुक्त्वा उदावर्त्तात् वातगुल्मात् च विमुच्यते ॥ ९७ ॥

शूलानाहेति । शूलं । आनाहः । विबन्धश्च । तैः आर्तः । तं तथाविधं वातगुल्मिनं स्वेदविधौ स्वेदाध्याये प्रागुक्तैः नाडीप्रस्तरसंकरैः तदाख्यैः स्वेदैः स्वेदयेत् ॥९८॥

वस्तिकर्मेति । वस्तिकर्म आस्थापनानुवासने परं गुल्मघ्नं विद्यात् । कुतः ? हि यतः तत् वस्तिकर्म पक्वाशयमनुप्रविश्य प्रथमं आदितः मारुतं वातं स्वे स्थाने पक्वाशयलक्षणे जित्वा गुल्मं वातारब्धं सद्यः अपोहति मूलच्छेदात् । तत्राप्य—आस्थापनानुवासनं तु खलु सर्वोपक्रमेभ्यो वाते प्रधानतमं मन्यन्ते भिषजः । तद्ध्यादित एव पक्वाशयमनुप्रविश्य केवलं वैकारिकं वातमूलं छिनत्ति । तत्रावजिते वाते शरीरान्तर्गतवातविकाराः प्रशान्तिमापद्यन्ते । यथा वनस्पतेर्मूले

९७ । अयं श्लोको न पठ्यते ग पुस्तके

तस्मादभीक्ष्णशो गुल्मा निरूहैः सानुवासनैः ।
प्रयुज्यमानैः शाम्यन्ति वातपित्तकफात्मकाः ॥१००॥
गुल्मघ्ना विविधा दिष्टाः सिद्धाः सिद्धिषु वस्तयः ।
गुल्मघ्नानि च तैलानि वक्ष्यन्ते वातरोगिके ॥१०१॥
तानि मारुतजे गुल्मे पानाभ्यङ्गानुवासनैः ।
प्रयुक्तान्याशु सिध्यन्ति तैलं ह्यनिलजित् परम् ॥१०२॥
नीलिनीचूर्णसंयुक्तं पूर्वोक्तं घृतमेव वा ।
समलाय प्रदेयं स्याच्छोधनं वातगुल्मिने ॥१०३॥

च्छिन्ने स्कन्धशाखाप्ररोहकुसुमफलपलाशादीनां नियतो विनाशः । तद्वत् । इति ( च० श्लो० २० ) ॥ ६६ ॥

तस्मादिति । तस्मात् गुल्मेषु सर्वोपक्रमेभ्यः वस्तिकर्मणः श्रेष्ठत्वात् वातपित्त-कफात्मकाः सर्वे गुल्माः निरूहैः सानुवासनैः आस्थापनैः अनुवासनैश्च अभीक्ष्णशः पुनः पुनः प्रयुज्यमानैः शाम्यन्ति ॥ १०० ॥

गुल्मघ्ना इति । सिद्धिषु सिद्धिस्थाने विविधाः सिद्धाः सिद्धफलाः गुल्मघ्नाः वस्तयः दिष्टाः उक्ताः । ते च गुल्मेषु प्रयुक्ताः आशु सिध्यन्ति । वातरोगिके वात-व्याधिचिकित्सिते अध्याये च गुल्मघ्नानि तैलानि विविधानि वक्ष्यन्ते । तानि तैलानि मारुतजे वातजे गुल्मे पानाभ्यंगानुवासनैः प्रविचारणैः प्रयुक्तानि आशु सिध्यन्ति सफलीभवन्ति ॥ १०१ । १०२ ॥

स्रंसनार्थमाह—नीलिनीति । समलाय वातगुल्मिने शोधनं शोधनार्थं पूर्वोक्तं घृतं त्र्यूषणाद्यघृतादिकं एव नीलिनीचूर्णसंयुक्तं नीलिनीफलचूर्णयुक्तं कृत्वा प्रदेयं स्यात् ॥ १०३ ॥

---

१०३ । समलाय प्रदेयं स्यात् इति च पुस्तके ।

नीलिनीत्रिवृतादन्तीपथ्याकम्पिल्लकैः सह ।
शोधनार्थं घृतं देयं सविड्क्षारनागरम् ॥१०४॥
नीलिनीं त्रिफलां रास्नां बलां कटुकरोहिणीम् ।
पचेद्विडंगं व्याघ्रीश्च पालिकानि जलाढ़के ॥१०५॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
दध्नः प्रस्थेन संयोज्य सुधाक्षीरपलेन च ॥१०६॥
ततो घृतपलं दद्याद्यवागूमण्डमिश्रितम् ।
जीर्णे सम्यग्विरिक्तश्च भोजयेद्रसभोजनम् ॥१०७॥
गुल्मकुष्ठोदरव्यङ्गशोफपाण्ड्वामयज्वरान् ।
श्वित्रं प्लीहानमुन्मादं घृतमेतद् व्यपोहति ॥१०८॥
इति नीलिन्याद्यं घृतम् ।

नीलिनीति । अथवा समलाय वातगुल्मिने शोधनार्थं घृतं पूर्वोक्तमेव । नीलिनी । त्रिवृता । दन्ती । पथ्या हरीतकी । कम्पिल्लकश्च । तैः चूर्णितैः सह । सविडक्षारनागरं विडयवक्षारशुण्ठीचूर्णैश्च सह देयं ॥ १०४ ॥

नीलिनीघृतमाह—नीलिनीमिति । नीलिनीं । त्रिफलां । रास्नां । बलां । कटुकरोहिणीं । विडंगं । व्याघ्रीं कण्टकारीं च । एतानि पलिकानि पलमितानि कल्कीकृतानि जलानामाढके पचेत् पादावशेषं यावत् । तेन पदावशेषेण क्वाथेन पूतेन घृतस्य प्रस्थं दध्नः प्रस्थेन च संयोज्य । सुधा स्नुही । तस्याः क्षीरं । तस्य पलं । तेन सुधाक्षीरपलेन सुधाक्षीरपलं प्रतिवाप्य । विपाचयेत् । ततः घृतपलं तथा पक्वस्य घृतस्य पलं यवागूमण्डमिश्रितं दद्यात् । तत् घृतं पलमात्रया पेयामण्डेन सह दद्यात् । पीते घृते जीर्णे च सति सम्यक् विरिक्तं तं गुल्मिनं रसभोजनं मांसरसाहारं भोजयेत् । एतत् घृतं नीलिन्याद्यं घृतं एतं । गुल्मः । कुष्टं । उदरं । व्यंगः । शोफः । पाण्ड्वामयः । ज्वरश्च । ते । तान् । श्वित्रं प्लीहानं उन्मादञ्च । व्यपोहति ॥ १०५—१०८ ॥

---

१०४ । पथ्याकंपिल्लकं सहा इति ग पुस्तके ।

१०५ । नीलिनीं त्रिवृतां रास्नां इति ग ए ठ पुस्तकेषु ।

कुक्कुटाश्च मयूराश्च तित्तिरिक्रौञ्चवर्त्तकाः ।
शालयो मदिरा सर्पिर्वातगुल्मभिषग्जितम् ॥१०६॥
हितमुष्णं द्रवं स्निग्धं भोजनं वातगुल्मिनाम् ।
समण्डवारुणीपानं पक्वं वा धान्यकैर्जलम् ॥११०॥
मन्देऽग्नौ वर्द्धते गुल्मो दीप्ते चाग्नौ प्रशाम्यति ।
तस्मान्ना नातिसौहित्यं कुर्य्यान्नातिविलङ्घनम् ॥१११॥
सर्वत्र गुल्मे प्रथमं स्नेहस्वेदोपपादिते ।
या क्रिया क्रियते सिद्धिं सा याति न विरूक्षिते ॥११२॥

वातगुल्मिनामन्नपानार्थमाह—कुक्कुटाश्चेति । कुक्कुटादयः । शालयः रक्तशालयः । मदिरा । सर्पिश्च । एतत् सर्वं वातगुल्मे भिषग्जितं पथ्यं ॥ १०६ ॥

हितमिति । उष्णं । द्रवमसान्द्रं । स्निग्धञ्च । भोजनमाहारः वातगुल्मिनां हितं । समण्डवारुणीपानं । धान्यकैः पक्वं शृतं जलं । पीयते यत् तत् पानं वा । वातगुल्मिनां हितं ॥ ११० ॥

मन्देऽग्नाविति । यतः अग्नौ मन्दे सति गुल्मो वर्द्धते । दोषाणां प्रकोपात् । अग्नौ दीप्ते च प्रशाम्यति । तेषां प्रशमात् । वक्ष्यति च—शमप्रकोपौ दोषाणां सर्वेषामग्निसंश्रितौ । इति । अग्निसंश्रितौ अग्निं दीप्तं मन्दञ्च संश्रितावाश्रितौ । तद्धेतुकावित्यर्थः । तस्मात् ना गुल्मी पुमान् न अति सौहित्यं अति भोजनं कुर्यात् । न चापि अतिचितं घनं कुर्यात् । उभयोरग्निवधहेतुत्वात् । तथाच—नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् । यथा निरिन्धनो वह्निरल्पो वातीन्धनावृतः ॥ इति (च० चि० १५) ॥१११॥

सर्वत्रेति । गुल्मो वाताद्धृते नं सम्भवति । तस्मात् सर्वत्र सर्वस्मिन् गुल्मे प्रथमं स्नेहस्वेदाभ्यामुपपादिते स्निग्धस्विन्ने या काचित् क्रिया चिकित्सा क्रियते सा यथा सिद्धिं याति सफला भवति । स्नेहस्वेदाभ्यां वाते अवजिते अन्यस्य दोषस्य अल्पेनापि यत्नेन जेतुं शक्यत्वात् । विरूक्षिते स्नेहस्वेदाभ्यामनुपपादिते तु क्रियमाणा क्रिया न तथा सिद्धिं याति । तस्मात् सर्वत्र प्रथमं स्नेहस्वेदौ वातहरौ कर्तव्यौ । इति वातगुल्मघ्ना योगाः ॥ ११२ ॥

---

११० । मितमुष्णं मवं स्निग्धं इति ग च ण पुस्तकेषु ।

भिषगात्ययिकं बुध्वा पित्तगुल्ममुपाचरेत् ।
वैरेचनिकसिद्धेन सर्पिषा तिक्तकेन वा ॥११३॥
रोहिणीकटुकानिम्बमधुकत्रिफलात्वचः ।
कर्षांशास्त्रायमाणा च पटोलत्रिवृतोः पले ॥११४॥
द्विपलञ्च मसूराणां साध्यमष्टगुणेऽम्भसि ।
शृताच्छेषं घृतसमं सर्पिषश्च चतुःपलम् ॥११५॥
पिबेत् संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः ।
ज्वरस्तृष्णा च शूलश्च भ्रमो मूर्च्छारुऽचिस्तथा ॥११६॥
इति रोहिण्याद्यं घृतम् ।

सम्प्रति पित्तगुल्मे योगानाह—भिषगिति । भिषक् पित्तगुल्मं आत्ययिकं बुद्ध्वा वैरेचनिकसिद्धेन विरेचनद्रव्यैः सिद्धेन तिक्तकेन सिद्धेन वापि सर्पिषा उपाचरेत् ११३

रोहिण्याद्यं घृतमाह—रोहिणीति । रोहिणी कटुका कटुकरोहिणी । निम्बः । मधुकं यष्टिमधु । त्रिफलात्वक् च । ताः कर्षांशाः । कटुरोहिण्यादीनि प्रत्येकं कर्ष-प्रमाणानि । त्रायमाणा च कार्षिकी । पटोलत्रिवृतोः पले द्वे प्रत्येकमेकपलं । मसूराणां द्विपलं च । तत् सर्वं कल्कीकृतं घृतात् अष्टगुणे । घृतं चतुष्पलमुक्तं । अम्भसि जले साध्यं पाच्यं । ततः शृतात् पक्वात् शेषं घृतसमं घृतसमप्रमाणं अष्टभागावशिष्ट-मित्यर्थः । तं क्वाथं सर्पिषः घृतस्य चतुष्पलं संमूर्च्छितं दण्डेन मथित्वा एकीकृतं कृत्वा पिबेत् । अपक्वमिदं घृतं । तेन पैत्तिको गुल्मः ज्वरः तृष्णा शूलं भ्रमः मूर्च्छा तथा अरुचिश्च शाम्यति ॥ ११४ । ११६ ॥

---

११३। वैरेचनिक सिद्धेन सर्पिषा तिक्तकेन वा इति ठ पुस्तके ।

११६। शूलं च भ्रमो मूर्च्छाऽरुचिस्तथा इति च पुस्तके ।

जले दशगुणे साध्यं त्रायमाणाचतुःपलम् ।
पंचभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः ॥११७॥
रोहिणी कटुका मुस्ता त्रायमाणा दुरालभा ।
कल्कैस्तामलकीवीराजीवन्तीचन्दनोत्पलैः ॥११८॥
रसस्यामलकानां च क्षीरस्य च घृतस्य च ।
पलानि पृथगष्टाष्टौ दत्त्वा सम्यग्विपाचयेत् ॥११९॥
पित्तरक्तभवं गुल्मं वीसर्पं पैत्तिकं ज्वरम् ।
हृद्रोगं कामलां कुष्ठं हन्यादेतद् घृतोत्तमम् ॥१२०॥
इति त्रायमाणाद्यं घृतम् ।
रसेनामलकेक्षूणां घृतप्रस्थं विपाचयेत् ।
पथ्यापादं पिबेत् सर्पिस्तत् सिद्धं पित्तगुल्मनुत् ॥१२१॥
इत्यामलकाद्यं घृतम् ।

त्रायमाणाद्यं घृतमाह—जले दशगुणे इति । त्रायमाणायाः चतुष्पलं कल्कितं ततो दशगुणे चत्वारिंशत्पलमिते जले साध्यं पाच्यं । ततः पञ्चभागस्थितं पञ्चम-भागावशेषं अवतार्य वस्त्रेण शृतं स्रावितं कृत्वा तं क्वाथं पुनः । कटुका रोहिणी कटुरोहिणी । मुस्ता । त्रायमाणा । दुरालभा च । तासां प्रत्येकं कार्षिकैः कर्षपरिमितैः कल्कैः । तथा तामलकी भूम्यामलकी । वीरा पृश्निपर्णी । जीवन्ती । चन्दनं । उत्पलं च । तानि । तैः कल्कैः कल्कितैः प्रत्येकं कार्षिकैश्च संयोज्य मिश्रयित्वा । आमलकानां रसस्य घृतस्य च पृथक् अष्टाष्टौ पलानि आमलकरसक्षीरघृतानां प्रत्येकमष्टौ पलानि दत्त्वा सम्यक् विपाचयेत् । एतत् घृतोत्तमं पीतं पित्तरक्तभवं गुल्मं पैत्तिकं वीसर्पं ज्वरं हृद्रोगं कामलां कुष्ठं च हन्यात् ॥११९-१२०॥

आमलकाद्यं घृतमाह—रसेनेति । आमलकेक्षूणां आमलकानां इक्षूणां च रसेन घृतस्य प्रस्थं पथ्यायाः हरीतक्याः पादे च कल्कितं विपाचयेत् । मिलिताम-लकघृतरसेक्षुरसापेक्षया घृतस्य पादिकत्वं । पथ्यायाश्चैवं । हरीतक्या गुरुत्वेन घृतापेक्षया पादिकत्वमिति मत्पितृचरणाः । तथा सिद्धं तत् सर्पिः पित्तगुल्मनुत् ॥ १२१ ॥

द्राक्षां मधूकं खर्जूरीं विदारं सशतावरीम् ।
परूषकाणि त्रिफलां साधयेत् पलसम्मिताम् ॥१२२॥
जलाढ़के पादशेषं रसमामलकस्य च ।
घृतमिक्षुरसं क्षीरमभयाकल्कपादिकम् ॥१२३॥
साधयेत् तद् घृतं सिद्धं शर्कराक्षौद्रपादिकम् ।
प्रयोगात् पित्तगुल्मघ्नं सर्वपित्तविकारनुत् ॥१२४॥
इति द्राक्षाद्यं घृतम् ।
वृषं समूलमापोथ्य पचेदष्टगुणेऽम्भसि ।
शेषेऽष्टभागे तस्यैव पुष्पकल्कं प्रदापयेत् ॥१२५॥

द्राक्षाद्यं घृतमाह—द्राक्षामिति । द्राक्षां । मधूकं मधूकपुष्पं । खर्ज्जूरं । विदारीं सशतावरीं च । परूपकाणि । त्रिफलां च । पलसंमितां । पलसंमितामित्येतत् द्राक्षादिष्वपि यथालिंगवचनं योज्यं । जलानामाढके चतुःप्रस्थे साधयेत् क्वाथयेत् पादशेषं पचेत् । पादशेषं प्रस्थमितं तं क्वाथं आमलकस्य रसं स्वरसं घृतं इक्षुरसं क्षीरं च प्रत्येकं पादिकं । अभयायाः हरीतक्याः कल्कः पादिकं यत्र तत् अभयाकल्कपादिकं । पादिकं अभयाकल्कं च दत्त्वा । एकत्र पुनः साधयेत् पाचयेत् । तथाच द्राक्षादीनि प्रत्येकं पलमितानि कल्कितानि अपामाढके क्वाथयित्वा पादशेषमवतारयेत् । तस्मिन् पादशेषे क्वाथे आमलकरसं इक्षुरसं प्रत्येकं पादिकं अभयाकल्कं च पादिकं दत्त्वा घृतं पाचयेत् । सिद्धं तथा विपाचितं घृतं शर्कराक्षौद्रे शर्करामधुनी पादिके प्रक्षेप्यत्वेन यत्र तत् शर्कराक्षौद्रपादिकं प्रयोगात् पादिकशर्करमधुप्रक्षेपयुक्तं कृत्वा प्रयुक्तं पित्तगुल्मघ्नं सर्वपित्तविकारनुच्च भवति ॥ १२२-१२४ ॥

वासाघृतमाह—वृषमित्यादि । समूलं सशाखं सपलाशं चापि वृषं वासकं आपोथ्य कल्कीकृत्य ततोऽष्टगुणे जले पचेत् क्वाथयेत् अष्टभागशेषं पचेत् । अष्टभागे शेषे अष्टांशावशिष्टे तस्मिन् क्वाथे तस्य वासकस्यैव पुष्पकल्कं चतुष्पलमितं । तथाच— शणस्य कोविदारस्य वृषस्य ककुभस्य च । कल्काढ्यत्वात् प्रशसन्ति पुष्पकल्कं चतु-

---

१२२। द्राक्षां मधुकं खर्ज्जुरं इति क पुस्तके ।

तेन सिद्धं घृतं शीतं सक्षौद्रं पित्तगुल्मनुत् ।
रक्तपित्तज्वरश्वासकासहृद्रोगनाशनम् ॥१२६॥

इति वासाघृतम् ।

द्विपलं त्रायमाणाया जलद्विप्रस्थसाधितम् ।
अष्टभागस्थितं पूतं कोष्णं क्षीरसमं पिबेत् ॥१२७॥
पिबेदुपरि तस्योष्णं क्षीरमेव यथाबलम् ।
तेन निर्हृतदोषस्य गुल्मः शाम्यति पैत्तिकः ॥१२८॥

ष्पलं ॥ इति । प्रदापयेत । तेन तत् पुष्पगर्भेण क्वाथेन सिद्धं पूतं शीतं घृतं सक्षौद्रं मधु-प्रक्षेपयुक्तं । प्रक्षेपश्च पादिकः । पीतं पित्तगुल्मनुत् । रक्तपित्तज्वरादिनाशनं च भवति। वासाघृतं रक्तपित्तचिकित्सिते वासां सशाखामित्यादिना प्रागुक्तं यद्यपि तथापि इह पुनरुच्यते द्रवादिमानं विशिष्य अभिधातुं। इह विशेषवचनात् तत्रापि क्वाथः अष्टगुणे जले अष्टभागशेष एव कार्यः। न तु सामान्यक्वाथविधिना चतुर्गुणे पादशेषः। तथा च रक्तपित्तचिकित्सिते वृद्धवाग्भटः— समूलमस्तकं क्षुन्नं वृषमष्टगुणेऽम्भसि। पक्त्वाष्टांशावशेषेण घृतं तेन विपाचयेत् ॥ तत्पुष्पगर्भं तच्छीतं सक्षौद्रं पित्तशोणितं। पित्तगुल्मज्वरश्वासकासहृद्रोगकामलाः। तिमिरभ्रमवीसर्पस्वरसादांश्च नाशयेत्॥ इति ( अ० सं० चि० ३ )। इत्थं च पित्तगुल्मे चैकं रक्तपित्ते पुनरन्यत् इति वासा-घृतद्वयं कल्पयता चक्रपाणिना रक्तपित्ते वासाघृताद्द विशेषः। तत्र हि सामान्य-परिभाषया वृषात् चतुर्गुणं जलं चतुर्भागावशिष्टं च गृह्यते। इति यदुक्तं तच्चिन्त्यं ॥ १२५ । १२६ ॥

त्रायमाणाक्षीरमाह—द्विपलमिति । त्रायमाणायाः कल्कितायाः द्विपलं । क्षीरसमं समप्रमाणं क्षीरं च । जलस्य द्विप्रस्थे अर्द्धाढके साधितं अष्टभागस्थितं अष्टमभागा-वशेषं अवतारितं पूतं वस्त्रेण गालितं च कृत्वा । कोष्णं ईषदुष्णं पिबेत् । तस्य

१२८। अयं श्लोको न पठ्यते।

द्राक्षामयारसं गुल्मे पैत्तिके सगुडं पिबेत् ।
लिह्यात् कम्पिल्लकं वापि विरेकार्थं मधुद्रवम् ॥१२६॥
दाहप्रशमनोऽभ्यङ्गः सर्पिषा पित्तगुल्मिनाम् ।
चन्दनाद्येन तैलेन तैलेन मधुकस्य वा ॥१३०॥
ये च पित्तज्वरार्त्तानां सतिक्ताः क्षीरवस्तयः ।
हितास्ते पित्तगुल्मिभ्यो वक्ष्यन्ते ये च सिद्धिषु ॥१३१॥

उपरि च उष्णं क्षीरमेव यथाबलं यथाग्निबलं पिबेत् । तत् पीत्वा सुखोष्णं क्षीरमेव अनुपिबेत् । तथाच—क्षीरं वा त्रापमाणाशृतं कोष्णं पीत्वा क्षीरमेव सुखोष्णमनुपिबेत् । इति ( अ० सं० चि० १६ ) । तेन निर्हृतदोषस्य तस्य गुल्मिनः पैत्तिकः गुल्मः शाम्यति ॥ १२७-१२८ ॥

द्राक्षाभायारसमिति । पैत्तिके गुल्मे स्निग्धोष्णेन जाते । विरेकार्थं स्रंसनार्थं । द्राक्षा । अभया हरीतकी च । तयोः रसं क्वाथं सगुडं गुडप्रक्षेपयुतं पिबेत् । कम्पिल्लकं गुण्डारोचनिकां मधुना आर्द्रीकृतं लिह्यात् । मधुना कम्पिल्लकचूर्णमवलिह्याद् वा ॥ १२६ ॥

दाहप्रशमन इति । सर्पिषा सहस्रधौतेन अभ्यङ्गः । चन्दनाद्येन तैलेन ज्वरचिकित्सिते दाहज्वरे उक्तेन वा अभ्यङ्गः । मधुकस्य यष्टीमधुनः तैलेन तत् क्वाथकल्काभ्यां साधितेन तैलेन वापि अभ्यंगः । पित्तगुल्मिनां दाहप्रशमनः दाहं शमयति ॥ १३० ॥

ये चेति । पित्तज्वरार्तानां ये च सतिक्ताः पटोलादितिक्तद्रव्यैः साधिताः क्षीरवस्तयः पटोलारिष्टपत्राणीत्यादिना प्राक् उक्ताः । यद्यपि तत्र साक्षात् पित्तज्वरहरत्वेन वस्तयो नोक्ताः तथापि पटोलादिभिः तिक्तद्रव्यैः साधितत्वात् ते पित्तज्वरहरा भवन्तीति कृत्वा इह पित्तज्वरार्त्तानामित्युक्तं । ते । तथा ये च वस्तयः सिद्धिषु सिद्धिस्थाने पश्चात् वक्ष्यन्ते ते सर्वे । पित्तगुल्मिभ्यः हिताः ॥ १३१ ॥

११० । गुल्मप्रशमनोऽभ्यंगः इति क ड पुस्तकयोः ।

शालयो जाङ्गलं मांसं गव्याजे पयसी घृतम् ।
खर्जूरामलकं द्राक्षां दाड़िमं सपरूषकम् ॥१३२॥
आहारार्थं प्रयोक्तव्यं पानार्थं सलिलं शृतम् ।
बलाविदारिगन्धाद्यैः पित्तगुल्मचिकित्सितम् ॥१३३॥
आमान्वये पित्तगुल्मे सामे वा कफवातिके ।
यवागूभिः खड़ैर्यूषैः सन्धुक्ष्योऽग्निर्विलङ्घिते ॥१३४॥
शमप्रकोपौ दोषाणां सर्वेषामग्निसंश्रितौ ।
तस्मादग्निं सदा रक्षेन्निदानानि च वर्जयेत् ॥१३५॥

पित्तगुल्मिनामन्नपानार्थमाह—शालय इति । शालयः रक्तशाल्याद्याः । जांगलं मांसं । गव्याजे पयसी गव्यमाजं च पयः । तथा घृतं । खर्जूरामलकं खर्जूरमामलकं च । द्राक्षा । दाड़िमं सपरूषकं परूषकं च फलं । एतत् सर्वं पित्तगुल्मिनां आहारार्थं प्रयोक्तव्यं । पानार्थं च बलाविदारीगन्धाद्यैः बलया विदारीगन्धादिवर्गेण च शृतं पक्वं सलिलं प्रयोक्तव्यं ॥ १३२ । १३३ ॥

आमान्वये इति । आमान्वये सामे पित्तगुल्मे सामे कफवातिके कफजे वातजे वा गुल्मे । विलंघिते सम्यक् लंघिते सति । वातिके पैत्तिके श्लैष्मिके वापि गुल्मे सामे प्राक् लंघनं कारयित्वा । अग्निः लंघनात् दुर्बलः । यवागूभिः पेयाभिः खड़ैः यूषभेदैः । तथाच—पिशितेन रसस्तत्र यूषो धान्यैः खड़ः फलैः । मूलैश्च तिलकल्काम्लप्रायः काम्बलिकः स्मृतः ॥ तेषाः कृताकृतास्ते तु स्नेहादियुतवर्जिताः । इति (अ० स० सू० ७)। यूषैश्च संधुक्ष्यः उद्दीपनीयः । यतः सर्वेषां दोषाणां वातादीनां शमप्रकोपौ अग्निं दीप्तं मन्दं च संश्रितौ आश्रितौ तस्मात् अग्निसंधुक्षणाग्निमान्द्यहेतुकौ भवतः । तस्मात् अग्निं जाठरं सदा रक्षेत् पथ्येन आहारेण स्वप्रमाणे स्थापयेत् । निदानानि गुल्मोक्तानि वर्जयेत् च गुल्मी ॥ १३४ । १३५ ॥

---

१३५ । तस्मादग्निं सदा रक्षेन्निदानानि च वर्जयेत् इति च पुस्तके ।

वमनार्हाय वमनं प्रदद्यात् कफगुल्मिने ।
स्निग्धस्विन्नशरीराय गुल्मे शैथिल्यमागते ॥१३६॥
परिवेष्ट्य प्रदीप्तांस्तु वल्वजानथवा कुशान् ।
भिषक् कुम्भे समावाप्य गुल्मं घटमुखे न्यसेत् ॥१३७॥
स गृहीतो यदा गुल्मस्तदा घटमथोद्धरेत् ।
वस्त्रान्तरं ततः कृत्वा भिन्द्याद् गुल्मं प्रमाणवित् ॥१३८॥
विमार्गाजपदादर्शैर्यथालाभं प्रपीड़येत् ।
मृद्नीयाद् गुल्ममेवैकं न त्वत्र हृदयं स्पृशेत् ॥१३९॥

पित्तगुल्मे योगा उक्ताः। सम्प्रति कफगुल्मे योगानाह—वमनार्हायेति। वमनार्हाय वम्याय स्निग्धस्विन्नशरीराय कफगुल्मिने वमनं प्रदद्यात्। वम्यं कफगुल्मिनं स्नेहस्वेदाभ्यामुपपाद्य वामयेत्। सानाहं सविबन्धञ्चेत्यत्र विलयनमुद्दिष्टं। सम्प्रति तन्निर्दिशति—गुल्मे इति। स्निग्धस्विन्नशरीरस्य गुल्मिनः गुल्मे शैथिल्यं शिथिलतां आगते प्राप्ते सति प्रमाणवित् कुम्भादीनां तत्रोचितप्रमाणज्ञः भिषक् प्रदीप्तान् वल्वजान् उलूपान् अथवा कुशान् कुम्भे घटीयन्त्रमध्ये परिवेष्ट्य समावाप्य प्रक्षिप्य वेष्टनेन अन्तः प्रवेशं कारयित्वा। परिवेश्य इति पाठेऽपि स एवार्थः। तस्य घटस्य मुखे गुल्मं न्यसेत् प्रज्वलितकुशादिगर्भं तं घटं गुल्मे लागयेत्। अथ स गुल्मः यदा तेन घटेन गृहीतः अन्तः संगृहीतः। तदा तं घटं उद्धरेत् बलादपसारयेत्। भिन्द्याद्वा उद्धरणाशक्तौ। ततः गुल्मं वस्त्रान्तरं वस्त्रव्यवहितं कृत्वा। तत्। विमार्गः। अजपदं। आदर्शो दर्पणश्च। ते। विमार्गः चर्मकाराणां चर्मणि रेखाकरणदारुमययन्त्रविशेषः। आदर्शस्य धारा क्रियायोगिनी। तैः यथालाभं विमार्गादिषु यो लभ्यते तेन एकं केवलं गुल्ममेव

१३७। परिवेष्ट्य प्रदीप्तांस्तु इति ख ग ङ ठ पुस्तकेषु। गुल्मे घटमुखं क्षिपेत् इति ख ग ङ ण पुस्तकेषु।

१३८। संगृहीतो यदा इति ख ङ पुस्तकयोः॥ भिन्द्याद् गुल्मं इति ख ग ङ पुस्तकेषु।

१३९। यथालाभं प्रपीडनैः इति ङ पुस्तके।

१३९। अयं श्लोको न पठ्यते ङ पुस्तके।

१३९। गृह्णीयाद् गुल्ममेवैकं इति च पुस्तके।

तिलैरण्डातसीबीजसर्षपैः परिलिप्य च ।
श्लेष्मगुल्ममयःपात्रैः सुखोष्णैः स्वेदयेद्भिषक् ॥१४०॥
सव्योषक्षारलवणं दशमूलीश्रृतं घृतम् ।
कफगुल्मं जयत्याशु सहिंगुविड़दाड़िमम् ॥१४१॥

इति दशमूलीघृतम् ।

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम् ।
साध्यं विदारिगन्धाद्यमापोथ्य सलिलाढ़के ॥१४२॥
पादशेषे रसे तस्मिन् पिप्पलीं नागरं वचाम् ।
विडंगं सैन्धवं हिंगु यावशूकं विड़ं शटीम् ॥१४३॥
चित्रकं मधुकं रास्नां पिष्ट्वा कर्षसमं भिषक् ।
प्रस्थञ्च पयसो दत्त्वा घृतप्रस्थं विपाचयेत् ॥१४४॥

प्रपीडयेत् मृद्नीयात् प्रमृज्याच्च । अत्र प्रपीडने हृदयं न तु नैव स्पृशेत् । किन्तु हृदयं वर्जयेत् । अन्त्रमपि वर्जयेत् । हृदयमन्त्रं च परिहरन् विमार्गाद्यन्यतमेन प्रपीडयेत् मृद्नीयाच्च । ततः भिषक् तिलैरण्डातसीबीजसर्षपैः कल्कितैः तं श्लेष्मगुल्मं परिलिप्य लेपयित्वा सुखोष्णैः अयःपात्रैः लोहपात्रैः स्वेदयेत् । एवममुना क्रमेण स्थानादपसृते सति गुल्मे स्नेहवद्भिः विरेचनैः दाशमूलिकैः वस्तिभिश्च शोधयेत् । एतदुक्तं प्राक् स्थानादपसृतं ज्ञात्वेत्यादिना ॥ १३६-१४० ॥

दशमूलीघृतमाह—सव्योषेति। सह व्योषं त्रिकटु। क्षारः यवक्षारः । लवणं सैन्धवं च । तैः वर्त्तमानं तत् । सहिंगुविडदाडिमं । व्योषादीनां कल्कैः दशमूलीश्रृतं दशमूलक्वाथे सिद्धं घृतं कफगुल्मं आशु जयति ॥ १४१ ॥

भल्लातकाद्यं घृतमाह—भल्लातकानां द्विपलमिति । भल्लातकानां भल्लातकफलानां द्विपलं द्वे पले। पलोन्मितं पलपरिमितं विदारिगन्धाद्यं विदारीगन्धाद्यं पञ्चमूलं लघु पञ्चमूलं च ।आपोथ्य संक्षुद्य ।तत् सर्वं सलिलाढके जलानामाढके चतुःप्रस्थे साध्यं क्वाथ्यं भिषजा। ततः भिषक् तस्मिन् पादशेषे प्रस्थावशेषे रसे क्वाथे। पिप्पलीं ।नागरं शुण्ठीं ।

एतद् भल्लातकघृतं कफगुल्महरं परम्।
प्लीहपाण्ड्वामयश्वासग्रहणीरोगकासनुत् ॥१४५॥

इति भल्लातकाद्यं घृतम्।

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः।
पलिकैः सयवक्षारैर्घृतप्रस्थं विपाचयेत् ॥१४६॥
क्षीरप्रस्थे च तत् सर्पिर्हन्ति गुल्मं कफात्मकम्।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥१४७॥

इति पञ्चकोलघृतम्।

त्रिवृतां त्रिफलां दन्तीं दशमूलं पलोन्मितम्।
जले चतुर्गुणे पक्त्वा चतुर्भागस्थितं रसम् ॥१४८॥

वचां। विडंगं। सैन्धवं। हिंगु। यावशूकं यवक्षारं। विडं लवणं। शटीं। चित्रकं। मधुकं यष्टिमधु। रास्नां। सर्वं कर्षसमं कर्षप्रमाणं पिष्ट्वा कल्कयित्वा दत्त्वा पयसः क्षीरस्य च प्रस्थं दत्त्वा घृतस्य प्रस्थं विपाचयेत्। एतत् भल्लातकघृतं परं कफगुल्म-हरं। प्लीहादिनुच्च ॥ १४२—१४५ ॥

पञ्चकोलघृतमाह—पिप्पलीत्यादि। पिप्पली। पिप्पलीमूलं। चव्यः। चित्रकः। नागरं शुण्ठी च। एतत् पञ्चकोलं। तैः सयवक्षारैः। पिप्पल्यादिभिः पञ्चभिः यवक्षा-रेण च एभिः षड्भिः पलिकैः प्रत्येकं पलपरिमितैः कल्कितैः क्षीरप्रस्थे च घृतस्य प्रस्थं विपाचयेत्। अत्र स्नेहात् त्रिगुणं जलं देयं। तेन द्रवस्य स्नेहाच्चातुर्गुण्यं भवति। क्षीरप्रस्थे प्रस्थत्रयमिते जले च। पञ्चकोलस्य यवक्षारस्य च षण्णां षट्पलं कल्कितं दत्त्वा घृतप्रस्थं साधयेत्। तत् सर्पिः घृतं कफात्मकं गुल्मं हन्ति। ग्रहणीपाण्डुरो-गघ्नं। प्लीहकासज्वरापहञ्च ॥ १४६। १४७ ॥

मिश्रकस्नेहमाह—त्रिवृतामित्यादि। त्रिवृतां त्रिफलां दन्तीं दशमूलञ्च प्रत्येकं पलोन्मितं। तत् सर्वं कल्कितं। ततः चतुर्गुणे जले पक्त्वा चतुर्भागस्थितं पादशेषं

१४५। अस्माच्छ्लोकादनन्तरं अधिकः पाठः—एतदेव विना क्षीरं पूतीकक्वाथसाधितं। मस्तुतुल्यं विपक्वं स्याद्रोगेष्वेष्वधिकं हितम् ॥इति ठ पुस्तके।

१४८। दशमूलं पिचून्मितं इति च पुस्तके।

सर्पिरेरण्डजं तैलं क्षीरञ्चैकत्र साधयेत् ।
स सिद्धो मिश्रकः स्नेहः सक्षौद्रः कफगुल्मनुत् ॥१४९॥
कफवातविबन्धेषु कुष्ठप्लीहोदरेषु च ।
प्रयोज्यो मिश्रकः स्नेहो योनिशूलेषु चाधिकम् ॥१५०॥

इति मिश्रकः स्नेहः ।

यदुक्तं वातगुल्मघ्नं स्रंसनं नीलिनीघृतम् ।
द्विगुणं तद्विरेकार्थं प्रयोज्यं कफगुल्मिनाम् ॥१५१॥
सुधाक्षीरद्रवे चूर्णं त्रिवृतायाः सुभावितम् ।
कार्षिकं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥१५२॥

अवतार्य तं पादशेषं रसं क्वाथं । तद्वत् सर्पिः एरण्डजं तैलं क्षीरञ्च एकत्र साधयेत् पुनः पचेत् । तथा सिद्धः स मिश्रकः स्नेहः । घृततैलयोर्मिश्रणात् मिश्रकाख्यः । सक्षौद्रः मधुप्रक्षेपयुक्तः प्रक्षेपविधिना । प्रयुक्तः सन् कफगुल्मनुत् । अयं मिश्रकः स्नेहः कफवातविबन्धेषु कुष्ठप्लीहोदरेषु योनिशूलेषु चापि अधिकं प्रयोज्यः॥ १४८–१५० ॥

यदुक्तमित्यादि । यत् वातगुल्मघ्नं स्रंसनं विरेचनं नीलिनीघृतं नीलिन्याद्यं घृतं वातगुल्मे शोधनार्थं नीलिनीं त्रिफलां रास्नामित्यादिना प्रागुक्तं तत् कफगुल्मिनामपि विरेकार्थं द्विगुणं । तत्र घृतपलमुक्तं । ततः द्विगुणप्रमाणं द्विपलमात्रया प्रयोज्यं ॥ १५१ ॥

सुधाक्षीरेति । सुधायाः स्नुह्याः क्षीरं । तदेव द्रवः । तस्मिन् सुभावितं सम्यक् भावितं त्रिवृतायाः चूर्णं कार्षिकं कर्षप्रमाणं । मधुसर्पिर्भ्यां लीढ्वा साधु सम्यक् विरिच्यते । कफगुल्मी विरेचनार्थं सुधाक्षीरभावितं कार्षिकं त्रिवृताचूर्णं घृतमधुभ्यामवलिह्यात् ॥ १५२ ॥

---

१५० । योनिदोषेषु चाधिकं इति ठ पुस्तके ।

१५२ । चूर्णं त्रिफलायाः सुभावितं इति ठ पुस्तके ।

जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः ।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च ॥१५३॥
अष्टभागावशेषन्तु रसं पूतमधिक्षिपेत् ।
दन्तीसमं गुडं पूतं क्षिपेत् तत्राभयाश्च ताः ॥१५४॥
तैलार्द्धकुड़वञ्चैव त्रिवृतायाश्चतुःपलम् ।
चूर्णितं चार्द्धपलिकं पिप्पलीविश्वभेषजम् ॥१५५॥

दन्तीहरीतकीमाह—जलद्रोणे इत्यादि । जलद्रोणे विंशतिः पञ्च च आकृतिमानेन पञ्चविंशतिः अभयाः हरीतक्यः विपक्तव्याः । दन्त्याः तावन्ति पञ्चविंशतिः पलानि । तथा चित्रकस्य तावन्ति पञ्चविंशतिः पलानि च । विपक्तव्यानि । आकृत्या हरीतक्यः पञ्चविंशतिः दन्त्याः पञ्चविंशतिः पलानि चित्रकस्य पञ्चविंशतिः पलानि एतत् सर्वमेकत्र जलकलसे साधयित्वा अष्टभागस्थितं अष्टांशावशिष्टं तु तं रसं क्वाथं पूतं । पूतमिति अधःश्रयणानन्तरं । अधः क्षिपेत् अधः श्रयेत् अवतारयेत् । अवतार्य तं रसं पूतं वाससा स्रावितं कृत्वा तत्र तस्मिन् अष्टभागस्थिते पूते क्वाथे । दन्तीसमं दन्तीसमप्रमाणं पञ्चविंशतिपलमितमित्यर्थः । पूतं गुड़ं । ताः अभयाः हरीतकीः पञ्चविंशतिं । दन्त्यादिभिः सह जलद्रोणे प्राक् साधिताः । तैलस्य अर्द्धकुड़वं । त्रिवृतायाः चूर्णितायाः चतुष्पलं कुड़वं । पलं चतुर्गुणं विद्यादञ्जलिं कुड़वं तथा । इति (च० क० १२)। पिप्पली विश्वभेषजं शुण्ठी च । तयोः समाहारः । तत् चूर्णितं प्रत्येकं पलिकं अर्धं मिलित्वा पलं । पलमेकं कणाशुण्ठ्योरिति वृन्दमाधवः । क्षिपेत् । तत्र क्वाथे एतत् सर्वं क्षिपेत् । क्षिप्त्वा च तत् सर्वं लेहवत् साध्यं यथा लेहः स्यात्तथा मृद्वग्निना पुनः पाच्यं । ततः लेहीभूते अवतारिते च तस्मिन् शीते सति । तत्र तैलसमं तैलसमप्रमाणं अर्द्धकुडवमितं मधु । त्वक् गुडत्वक् । एला । पत्रं तेजपत्रं । केसरो नागकेसरश्च । तेषां समाहारः । तत् । तस्मात् त्वगेलापत्रकेसरात् चतुर्जातात् मिलितात् एकं चूर्णपलं त्वगादीनां चतुर्णां चूर्णितानां प्रत्येकं कर्षांशं । चत्वारः कर्षाः पलं । कार्षांशं च चतुर्ज्जातकचूर्णमिति ( अ० सं० चि० १६ ) । क्षिपेत् लेहे दत्त्वा मिश्रयेत् । ततः प्रतिदिनं स्निग्धः सन् कफगुल्मी लेहस्य पलं लीढ्वा एकां तां हरीतकीं च जग्ध्वा भक्षयित्वा । एवं पञ्चविंशतिं दिनानि

१५५ । चूर्णितं पलमेकं च पिप्पलीविश्वभेषजात् इति ख ग ङ पुस्तकेषु ।

तत् साध्यं लेहवच्छीते तस्मिंस्तैलसमं मधु ।
क्षिपेच्चूर्णपलं चैकं त्वगेलापत्रकेशरात् ॥१५६॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम् ।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयम् ॥१५७॥
गुल्मं श्वयथुमर्शांसि पाण्डुरोगमरोचकम् ।
हृद्रोगं ग्रहणीदोषं कामलां विषमज्वरम् ॥१५८॥
कुष्ठं प्लीहानमानाहमेषा हन्त्युपयोजिता ।
निरत्ययः क्रमश्चास्या द्रवो मांसरसौदनः ॥१५९॥
इति दन्तीहरीतकी ।
सिद्धाः सिद्धिषु वक्ष्यन्ते निरूहाः कफगुल्मिनाम् ।
अरिष्टयोगाः सिद्धाश्च ग्रहण्यर्शश्चिकित्सिते ॥१६०॥

सलेहपलां एकैकां हरीतकीं भक्षयन् । दोषप्रस्थं । विरेके प्रस्थः सार्द्धत्रयोदशपलं । तथा च भोजः—वमने च विरेके च तथा शोणितमोक्षणे । सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥ इति । स च प्रस्थः इह चतुर्गुणो बोद्धव्यः । प्रवरविरेकविषयत्वात् । तथा च कल्पनासिद्धौ—जघन्यमध्यप्रवरेषु वेगाश्चत्वार इष्टा वमने षड़ष्टौ । दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा द्वित्रिचतुर्गुणश्च ॥ इति ( च० सि० १ ) । दोषप्रस्थं सुखं अनामयं अव्यापन्नं च यथा तथा विरिच्यते । एषा दन्तीहरीतकी सलेहपला उपयोजिता भक्षिता सती गुल्मं श्वयथुं अर्शांसि पाण्डुरोगं अरोचकं हृद्रोगं ग्रहणीदोषं कामलां विषमज्वरं कुष्ठं प्लीहानं आनाहञ्च हन्ति । अस्याः दन्तीहरीतक्याः क्रमः प्रतिदिनं एका हरीतकी लेहपलमेकं च । एवं पञ्चविंशत्या अहोभिः भक्षणं । अयं क्रमः निरत्ययः अव्यापत्तिकरः । तत्र आहारः द्रवः द्रवोत्तरः मांसरसौदनः । एवं भक्षयन् प्रतिदिनं द्रवोत्तरं रसौदनमद्यात् ॥ १५३-१५९ ॥

सिद्धा इति । सिद्धिषु सिद्धिस्थाने कफगुल्मिनां सिद्धाः सिद्धफलाः निरूहाः

---

१५९ । कुष्ठं प्लीहानमुदरमेषा इति ठ पुस्तके ।

यच्चूर्णं गुड़िका याश्च विहिता वातगुल्मिनाम् ।
द्विगुणक्षारहिंग्वम्लवेतसास्ताः कफे हिताः ॥१६१॥
य एव ग्रहणीदोषे क्षारास्ते कफगुल्मिनाम् ।
सिद्धा निरत्ययाः शस्ता दाहस्त्वन्ते प्रशस्यते ॥१६२॥
प्रपुराणानि धान्यानि जाङ्गला मृगपक्षिणः ।
कौलत्थो मुद्गयूषश्च पिप्पल्या नागरस्य च ॥१६३॥
शुष्कमूलकयूपश्च बिल्वस्य तरुणस्य च ।
चिरविल्वांकुराणाञ्च यमान्याश्चित्रकस्य च ॥१६४॥

वस्तयः वक्ष्यन्ते । कफगुल्मिनां सिद्धाः अरिष्टयोगाश्च ग्रहण्यर्शश्चिकित्सिते: ग्रहणी-चिकित्सिते अर्शश्चिकित्सिते च वक्ष्यन्ते ॥ १६० ॥

यच्चूर्णमिति । अस्मिन् अध्याये वातगुल्मिनां संबन्धे यत् चूर्णं विहितं । याश्च गुडिकाः विहिताः । ताः चूर्णगुडिकाः । द्विगुणाः । क्षारः हिंगु अम्लवेतसश्च । ते यासु ताः द्विगुणक्षारहिंग्वम्लवेतसाः । क्षारादीनि ततोऽपि द्विगुणीकृत्य दत्त्वा कल्पिताः । तथाविधास्ताः कफे कफगुल्मे हिताः ॥ १६१ ॥

य एवेति । ग्रहणीदोषे ग्रहणीदोषचिकित्सिते अध्याये सिद्धाः निरत्ययाः ये क्षारा वक्ष्यन्ते ते एव क्षाराः कफगुल्मिनां शस्ताः । तैः क्षारैः प्रदीप्तशरादिभिर्वापि गुल्मस्या-न्ते दाहः प्रशस्यते ॥ १६२ ॥

कफगुल्मिनामन्नपानार्थमाह—प्रपुराणानीति । प्रपुराणानि अतिपुराणानि धान्यानि । जांगलाः मृगपक्षिणः जांगलमृगपक्षिणां मांसानि । कौलत्थो यूपः । मुद्गयूपः । पिप्पल्याः नागरस्य शुण्ठ्याश्च यूपः पिप्पलीनागरान्यतरक्वाथे यूपयोनिविदलं पक्त्वा कृतो यूपः । एवं शुष्कमूलकस्य यूपः । तरुणस्य बिल्वस्य बिल्वशलाटोः । चिरबिल्वांकु-राणां । चिरबिल्वो नक्तमालः । यमान्याः चित्रकस्य च यूपः ॥ १६३।१६४ ॥

१६१ । वातकफमूत्रानुलोमनं इति ङ पुस्तके ।

बीजपूरकहिंग्वम्लवेतसक्षारदाडिमैः ।
तक्रेण तैलसर्पिर्भ्यां व्यञ्जनान्युपकल्पयेत् ॥१६५॥
पञ्चमूलीश्रृतं तोयं पुराणं वारुणीरसम् ।
कफगुल्मी पिबेत् काले जीर्णं माध्वीकमेव वा ॥१६६॥
यमानीचूर्णितं तक्रं विड़ेन लवणीकृतम् ।
पिबेत् सन्दीपनं वातकफमूत्राऽनुलोमनम् ॥१६७॥
सञ्चितः क्रमशो गुल्मो महावास्तुपरिग्रहः ।
कृतमूलः सिरानद्धो यदा कूर्म्म इवोन्नतः ॥१६८॥
दौर्वण्यारुचिहृल्लासकासवम्यरतिज्वरैः ।
तृष्णातन्द्राप्रतिश्यायैर्युज्यते न स सिध्यति ॥१६९॥

बीजपूरकेति । बीजपूरकः बीजपूरकरसः । हिंगु । अम्लवेतसः । क्षारः यवक्षारः । दाडिमः दाडिमरसश्च । तैः । तक्रेण । तैलसर्पिर्भ्यां तैलेन सर्पिषा चापि । संस्कृत्य व्यंजनानि उपकल्पयेत् ॥ १६५ ॥

पञ्चमूलीति । कफगुल्मी पञ्चमूल्या श्रृतं क्वथितं तोयं जलं पुराणं वारुणीरसं जीर्णसुरां पुराणं माध्वीकं माधूकासवं वा पिबेत् ॥ १६६ ॥

यमानीचूर्णितमिति । कफगुल्मी यमानीचूर्णितं यमानीचूर्णसंयुक्तं विडेन लवणेन लवणीकृतं । अतः अग्नेः संदीपनं । वातः कफः मूत्रं वर्चश्चापि । तेषामनुलोमनं । तक्रं पिबेत् ॥ १६७ ॥

सम्प्रति असाध्यलक्षणमाह—संचित इत्यादि । गुल्मो यदा क्रमशः संचितः । महावास्तुपरिग्रहः भूरिदेशव्यापी । अन्तः कृतमूलः धात्वन्तरावगाही । सिरानद्धः सिराजालवान् । कूर्म इव उन्नतः । दौर्वण्यं । अरुचिः । हृल्लासः । कासः । छर्दिः । अरतिः । ज्वरश्च । तैः । तृष्णा । तन्द्रा । प्रतिश्यायश्च । तैश्च । एभिः उपद्रवैश्च युज्यते । तदा स न सिध्यति तदा सः असाध्यो ज्ञेयः ॥ १६८ । १६९ ॥

गृहीत्वा सज्वरश्वासं वम्यतीसारपीड़ितम् ।
हृन्नाभिहस्तपादेषु शोफः कर्षति गुल्मिनम् ॥१७०॥
रौधिरस्य तु गुल्मस्य गर्भकालव्यतिक्रमे ।
स्निग्धस्विन्नशरीरायै दद्यात् स्निग्धविरेचनम् ॥१७१॥
पलाशक्षारपात्रे द्वे द्वे पात्रे तैलसर्पिषोः ।
गुल्मशैथिल्यजननीं पक्त्वा मात्रां प्रयोजयेत् ॥१७२॥

गृहीत्वेति । सज्वरश्वासं वम्यतीसारपीडितं गुल्मिनं हृन्नाभिहस्तपादेषु शोफः गृहीत्वा कर्षति मरणाय । गुल्मी ज्वरश्वासछर्द्यतीसारैरुपद्रुतः हृदादिषु च शोफवान् स्यात् सोऽसाध्यः । सुश्रुते च—श्वासशूलपिपासान्नविद्वेषग्रन्थिमूढताः । भवन्ति दुर्बलत्वं च गुल्मिनो मृत्युमेष्यतः ॥ इति ( सु० उ० ४२ ) ॥ १७० ॥

वातिकादिषु त्रिषु पृथक् पृथग् ये च योगा उक्ताः । व्यामिश्रलिंगेषु संसृष्ट-सन्निपतितेष्वपि त एव यथादोषं व्यामिश्ररूपा बोद्धव्याः । क्रियाक्रमवत् । तदुक्तं प्राक्—व्यामिश्रलिंगे व्यामिश्र एष एव क्रियाक्रमः । इति । इत्यञ्च दोषजानां चिकित्सितमुक्तं भवति । सम्प्रति रक्तगुल्मे क्रियाक्रमं योगांश्चाह—रौधिरस्येति । रौधिरस्य गुल्मस्य तु सम्बन्धे गर्भकालस्य व्यतिक्रमे प्रसवकाले दशमे मासि अतिक्रान्ते सति । प्रागप्युक्तं—स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः । इति । आदौ स्निग्धं पश्चात् स्विन्नं स्निग्धस्विन्नं । स्निग्धस्विन्नं शरीरं यस्याः तस्यै स्निग्ध-स्विन्नशरीरायै स्त्रियै । स्निग्धविरेचनं दद्यात् । रक्तगुल्मवत्याः योषितः अतीतप्रसव-कालाया एव स्नेहस्वेदपूर्वकं स्नेहविरेचनं दद्यात् ॥ १७१ ॥

स्नेहविरेचनमाह—पलाशक्षारेति । पलाशक्षारस्य पलाशक्षारोदकस्य पात्रे आढ-के द्वे । तैल सर्पिषोः द्वे पात्रे आढकद्वयञ्च । एकत्र पक्त्वा । तस्य पलाशक्षारोदक-सिद्धस्य यमकस्य । गुल्मस्य रक्तजस्य शैथिल्यं भेदः । तज्जननी । तां । यावत्या मात्रया गुल्मो भिद्यते तावतीं मात्रां प्रयोजयेत् ॥ १७२ ॥

प्रभिद्यते न यद्येवं दद्याद्योनिविरेचनम् ।
क्षारेण युक्तं पललं सुधाक्षीरेण वा पुनः ॥१७३॥
ताभ्यां वा भावितान् दद्याद्योनौ कटुकमत्स्यकान् ।
वराहमत्स्यपित्ताभ्यां नक्तकान् वा सुभावितान् ॥१७४॥
अधोहरैश्चोर्ध्वहरैर्भावितान् वा समाक्षिकान् ।
किण्वं वा सगुड़क्षारं दद्याद्योनिविशोधनम् ॥१७५॥
रक्तपित्तहरं क्षारं लेहयेन्मधुसर्पिषा ।
लशुनं मदिरां तीक्ष्णां मत्स्यांश्चास्यै प्रदापयेत् ॥१७६॥

प्रभिद्यत इति । एवं कृतेऽपि पलाशक्षारोदकसिद्धस्य यमकस्य तावत्या मात्रया प्रयोगेऽपि स रौधिरो गुल्मो यदि न प्रभिद्यते तदा योनिविरेचनं दद्यात् भिषक् । विरेचनमाह—क्षारेण युक्तमिति । क्षारेण युक्तं सुधायाः महावृक्षस्य क्षीरेण वा पुनः युक्तं पललं भृष्टतिलचूर्णं योनौ दद्यात् । ताभ्यां क्षारसुधाक्षीराभ्यां भावितान् कटुकमत्स्यान् वा । कटुकमत्स्यः शफरी । शुष्कमत्स्यः । योनौ दद्यात् । वराहमत्स्ययोः पित्ताभ्यां सुभावितान् वराहपित्तेन कटुकमत्स्यपित्तेन वा सम्यक् भावितान् नक्तकान् पिचून् वा योनौ दद्यात् । अधोहरैः उर्ध्वहरैश्च विरेचनद्रव्यैर्वमनद्रव्यैश्च भावितान् । उर्ध्वहरं अग्निवाय्वात्मकं । तत् आग्नेयत्वात् दोषसंघातं विष्यन्दयति । विच्छिनत्ति च तैक्ष्ण्यात् । अतो विरेचनेऽपि तत् यौगिकं भवति । उर्ध्वहरं यत् दोषमूर्ध्वं हरति । तत् हृदयमुपेत्यैव उर्ध्वाधोभागिकद्रव्यभावितान् समाक्षिकान् मधुयुक्तान् वा नक्तकान् योनौ दद्यात् । अथवा योनिविशोधनं योनिशोधनार्थं योनिविरेचनार्थं सगुडक्षारं गुडक्षारयुक्तं किण्वं सुराबीजं योनौ दद्यात् ॥१७३-१७५॥

रक्तपित्तहरमिति । रक्तपित्तहरं क्षारं उत्पलनालजं मृणालपद्मबीजादिजं च

---

१७३ । दद्याद्योनिविशोधनं इति ख ग ङ ठ पुस्तकेषु ।

१७५ । दद्याद्योनिविरेचनं इति ख ग ङ ठ पुस्तकेषु ।

वस्तिं सक्षीरगोमूत्रं सक्षारं दाशमूलिकम् ।
अदृश्यमाने रुधिरे दद्याद् गुल्मप्रभेदनम् ॥१७७॥
प्रवर्त्तमाने रुधिरे दद्यान्मांसरसौदनम् ।
घृततैलेन चाभ्यङ्गं पानार्थं तरुणीं सुराम् ॥१७८॥
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहरीः क्रियाः ।
कुर्य्याद्वातरुगार्त्तायाः सर्वा वातहरीः पुनः ॥१७९॥
घृततैलावसेकांश्च तित्तिरींश्चरणायुधान् ।
सुरां समण्डां पूर्वञ्च पानमम्लस्य सर्पिषः ॥१८०॥

रक्तपित्तचिकित्सिते उक्तं मधुसर्पिर्भ्यां घृतमधुभ्यां लेहयेत् वातगुल्मिनीं । अस्यै रक्तगुल्मिन्यै लशुनं तीक्ष्णां मदिरां मत्स्यान् कटुकांश्च प्रदापयेत् भिषक् ॥१७६॥

वस्तिमिति । सक्षीरगोमूत्रं सक्षारं सक्षारक्षीरगोमूत्रं दाशमूलिकं दशमूलकृतं वस्तिं योनौ दद्यात् । रुधिरे अदृश्यमाने अप्रवर्तमाने यावत् रुधिरस्य प्रवृत्तिर्न स्यात् तावत् । एवं गुल्मप्रभेदनं भेषजं गुल्मस्य भेदनार्थमुक्तं क्षारेण सुधाक्षीरेण वा युक्तं पललमित्यादिकं दद्यात् ॥ १७७ ॥

प्रवर्त्तमाने इति । रुधिरे प्रवर्तमाने सति भोजनार्थं मांसरसौदनं । घृततैलेन यमकेन अभ्यंगं पानार्थं तरुणीं नवां सुरां च । दद्यात् । रसौदनादिना प्रवृत्तं रक्तमुपेक्षेत । नान्यदौषधं कुर्यात् ॥१७८ ॥

रुधिरे इति । रुधिरे अतिप्रवृत्ते तु । औषधतैक्ष्ण्यात् रुधिरमतिप्रवर्त्तते चेत् तदा । सर्वाः रक्तपित्तहरीः क्रियाः कुर्यात् । वातरुगार्ताया रक्तगुल्मिन्यास्तु सर्वाः वातहरीः क्रियाः कुर्यात् ॥ १७९ ॥

घृततैलेति । रुधिरे अतिप्रवृत्ते । घृततैलेन अवसेकाः । तान् । तित्तिरीन् चरणायुधान् कुक्कुटान् च । तेषां मांसं । आहारार्थं प्रयोजयेत् । पानार्थं समण्डां सुरां । अम्लस्य अम्लद्रव्यसाधितस्य सर्पिषः पानं । भोजनात् पूर्वं । उत्तरं परं अनुपानरूपं

१७७ । वस्तिं सक्षारगोमूत्रं इति ठ पुस्तके ।

प्रयोजयेदुत्तरं वा जीवनीयेन सर्पिषा ।
अतिप्रवृत्ते रुधिरे सतिक्तेनानुवासनम् ॥१८१॥

तत्र श्लोकाः ।

स्नेहः स्वेदः सर्पिर्वस्तिश्चूर्णानि बृंहणं गुड़िकाः ।
वमनविरेचकौ मोक्षः क्षतजस्य च वातगुल्मवताम् ॥१८२॥
सर्पिः सतिक्तसिद्धं क्षीरं प्रस्रंसनं निरूहाश्च ।
रक्तस्य चावसेचनमाश्वासनं संशमनयोगाः ॥१८३॥
उपनाहनं सशस्त्रं पक्वस्याभ्यन्तरप्रभिन्नस्य ।
संशोधनसंशमने पित्तप्रभवस्य गुल्मस्य ॥१८४॥

वा प्रयोजयेत् । जीवनोयेन जीवनीयगणसाधितेन सतिक्तेन तिक्तद्रव्यसाधितेन वा सर्पिषा अनुवासनं प्रयोजयेत् ॥ १८० । १८१ ॥

अध्यायार्थमुपसंहरति—तत्र श्लोका इति। तत्रादौ वातिकादिप्रुक्तचिकित्सासंग्रहं क्ररोति—स्नेहः स्वेद इत्यादि। स्नेहः। स्वेदः। सर्पिर्घृतं। वस्तिः निरुहानुवासने। बृंहणमन्नपानं। घृतानामौषधैः चूर्णानि। गुडिकाः। वर्त्तयः। निर्यूहाश्चापि। कफपित्तयोरनुबन्धे वमनविरेचकौ वमनविरेचने। रक्तदुष्टौ क्षतजस्य रक्तस्य च मोक्षः। इति वातगुल्मवतां पुंसां क्रियाक्रमः उक्तः। सतिक्तं सिद्धं सतिक्तसिद्धं पटोलादिभिः तिक्तद्रव्यैः सह सिद्धं सर्पिः। क्षीरं च। तेन प्रस्रंसनं विरेचनं। निरूहाश्च। सतिक्ताः क्षीरवस्तय इत्यादि। रक्तस्य अवसेचनं मोक्षणं स्रुतरक्तस्य जांगलरसैः आश्वासनं सावशेषदोषस्य तु संशमनयोगा दोषशेषशमनार्थं सर्पिरभ्यासः। उपनाहनं सशस्त्रं। गुल्मे पच्यमाने उपनाहनं सम्यक् पाकार्थं पिण्डैर्बन्धनं। पक्वे तु शस्त्रकर्म। पक्वस्य अभ्यन्तरप्रभिन्नस्य च संशोधनसंशमने शोधनं शमनं रोपणञ्चापि। इति पित्तप्रभवस्य पित्तजस्य गुल्मस्य क्रियाक्रमः उक्तः। स्नेहः स्वेदः भेदः विलयनं। लंघनं। उल्लेखनं। वमनं। विरेचनं। सर्पिः वस्तिः। गुडिकाः। चूर्णं। निर्यूहाश्च। सक्षारा अरिष्टाः क्षारा अरिष्टाश्च। अग्रे अपनीतरक्तस्य

स्नेहः स्वेदो भेदो लङ्घनमुल्लेखनं विरेकश्च ।
सर्पिर्वस्तिगुडिकाश्चूर्णमरिष्टाश्च सक्षाराः ॥१८५॥
गुल्मस्यान्ते दाहः कफजस्याग्रेऽपनीतरक्तस्य ।
गुल्मस्य रौधिरस्य क्रियाक्रमः स्त्रीभवस्योक्तः ॥१८६॥
पथ्यान्नपानसेवा हेतूनां वर्जनं यथास्वञ्च ।
नित्यञ्चाग्निसमाधिः स्निग्धस्य च सर्वकर्माणि ॥१८७॥
हेतुर्लिङ्गं सिद्धः क्रियाक्रमः साध्यता न योगाश्च ।
गुल्मचिकित्सितसंग्रह एतावान् व्याहृतोऽग्निवेशस्य॥१८८॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
गुल्मचिकित्सितं नाम पञ्चमोऽध्यायः ॥५॥

आदौ स्रावितरक्तस्य प्राक् रक्तमोक्षणं कारयित्वा ततः गुल्मस्य अन्ते प्रदीप्तैः शरलोहादिभिर्दाहः । इति कफजस्य गुल्मस्य क्रियाक्रमः उक्तः । स्त्रीभवस्य रौधिरस्य गुल्मस्य रक्तगुल्मस्य क्रियाक्रमः उक्तः । तथा प्रसवकालापगमे स्नेहस्वेदौ स्नेह-विरेचनं गुल्मभेदनं । रक्तातिप्रवृत्तौ च रक्तपित्तोपक्रमः उक्तः । वातिकादिषु विशेषमुक्त्वा यत् यत् सामान्यं तत् संग्रहेणाह—पथ्यान्नेति । सर्वेषु गुल्मेषु पथ्यस्य अन्नपानस्य सेवा सेवनं । यथास्वं हेतूनां वर्जनं । नित्यञ्च अग्नेर्जाठरस्य समाधिः प्रमाणे स्थापनं पथ्योपयोगैः पालनं । तस्मादग्निं सदा रक्षेत् निदानानि च वर्जयेदिति । स्निग्धस्य सर्वकर्माणि सर्वेषु गुल्मेषु प्रथमं स्नेहस्वेदौ ततः अन्यकर्माणि । सर्वत्र गुल्मे प्रथममित्यादि । सम्प्रति कृत्स्नगुल्मचिकित्सिताध्यायार्थं संग्रहेणाह—हेतुरिति । गुल्मस्य हेतुः । निदानं । लिंगं । सिद्धः क्रियाक्रमः । सिद्धा गुल्मनिबर्हणा योगाश्च । न साध्यता असाध्यत्वं च । संचितः क्रमशो गुल्म इत्यादि । एतावान् एतन्मात्रः गुल्मचिकित्सितसंग्रहः संग्रहेण गुल्मचिकित्सितं अग्निवेशस्य अग्निवेशाय अग्निवेशमुद्दिश्य व्याहृतः उक्तः अस्मिन् अध्याये भगवता आत्रेयेण पुनर्वसुना । सर्वत्र आर्या पथ्या नाम ॥ १८५-१८८ ॥

इति वैद्यरत्नश्रीयोगीन्द्रनाथविद्याभूषणकृते चरकोपस्कारे चिकित्सितस्थाने पंचमोध्यायः ।

## षष्ठोऽध्यायः ।

अथातः प्रमेहचिकित्सितं व्याख्यास्यामः । इति ह
स्माह भगवानात्रेयः ॥१॥

निर्म्मोहमानानुशयो निराशः पुनर्वसुर्ज्ञानतपोविशालः ।
कालेऽग्निवेशाय सहेतुलिङ्गानुवाच मेहान् शमनञ्च तेषाम् ॥२॥
आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि ।
नवान्नपानं गुड़वैकृतञ्च प्रमेहहेतुः कफकृच्च सर्वम् ॥३॥

षष्ठोऽध्यायः ।

निदानोक्तक्रमानुरोधात् गुल्मचिकित्सितात् परं प्रमेहचिकित्सितमारभ्यते—अथात इति । सर्वं पूर्ववद् व्याख्येयं ॥ १ ॥

निर्मोहेति । मोहः । मानः । अनुशयश्च ते । अनुशयो दीर्घद्वेषानुतापयोरिति । निर्गतो मोहादिभ्यः स तथोक्तः । निराशः आशाशून्यः । आप्तकामत्वात् । ज्ञानतपसी विशाले महती यस्य स ज्ञानतपोविशालः । ज्ञानतपोभ्यां विशालो वा । तथाविधः पुनर्वसुः भगवानात्रेयः । काले उचिते काले । सहेतुलिंगान् मेहान् तेषां शमनं चिकित्सितञ्च । मेहानां हेतुलिंगचिकित्सितानि । अग्निवेशाय उवाच । हेतुलिंगानां निदानस्थाने प्रागुक्तानामपि पुनरिहाभिधानं चिकित्साप्रसंगात् ॥ २ ॥

तत्रादौ श्लेष्मप्रमेहाणां हेतुमाह—अस्यासुखमिति । आस्या आसनं । तया सुखं निरन्तरं निश्चेष्टितमवस्थानं । एवं स्वप्नसुखं । स्वप्नशयनासनप्रसंग इति । दधीनि । ग्राम्या औदकाः आनूपाश्च रसाः ग्राम्यौदकानूपमांसानि । पयांसि क्षीराणि । नवान्नपानं नवं अन्नं पानं च । गुडवैकृतं गुड़विकृतिः शर्करादिः । अनुक्तहेतुसंग्रहार्थमाह—कफकृच्च सर्वमिति । अस्यासुखादिकमुक्तं । एवमनुक्तमपि यत् किं-

**मेदश्च मांसश्च शरीरजश्च क्लेदं कफो बस्तिगतः प्रदूष्य ।**
**करोति मेहान् समुदीर्णमुष्णैस्तानेव पित्तं परिदूष्य चापि ॥४॥**
**क्षीणेषु दोषेष्ववकृष्य वस्तौ धातून् प्रमेहान् अनिलः करोती ।**
**दोषो हि वस्तिं समुपेत्य मूत्रं सन्दूष्य मेहान जनयेद्यथास्वम् ॥५॥**

चित् आहारविहारजातं कफकृत् श्लेष्मजननं । तत् सर्वमेव प्रमेहस्य कफजस्य हेतुः । पैत्तिकवातिकयोश्चापि सामान्यतो हेतुः । विशेषहेतुः पश्चाद् वक्ष्यमाणः । पैत्तिकवातिकयोरपि प्राक् श्लेष्मा प्रकोपमापद्यते तदधिष्ठानत्वात् मूत्रस्य । ततः पित्तं वातो वा तत्तद्धेतुभिः । तदुक्तं--दिवास्वप्नाव्यायामालस्यप्रसक्तं शीतस्निग्धमधुरमेध्यद्रवान्नपानसेविनं पुरुषं जानीयात् प्रमेही भविष्यति । इति ( सु० नि० ६ ) ॥ ३ ॥

हेतुमुक्त्वा सम्प्राप्तिमाह--मेदश्चेति । कफः उक्तैर्हेतुभिः प्रकुपितः मेदः मांसं शरीरजं क्लेदं च प्रदूष्य वस्तिगतः सन् मेहान् वक्ष्यमाणान् दश करोति । पित्तप्रमेहाणां हेतुं सम्प्राप्तिश्चाह--समुदीर्णमिति । पित्तमपि कर्तृ उष्णैः उष्ण-वीर्यैरुष्णस्पर्शैश्च द्रव्यैः निदानोक्तैः क्षारकटुकादिभिश्च समुदीर्णं प्रकुपितं तान् मेदोमांसशरीरजक्लेदान् एव परिदूष्य च वस्तिगतं सत् मेहान् वक्ष्यमाणान् षट् करोति ॥ ४ ॥

वातिकमेहानां सम्प्राप्तिमाह--क्षीणेष्विति । ततः दोषेषु श्लेष्मादिषु क्षीणेषु सत्सु अनिलो वातः श्लेष्मादीनां क्षयात् प्रकोपमापन्नः शरीरस्य परं सारभूतान् धातून् वसामज्जौजोलसीकाख्यान् वस्तौ अवकृष्य आकृष्य श्लेष्मादीनां क्षयात् तदा वसादीन् धातून् वस्तिमुखं नीत्वा मूत्रेण सह निःसारयन् प्रमेहान् वसामेहादीन् वक्ष्य-माणान् चतुरः करोति । सर्वमेहानां सामान्यतः सम्प्राप्तिमाह--दोष इति । दोषः कफः पित्तं वातो वा यथास्वं प्रकोपणैः प्रकुपितः वस्तिं समुपेत्य प्राप्य वस्तिगतः सन् एव मूत्रं सन्दूष्य यथास्वं श्लैष्मिकान् पैत्तिकान् वातिकांश्च मेहान् क्रमात् दश षट् चतुरश्च जनयेत् ॥ ५ ॥

---

४। अयं श्लोको न पठ्यते ह पुस्तके

कफः सपित्तः पवनश्च दोषा मेदोऽस्रशुक्राम्बुवसालसीकाः ।
मज्जा रसौजः पिशितञ्च दूष्याः प्रमेहिणां विंशतिरेव मेहाः ॥७॥

माणसुश्रुतवचनेऽपि असाध्यतमा इति । तथाच—तत्र कफादुदकेक्षुवालिकासुरा-सिकताशनैर्लवणपिष्टसान्द्रशुक्रफेनमेहा दश साध्याः । दोषदूष्याणां समक्रियत्वात् । पित्तान्नीलहरिद्राम्लक्षारमंजिष्ठाशोणितमेहाः षड् याप्याः । दोषदूष्याणां विषमक्रियत्वात् । वातात् सर्पिर्वसाक्षौद्रहस्तिमेहाश्चत्वारोऽसाध्यतमाः । महात्ययिकत्वात् । इति ( सु० नि० ६ ) ॥ ६ ॥

सर्वमेहानां दोषदूष्यसंग्रहं करोति—कफः सपित्त इति । कफः । सपित्तः पवनः पित्तं पवनो वातश्च । इति दोषाः । मेदः । अस्रं रक्तं । शुक्रं । अम्बु शरीरान्तर्गतमुदकं । लसीका त्वगन्तरे व्रणगतं । वसा । लसीका च । ताः । मज्जा । रसः । ओजश्च तत् रसौजः । ओजः—हृदि तिष्ठति यच्छुभ्रं रक्तमीषत् सपीतकं । ओजः शरीरे संख्यातं ॥ इति ( च० श्लो० १७ ) । पिशितं मांसं । चकारात् शरीरजः क्लेदश्च । इति दूष्याः । प्रागुक्तहेतुनां कफादीनां दोषाणां मेदःप्रभृतीनां दूष्याणां च उत्कृष्टापकृष्टसंयोगविशेषैः प्रमेहिणां पुंसां कफजाः उदकमेहादयो दश । पित्तजाः क्षारमेहादयः षट् । वातजाः वसामेहादयश्चत्वारः । इति विंशतिः मेहा जायन्ते । वर्णानां पञ्चानां शुक्लकृष्णादीनां संयोगविशेषैः शवलकुल्मापादय इव । यदुक्तं सुश्रुतेन—यथा हि वर्णानां पञ्चानामुत्कर्षापकर्षकृतेन संयोगविशेषेण शवलवभ्रुकपिलकपोतमेचकादीनां वर्णानामनेकेषामुत्पत्तिर्भवति । एवमेव दोषधातुमलाहारविशेषेण उत्कर्षापकर्षकृतेन संयोगविशेषेण प्रमेहाणां नानाकरणं भवति । इति ( सु० नि० ६ ) । इह मलग्रहणं उपधातुभूतवसालसीकादीनामुपलक्षणं ॥ ७ ॥

कफोत्था दश पित्तजाः षट् पवनाच्चतुष्कः इति विंशतिः प्रमेहा उद्दिष्टाः । सम्प्रति क्रमेण लक्षणैस्तान् निर्दिशति—जलोपममिति । जलोपमं मूत्रमिति शेषः । एवं सर्वत्र । अच्छं बहु सितं शीतं निर्गन्धमुदकोपममिति ॥ इक्षुरसोपमं काण्डेक्षुरससदृशं । अत्यर्थमधुरं शीतमीषत्पिच्छिलमाविलं । काण्डेक्षुरससंकाशमिति ॥ घनं सान्द्रं । मूत्रं पर्युषितं पात्रे सान्द्रीभवति । यस्य पर्युषितं मूत्रं सान्द्रीभवति भाजने । इति ॥

---

७ । मज्जौजसी चेति भवन्ति दूष्यं प्रमेहिणां विंशतिरेव मेहाः इति ठ पुस्तके ।

जलोपमञ्चेक्षुरसोपमं वा घनं घनञ्चोपरि विप्रसन्नम्।
शुक्लं सशुक्रं शिशिरं शनैर्वा लालेव वा वालुकया युतं वा ॥८॥
विद्यात् प्रमेहान् कफजान् दशैतान् क्षारोपमं कालमथापि रक्तम्।
हारिद्रमाञ्जिष्ठमथापि नीलमेतान् प्रमेहान् षडुशन्ति पैत्तान् ॥९॥

घनं अधः सान्द्रं उपरि च विप्रसन्नं। प्रसन्नमच्छं। यस्य संहन्यते मूत्रं किंचित् किंचित् प्रसीदति। इति ॥ शुक्लं पिष्टवत् शुभ्रं। शुक्लं पिष्टनिभं मूत्रमभीक्ष्णं यः प्रमेहति। इति ॥ सशुक्रं शुक्रमिश्रं शुक्रसदृशं वा। शुक्राभं शुक्रमिश्रं वा मुहुर्मेहति यो नरः। इति ॥ शिशिरं शीतं। अत्यर्थमधुरं शीतं मूत्रं मेहति यो नरः। इति ॥ शनैः मन्दं मन्दं। मन्दमन्दमवेगं तु कृच्छ्रं यो मूत्रयेच्छनैः इति ॥ लालेव लालासदृशं मूत्रं। तन्तुबद्ध-मिवालालं पिच्छिलं यः प्रमेहति। इति ॥ वालुकया सिकतया युतं। मूर्तान् मूत्रगतान् दोषानणून् मेहति यो नरः। इति ॥ एतान् कफोत्थान् दश प्रमेहान् विद्यात्। उदकमेहः। इक्षुरसमेहः इक्षुवालिकारसमेहो वा। सान्द्रमेहः। सान्द्रप्रसादमेहः। शुक्लमेहः। शुक्रमेहः। शीतमेहः। शनैर्मेहः। लालामेहः। सिकतामेहः। इति कफजाः दश साध्याः ॥

पित्तजान् षडाह—क्षारोपममिति। क्षारोपमं क्षारोदकतुल्यं मूत्रं। गन्धवर्णरस-स्पर्शैर्यथा क्षारस्तथाविधं। इति ॥ कालं कृष्णवर्णं मसीसदृशवर्णं। मसीवर्णमजस्रं यो मूत्रमुष्णं प्रमेहति। इति ॥ रक्तं रक्तवर्णं। विस्रं लवणमुष्णं च रक्तं मेहति यो नरः। इति ॥ हारिद्रमांजिष्ठं हारिद्रं मांजिष्ठं च। हारिद्रं हरिद्रावर्णं। हरिद्रोदकसंकाशं कटुकं यः प्रमेहति। इति ॥ मांजिष्ठं मंजिष्ठोदकसदृशं। तद्वद् रक्तवर्णं। मंजिष्ठोदक-संकाशं कटुकं यः प्रमेहति। इति ॥ नीलं नीलवर्णं। चाषपक्षनिभं मूत्रमम्लं मेहति यो नरः। इति ॥ एतान् पैत्तान् पित्तजान् षट् प्रमेहान् उशन्ति इच्छन्ति भिषजः। क्षारमेहः। कालमेहः। शोणितमेहः। हारिद्रमेहः। मांजिष्ठमेहः। नीलमेहः। इति पित्त-जाः षट् याप्याः ॥ ८।९ ॥

पवनाच्चतुष्कमाह—मज्जौजसेति। शेषेषु मज्जादिभ्योऽन्येषु धातुषु मेदःप्रभृ-तिषु अपकर्षितेषु क्षीणेषु सत्सु। अनिलेन वातेन। मज्जा ओजश्च तत् मज्जौजः।

---

८। घनं घनं वा परिविप्रसन्नं इति ख पुस्तके।

मज्जौजसा वा वसयान्वितं वा लसीकया वा सततं विवद्धम् ।
चतुर्विधं मूत्रयतेऽनिलेन शेषेषु धातुष्ववकर्शितेषु ॥१०॥

वर्णं रसं स्पर्शमथापि गन्धं यथास्वदोषं भजते प्रमेहः ।
श्यावारुणो वातकृतः सशूलो मज्जादिसाद्गुण्यमुपैत्यसाध्यः ॥११॥

तेन मज्जौजसा । अन्वितं युक्तं । मज्ज्ञा अन्वितं वा । मेदसा अन्वितं वा । लसीकया विवद्धं युतं वा । सततं अजस्रं । इति चतुर्विधं मूत्रयते पुमान् । वसामेहः । मज्जमेहः । सततमूत्रणात् हस्तिमेहः । ओजसो मधुरस्वभावत्वात् ओजसा युतः मधुमेहः । इति वातजाश्चत्वारोऽसाध्याः ॥

मधुमेह इह द्विविधः दोषावरणात् धातुक्षयाद् वा । तथा च वायुः सन्तर्पणेन प्रवृद्धैर्दोषैरावरणात् मार्गरोधात् प्रकुपितः एकं जनयति । धातुषु क्षीणेषु पुनरन्यं । आद्यः कृच्छ्रसाध्यः कियन्तःशिरसीये उक्तः । श्लेष्मा पित्तं च मेदश्च मांसं चाति प्रवर्द्धते । तैरावृतः प्रसादं च गृहीत्वा याति मारुतः । यदा वस्तिं तदा कृच्छ्रो मधुमेहः प्रवर्त्तते ॥ इति ( च० श्लो० १७ ) । अन्त्यः असाध्य इह उच्यते । तच्च स्वयं पश्चाद् वक्ष्यति । दृष्ट्वा प्रमेहं मधुरं सपिच्छं मधूपमं स्याद्द्विविधो विचारः । क्षीणेषु दोषेष्वनिलात्मकः स्यात् सन्तर्पणाद्वा कफसम्भवः स्यात् ॥ इति ॥ १० ॥

संक्षेपेण कफजादिप्रमेहलक्षणमाह—वर्णं रसमिति । प्रमेहः स्वं दोषमनतिक्रम्य यथास्वदोषं स्वदोषानुरूपं वर्णं रूपं रसं स्पर्शं अथ गन्धं चापि भजते । तथा च कफजे श्वेतो वर्णः । मधुरो रसः । शीतः स्पर्शः । आमश्च गन्धः । एवं पित्तजेऽपि वर्णादयो ज्ञेयाः । वायोरमूर्तत्वात् तज्जे वर्णादीनाह—श्यावारुण इति । वातकृतः प्रमेहः श्यावारुणः श्यावारुणान्यतरवर्णः । वायोः श्यावारुणवर्णकारित्वात् । सशूलः सवेदनः । स च वातकृतः प्रमेहः । मज्जमेहादिः । मज्जादीनां मज्जवसालसीकौजसां साद्गुण्यं सद्गुणत्वं सदृशगुणत्वं । तद्वत् रसस्पर्शगन्धानित्यर्थः । उपैति प्राप्नोति । स च वातिकः प्रमेहः असाध्यः ॥ ११ ॥

स्वेदोऽङ्गगन्धः शिथिलाङ्गता च शय्यासनस्वापसुखे रतिश्च ।
हृन्नेत्रजिह्वाश्रवणोपदेहो घनाङ्गता केशनखातिवृद्धिः ॥१२॥
शीतप्रियत्वं गलतालुशोषो माधुर्य्यमास्ये करपाददाहः ।
भविष्यतो मेहगदस्य रूपं मूत्रेऽभिधावन्ति पिपीलिकाश्च ॥१३॥
स्थूलः प्रमेही बलवानिहैकः कृशस्तथैकः परिदुर्बलश्च ।
संबृंहणं तत्र कृशस्य कार्य्यं संशोधनं दोषबलाधिकस्य ॥१४॥

प्रमेहस्य पूर्वरूपाण्याह--स्वेदोऽगंगन्ध इत्यादि । स्वेदः । अंगानां गन्धः । शिथिलांगता अंगानां शैथिल्यं । शय्या आसनं स्वापः निद्रा च । तैः सुखं । तस्मिन् रतिः शयनादिषु अतिप्रसक्तिः । हृत् नेत्रे जिह्वा श्रवणे कर्णौ च तत् । तस्य उपदेहः उपलेपः । घनांगता स्थूलांगता । केशानां नखानां च अतिवृद्धिः । शीतप्रियत्वं शीतेच्छा । गलस्य तालुनः कण्ठस्य चापि शोषः शुष्कत्वं । आस्ये मुखे माधुर्यं । करयोः पादयोश्च दाहः । सुप्तता चापि । करपादयोः सुप्ततादाहाविति ( च० नि० ४ ) । मूत्रे पिपीलिकाः षट्पदाश्च अभिधावन्ति माधुर्यात् । एतत् सर्वं भविष्यतः मेहगदस्य मेहरोगस्य रूपं । स्वेदांगगन्धादीनि मेहस्य प्राग्रूपाणि भवन्ति । सुश्रुतेऽपि—तेषां तु पूर्वरूपाणि । हस्तपादतलदाहः । स्निग्धपिच्छिलगुरुता गात्राणां । मधुरशुक्लमूत्रता । तन्द्रा । सादः । पिपासा । दुर्गन्धश्च । श्वासः । तालुगलजिह्वादन्तेषु मलोत्पत्तिः । जटिलीभावः केशानां । वृद्धिश्च नखानां । इति ( सु० नि० ६ ) ॥ १२ । १३ ॥

प्रमेहाणां निदानदोषदूष्यादीन्युक्त्वा सम्प्रति चिकित्सां विवक्षुः आदौ तदनुगुणतया समासतः प्रमेहिणं द्विधा विभजते—स्थूलः प्रमेहीति । इह एकः कश्चित् प्रमेही स्थूलः बलवान् च । एकः कृशः परिदुर्बलः दुर्बलश्च । इति द्विविधः प्रमेही । तत्र कृशस्य प्रमेहिणः संबृंहणं सम्यक् बृंहणं पुष्टिजनकं भेषजं कार्यं । दोषबलाधिकस्य बलवतः प्रमेहिणः संशोधनं ऊर्ध्वाधो दोषहरणं कार्यं ॥ १४ ॥

बलवतः शोधनमुक्तं । तद् यथा कार्यं तदाह—स्निग्धस्येति । ऊर्ध्वाधोमलशोधनार्थं कल्पोपदिष्टाः कल्पस्थाने उक्ताः विविधा मलशोधना ये योगा वमनविरेचन-

स्निग्धस्य योगा विविधाः प्रयोज्याः कल्पोपदिष्टा मलशोधना ये।
ऊर्ध्वं तथाधश्च मलेऽपनीते मेहेषु सन्तर्पणमेव कार्य्यम् ॥१५॥
गुल्मः क्षयो मेहनवस्तिशूलं मूत्रग्रहश्चाप्यपतर्पणेन।
प्रमेहिणः स्युः परितर्पणानि कार्य्याणि तस्य प्रसमीक्ष्य वह्निम् ॥१६॥
संशोधनं नार्हति यः प्रमेही तस्य क्रिया संशमनी प्रयोज्या।
मन्थाः कषाया यवचूर्णलेहाः प्रमेहशान्त्यै लघवश्च भक्ष्याः ॥१७॥

योगाः ते वलवतः प्रमेहिणः स्निग्धस्य सत एव प्रयोज्याः। शोधनार्हं प्रमेहिणं वक्ष्यमाणदन्तींगुदीतैलादिभिः आदौ स्नेहयित्वा कल्पोक्तैः विविधैः वमनविरेचनयोगैर्वामयेत्। विरेचयेच्च। शुद्धस्य सन्तर्पणमाह—ऊर्ध्वमिति। मेहेषु मले ऊर्ध्वं तथा अधः अपनीते निर्हृते वमने विरेचने च कृते सति सन्तर्पणमेव कार्यं। न तु अपतर्पणं ॥१५॥

तदा अपतर्पणे दोषमाह—गुल्म इति। प्रमेहिणः अत्यपतर्पणेन। गुल्मः। क्षयः। मेहनस्य शिश्नस्य वस्तेश्च शूलं। मूत्रग्रहः मूत्रसङ्गः मूत्रकृच्छ्रतापि। एते रोगाः प्रायेण स्युः। अतः तस्य शुद्धस्य प्रमेहिणः वह्निं प्रसमीक्ष्य अग्निवलमपेक्ष्य। तदा अग्नेः दुर्वलत्वात् अग्निवलापेक्षया परितर्पणानि सन्तर्पणानि कार्याणि। तं क्रमेण जांगलरसैः सन्तर्पयेत् ॥ १६ ॥

संशोधनमिति। यः प्रमेही दुर्वलः। स्थूलः कृशश्चापि। संशोधनं न अर्हति संशोधनानर्हः। तस्य संशमनी क्रिया प्रयोज्या तस्य संशमनं कार्यं। संशमनमाह—मन्था इति। मन्थाः। कषायाः क्वाथाः वक्ष्यमाणाः। यवचूर्णलेहाः यवाः चूर्णलेहा वा। चूर्णलेहाः वक्ष्यमाणकम्पिल्लकादिपुष्पचूर्णानां मधुना अवलेहनानि। लघवः भक्ष्याः। प्रमेहेषु सक्तुमन्थापूपधानावाट्यादयो विविधाश्च लघवो भक्ष्याः यथायथमौषधक्वाथभावितैर्यवैरुपकल्पनीयाः। तच्च पश्चाद् वक्ष्यति। मन्थादयः प्रमेहशान्त्यै भवन्ति ॥ १७ ॥

---

१७। मन्थाः कषायासवचूर्णलेहाः इति ख ठ पुस्तकयोः।

१८। यवौदनं गृञ्जमथापि वाट्यमद्याच्च सक्तुनपि वाप्यपूपान् इति ग पुस्तके।

१८। यवौदनं गृघ्रमथापि वाट्यान् सपष्टि सक्तुनपि चाप्यपातान् इति ख ग पुस्तकयोः

ये विष्किरा ये प्रतुदा विहङ्गास्तेषां रसैर्जाङ्गलजैर्मनोज्ञैः।
यवौदनं रूक्षमथापि वाट्यमद्यात् ससक्तूनपि चाप्यपूपान् ॥१८॥
मुद्गादियूषैरपि तिक्तशाकैः पुराणशाल्योदनमाददीत ।
दन्तींगुदीतैलयुतं प्रमेही तथातसीसर्षपतैलयुक्तम् ॥१९॥
सषष्टिकं स्यात् तृणधान्यमन्नं यवप्रधानस्तु भवेत् प्रमेही ।
यवस्य भक्ष्यान् विविधांस्तथाद्यात् कफप्रमेही मधुसम्प्रयुक्तान्॥२०॥
निशि स्थितानां त्रिफलाकषाये स्युस्तर्पणाः क्षौद्रयुता यवानाम् ।
तान् सीधुयुक्तान् प्रपिबेत् प्रमेही प्रायोगिकान् मेहवधार्थमेव॥२१॥

ये विष्किरा इति । ये विष्किराः विष्किरसंज्ञाः विहंगाः पक्षिणः लावादयः । ये च प्रतुदाः तदाख्याः शतपत्रादयः अन्नपानविधावध्याये उक्ताः । तेषां रसैः । तथा मनोज्ञैः हृद्यैः जांगलजैः रसैः जांगलमांसरसैश्च यवौदनं यवतंडुलौदनं रूक्षं दन्तींगुदीतैलादियुतं वा अद्यात् प्रमेही । अथ वाट्यं यवकृतभक्ष्यविशेषं भृष्टयवं वा अद्यात् । तथा ससक्तून् अपूपांश्चापि अद्यात् ॥ १८॥

मुद्गादियूषैरित्यादि । मुद्गादीनां यूषैः तिक्तशाकैश्चापि पुराणशाल्योदनं रूक्षं दन्तींगुदीतैलयुतं तथा अतसीसर्षपतैलयुक्तं अतसींगुदीदन्तीसर्षपान्यतमतैलेन युक्तं वा आददीत अद्यात् ॥ १९ ॥

सषष्टिकमिति । सषष्टिकं पुराणं तृणधान्यं श्यामादिकं अन्नं प्रमेहिणः आहारः स्यात् । शालिः प्रागुक्तः । प्रमेही यवप्रधानो भवेत् यवविकृतिप्रायमाहारमश्नीयात् । यवो हि बद्धमूत्रो मेदःपित्तकफहरः स्थैर्यकरश्च । इति ( अ० सं० चि० १४ )। कफप्रमेही तथा तद्वत् यवस्य विविधान् भक्ष्यान् औषधक्काथभावितैर्गवाश्वजठरस्थितैर्वा यवैरुपकल्पितान् विविधान् लघून् भक्ष्यान् मधुना संप्रयुक्तान् उपेतान् अद्यात् खादेत् ॥ २० ॥

मन्थादय उक्ताः। सम्प्रति तेषां कल्पनमाह—निशि स्थितानामिति। त्रिफलाकषाये निशि रात्रौ स्थितानां यवानां सक्तुरूपाणां परदिने तेन त्रिफलाक्काथेन आलोडिताः।

ये श्लेष्ममेहे विहिताः कषाया-
स्तैर्भावितानाञ्च पृथग् यवानाम् ।
सक्तूनपूपान् सगुड़ान् सधानान्
भक्ष्यांस्तथान्यान् विविधांश्च खादेत् ॥२२॥

खराश्वगोहंसपृषद्भृतानां तथा यवानां विविधाश्च भक्ष्याः ।
देयास्तथा वेणुयवा यवानां कल्पेन गोधूममयाश्च भक्ष्याः ॥२३॥
संशोधनोल्लेखनलंघनानि कालप्रयुक्तानि कफप्रमेहान् ।
जयन्ति पित्तप्रभवान् विरेकः सन्तपणः संशमनो विधिश्च ॥२४॥

तर्पणाः मन्थाः क्षौद्रयुताः मधुप्रक्षेपयुताः स्युः । प्रमेही मेहवधार्थं प्रमेहशान्तये तानेव तर्पणान् सौध्रुयुक्तान् कृत्वा प्रायोगिकान् सतताभ्यस्तान् प्रपिवेत् प्रतिदिनं प्रातः पिवेत् ॥२१॥

ये श्लेष्ममेहे इति । श्लेष्ममेहे ये कषायाः क्वाथाः विहिताः हरीतकीकटफलेत्यादिना पश्चात् उक्ताः । तैः कषायैः पृथक् यथायथं एकैकेन भावितानां यवानां सक्तून् सधानान् । धानाः भक्ष्यविशेषाः । अपूपान् । तथा अन्यान् विविधान् भक्ष्यांश्च सगुडान् खादेत् ॥ २२ ॥

खराश्वेति । तथा तद्वत् । खरः गर्दभः । अश्वः । गौः । हंसः । पृषत् हरिणश्च । तै । तैः भृतानां जठरे धृतानां तद्विष्ठातः संगृहीतानां यवानां । गवाश्वजठरस्थितैश्च यवै-र्वंशयवैर्वा । इति ( अं० सं० चि० १४ ) । इत्थं च गवाश्वादीनां मांसस्य इति गंगा-धरव्याख्यानं चिन्त्यं । तथाविधैर्यवैरुपकल्पिताः विविधाः भक्ष्याः देयाः । तथा तद्वत् खराश्वादिजठरस्थिता वेणुयवाः । तैः कृताः विविधाः भक्ष्याः इत्यर्थः । देयाः । यवानां कल्पेन विधिना गोधूममयाः भक्ष्याः देयाः औषधक्वाथभावितैः गोधूमैर्विविधान् भक्ष्यान् उपकल्प्य प्रमेहिणे दद्यात् ॥ २३ ॥

संशोधनोल्लेखनेति । संशोधनमिह विरेचनरूपं । उल्लेखनस्य पृथग् वचनात् । उल्लेखनं वमनं । लंघनं च । तानि काले योग्ये प्रयुक्तानि कफप्रमेहान् जयन्ति ।

२३ । खराश्वगोकूलकसंभृतानां इति ग पुस्तके ॥ खराश्वगोहन्तकसंभृतानां इति ख ग ठ पुस्तकेषु ।

२४ । जयन्ति पित्तप्रभवान् विकारान् सन्तपणः इति ठ पुस्तके ।

दार्व्वीसुराह्वत्रिफलाः समुस्ताः कषायमुत्क्वाथ्य पिबेत् प्रमेही ।
क्षौद्रेण युक्तामथवा हरिद्रां पिबेद्रसेनामलकीफलानाम् ॥२५॥
हरीतकीकट्फलमुस्तलोध्रं पाठाविडंगार्जुनधन्वनाश्च ।
उभे हरिद्रे तगरं विडंगं कदम्बशालार्जुनदीप्यकाश्च ॥२६॥
दार्वी विडंगं खदिरो धवश्च सुराह्वकुष्ठागुरुचन्दनानि ।
दार्व्यग्निमन्थौ त्रिफला सपाठा पाठा च मूर्वा च तथा श्वदंष्ट्रा॥२७॥

विरेकः विरेचनं । संतर्पणः संशमनश्च विधिः । एते पित्तप्रभवान् प्रमेहान् जयन्ति यापयन्ति । पित्तप्रमेहाणां याप्यत्वात् । शमयन्ति वा । मेदसि नातिदुष्टे तेषामपि साध्यत्वात् । साध्यास्तु मेदो यदि न प्रदुष्टमिति ॥ २४ ॥

प्रमेहशान्तये कषाया उद्दिष्टाः- मन्थाः कषाया इति । समप्रति तान् निर्दिशति—दार्व्वी-सुराह्व इति । सर्वः प्रमेही । दार्व्वी दारुहरिद्रा । सुराह्वः देवदारु । त्रिफला च । ताः । समुस्ताः । कुट्टिता उत्क्वाथ्य क्वाथविधिना क्वाथयित्वा । तं कषायं क्वाथं प्रातः पिबेत् । अथवा हरिद्रां चूर्णितां क्षौद्रेण मधुना युक्तां मधुप्रक्षेपयुतां आमलकीफलानां रसेन स्वरसेन पिबेत् । योगद्वयं सर्वप्रमेहेषु । वक्ष्यति च—सर्वेषु मेहेषु मतौ तु पूर्वौ कषाययोगाविति ॥ २५ ॥

श्लेष्ममेहेषु दशभिः पादैर्दश कषायानाह—हरीतकीकट्फलेत्यादि । हरीतकी । कट्-फलः । मुस्तः । लोध्रञ्च । तेषां समाहारः । तत् । हरीतक्यादीनां कषायाः । एवं वक्ष्यमा-णेष्वपि । पाठा । विडंगः । अर्जुनः । धन्वनश्च । ते । धन्वनः धामनवृक्षः । इति द्वितीयः । उभे द्वे हरिद्रे हरिद्रा दारुहरिद्रा च । तगरं नगरपादं । विडंगं च । इति तृतीयः । कदम्बः । शालः । अर्जुनः । दीप्यकः अजमोदश्च । ते । इति चतुर्थः । दार्वी दारुहरिद्रा । विडंगं । खदिरः । धवश्च । इति पञ्चमः । सुराह्वः देवदारु । कुष्ठं । अगुरु । चन्दनं च । तानि । इति षष्ठः । दार्वी अग्निमन्थश्च । तौ । सपाठा त्रिफला च । इति सप्तमः । पाठा । मूर्वा ।

२७ । दार्व्याग्निमन्थौ त्रिफला इति ट पुस्तके ।

२७ । पाठा च मूर्वा गुणकटकं च इति ट ग पुस्तकयोः ।

यमान्युशीराण्यभया गुडूची चव्याभयाचित्रकसप्तपर्णाः ।
पादैः कषायाः कफमेहिनां ते दशोपदिष्टा मधुसम्प्रयुक्ताः ॥२८॥
उशीरलोध्रार्जुनचन्दनानामुशीरमुस्तामलकाभयानाम् ।
पटोलनिम्बामलकामृतानां मुस्ताभयापद्मकवृक्षकाणाम् ॥२९॥
लोध्राम्बुकालीयकधातकीनां निम्बार्जुनाम्रातनिशोत्पलानाम् ।
शिरीषसर्जार्जुनकेसराणां प्रियंगुपद्मोत्पलकिंशुकानाम् ॥३०॥

तथा श्वदंष्ट्रा गोक्षुरः । इति अष्टमः । यमानी । उशीराणि । अभया हरीतकी । गुडूची च । इति नवमः । चव्यः चविका । अभया । चित्रकः । सप्तपर्णश्च । ते । इति दशमः । इति दशभिः पादैः । पादः श्लोकचतुर्थांशः । कफमेहिनां दश कषायाः मधुसंप्रयुक्ताः उपदिष्टाः । ते मधुप्रक्षेपयुक्ताः प्रयोज्याः । दश कषायाः क्रमात् दशसु कफमेहेषु । सर्वेषु सर्वे वा ॥ २६-२८ ॥

पित्तमेहेषु दशभिः पादैः दश कषायानाह—उशीरलोध्रेत्यादि । उशीरः । लोध्रः । अर्जुनः । चन्दनं च । तानि । तेषां कषायः । एवं सर्वत्र । इत्येकः कषायः । उशीरः । मुस्तः । आमलकं । अभया हरीतकी च । तासां । इति द्वितीयः । पटोलं पटोलपत्रं । निम्बः निम्बवृक्षत्वक् । आमलकं । अमृता गुडूची च । तासां । इति तृतीयः । मुस्तः । अभया हरीतकी । पद्मकं पद्मकाष्ठं । वृक्षकः कुटजश्च । तेषां । इति चतुर्थः । लोध्रः । अम्बु वालकं । कालीयकं कालीयकाष्ठं । धातकी च । तासां । इति पञ्चमः । निम्बः । अर्जुनः । आम्रातः आम्रातकः । निशा हरिद्रा । उत्पलं च । तेषां । इति षष्ठः । शिरीषः । सर्जः । अर्जुनः । केसरः नागकेसरश्च । तेषां । इति सप्तमः । प्रियंगुः । पद्मं ईषत् श्वेतं । उत्पलं ईषन्नीलं । किंशुकश्च । तेषां । इत्यष्टमः । अश्वत्थः । पाठा । असनः ।

२८ । गुडूची जम्ब्वाभयाचित्रकसप्तपर्णाः इति ङ ण पुस्तकयोः ।

२९ । उशीरलोध्रांजनचन्दनानां इति ख ठ ण पुस्तकेषु ।

२९ । उशीरमुस्तामलकामृतानां इति ख ग पुस्तकयोः ।

३० । निम्बार्जुनानां तिनिशोत्पलानां इति ख ठ ण पुस्तकेषु ।

अश्वत्थपाठासनवेतसानां कटङ्कटेर्युत्पलमुस्तकानाम् ।
पैत्तेषु मेहेषु दश प्रदिष्टाः पादैः कषाया मधुसम्प्रयुक्ताः ॥३१॥
सर्वेषु मेहेषु हितौ तु पूर्वौ कषाययोगौ विहितास्तु सर्वे ।
मन्थस्य पाने यवभावनायां स्युर्भोजने पानविधौ पृथक् च ॥३२॥
सिद्धानि तैलानि घृतानि चैव योज्यानि मेहेष्वनिलात्मकेषु ।
मेदः कफश्चैव कषाययोगैः स्नेहैश्च वायुः शममेति तेषाम्॥३३॥

वेतसश्च । तेषां । इति नवमः । कटंकटेरी दारुहरिद्रा । उत्पलं । मुस्तकश्च । तेषां । इह कटंकटेरीकुटजोत्पलानामिति पाठो हि वृद्धवाग्भटसम्मतः । तथा च कुटजोत्पल-कटंकटेरीणां ॥ इति ( अ० सं० चि० १४ ) । इति दशमः । इति दशभिः पादैः पैत्तेषु मेहेषु पैत्तिकमेहेषु दश कषायाः मधुसंप्रयुक्ताः मधुसंक्षेपयुताः प्रदिष्टा उपदिष्टाः ॥ २६–३१ ॥

द्वाविंशतिः कषाया उक्ताः । आद्ययोर्विषयस्तत्र नोक्तः । सम्प्रति तमाह—सर्वेष्विति । उक्तेषु कषायेषु पूर्वौ प्रथमौ दार्वी सुराह्वेत्यादिना उक्तौ द्वौ कषाययोगौ । सर्वेषु मेहेषु हितौ सर्वमेहेषु प्रयोज्यौ । अथ उक्ताः सर्वे एव कषायाः यथादोषं पृथक् मन्थस्य पाने पानार्थमालोडने । यवस्य भावनायां भक्ष्यादीनामुपकल्पनार्थं । भोजने भोज्य-संस्कारे । पानविधौ च । विहिताः स्युः ॥ ३२ ॥

कफपित्तमेहेषु योगा उक्ताः । सम्प्रति वातजेषु कफपित्तोल्वणेषु यापनार्थं योगा-नाह—सिद्धानीति । अनिलात्मकेषु उत्पत्तितो वातिकेषु । न तु दोषक्षयात् वात-प्रकोपनिमित्तेषु । तेषामसाध्यत्वात् । मेहेषु कफपित्तानुगेषु । कषायैः सिद्धानि घृतानि पित्तानुगतेषु । कफानुगतेषु च तैलानि । एतत् दृष्ट्वानुबन्धं पवनात् कफस्ये-त्यादिना वक्ष्यमाणं पश्चात् । योज्यानि । तेषां प्रमेहिणां मेदः कफः वायुः चकारात् पित्तमपि कषाययोगैः स्नेहैः शमं एति प्राप्नोति । कषायसंपृक्तैः स्नेहैः कफपित्तमेद-सामनिलस्य च उपशमो भवति ॥ ३३ ॥

---

३१ । अश्वत्थपाठासनवेतसानां इति ख ठ पुस्तकयोः ।

३१ । पाठा पटोलार्जुननिम्बमुस्तैः इति क पुस्तके ।

कम्पिल्लसप्तच्छदशालजानि वैभीतरौहीतककौटजानि ।
कपित्थपुष्पाणि च चूर्णितानि क्षौद्रेण लिह्यात् कफपित्तमेही ॥३४॥
पिबेद्रसेनामलकस्य चापि कल्कीकृतान्यक्षसमानि काले ।
जीर्णे च भुञ्जीत पुराणमन्नं मेही रसैर्जाङ्गलजैर्मनोज्ञैः ॥३५॥
दृष्ट्वानुबन्धं पवनात् कफस्य पित्तस्य वा स्नेहविधिर्विकल्प्यः ।
तैलं कफे स्यात् स्वकषायसिद्धं पित्ते घृतं पित्तहरैः कषायैः ॥३६॥
त्रिकण्टकाश्मन्तकसोमवल्कैर्भल्लातकैः सातिविषैः सलोध्रैः ।
पाठापटोलार्जुननिम्बमुस्तैर्हरिद्रया पद्मकदीप्यकैश्च ॥३७॥

कम्पिल्लेति । कम्पिल्लः । सप्तच्छदः सप्तपर्णः । शालश्च । ते । तेभ्यो जातानि तज्जानि पुष्पाणि । वैभीतं । रौहीतकं । कौटजञ्च । तानि पुष्पाणि बिभीतकरोहीतककुटजकुसुमानि । कपित्थपुष्पाणि च । चूर्णितानि । कम्पिल्लादीनां पुष्पाणि चूर्णयित्वा क्षौद्रेण मधुना प्रातः लिह्यात् कफपित्तमेही । तानि कम्पिल्लादिपुष्पाणि कल्कीकृतानि अक्षसमानि कर्षमात्राणि आमलकस्य रसेन काले प्रातः पिबेद्वा । जीर्णे च तस्मिन् औषधे पुराणं अन्नं शालिषष्टिकाद्यन्नं भुञ्जीत ॥ ३४ । ३५ ॥

अनिलात्मकेषु सिद्धानि घृतानि तैलानि योज्यानीति सामान्यत उक्तं । सम्प्रति तद्विशिष्याह—दृष्ट्वानुबन्धमिति । पवनात् कफस्य पित्तस्य वा अनुबन्धं दृष्ट्वा वातजेषु कफपित्तयोरनुबन्धं दृष्ट्वा स्नेहविधिः विकल्प्यः विभज्य कल्पनीयः । तथा च कफे कफानुबन्धे स्वकषायैः कफघ्नौषधक्वाथैः सिद्धं तैलं स्यात् तैलं योज्यं । पित्ते पित्तानुबन्धे तु पित्तहरैः कषायैः सिद्धं घृतं योज्यं स्यात् ॥ ३६ ॥

त्रिकण्टकेत्यादि । त्रिकण्टकं गोक्षुरकं । अश्मन्तकः पाषाणभेदः । सोमवल्कः श्वेतखदिरश्च । ते । तैः सातिविषैः सलोध्रैः अतिविषालोध्रसहितैः । भल्लातकैः । वचा । पटोलं । अर्जुनः । निम्बः । मुस्तश्च । ते । तैः । हरिद्रया । पद्मकानि पद्मकाष्ठानि । दीप्यकाः अजमोदाश्च । तैः । मंजिष्ठया । अगुरुचन्दनैः अगुरुभिः चन्दनैश्च । कफघ्नैः कषायैश्चापि । स्वकषायसिद्धमित्युक्तं प्राक् । कफवातजेषु कफोल्वणेषु वातिकमेहेषु तैलं विपचेत् । स्नेहपाकविधिना । एतेषु पित्तोल्वणेषु च तैरेव त्रिकण्टकादिभिः तथा पित्तहरैः

भार्गी नतं चित्रकपिप्पलीनां मूलं सकुष्ठातिविषं सपाठम् ।
कलिङ्गकान् केसरमिन्द्रसाह्वान् नखं सपत्रं मरिचं प्लवञ्च ॥४१॥
द्रोणेऽम्भसः कर्षसमानि पक्त्वा पूते चतुर्भागजलावशेषे ।
रसेऽर्द्धभागं मधुनः प्रदाय पक्षं निधेयो घृतभाजनस्थः ॥४२॥
लोध्रासवोऽयं कफपित्तमेहान् क्षिप्रं निहन्याद् द्विपलप्रयोगात् ।
पाण्ड्वामयार्शांस्यरुचिं ग्रहण्या दोषं किलासं विविधञ्च कुष्ठम् ॥४३॥

इति लोध्रासवः ।

क्वाथः स एवाष्टपलं च दन्त्या भल्लातकानाञ्च चतुःपलं स्यात् ।
सितोपला त्वष्टपला विशेषः क्षौद्रञ्च तावत् पृथगासवौ तौ ॥४४॥

इन्द्रयवान् । केसरं नागकेसरं । नखं व्याघ्रनखं । सपत्रं सतेजपत्रं । मरिचं । प्लवं कैवर्त-मुस्तकं च । एतानि कल्कितानि कर्षसमानि प्रत्येकं कर्षमितानि । अम्भसः जलस्य द्रोणे कलसे पक्त्वा । चतुर्भागजलावशेषे पादशेषे अवतारिते पूते वस्त्रेण स्राविते । शीते च । तस्मिन् रसे क्वाथे मधुनः अर्द्धभागं प्रदाय तदर्धमितं मधु तत्र प्रक्षिप्य । मधुमिश्रितः स च क्वाथः घृतभाजनस्थः पुराणघृतभाजनस्थः पक्षं पञ्चदशदिनानि व्याप्य निधेयः स्थापनीयः । मधुमिश्रितं तं च क्वाथं पुराणघृतपात्रे निधाय पक्षमपेक्षेत । अयं लोध्रासवः । क्वचित् मध्वासव इति पाठः । द्विपलप्रयोगात् प्रतिदिनं द्विपलमात्रया प्रयुक्तः सन् कफपित्तमेहान् पाण्ड्वामयार्शांसि पाण्ड्वामयं पाण्डुरोगं अर्शांसि च । अरुचिं । ग्रहण्या दोषं । किलासं । किलासः कुष्ठविकल्पः । विविधं कुष्ठञ्च । क्षिप्रमाशु निहन्यात् नाशयेत् ॥ ४०-४३ ॥

क्वाथः स इति । स पूर्वोक्त एव क्वाथः लोध्रादीनां क्वाथः । क्षौद्रं मधु च । तावत् तत्परिमाणमेव क्वाथार्द्धमितमित्यर्थः । दन्त्या अष्टपलं । भल्लातकानां चतुष्पलं । सितोपला ( मिछरी ) च अष्टपला स्यात् । इत्ययं विशेषः लोध्रासवात् भेदः । स एव क्वाथः तावदेव मधु । लोध्रासवात् विशेषः पुनर्दन्त्या अष्टपलं सितोपलाया अष्टपलं

---

४३। मध्वासवोऽयं इति ठ य पुस्तकयोः ।

सारोदकं वाथ कुशोदकं वा मधूदकं वा त्रिफलारसं वा ।
सीधुं पिबेद्वा निगदं प्रमेही माध्वीकमग्र्यं चिरसंस्थितं वा ॥४५॥
मांसानि शूल्यानि मृगद्विजानां खादेद्यवानां विविधांश्च भक्ष्यान्
संशोधनारिष्टकषायलेहैः सन्तर्पणोत्थाञ्शमयेत् प्रमेहान् ॥४६॥

च । इत्येकस्मिन् योगे । अन्यस्मिन् पुनः भल्लातकानां चतुष्पलं । सितोपला अष्टपला च । एवं विशेषात् तौ आसवौ पृथक् लोध्रासवात् भिन्नौ । तथाच लोध्रादीनि कल्कितानि प्रत्येकं कर्षमितानि जलद्रोणे क्वाथयित्वा पादशेषमवतार्य तस्मिन् क्वाथे पूते शीते च दन्त्याश्चूर्णिताया अष्टपलं । एतत् दन्त्यासवे । भल्लातकासवे च भल्लातकानां चूर्णितानां चतुष्पलं । उभयत्र सितोपलाया अष्टपलं क्वाथार्द्धपरिमितं मधु च प्रक्षिप्य । तं क्वाथं पुराणघृतभाजने पक्षं स्थापयेत् । लोध्रादीनां कर्षांशान् दन्त्या अष्टपलं भल्लातकानां चतुष्पलं वा एकत्र जलद्रोणे क्वाथयित्वा पादशेषमवतार्य तस्मिन् सितोपलायाः अष्टपलं मधुनः अर्द्धभागं च प्रक्षिप्य स च क्वाथः घृतभाजने पक्षं निधेयः । इति पितृचरणाः । तौ आसवौ द्विपलप्रयोगात् कफपित्तमेहान् पाण्डुरोगादींश्च आशु शमयतः ॥ ४४ ॥

सारोदकमिति । प्रमेहो निवृत्तमधश्चेत् तदा । सारोदकं खदिरादिसारैः षडंगविधिना कृतमुदकं । एवं कुशोदकं । सारोदकं वा कुशोदकं वा । मधूदकं मधुना मधुरीकृतमुदकं वा । त्रिफलारसं पथ्यामलकविभीतकक्वाथं वा पिबेत् । मद्यसात्म्यश्चेत् निगदमदुष्टं पुराणं वा सीधुं पक्वेक्षुरसकृतं मद्यं । चिरसंस्थितं दीर्घकालस्थितं पुराणं अग्र्यं श्रेष्ठं माध्वीकं मध्वासवं वा पिबेत् ॥ ४५ ॥

मांसानीति । मृगद्विजानां मृगाणां हरिणादीनां जांगलपशूनां । द्विजानां पक्षिणां विष्किरप्रभृतीनां । शूल्यानि शूलपक्वानि मांसानि । तथा विविधान् यवानां

---

४५ । सारोदकं वाथ तुषोदकं वा इति ग पुस्तके ।

४५ । अस्मात् परं स्थाने च पूर्वे प्रवरासवानामशीतिरुक्ता चतुरुत्तरा वा । विभज्यताश्चापि पिबेत् प्रमेही शुद्धामयो दोषमलानि काले ॥ इत्यधिकं पठ्यते ङ पुस्तके ।

भृष्टान् यवान् भक्षयतः प्रयोगात् शुष्कांश्च सक्तून् भवन्ति मेहाः ।
श्वित्रञ्च कृच्छ्रं कफजं च कुष्ठं तथैव मुद्गामलकप्रयोगात् ॥४७॥
सन्तर्पणोत्थेषु गदेषु योगा मेदस्विनां ये च मयोपदिष्टाः ।
विरूक्षणार्थं कफपित्तजेषु सिद्धाः प्रमेहेष्वपि ते प्रयोज्याः ॥४८॥
व्यायामयोगैर्विविधैः प्रगाढैरुद्वर्त्तनैः स्नानजलावसेकैः ।
सेव्यत्वगेलागुरुचन्दनाद्यैर्विलेपनैश्च प्रशमन्ति मेहाः ॥४९॥

औषधक्वाथभावितानां गवाश्वजठरस्थितानां वा भक्ष्यान् । तथाविधैर्यवैरुपकल्पितान् भक्ष्यान् खादेत् प्रमेही । संशोधनारिष्टकषायलेहैः संशोधनैः कल्पोक्तवमनविरेचनयोगैः अरिष्टैः आसवैः कषायैः क्वाथैः लेहैः प्रागुक्तकपित्थकादिपुष्पचूर्णानां मधुना अवलेहनैश्च । सन्तर्पणोत्थान् सन्तर्पणनिमित्तान् प्रमेहान् शमयेत् भिषक् ॥४६॥

भृष्टानिति । प्रयोगः सततमभ्यासः । तान् तद्रूपान् । प्रतिदिनमित्यर्थः । भृष्टान् यवान् शुष्कान् सक्तूंश्च भक्षयतः । तथा मुद्गामलकप्रयोगात् भक्षयतः मुद्गान् आमलकानि च नित्यमुपयुंजानस्य च पुंसः । मेहाः । श्वित्रं । कृच्छ्रं कफजं च कुष्ठं । एते रोगा न भवन्ति न जायन्ते ॥ ४७ ॥

सन्तर्पणोत्थेष्विति । सन्तर्पणोत्थेषु सन्तर्पणनिमित्तेषु गदेषु रोगेषु ये योगाः सन्तर्पणीये अध्याये तथा मेदस्विनां स्थूलानां सम्बन्धे ये च योगाः अष्टौनिन्दितीये अध्याये पूर्वं मया उपदिष्टाः । सिद्धाः सिद्धफलाः ते सर्वे योगाः कफपित्तजेषु प्रमेहेष्वपि स्थूलानां विरूक्षणार्थं प्रयोज्याः ॥ ४८ ॥

व्यायामेति । विविधैः प्रगाढैः व्यायामयोगैः । सेव्यमुशीरं । त्वक् गुडत्वक् । एला । अगुरु । चन्दनं च । तदाद्यैः रुक्षभेषजैरुद्वर्त्तनानि । तैः उद्वर्त्तनैः । स्नानजलावसेकैः । सेव्यादीनां क्वाथेषु स्नानानि । तत्क्वाथजलैरवसेकाश्च । तैः । सेव्यादिभिः कल्कितैः विलेपनानि । तैः विलेपनैश्च मेदस्विनां मेहाः प्रशम्मन्ति शाम्यन्ति । विवृद्धमेदाः प्रगाढव्यायामोद्वर्त्तनस्नानविलेपनानि च रुक्षाभिरौषधीभिः । इति ( अ० सं० चि० १४ ) । शीलयेदिति पूर्वेणान्वयः ॥ ४९ ॥

४९ । सारजलावसेकैः इति च पुस्तके ।

क्लेदश्च मेदश्च कफश्च वृद्धः प्रमेहहेतुः प्रसमीक्ष्य तस्मात् ।
वैद्येन पूर्वं कफपित्तजेषु मेहेषु कार्य्याण्यपतर्पणानि ॥५०॥

( या वातमेहान् प्रति पूर्वमुक्ता
वातोल्वणानां विहिता क्रिया सा ।
वायुर्हि मेहेष्वतिकर्शितानां
कुप्यत्यसाध्यान् प्रति नास्ति चिन्ता ॥५१॥

क्लेदश्चेति । यस्मात् वृद्धः प्रवृद्धः क्लेदः शरीरजः । मेदः । कफश्च । प्रमेहहेतुः । तस्मात् वैद्येन कफपित्तजेषु मेहेषु पूर्वं प्रथमं प्रसमीक्ष्य विवेच्य अपतर्पणानि कार्याणि । अपतर्पणानि तथा कार्याणि यथा गुल्मादिदोषो न स्यात् । प्रमेहेषु अत्य-पतर्पणात् गुल्मादयः प्रादुर्भवन्ति । तदुक्तं प्राक्—गुल्मः क्षयो मेहनवस्तिशूलं मूत्र-ग्रहश्चाप्यपतर्पणेन । इति ॥ ५० ॥

वातमेहानिति । वातमेहान् उत्पत्त्या वातिकान् मेहान् । कफपित्तानुगतान् प्रति या क्रिया चिकित्सा पूर्वं सिद्धानि तैलानि घृतानि चैवेत्यादिना उक्ता । वातोल्वणानां कफपित्तोल्वणानां सम्बन्धे सा एव क्रिया विहिता । तथाच वातिकेषु कफानुगतेषु यथास्वौषधक्वाथसिद्धं तैलं । पित्तानुगतेषु च घृतं । एवं कफमेहेषु वातोल्वणेषु चापि तैलं । पित्तमेहेषु च घृतं योज्यं । ननु वातिका मेहा असाध्याः उक्ताः । कथं तेषु चिकि-त्सा उच्यते इति चेत् ? तत्राह—वायुर्हीति । मेहेषु कफपित्तजेषु अतिकर्शितानां पुंसां वायुः हि कुप्यति । कफपित्तमेहिनां अतिकर्शितानां अतिकर्शनात् कफादिषु क्षीणेषु वातः प्रकोपमापद्यते । तज्जाः ये वसामेहादयः वातिकाः ते हि असाध्याः । वक्ष्यति च—क्रमेण ये वातकृताश्च मेहाः । साध्या न ते । इति । ये पुनर्निदानवशात् वातिका उत्पन्नाः न ते असाध्याः । इह वातिकेषु यच्चिकित्सितमुक्तं तत् तेष्वेव । दोषक्षयात् वातप्रकोपनिमित्ता ये वसामेहादयः असाध्या उक्ताः । तान् असाध्यान् प्रति चिन्ता क्रियाविचारो नास्ति । असाध्यत्वात् तेषु चिकित्सितं नोच्यते । सुश्रुतस्तु तेष्वपि यापनार्थं चिकित्सामाह—अत उर्ध्वमसाध्येष्वपि यापनार्थं योगान् वक्ष्याम इत्यादिना ( सु० चि० ११ ) ॥ ५१ ॥

यैर्हेतुभिर्ये प्रभवन्ति मेहास्तेषु प्रमेहेषु न ते निषेव्याः ।
हेतोरसेवा विहिता यथैव जातस्य रोगस्य भवेच्चिकित्सा ॥५२॥
हारिद्रवर्णं रुधिरञ्च मूत्रं विना प्रमेहस्य हि पूर्वरूपैः ।
यो मूत्रयेत् तं न वदेत् प्रमेहं रक्तस्य पित्तस्य स हि प्रकोपः॥५३॥
दृष्ट्वा प्रमेहं मधुरं सपिच्छं मधूपमं स्याद् द्विविधो विचारः ।
क्षीणेषु दोषेष्वनिलात्मकः स्यात् सन्तर्पणाद्वा कफसम्भवः स्यात्॥५४॥

सर्वमेहेषु निदानवर्जनमाह— यैर्हेतुभिरित्यादि । यैर्हेतुभिः ये मेहाः प्रभवन्ति जायन्ते । तेषु प्रमेहेषु ते हेतवो न निषेव्याः न सेवनीयाः । ननु प्रमेहहेतूनामनुपसेवनादस्तु प्रमेहाणामनुत्पत्तिः। उत्पन्नेषु कथं हेतूनामनुपसेवनान्निवृत्तिः स्यादित ? अतः सर्वरोगेषु निदानवर्जनमपि चिकित्सितमित्याह—हेतोरसेवेति । हेतोः निदानस्य असेवा असेवनं । यथा रोगस्य अनुत्पत्तौ विहिता । एवं जातस्य उत्पन्नस्यापि रोगस्य चिकित्सा भवेत् निवृत्तये भवेत् । अथवा यथाविहिता यथाविधिकृता हेतोः असेवा तद्धेतोः सर्वथा परित्यागः जातस्य रोगस्य चिकित्सा भवेत् । तथा च—जातो रोगः स्वयमुपरमति । नित्यगस्वभावत्वाद् भावानां । साम्प्रतिक्या अपि स्थानं नास्त्यर्तेरिति ( च० शा० १ ) । उपरतोऽपि हेतूनां पारम्पर्यानुबन्धे स एव पुनः पुनरावर्त्तते । यदा पुनः हेतूनां त्यागः कृतः तदा अनुवृत्तेरभावात् सुतरां निवर्त्तते । एवं हि निदानवर्जनं सर्वरोगेषु चिकित्सितं भवति । तदुक्तं चिकित्साप्राभृतीये—जायन्ते हेतुवैषम्याद् विषमा देहधातवः । हेतुसाम्यात् समास्तेषां स्वभावोपरमः सदा ॥ प्रवृत्तिर्हेतुर्भावानां न निरोधेऽस्ति कारणम् । इति ॥५२॥

हारिद्रवर्णमिति । प्रमेहस्य पूर्वरूपैः प्रागुक्तैः स्वेदांगगन्धादिभिः विना यः पुमान् हारिद्रवर्णं रुधिरं रक्तं च मूत्रं मूत्रयेत् । तं न प्रमेहं वदेत् भिषक् । स हि रक्तस्य पित्तस्य प्रकोपः । नासौ प्रमेहः । तद्धि रक्तपित्तं ॥ ५३ ॥

दृष्ट्वा प्रमेहमिति । मधूपमं मधुतुल्यं । सह पिच्छया शाल्मलिनिर्यासेन तुल्यया वर्त्तमानं सपिच्छं । मधुरं प्रमेहं दृष्ट्वा द्विविधो विचारो वितर्कः भवति । किमयं प्रमेहः दोषेषु क्षीणेषु अनिलात्मकः स्यात् । वा अथवा सन्तर्पणात् कफसम्भवः

सपूर्वरूपाः कफपित्तमेहाः
क्रमेण ये वातकृताश्च मेहाः ।
साध्या न ते पित्तकृतास्तु याप्याः
साध्यास्तु मेदो यदि न प्रदुष्टम् ॥५५॥

स्यात् । चरकमते वातप्रकोपनिमित्तो मधुमेहो द्विधा जायते । धातुक्षयेण दोषावरणेन वा । तथा च प्रमेहिणामतिकर्शनात् कफादिषु क्षीणेषु प्रकुपितो वायुरेकमुत्पादयति । सन्तर्पणात् प्रवृद्धैः कफादिभिरावरणात् प्रकुपितः पुनरन्यं । तत्राद्यः असाध्यः इह उच्यते । अन्त्यः कृच्छ्रसाध्यः कियन्तःशिरसीये प्राक् उक्तः—तैरावृतः प्रसादं च गृहीत्वा याति मारुतः । यदा वस्तिं तदा कृच्छ्रो मधुमेहः प्रवर्त्तते ॥ इति ( च० श्लो० १७ ) । सुश्रुतमते तु सर्व एव प्रमेहा उपेक्ष्यमाणाः मधुमेहतामापद्यन्ते । तथाच—सर्व एव प्रमेहास्तु कालेनाप्रतिकारिणः । मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि ॥ ( सु० नि० ६ ) ॥ ५४ ॥

कफपित्तवातजाः क्रमेण साध्ययाप्यासाध्या उक्ताः । सम्प्रति सर्वमेहानामसाध्यभावं दर्शयति—सपूर्वरूपा इति । ये कफपित्तमेहाः । सह पूर्वरूपैः प्रागुक्तस्वेदांगगन्धादिभिः सर्वैः वर्त्तमानाः सपूर्वरूपाः । ते न साध्याः असाध्याः । उक्तं च—अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरं । विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवं ॥ इति ( च० ई० ५ ) । वातजानामसाध्यत्वं प्रागेव उक्तं । ते यथा असाध्या भवन्ति तदाह—क्रमेणेति । ये मेहाः क्रमेण वातकृताः कफपित्तमेहिनामतिकर्शनात् कफादिषु क्षीणेषु प्रकुपितेन वातेन कृताः । यथा वसामेहादयः । आदौ श्लेष्ममेहाः । श्लेष्मादीनां क्षये पित्तं प्रकुप्यति । पित्तस्य प्रकोपात् पित्तमेहाः । तत्क्षये च वातः प्रकोपमापद्यते । स च प्रकोपमापन्नः शरीरस्य परमसारभूतान् धातून् वसादीन् वस्तिमाकर्ष्य मूत्रेण सह विसृजन् वसामेहादीन् जनयति । इति । क्रमेणेति । क्रमेण वातकृता ये मेहाः न तु ये निदानवशात् वातिका उत्पन्नाः । ते न साध्याः असाध्याः । प्रसंगात् पित्तजानां साध्यत्वमप्याह—पित्तकृतास्त्विति । पित्तकृताः मेहा याप्या उक्ताः । मेदसि नातिदुष्टे सति ते पुनः साध्या अपि भवन्ति ॥५५॥

जातः प्रमेही मधुमेहिनो वा
न साध्य उक्तः स हि वीजदोषात् ।
ये चापि केचित् कुलजा विकारा
भवन्ति तांश्च प्रवदन्त्यसाध्यान् ॥५६॥
प्रमेहिणां याः पिड़का मयोक्ता
रोगाधिकारे पृथगेव सप्त ।
ताः शल्यविद्भिः कुशलैश्चिकित्स्याः
शस्त्रेण संशोधनरोपणैश्च ॥५७॥

द्विविधो हि प्रमेहः सहजः अपथ्यनिमित्तश्च । अत्र अपथ्यनिमित्तस्यासाध्यत्वं दर्शयित्वा सहजस्यासाध्यत्वमाह—जातः प्रमेहीति । मधुमेही प्रमेही । मधुमेहशब्द इह प्रमेहसामान्यवचनः। मधुमेहशब्दः सामान्येऽपि वर्त्तते । तदुक्तं—तस्मात् सर्वेऽपि मधुमेहशब्देनोच्यन्ते । यतः सर्वेष्वपि प्रति मध्विव मधुरं मेहति। मधुररसश्चास्य देहो भवति ॥ इति ( अ० सं० नि० १० )। यदि विशेषवाची वातिक एव अभिप्रेतः। तदा मधुमेहीति वाच्यं स्यात् । न तु सामान्यतः प्रमेहीति। मधुमेहिनो जातस्य मधुमेहित्व-स्यैवौचित्यात् । कार्यस्य कारणगुणानुविधायित्वनियमात् । तस्मात् जातः प्रमेही यः । वाशब्दः प्रागुक्तापथ्यनिमित्तपक्षापेक्षया विकल्पे । स न साध्यः असाध्यः उक्तः । कुतः ? हि यतः स प्रमेही वीजस्य गर्भारम्भककारणस्य शुक्रार्तवस्य दोषात् प्रमेहदोषदुष्टत्वात् प्रमेही जातः । यतः स प्रमेहिभ्यां मातापितृभ्यां जातः । तस्मात् असाध्यः । सहजप्रमेहस्यासाध्यत्वप्रसंगात् अन्येषामपि सहजरोगाणामसाध्यत्व-माह—ये चापीति । प्रमेहवत् अन्ये ये चापि केचित् विकाराः रोगाः कुलजाः भवन्ति । पितापितामहादिभ्यस्तत्तद्विकारवद्भ्यो जायन्ते । प्रमेहमिव तांश्चापि कुलजान् विका-रान् असाध्यान् प्रवदन्ति भिषजः ॥ ५६ ॥

कियन्तःशिरस्तीये सप्त पिडका उक्ताः । सम्प्रति तासां चिकित्सासूत्रमाह—

५६ । जातः प्रमेही मधुमेहिनां वा इति ख ग घ पुस्तकेषु ।
५६ । मधुमेहिना यः इति ठ पुस्तके ।

तत्र श्लोकाः ।

हेतुर्दोषो दूष्यं मेहानां साध्यतानुरूपश्च ।
मेही द्विविधो द्विविधं भिषग्जितमतिच्चपणदोषः ॥५८॥
आद्या यवान्नविकृतिर्मन्था मेहापहाः कषायाश्च ।
तैलघृतलेहयोगा भक्ष्याः प्रवरासवाः सिद्धाः ॥५९॥

प्रमेहिणामिति । रोगाधिकारे रोगाध्यायचतुष्कान्तर्गते कियन्तःशिरसीये अध्याये । प्रमेहिणां । इह प्रमेहशब्देन मधुमेह उच्यते । तत्र पिडकानां मधुमेहसम्बन्धेनोक्तत्वात् । तथाच—भवन्त्युपेक्षया तस्य पिडकाः सप्त दारुणाः । इति । सर्वेषां मधुमेहशब्दवाच्यत्वात् उपेक्षया मधुमेहतापत्तेश्च इति कृत्वा सामान्यवचनेऽपि पिडकानां माधुमेहिकत्वसम्भवात् प्रमेहिणामिति वचनं सामान्यपरं वापि । प्रमेहिणां याः सप्त शराविकाद्याः । शराविका कच्छपिका जालिनी सर्षपी तथा । अलजी विनताख्या च विद्रधी चेति सप्तमी ॥ इति ( च० श्लो० १७ ) । पिडकाः पृथक् यथास्वं लक्षणैः उक्ताः । ताः कुशलैः शस्त्रकर्मादिषु निपुणैः शल्यविद्भिः शल्यतन्त्रविद्भिः धन्वन्तरीयैः भिषग्भिः शस्त्रेण शस्त्रोपचारेण संशोधनरोपणैः शोधनैः रोपणैश्च चिकित्स्याः । तासु धन्वन्तरीयाणामधिकृतत्वात् इह चिकित्सासूत्रमात्रमुक्तं । पराधिकारेषु न विस्तरोक्तिरिति । विस्तरस्तत्रानुसन्धेयः ॥५७॥

सम्प्रति अध्यायार्थसंग्रहं करोति । तत्र श्लोका इति । मेहानां हेतुर्निदानं । दोषः कफादिः । दूष्यं मेदःप्रभृति । साध्यतानुरूपः द्विविधो मेही । विंशतिरेव मेहा इति मेहेषु विंशतावपि लाघवात् सौकर्याच्च चिकित्सितोपयोगितया प्रमेहिणां द्वैविध्येन संग्रहः । स च स्थूलः प्रमेहीत्यादिना उक्तः । द्विविधं शोधनशमनरूपं भिषग्जितं चिकित्सितं । निदानस्थानेऽपि —तत्र साध्यान् प्रमेहान् संशोधनोपशमनैर्यथार्हमुपपादयंश्चिकित्सेत् । इति । क्वचित् त्रिविधमिति पाठः । संशोधनं संशमनं सन्तर्पणं च इति त्रिविधं । तदुक्तं—सन्तर्पणः संशमनो विधिश्च । इति । निदानवर्जनमिति चक्रपाणिः । तन्न मनोरमं । निदानवर्जनं सामान्यतः सर्वेष्वेव रोगेषु चिकित्सितं ।

---

५८ । हेतुर्दोषा दूष्याणां मेहानां साध्यता रूपं मेही । द्विविधस्त्रिविधं भिषग्जितं अतिक्षपणदोषाः ॥ इति ठ पुस्तके ॥

**व्यायामविधिर्विविधः स्नानान्युद्वर्त्तनानि गन्धाश्च ।**
**मेहानां प्रशमार्थं चिकित्सिते दिष्टमेतावत् ॥६०॥**

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
प्रमेहचिकित्सितं नाम षष्ठोऽध्यायः ॥ ६ ॥

सप्तमोऽध्यायः ॥

**अथातः कुष्ठचिकित्सितं व्याख्यास्यामः । इति ह स्माह भगवानात्रेयः ॥१॥**

**हेतुं द्रव्यं लिङ्गं कुष्ठानामाश्रयं प्रशमनञ्च ।**
**शृणवग्निवेश सम्यग्विशेषतः स्पर्शनघ्नानाम् ॥२॥**

तस्य प्रतिरोगमुक्तत्वात् । अतिक्षपणदोषः अत्यपतर्पणदोषः गुल्मः क्षय इत्यादिः । आद्या अदनीया भक्षणीया आहार इत्यर्थः । यवान्नविकृतिः । मेहापहाः मेहघ्नाः मन्थाः । कषायाः क्वाथाः । तैलघृतलेहयोगाः यथास्वौषधसाधितानि तैलानि घृतानि च । लेहाः कम्पिल्लादिपुष्पचूर्णानां मधुना अवलेहनानि । भक्ष्याः कषायभावितयवै-रुपकल्पिताः । सिद्धाः सिद्धफलाः प्रवराः श्रेष्ठाः आसवा लोध्रासवाद्याः । विविधो व्यायामविधिः । सेव्यत्वगादिभिः स्नानानि । उद्वर्त्तनानि । गन्धाः । विलेपनानि च । इति एतावत् एतन्मात्रं मेहानां प्रशमार्थं चिकित्सिते प्रमेहचिकित्सिते अस्मिन् अध्याये दिष्टमुपदिष्टं भगवता आत्रेयेण पुनर्वसुना ॥५८-६०॥

इति वैद्यरत्नश्रीयोगीन्द्रनाथविद्याभूषणकृते चरकोपस्कारे चिकित्सितस्थाने षष्ठोऽध्यायः ॥ ६ ॥

सप्तमोऽध्यायः ।

पूर्वाध्याये प्रमेहचिकित्सितमुक्तं । सम्प्रति उद्देशक्रमप्राप्तं कुष्ठचिकित्सितमभिधातुं प्रतिजानीते—अथात इति । सर्वं पूर्ववद् व्याख्येयम् ॥ १ ॥

हेतुमिति । भगवानात्रेयः पुनर्वसुरग्निवेशमाह—हे अग्निवेश । स्पर्शनं स्पर्शनेन्द्रियं त्वक् । स्पर्शघ्नानां स्पर्शनेन्द्रियनाशनानां । कुष्ठानां । हेतुं निदानं । द्रव्यं प्रकृतिभूतं दोषदूष्यरूपं । लिंगं प्रादुर्भूतलक्षणं । चकारात् प्रागुत्पत्तिलक्षणं । सम्प्राप्तिञ्चापि । व्याधिज्ञापकतया लिंगशब्देन पूर्वरूपसम्प्राप्त्योरपि संग्रहः । लिंगं कुष्ठानां कपालादीनां यथास्वं वातादिकृतश्चापि । आश्रयं आश्रयभूतं दोषविशेषं । प्रशमनं चिकित्सितञ्च ।

विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च ।
भजतामागतां छर्दिं वेगांश्चान्यान् प्रतिघ्नताम् ॥३॥
व्यायाममतिसन्तापमतिभुक्त्वोपसेविनाम् ।
शीतोष्णलंघनाहारान् क्रमं मुक्त्वा निषेविणाम् ॥४॥
घर्मश्रमभयार्त्तानां द्रुतं शीताम्बुसेविनाम् ।
अजीर्णाध्याशिनाञ्चैव पञ्चकर्मापचारिणाम् ।५॥

एतत् सर्वं सम्यग् अवहितः सन् विशेषतः मया विशिष्य उच्यमानं शृणु । हेत्वादीनां निदानस्थाने प्रागुक्तानामपि पुनरिहाभिधानं चिकित्साप्रसंगात् ॥ २ ॥

तत्रादौ हेतुमाह—विरोधीनीति । विरोधीनि विरुद्धानि आत्रेयभद्रकाप्यीये न मत्स्यान् पयसा सहाभ्यवहरेदित्यादिना उक्तानि । द्रवस्निग्धगुरूणि द्रवाणि स्निग्धानि गुरूणि च । गुरूणि प्रकृत्या मात्रया च । तथाविधानि अन्नपानानि भजतां सेवमानानां । आगतां उपस्थितवेगां छर्दिं तथा आगतान् अन्यान् वेगान् मूत्रपुरीषादिवेगांश्च प्रतिघ्नतां रुन्धतां । अतिभुक्त्वा व्यायामं सन्तापं च अतिकृत्वा उपसेविनां व्यायामसन्तापयोः अतिसेवनशीलानां । व्यायाममतिसन्तापमित्यत्र कृद्योगलक्षणा षष्ठ्येव उचिता । एवं शीतोष्णलंघनाहारानित्यत्रापि । शीतोष्णलंघनाहारान् प्रति यः क्रमः आनुपूर्वी तं मुक्त्वा लंघित्वा तेषां निषेविणां । क्रमव्यत्ययेन शीतोष्णयोः लंघनाहारयोः अपतर्पणसंतर्पणयोश्च सेवनशीलानां । निदानस्थानेऽप्युक्तं—शीतोष्णव्यत्यासमनानुपूर्व्योपसेवमानस्य । तथा सन्तर्पणापतर्पणाभ्यवहार्यव्यत्यासं । इति ( च० नि० ५ ) । घर्मः । आतपः । क्लमः । भयञ्च । तैः आर्तानां सतां । द्रुतं अविश्रम्य सहसा शीताम्बुसेविनां शीतोदकमवगाहमानानां । तदुक्तं—भयश्रमसन्तापोपहतस्य च सहसा शीतोदकमवतरतः । इति (च० नि० ५) । अजीर्णाध्याशिनाञ्चैव अजीर्णाशिनां अध्याशिनाञ्च । अजीर्णाशिनां अजीर्णे आमे अश्नतां । अध्याशिनां भुक्ते अन्ने अपरिणते पुनर्भुञ्जानानां । भुक्तं पूर्वान्नशेषे तु पुनरध्यशनं मतं । इति ( च० चि० १५ ) । पञ्चकर्मापचरिणां पञ्चसु कर्मसु वमनादिषु कृतेषु अपचारिणां अपचारं कुर्वतां

नवान्नदधिमत्स्यातिलवणाम्लनिषेविणाम् ।
माषमूलकपिष्टान्नतिलक्षीरगुडाशिनाम् ॥६॥
व्यवायञ्चाप्यजीर्णेऽन्ने निद्रां वा भजतां दिवा ।
विप्रान् गुरून् धर्षयतां पापं वा कर्म कुर्वताम् ॥७॥
वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च ।
दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः ॥८॥
ततः कुष्ठानि जायन्ते सप्त चैकादशैव च ।
न चैकदोषजं किञ्चित् कुष्ठं समुपलभ्यते ॥९॥

निषिध्यमाचरतां । नवान्नेति । इह मत्स्यातीत्यतिशब्दः निषेविणामित्यतः प्राक् योजनीयः । नवमन्नं दधि मत्स्यः लवणः अम्लश्च रसः। तान् अतिनिषेवितुं शीलमेषां। तेषां तथोक्तानां । माषः । मूलकः । पिष्टान्नं । तिलः । क्षीरं । गुडश्च । तान् अशितुं भोक्तुं शीलमेषां तेषां । व्यवायमिति । अन्ने अजीर्णे विदग्धादिरूपे च व्यवायं मैथुनं भजतां । दिवानिद्रां भजतां च । विप्रान् ब्राह्मणान् गुरून् पूज्यांश्च धर्षयतां अभिभवतां । पापं कर्म कुर्वतां च । इति निदानं । तथाविधानां पुंसां वातादयः त्रयः दोषाः दुष्टाः दुष्टत्वात् । त्वक् रक्तञ्च तयोः समाहारः तत् । मांसं । अम्बु उदकं लसीकाख्यं । त्वगसृग्लसीकास्रुगामिषमिति ( अ० सं० नि० १४ )। दूषयन्ति। वातादयस्त्रयो दोषाः । त्वगादयश्चत्वारो दूष्याः । मिलित्वा सप्त । इति सप्तको गणः कुष्ठानां द्रव्यसंग्रहः । सर्वेषां कुष्ठानां समासतः सप्त द्रव्याणि प्रकृतिभूतानि भवन्ति । तद्यथा वातः पित्तं कफः त्वक् रक्तं मांसं लसीका च । तदुक्तं—त्रयो दोषाः वातपित्तश्लेष्माणः प्रकोपणविकृताः । दूष्याश्च शरीरधातवस्त्वङ्मांस शोणितलसीकाश्चतुर्धा दोषोपघातविकृताः। इति । एवं सप्त धातुकमेवंगतमाजननं कुष्ठानामिति । च० नि० ५ ) । इति द्रव्यमुक्तं भवति ॥ ३ । ८ ॥

सम्प्राप्तिमाह—ततः कुष्ठानीति । ततः तस्मात् सप्तकात् सप्त महान्ति कपाला-

स्पर्शाज्ञत्वमतिस्वेदो न वा वैवर्ण्यमुन्नतिः ।
कोठानां रोमहर्षश्च कण्डूस्तोदः श्रमः क्लमः ॥१०॥
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।
सुप्तत्वमंगे दाहश्च कुष्ठलक्षणमग्रजम् ॥११॥

दीनि एकादश क्षुद्राणि एककुष्ठादीनि मिलित्वा अष्टादश कुष्ठानि जायन्ते । सुश्रुतेऽपि—सप्त महाकुष्ठानि। एकादश क्षुद्रकुष्ठानि । एवमष्टादश कुष्ठानि भवन्ति। इति (सु० नि० ५)। एवं सर्वेषां त्रिदोषारब्धत्वात् न च किञ्चित् किमपि कुष्ठं एकदोषजं समुपलभ्यते । वातिकत्वादिव्यपदेशस्तु तत्तद्दोषस्योल्बणत्वात् । तदुक्तं—सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः । इति (अ० सं० नि० १४) ॥ ६ ॥

पूर्वरूपाण्याह—स्पर्शाज्ञत्वमिति । स्पर्शाज्ञत्वं स्पर्शज्ञानरहितत्वं त्वचि सुप्तता । अतिस्वेदः । न वा स्वेदः अस्वेदः । अस्वेदनमतिस्वेदनमिति (च० नि० ५)। वैवर्ण्यं विवर्णता । वरटीदष्टसंकाशः शोथः कोठः । तेषां कोठानां उन्नतिः । अकस्मात् रोमहर्षः। कण्डूः। तोदः सुचीव्यधनवत् व्यथा । श्रमः । क्लमः अनायासः श्रमः । योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः । क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥ इति (सु० शा० ४)। व्रणानां शीघ्रोत्पत्तिः दुष्टशोणितत्वात् अल्पेऽपि हेतौ कोपः । चिरस्थितिश्च न आशु निवृत्तिर्भवति । शूलं वेदना च अधिकं। अंगे सुप्तत्वं सुप्तता अक्रियत्वं। दाहश्च । एतत् सर्वं अग्रजं कुष्ठलक्षणं कुष्ठानां प्रागूपं भवति । सुश्रुतेऽपि—तस्य पूर्वरूपाणि त्वक्पारुष्यमकस्माद् रोमहर्षः कण्डूः स्वेदबाहुल्यमस्वेदनं वा अङ्गप्रदेशानां स्वापः क्षतविसर्पणमसृजः कृष्णता च । इति (सु० नि० ८) ॥ १० । ११ ॥

---

१० । स्पर्शान्यथात्वं स्वेद इति न वा इति ठ पुस्तके ।

११ । मूढस्रांगता चेति कुष्ठलक्षणमग्रजं इति क पुस्तके ।

अत ऊर्ध्वमष्टादशानां कुष्ठानां कपालौदुम्बरमण्डलर्ष्य-जिह्व-पुडरीकसिध्मकाकणकैकुष्ठचर्माख्यकिटिमविपादिकाल-सकदद्रुचर्मदल-पामाविस्फोट-शतारु-विचर्चिकानां लक्षणान्यु-पदेक्ष्यामः ॥१२॥

कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु ।
कपालं तोदबहुलं तत् कुष्ठं विषमं स्मृतम् ॥१३॥
दाहकण्डूरुजारागपरीतं रोमपिञ्जरम् ।
उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत् ॥१४॥

कुष्ठानि सप्त चैकादशैव च इति अष्टादश उक्तानि। सम्प्रति तेषां नामग्राहं एकै-कस्य विशिष्य लिंगान्यभिधातुं पुनः प्रतिजानीते—अत ऊर्ध्वमिति। अत ऊर्ध्वं अतः परं। कपालं। उदुम्बरं। मण्डलं। ऋष्यजिह्वं। पुण्डरीकं। सिध्मं। काकणं। इति सप्त महाकुष्ठानि। एककुष्ठं। चर्माख्यं कुष्ठं। किटिमं। विपादिका। अलसकं। दद्रुः। चर्मदलं। पामा। विस्फोटः। शतारुः। विचर्चिका च। इति एकादश क्षुद्रकुष्ठानि। तेषां तदाख्यानां अष्टादशानां कुष्ठानां यथास्वं लक्षणानि उपदेक्ष्यामः ॥ १२ ॥

उद्देशक्रमेण कुष्ठानां लक्षणान्याह। तत्रादौ कपालस्य लक्षणमुच्यते—कृष्णारु-णेति। यत् कुष्ठं। कृष्णारुणः यः कपालः घटखर्परः। स इवाभाति। तस्याभेव आभा यस्य इति वा। तत् कृष्णारुणकपालाभं। रूक्षं। परुषं खरस्पर्शं। तनु असांद्रं। तोदः सूचीव्यधनवत् व्यथा। स बहुलो यत्र तत्। विषमं विषमविस्तृतं असम-विस्तृतपर्यन्तं। दुश्चिकित्स्यं वा। तत् कुष्ठं कपालं स्मृतं ॥ १३ ॥

औदुम्बरस्य लक्षणमाह—दाहेति। दाहः। कण्डूः। रुजा। रागश्च। तैः परीतं युक्तं। रोमपिञ्जरं रोमाणि पिञ्जराणीव यस्मिन् तत् रोमपिञ्जरं। रोमराजिभिराचितमित्यर्थः। उक्तञ्च—ताम्राणि ताम्ररोमराजिभिरवनद्धानीति (च० नि० ५)। रोमभिः पिञ्जरं कपिल-

---

१३। यद्रुष्णां परुषं तनु इति ग ग पुस्तकयोः।

श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् ।
कृच्छ्रमन्योन्यसंसक्तं कुष्ठं मण्डलमुच्यते ॥१५॥
कर्कशं रक्तपर्य्यन्तमन्तःश्यावं सवेदनम् ।
यदृष्यजिह्वासंस्थानमृष्यजिह्वं तदुच्यते ॥१६॥
सश्वेतं रक्तपर्य्यन्तं पुण्डरीकदलोपमम् ।
सोत्सेधञ्च सरागञ्च पुण्डरीकं प्रचक्षते ॥१७॥
श्वेतं ताम्रं तनु च यद् घृष्टमुद्गिरते रजः ।
अलाबूपुष्पवर्णं तत् सिध्मं प्रायेण चोरसि ॥१८॥

मित्यन्ये । तन्न मनोरमं । उडुम्बरफलमिवाभासते आभाति इति उडुम्बरफलाभासं । पक्वोडुम्बरफलसदृशं यत् कुष्ठं तत् औडुम्बरं औडुम्बरकुष्ठं वदेत् भिषक् ॥१४॥

मण्डलस्य लक्षणमाह—श्वेतं रक्तमिति । श्वेतं रक्तञ्च श्वेतरक्तावभासं । स्थिरं कठिनं । स्त्यानं घनं । स्निग्धं । उत्सन्नमण्डलं उन्नतमण्डलं । कृच्छ्रं कृच्छ्रसाध्यं । अन्योन्यसंसक्तं परस्परमिलितं । तथाविधं यत् कुष्ठं तत् मण्डलं उच्यते ॥ १५ ॥

ऋष्यजिह्वस्य लक्षणमाह—कर्कशमिति । यत् कुष्ठं । कर्कशं । रक्तपर्यन्तं प्रान्ते रक्तं । अन्तः मध्ये च श्यावं । सवेदनं । ऋष्यो नीलाण्डो हरिणः । तस्य जिह्वा । तस्याः संस्थानमिव संस्थानमाकृतिर्यस्य तत् तथोक्तं । तत् कुष्ठं ऋष्यजिह्वमुच्यते ॥ १६॥

पुण्डरीकमाह—सश्वेतमिति । यत् कुष्ठं सश्वेतं सरागञ्च श्वेतरक्तावभासं । रक्तपर्यन्तं रक्तप्रान्तं । पुण्डरीकं श्वेतपद्मं । तस्य दलं पत्रं श्वेतरक्तं । तेन उपमा यस्य तत् । सोत्सेधमुन्नतिमत् । तत् कुष्ठं पुण्डरीकं प्रचक्षते आहुः भिषजः ॥१७॥

सिध्मकुष्ठस्य लक्षणमाह—श्वेतमिति । यत् कुष्ठं । श्वेतं ताम्रञ्च शुक्लरक्तावभासं । तनु अघनञ्च । यत् घृष्टं सत् रजः उद्गिरते विमुञ्चति । अलाबूपुष्पवर्णञ्च । तत् कुष्ठं सिध्मं सिध्माख्यं । तच्च प्रायेण बाहुल्येन । उरसि वक्षसि । ऊर्ध्वकाये इत्यर्थः । जायते । प्रायेणेत्यनेन तत् अन्यत्रापि भवति । उरसि तु बाहुल्येनेति ज्ञाप्यते ॥ १८ ॥

---

१७। सोत्सेधं च सरागं च इति ङ ग पुस्तकयोः ।

१८। श्वेतं ताम्रं तनुत्वं स्याद्रजो घृष्टं विमुञ्चति ङ ग पुस्तकयोः ।

यत् काकणन्तिकावर्णमपाकं तीव्रवेदनम् ।
त्रिदोषलिङ्गं तत् कुष्ठं काकणं नैव सिध्यति ॥१६॥
इति सप्त महाकुष्ठानि ।

अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम् ।
तदेककुष्ठं चर्माख्यं बहलं हस्तिचर्मवत् ॥२०॥
श्यावं किणखरस्पर्शं परुषं किटिमं स्मृतम् ।
वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम् ॥२१॥
कण्डूमद्भिः सरागैश्च गण्डैरलसकं चितम् ।
सकण्डूरागपिड़कं दद्रुमण्डलमुद्गतम् ॥२२॥

काकणमाह—यदिति । यत् कुष्ठं । काकणन्तिका काकदन्ती गुंजा । तद्वर्णं । काकणन्तिकाफलसदृशरक्तकृष्णं । अपाकं । तीव्रवेदनञ्च । तत् काकणमुच्यते । तत् काकणं त्रिदोषलिंगं । तत्र दोषाणां त्रयाणामेव उल्वणत्वात् । तस्मात् न सिध्यति । तदसाध्यं । इति सप्त महाकुष्ठानि लक्षणैरुक्तानि ॥ १६ ॥

सम्प्रति क्षुद्रकुष्ठान्येकादश लक्षणैरुच्यन्ते । तत्रादौ एककुष्ठमाह—अस्वेदनमिति । यत् कुष्ठं । अस्वेदनं स्वेदरहितं । महावास्तु महास्थानं भूरिदेशव्यापकं । मत्स्यस्य शकलं शल्कं । तेन उपमा यस्य तत् मत्स्यशकलोपमं । तत् एककुष्ठं ॥ चर्माख्यं कुष्ठमाह—चर्माख्यमिति । चर्माख्यं कुष्ठं । बहलं घनं । हस्तिचर्मवत् हस्तिचर्मणा तुल्यं हस्तिचर्मेव खरस्पर्शं ॥ २० ॥

किटिममाह—श्यावमिति । श्यावं । किणः रूढव्रणस्थानं । तद्वत् खरस्पर्शं कार्कशस्पर्शं । परुषञ्च । तत् कुष्ठं किटिमं स्मृतं ॥ विपादिकामाह—वैपादिकमिति । विपादिका एव वैपादिकं । तदाख्यं कुष्ठं । पाणी पादौ च तत् पाणिपादं । तस्य स्फुटनं दारणं पाणिपादविदारि । तीव्रवेदनञ्च ॥ २१ ॥

अलसकमाह—कण्डूमद्भिरिति । कण्डूमद्भिः सकण्डूकैः सरागैश्च गण्डैः स्फोटैः

---

१६ । यत्काकणन्तिकावर्णं सपाकं तीव्रवेदनं इति ख ग छ ठ थ पुस्तकेषु ।
२१ । किटिभं स्मृतं इति ख ग ट ठ पुस्तकेषु ।

रक्तं सशूलं कण्डूमत् सस्फोटं यद् दलत्यपि ।
तच्चर्म्मदलमाख्यातं संस्पर्शासहमुच्यते ॥२३॥
पामा श्वेतारुणश्यावा कण्डूला पिड़का भृशम् ।
स्फोटाः श्वेतारुणाभासो विस्फोटाः स्युस्तनुत्वचः ॥२४॥
रक्तं श्यावं सदाहार्त्ति शतारुः स्याद्बहुव्रणम् ।
सकण्डूपिड़का श्यावा बहुस्रावा विचर्च्चिका ॥२५॥
इत्येकादश क्षुद्रकुष्ठानि ।

चितं व्यासं कुष्ठं अलसकं स्मृतं ॥ दद्रुमाह—सकण्डूरागेति । सह । कण्डूः । रागः । पिडका च । ताः । ताभिः वर्तमानं । तत् तथाविधं उद्गतं मण्डलं दद्रुः इति स्मृतं ॥ २२ ॥

चर्मदलमाह—रक्तं सशूलमिति । यत् कुष्ठं । रक्तं । सशूलं सवेदनं । कण्डूमत् । दलत्यपि विदीर्यते च । तत् चर्मदलमिति आख्यातमुक्तं । तत् संस्पर्शस्यासहं उच्यते । तत् स्पर्शं न सहते ॥ २३ ॥

पामामाह—पामेति । श्वेतारुणश्यावाः श्वेतारुणाः श्यावाश्च । भृशं कण्डूलाः कण्डूमत्यः । पिडकाः पामा इति स्मृताः । ताश्च प्रायेण स्फिक्पाणिकूर्परे जायन्ते । यदुक्तं वृद्धवाग्भटेन—पिडकाः पामा कण्डूक्लेदरुजाधिकाः । सूक्ष्माः श्यावारुणा बह्व्यः प्रायः स्फिक्पाणिकूर्परे ॥ इति (अ० सं० चि० १४) । तदा तस्याः कच्छूरिति संज्ञामाह सुश्रुतः । तथाच—सास्रावकण्डूपरिदाहवद्भिः पामाणुकाभिः पिडकाभिरुह्या । स्फोटैः सदाहैरसितैश्च कच्छूः स्फिक्पाणिपादप्रभवैर्निरूप्या ॥ इति ( सु० नि० ५ ) ॥ विस्फोटमाह—स्फोटा इति । श्वेतारुणा आभाः येषां ते श्वेतारुणाभासः । तनुत्वचः स्फोटाः विस्फोटाः स्युः ॥ २४ ॥

शतारुमाह—रक्तं श्यावमिति । शतारुः तदाख्यं कुष्ठं । रक्तं । श्यावं । सह

२४ । श्वेताः श्यावारुणाभासो विस्फोटा इति क ख ग ङ पुस्तकेषु ।

वातेऽधिकतरे कुष्ठं कापालं मण्डलं कफे।
पित्ते त्वौदुम्बरं विद्यात् काकणन्तु त्रिदोषजम् ॥२६॥
वातपित्ते श्लेष्मपित्ते वातश्लेष्मणि चाधिके।
ऋष्यजिह्वं पुण्डरीकं सिध्मकुष्ठञ्च जायते ॥२७॥
चर्म्माख्यमेककुष्ठञ्च किटिमं सविपादिकम्।
कुष्ठञ्चालसकं ज्ञेयं प्रायो वातकफाधिकम् ॥२८॥
पामा शतारुर्विस्फोटं दद्रुश्चर्म्मदलं तथा।
पित्तश्लेष्माधिकं प्रायः कफप्राया विचर्च्चिका ॥२९॥

दाहार्त्तिभ्यां वर्तमानं तत् सदाहार्ति। बहुव्रणं च स्यात्॥ विचर्च्चिकामाह—सकण्डू-पिडकेति। विचर्च्चिका सकण्डूपिडका श्यावा बहुस्रावा लसीकाढ्या च स्यात्। इत्ये-कादश क्षुद्रकुष्ठानि लक्षणैरुक्तानि॥ २५॥

लिंगान्युक्तानि। सम्प्रति आश्रयभूतं दोषविशेषमाह—वाते इति। सर्वाणि कुष्ठानि त्रिदोषारब्धानि। तत्र कपालमेव कापालं कुष्ठं वाते अधिकतरे जायते। कफे अधिकतरे मण्डलं। पित्ते अधिकतरे तु औदुम्बरं जायते। इति एकैकदोषोल्वणानि त्रीणि॥ काकणं कुष्ठं तु त्रिदोषजं त्रिदोषोल्वणं विद्यात् जानीयात्॥ २६॥

द्वन्द्वोल्वणं दर्शयति—वातपित्ते इति। वातपित्ते अधिके श्लेष्मपित्ते अधिके वातश्लेष्मणि अधिके च क्रमात् ऋष्यजिह्वं पुण्डरीकं सिध्मकुष्ठं च जायते। तथा च—ऋष्यजिह्वं वातपित्तोल्वणं। पुण्डरीकं श्लेष्मपित्तोल्वणं। सिध्मं च वात-श्लेष्मोल्वणं। इति द्वन्द्वोल्वणानि त्रीणि। दोषाणां पृथक्संसर्गसन्निपातैः सप्तधा विकल्पनात् कुष्ठानां सप्त विकल्पा दर्शिताः॥ २७॥

चर्माख्यमिति। चर्माख्यं।एककुष्ठं। सह विपादिकया वर्तमानं सविपादिकं किटिमं अलसकं कुष्ठञ्च प्रायः वातकफाधिकं वातश्लेष्मोल्वणं ज्ञेयं। पामा शतारुः विस्फोटं दद्रुः तथा चमर्दलञ्च प्रायः पित्तश्लेष्माधिकं ज्ञेयं। विचर्चिका प्रायः कफप्राया कफा-धिका ज्ञेया॥ २८। २९॥

सर्व्वं त्रिदोषजं कुष्ठं दोषाणां तु बलाबलम् ।
यथास्वैर्लक्षणैर्बुद्ध्वा कुष्ठानां क्रियते क्रिया ॥३०॥
दोषस्य यस्य पश्येत् कुष्ठेषु विशेषलिङ्गमुद्रिक्तम् ।
तस्यैव शमं कुर्य्यात् ततः परञ्चानुबन्धस्य ॥३१॥
कुष्ठविशेषैर्दोषा दोषविशेषैः पुनः कुष्ठानि
ज्ञायन्ते ते हेतुं हेतुस्तांश्च प्रकाशयति ॥३२॥

दोषबलाबलापेक्षया कुष्ठेषु चिकित्सामाह—सर्वमिति । सर्वं कुष्ठं त्रिदोषजं । तत्र दोषाणां अनुबन्ध्यानुबन्धभूतानां । बलमबलञ्च तत् । यथास्वैः स्वैः स्वैः लक्षणैः वक्ष्यमाणैः । बुध्वा । कुष्ठानां क्रिया चिकित्सा क्रियते ॥ ३० ॥

दोषबलाबलापेक्षया चिकित्सा यथा कर्तव्या तदेव दर्शयति—दोषस्येति । कुष्ठेषु सर्वेषु त्रिदोषजेष्वपि यत्र यस्य दोषस्य विशेषलिंगं उद्रिक्तं प्रबलं पश्येत् । तत्र तस्यैव दोषस्य उल्बणस्य प्राक् शमं कुर्यात् । ततः परं अनुबन्धस्य अनुबन्धभूतस्य दोषस्य दोषयोर्वा शमं कुर्यात् । अनुबन्धः अप्रधानः ॥ ३१ ॥

ननु कपालादीनां कुष्ठविशेषाणां यथास्वं लक्षणान्युक्तानि । न तु तेषां वातादि-लिंगानि । अतः कथं तेषु वातादिज्ञानं स्यात् यदपेक्षया कुष्ठेषु चिकित्सा उच्यते । इति चेत् ? आह—कुष्ठविशेषैरिति । कपालदीनां लक्षणान्युक्त्वा तेषां वातिकत्वादिकमपि दर्शितं वातेऽधिकतरे कुष्ठं कापालमित्यादि । कुष्ठविशेषैः । कुष्ठविशेषज्ञानञ्च यथोक्तैर्लक्षणैर्भवति । दोषाः विशिष्टाः ज्ञायन्ते । दोषविशेषैश्चापि कुष्ठानि विशिष्टानि ज्ञायन्ते ॥ कपालमित्युक्ते वातिकत्वं ज्ञायते । वातेऽभिहिते चापि कपालं । एवं मण्डलादिष्वपि ऊहनीयं । कस्मात् ? हेतुहेतुमद्भावात् । तदेवाह—ते हेतुमिति । ते कार्यभूताः हेतुं प्रकाशयन्ति । हेतुश्चापि तान् कार्यभूतान् प्रकाशयति । कार्यं कारण-मवगमयति । कारणमपि कार्यं । सर्वाणि हि कुष्ठानि समानप्रकृतिकानि । तेषां विकल्पास्तु दोषाणां विकल्पनैरेव भवन्ति । तस्मात् कुष्ठविशषैर्दोषविशेषा अनुमी-यन्ते । दोषविशेषैश्चापि कुष्ठविशेषाः । तत्रानुमानमाद्यं शेषवत् । अन्त्यं पूर्ववत् । इत्थं च कुष्ठविशेषलक्षणैरपि दोषविशेषज्ञानं भवति ॥ ३२ ॥

रौक्ष्यं शोषस्तोदः शूलं सङ्कोचनं तथायामः ।
पारुष्यं खरभावो हर्षः श्यावारुणत्वञ्च ॥३३॥
कुष्ठेषु वातलिंगं दाहो रागः परिस्रवः पाकः ।
विस्रो गन्धः क्लेदस्तथाङ्गपतनञ्च पित्तकृतम् ॥३४॥
श्वैत्यं शैत्यं कण्डूः स्थैर्यं चोत्सेधगौरवस्नेहाः ।
कुष्ठेषु तु कफलिंगं जन्तुभिरभिभक्षणं क्लेदः ॥३५॥
सर्वलिङ्गैर्युक्तं मतिमान् विवर्ज्जयेदबलम् ।
तृष्णादाहपरीतं शान्ताग्निं जन्तुभिर्जग्धम् ॥३६॥

सम्प्रति कुष्ठेषु वातादिलिंगान्याह—रौक्ष्यमित्यादि । रौक्ष्यं रूक्षत्वं । शोषः । तोदः सूचीव्यधनवत् व्यथा । शूलं वेदनामात्रं । संकोचनं संकोचः । तथा आयामः विस्तारः । पारुष्यं परुषता । खरभावः खरत्वं । श्यावारुणत्वं श्यावारुणान्यतरावभासत्वं च । इति कुष्ठेषु वातलिंगं वातस्य लक्षणस्य लिंगं ॥ पित्तस्य लिंगमाह—दाह इति । दाहः । रागः । परिस्रवः स्रावः । पाकः । विस्रः आमो गन्धः । क्लेदः । तथा अंगानां पतनं च । दाहादिकं कुष्ठेषु पित्तकृतं लिंगं ॥ कफलिंगमाह—श्वैत्यमिति । श्वैत्यं श्वेतवर्णत्वं । शैत्यं शीतत्वं । कण्डूः । स्थैर्यं स्थिरत्वं । उत्सेधः औन्नत्यं । गौरवं गुरुत्वं । स्नेहः स्निग्धत्वं च । ते । जन्तुभिः क्रिमिभिः अभिभक्षणं क्रिमिसम्भवः । क्लेदश्च । श्वैत्यादिकं कुष्ठेषु कफलिंगं ॥ ३३-३५ ॥

सम्प्रति कुष्ठानां साध्यासाध्यभावं दर्शयति । तत्रादौ असाध्यं कुष्ठमाह—सर्वैरेतैरिति । मतिमान् भिषक् । एतैरुक्तैः सर्वैः लिंगैर्युक्तं त्रिदोषलिंगं । अबलं दुर्बलं । तृष्णादाहाभ्यां परीतं युक्तं । शान्तः मन्दीभूतः अग्निः अन्तरग्निः यस्य तं । जन्तुभिः क्रिमिभिः जग्धं भक्षितं । तथाविधं कुष्ठिनं विवर्जयेत् असाध्यत्वात् । असाध्येषु निवृत्तिरेव इष्टा । तथाच—स्वार्थविद्यायशोहानिमुपक्रोशमसंग्रहम् । प्राप्नुयान्नियतं वैद्यो योऽसाध्यं समुपाचरेत् ॥ इति ( च० श्लो० १० ) ॥ ३६ ॥

---

३३ । संकोचनं तथायासः इति ख ग ङ पुस्तकेषु ।

३४ । तथांगपतनं च पित्तकृतम् इति ख ग पुस्तकयोः ।

वातकफप्रबलं यद् यदेकदोषोल्वणं न तत् कृच्छ्रम् ।
कफपित्तवातपित्तप्रबलानि तु कृच्छ्रसाध्यानि ॥३७॥
वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनाञ्चाग्रे ॥३८॥
वमनविरेचनयोगाः कल्पोक्ताः कुष्ठिनां प्रयोक्तव्याः ।
प्रच्छनमल्पे कुष्ठे महति च शस्तं सिराव्यधनम् ॥३९॥

असाध्यमुक्त्वा साध्यमाह—वातकफेति । सुखसाध्यकृच्छ्रसाध्यभेदेन साध्यमपि द्विविधं । यत् कुष्ठं वातकफप्रबलं वातकफसंसर्गोल्वणं । यच्च एकदोषोल्वणं एकैकदोषप्रबलं । यथा वाताधिकं पित्ताधिकं कफाधिकञ्च । तत् कुष्ठं न कृच्छ्रं कृच्छ्रसाध्यं । किन्तु सुखसाध्यं । कफपित्तवातपित्तप्रबलानि श्लेष्मपित्तप्रबलानि वातपित्तप्रबलानि च कुष्ठानि कृच्छ्रसाध्यानि । दोषाणां पृथक्संसर्गसन्निपातैः सप्तधा विकल्पाः । तत्र एकैकदोषोल्वणं त्रयं सुखसाध्यं । द्वन्द्वोल्वणेषु त्रिषु वातकफोल्वणञ्चापि सुखसाध्यं । इतरे द्वन्द्वोल्वणे द्वे कृच्छ्रसाध्ये । सन्निपातोल्वणं पुनरसाध्यं । इति कुष्ठानां साध्यासाध्यविभागः ॥ ३७ ॥

यथाक्रमं चिकित्सामाह—वातोत्तरेष्विति । अग्रे प्रथमं पूर्वरूपेष्वेव कुष्ठेषु वातोत्तरेषु वाताधिकेषु । वक्ष्यमाणं तिक्तषट्पलकादिकं सर्पिः । तस्य पानं । श्लेष्मोत्तरेषु वमनं । पित्तोत्तरेषु रक्तस्य मोक्षः रक्तमोक्षणं । विरेचनञ्च कार्यं ॥ ३८ ॥

वमनं विरेचनञ्चोक्तं । तद्योगान् कतिचिदिह पश्चात् वक्ष्यन् आदौ कल्पस्थानोक्तवमनविरेचनयोगानामतिदेशमाह—वमनविरेचनेति । कल्पोक्ताः कल्पस्थाने उक्ताः वमनविरेचनयोगाः कुष्ठिनां प्रयोक्तव्याः । कुष्ठे अल्पे अनवगाढे प्रच्छनं प्रच्छानं त्वङ्मात्रे पाटनं शस्तं । कुष्ठे महति च सिराव्यधनं शस्तं ॥ ३९ ॥

---

३८। विरेचनं चाग्रयम् इति ख ग पुस्तकयोः ।

वहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान् ।
दोषे ह्यतिमात्रहृते वायुर्हन्यादबलमाशु ॥४०॥
स्नेहस्य पानमिष्टं शुद्धे कोष्ठे प्रवाहिते रक्ते ।
वायुर्हि शुद्धकोष्ठं कुष्ठिनमबलं विशति शीघ्रम् ॥४१॥
दोषोत्क्लिष्टे हृदये वाम्यः कुष्ठेषु चोर्ध्वभागेषु ।
कुटजफलमदनमधुकैः सपटोलैर्निम्बरसयुक्तैः ॥४२॥

शोधनमुक्तं । सम्प्रति शोधनस्य विषयः तच्च शोधनं यथा कार्यं तदाह—वहु दोषः इति। वहुदोषः कुष्ठी प्राणान् वलं अनुरक्षता पालयता सतैव भिषजा वहुशः वहून् वारान् संशोध्यं स्तोकस्तोकनिर्हरणेन पुनः पुनः शोध्यः। एकदा भूरिदोषहरणे वलक्षयो महात्ययः स्यात्। तदेवाह—दोष इति। कुतः? हि यतः दोषे अतिमात्रे हृते अतिमात्रया निर्हृते सति। वायुः अवलं अतिनिर्हरणात् दुर्वलं शून्यकोष्ठं कुष्ठिनं आशु शीघ्रं हन्यात् ॥४०॥

स्नेहस्येति। कोष्ठे शुद्धे निर्हृतदोषे। रक्ते प्रवाहिते च। शोधने रक्तमोक्षणे च कृते। स्नेहस्य पानं इष्टं। कुतः? हि यतः वायुः शून्यकोष्ठं तत एव दुर्वलं कुष्ठिनं शीघ्रं विशति अभिभवति। तस्मात् शुद्धेरनन्तरं वातशमनार्थं स्नेहपानमिष्टं ॥ ४१ ॥

शोधनमुक्तं। तच्च वमनविरेचनरूपं। तत्र वमनं यदवस्थे दोषे कुष्ठे च कार्यं तदाह—दोषोत्क्लिष्ट इति। दोषः कफः। वातपित्ते वापि। कफस्थानगतयोर्वातपित्तयोरपि वमनस्य विहितत्वात्। उत्क्लिष्टः यस्मिन् तस्मिन् दोषोत्क्लिष्टे हृदये ऊर्ध्वभागेषु पूर्वकायगतेषु कुष्ठेषु च स्निग्धः वाम्यः वमनीयः। पित्ते पित्तस्थानगते वाते कफे वापि अधःकायगतेषु कुष्ठेषु च विरेच्यः। तदुक्तं वृद्धवाग्भटेनापि—ततः स्निग्धस्य यथादोषं यथा सन्नं च संशोधनादि प्रयुञ्जीत। इति (अ० सं० चि० २१)। वमनयोगानाह—कुटजेति। सपटोलैः निम्बरसयुक्तैः कुटजफलमदनमधुकैः मधुकमदनकुटजवीजपटोलपल्लवानां कल्कैः निम्बत्वककषाययुक्तैर्वाम्यः ॥४२॥

---

४२। कुटजफलमदनमधुकैः सक्षौद्रै निम्बरसयुक्तैः इति ठ पुस्तके।

शीतरसः पक्वरसो मधूनि च मधुकञ्च वमनानि ।
कुष्ठे त्रिवृता दन्ती त्रिफला च विरेचने शस्ता ॥४३॥
सौवीरकतुषोदकमालोडनमासवांश्च सीधूनि ।
शंसन्त्यधोहराणां यथाविरेकं क्रमश्चेष्टः ॥४४॥
दार्व्वीबृहतीसेव्यैः पटोलपिचुमर्द्दमदनकृतमालैः ।
सस्नेहैरास्थाप्यः कुष्ठी सकलिङ्गफलमुस्तैः ॥४५॥

शीतरस इति । शीतरसः अपक्वेन इक्षुरसादिना कृताः सीधुः । पक्वेन च कृतः पक्वरसः । शीतरसः शीतकषायः । पक्वरसः क्वाथः । इति केचित् । मधूनि । मधुकं यष्टीमधु च । एतानि इहोक्तानि वमनानि कल्पोक्तानि अन्यानि चापि वमनानि । तेषां प्रागेव अतिदेशः कृतः । एवं विरेचनेऽपि । विरेचनयोगानाह—कुष्ठे इति । कुष्ठे विरेचने त्रिवृत्ता दन्ती त्रिफला च शस्ता ॥ ४३ ॥

सौवीरकमिति । कुष्ठेषु अधोहराणां विरेचनानां मध्ये । सौवीरकं वितुषैर्यवैः कृतं । सतुषैस्तुषोदकं । एतत् काञ्जिकद्वयं । आलोडनं भेषजद्रव्यालोडनद्रवं आसवान् सीधूनि च शंसन्ति प्रशंसन्ति भिषजः । विरेकमनतिक्रम्य यथाविरेकं विरेकस्य प्रवरमध्यावरत्वापेक्षया क्रमः पेयादिक्रमः इष्टः । तथाच—पेयां विलेपीमकृतं कृतञ्च यूसं रसं त्रिस्त्रिरथैकशश्च ॥ क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिः शुद्धः । इति ( च० सि० १ ) ॥ ४४ ॥

कुष्ठिन आस्थापनमाह—दार्व्वीति । वातोल्वणमिति वक्ष्यमाणे वचने । इहापि वातोल्वणः कुष्ठी । तेन आस्थापनार्हः । दार्व्वी दारुहरिद्रा । बृहती । सेव्यमुशीरञ्च । तैः । पटोलः । पिचुमर्दः निम्बः । तयोः पत्रं । मदनं मदनफलं । कृतमालः शम्पाक-फलमज्जा च । तैः । सकलिंगफलमुस्तैः इन्द्रयवमुस्तसहितैः कल्कितैः सस्नेहैः आस्थाप्यः । यद्यपि कुष्ठेषु अनास्थाप्यास्त्वित्युपक्रम्य मधुमेहकुष्ठार्त्ता इति । य वानास्थाप्यास्तवाननुवास्याः स्युः । इति च ( च० सि० २ ) आस्थापनानुवासने

४५ । सकलिंगयवमुस्तैः इति ग ङ च पुस्तकेषु ।

वातोल्वणं विरिक्तं निरूढमनुवासनार्हमालक्ष्य ।
फलमधुकनिम्बकुटजैः सपटोलैः साधयेत् स्नेहम् ॥४६॥
सैन्धवदन्तीमरिचं फणिज्झकं पिप्पली करञ्जफलम् ।
नस्यं स्यात् सविडङ्गं क्रिमिकुष्ठकफप्रकोपघ्नम् ॥४७॥
वैरेचनिकैर्धूमैः श्लोकस्थानेरितैः प्रशाम्यन्ति ।
क्रिमयः कुष्ठकिलासाः प्रयोजितैरुत्तमाङ्गस्थाः ॥४८॥

प्रतिषिद्धे तथापि अस्थापनानुवासनसाध्यायामवस्थायां कदाचित् आस्थापनानुवासने अपि कर्तव्ये । तदर्थं वातोल्वणमित्युक्तं ॥ ४५ ॥

अनुवासनमाह—वातोल्वणमिति । पूर्वं विरिक्तं कुष्ठिनं वातोल्वणं निरूढं कृतास्थापनं अनुवासनार्हं अनुवासनयोग्यं आलक्ष्य । सपटोलैः फलमधुकनिम्बकुटजैः । फलो मदनं । स्नेहं साधयेत् । अनुवासनार्हं कुष्ठिनं फलादिभिः साधितेन स्नेहेन अनुवासयेत् ॥ ४६ ॥

ऊर्ध्वजत्रुगते कुष्ठे क्रिमिषु च शिरोविरेकमाह—सैन्धवमिति । सैन्धवं । दन्ती । मरिचं च । तेषां समाहारः । तत् । फणिज्झकं तुलसीभेदः । पिप्पली । करञ्जफलं सविडंगं । तत् सर्वं । क्रिमयः । कुष्ठानि । कफप्रकोपश्च । ते । तान् उत्तमांगस्थान् घ्नन्तीति तत् । तथोक्तं नस्यं स्यात् ॥ ४७ ॥

शिरोविरेकार्थं धूममाह—वैरेचनिकैरिति । श्लोकस्थानेरितै प्राक् श्लोकस्थाने मात्राशितीये अध्याये उक्तैः । तथाच-श्वेता ज्योतिष्मती चैव हरितालं मनःशिला । गन्धाश्चागुरुपत्राद्या धूमो मूर्धविरेचने ॥ इति ( च० श्लो० ५ ) । वैरेचनिकैः शिरोविरेचनैः धूमैः प्रयोजितैः नित्यं प्रयुक्तैः अभ्यस्तैः उत्तमांगस्थाः जत्रूर्ध्वगताः क्रिमयः कुष्ठानि किलासश्च । ते । प्रशाम्यन्ति ॥ ४८ ॥

---

४७ । सैन्धवदन्तीत्रिफलाफणिज्झकं इति ङ पुस्तके ।

स्थिरकठिनमण्डलानां खिन्नानां प्रस्तरप्रणाड़ीभिः ।
कूर्च्चैर्विघट्टितानां रक्तोत्क्लेशोऽपनेतव्यः ॥४९॥
आनूपवारिजानां मांसानां पोट्टलैः सुखोष्णैश्च ।
खिन्नोत्सिन्नं विलिखेत् कुष्ठं तीक्ष्णेन शस्त्रेण ॥५०॥
रुधिरागमार्थमथवा शृङ्गालावूनि योजयेत् कुष्ठे ।
प्रच्छितमल्पं कुष्ठं विरेचयेद्वा जलौकोभिः ॥५१॥
ये लेपाः कुष्ठानां युज्यन्ते निर्हृतास्रदोषाणाम् ।
संशोधिताशयानां सद्यः सिद्धिर्भवेत् तेषाम् ॥५२॥

स्थिरकठिनेति । स्थिरकठिनमण्डलानां स्थिरकठिनानां मण्डलानां कुष्ठानां प्रस्तरप्रणाडीभिः प्रस्तरनाड़ीस्वेदैः स्वेदाध्याये उक्तैः । स्विन्नानां कूर्च्चैः शस्त्रविशेषैः विघट्टितानां विलिखितानां रक्तोत्क्लेशः अपनेतव्यः । स्थिरकठिनमण्डलकुष्ठानि प्रस्तरस्वेदेन नाडीस्वेदेन वा स्वेदयित्वा । स्वेदात् उत्क्लेशगतं रक्तं कूर्च्चैः विघट्य अपसारयेत् ॥ ४९ ॥

आनूपेति । स्थिरकठिनं मण्डलं कुष्ठं सुखोष्णैः आनूपानां वारिजानां च मांसानां पोट्टलैः आदौ स्विन्नं पश्चात् उत्सिन्नं उन्नतं तत् स्विन्नोत्सिन्नं स्वेदात् उत्क्लिष्टरक्तमित्यर्थः । तीक्ष्णेन शस्त्रेण विलिखेत् रक्तमोक्षणार्थं भिषक् ॥ ५० ॥

रुधिरेति । अथवा रुधिरागमार्थं कुष्ठे तथा खिन्ने शृंगाणि अलावूनि च योजयेत् । अल्पं अनवगाढं कुष्ठं प्रच्छितं त्वङ्मात्रे पाटितं जलौकोभिः विरेचयेत् शोधयेत् ॥ ५१ ॥

ये लेपा इति । कुष्ठानां निर्हृतः अस्रदोषः रक्तदोषः येषां तेषां निर्हृतास्रदोषाणां अपसारितदुष्टरक्तानां । तथा संशोधितः वमनविरेचनाभ्यां निर्हृतमलः आशयः कोष्ठं येषु । आशयः कुष्ठिनां । अथवा संशोधितः निष्क्रिमिक्लेदादीकृतः आशयः

४९। रसात् क्लेशोऽपनेतव्यः इति ठ पुस्तके ।

येषु न शस्त्रं क्रमते स्पर्शेन्द्रियनाशनानि यानि स्युः ।
तेषु निपात्यः क्षारो रक्तञ्च दोषञ्च विस्राव्य ॥५३॥
पाषाणकठिनपरुषे सुप्ते कुष्ठे स्थिरे पुराणे च ।
पीतागदस्य कार्यो विषैः प्रदेहोऽगदैश्चानु ॥५४॥
स्तब्धानि सुप्तसुप्तान्यस्वेदनकण्डूलानि कुष्ठानि ।
कूर्चैर्दन्तीत्रिवृताकरवीरकरञ्जकुटजानाम् ॥५५॥
जात्यर्कनिम्बजैर्वा पत्रैः शस्त्रैः समुद्रफेनैर्वा ।
घृष्टानि गोमयैर्वा ततः प्रदेहैः प्रदेह्यानि ॥५६॥

स्थानं येषां तेषां । तथाविधानां सतामेव। ये लेपाः पश्चाद् वक्ष्यमाणाः प्रयुज्यन्ते । तेषां लेपानां सिद्धिः सफलता सद्यः तत्क्षणात् भवेत् ॥ ५२ ॥

येष्विति । यानि कुष्ठानि स्पर्शनेन्द्रियनाशनानि सुप्त्यादियुक्तानि । निष्फलत्वात् येषु शस्त्रं न क्रमते प्रभवति । शस्त्रकर्म कर्तुं न शक्यते इत्यर्थः । रक्तं दोषं च विस्राव्य रक्तमोक्षणं शोधनं च कारयित्वा तेषु क्षारः निपात्यः निपातनीयः । देय इत्यर्थः ॥ ५३ ॥

पाषाणेति । पाषाणकठिनपरुषे पाषाणवत् कठिने परुषे खरस्पर्शे च । सुप्ते । सुप्तिः स्पर्शाज्ञता । स्थिरे । पुराणे च । कुष्ठे । पीतं अगदं विषघ्नमौषधं येन सः । तस्य पीतागदस्य कुष्ठिनः । तथाविधं कुष्ठिनं प्राक् अगदं पाययित्वा विषैः प्रदेहः कार्यः । अनु पश्चात् अगदैः प्रदेहः कार्यः । वृद्धवाग्भटस्तु पठति—लेपोऽतिकठिनपरुषे सुप्ते कुष्ठे स्थिरते पुराणे च । पीतागदस्य कार्यः विषैः समन्त्रागदैश्चानु ॥ इति । (अ० सं० चि० २१ ) ॥ ५४ ॥

स्तब्धानीति । स्तब्धानि । सुप्तसुप्तानि भृशं सुप्तानि । अस्वेदनकण्डुलानि अस्वेदनानि स्वेदरहितानि कण्डुलानि कण्डूमन्ति । ह्रस्वश्छान्दसः । तथाविधानि कुष्ठानि । कूर्च्चैः शस्त्रविशेषैः । दन्तीत्रिवृताकरवीरकुटजानां पत्रैः । जाती अर्कः निम्बश्च ।

मारुतकफकुष्ठघ्नं कर्म्मोक्तं कुष्ठिनां कार्य्यम् ।
कफपित्तरक्तहरणं तिक्तकषायैः प्रशमनञ्च ॥५७॥
सर्पींषि तिक्तकानि च यच्चोक्तं रक्तपित्तनुत् कर्म्म ।
वाह्याभ्यन्तरमग्र्यं तत् कार्य्यं पित्तकुष्ठेषु ॥५८॥
दोषाधिक्यविभागादित्येतत् कर्म्म कुष्ठनुत् प्रोक्तम् ।
वक्ष्यामि कुष्ठशमनं प्रायस्त्वग्दोषसामान्यात् ॥५९॥
दार्व्वीरसाञ्जनं वा गोमूत्रेण प्रबाधते कुष्ठम् ।
अभया प्रयोजिता वा मासं सव्योषगुड़तैला ॥६०॥

तज्जैः पत्रैर्वा । शस्त्रैः । अन्यैर्वा । समुद्रफेनैर्वा । गोमयैः शुष्कैर्वा । घृष्टानि कृत्वा । कुष्ठादीनामन्यतमेन वर्षयित्वा । ततः तानि प्रदेहैः पश्चात् वक्ष्यमाणैः आरग्वधीये अध्याये आरग्वधः सैडगज इत्यादिना प्रागुक्तैश्चापि प्रदेहानि प्रलेप्यानि ॥५५ । ५६॥

मारुतेति । इति मारुतकफकुष्ठघ्नं कर्म उक्तं । कुष्ठिनां पित्तकुष्ठिनां सम्बन्धे पुनः कफपित्तरक्तहरणं कर्म । तिक्तकषायैः तिक्तयोनिकषायैः प्रशमनञ्च । कार्यं ॥ ५७ ॥

सर्पींषीति । तिक्तकानि सर्पींषि । तथा रक्तपित्तचिकित्सिते यत् अन्यत् रक्तपित्तनुत् रक्तपित्तहरं अग्र्यं श्रेष्ठं । वाह्याभ्यन्तरं वाह्यं प्रदेहाभ्यंगादि आभ्यन्तरं शोधनंशमनरूपं कर्म उक्तं । तत्सर्वं पित्तकुष्ठेषु कार्यं ॥ ५८ ॥

उपसंहरति —दोषाधिक्येति । इति दोषाधिक्यविभागात् तत्तद्दोषाधिकतया वातादुल्वणतया वातिकत्यादिना विभज्य एतत् कुष्ठनुत् कुष्ठहरं कर्म प्रोक्तं । इति वातादिदोषापेक्षया चिकित्सितमुक्तं । सम्प्रति प्रायः त्वग्दोषसामान्यात् प्रायः सर्वेषु कुष्ठेषु त्वग्दोषस्य समानत्वात् तदपेक्षया कुष्ठशमनं कर्म वक्ष्यामि ॥ ५९ ॥

दार्व्वीति । दार्वी दारुहरिद्रा । तत्क्वाथः । रसाञ्जनं वा । गोमूत्रेण पानात् कुष्ठं प्रबाधते शमयति । वा अथवा अभया हरीतकी । सह । व्योषं त्रिकटु । गुड़ः तैलञ्च । तैः वर्तमाना सा । व्योषादियुक्ता मासं व्याप्य प्रयोजिता कुष्ठं प्रबाधते ॥६०॥

मूलं पटोलस्य तथा गवाक्ष्याः पृथक् पलांशं त्रिफलात्वचश्च ।
स्यात् त्रायमाणा-कटुरोहिणी च भागार्द्धिका नागरपादयुक्ता॥६१
पलं तथैषां सह चूर्णितानां जले श्रृतं दोषहरं पिबेद्वा ।
जीर्णे रसे धन्वमृगद्विजानां पुराणशाल्योदनमाददीत ॥६२॥

मूलमिति । पटोलस्य मूलं पलांशं । तथा गवाक्ष्याः विशालायाः मूलं पलांशं । त्रिफला आमलकं हरीतकी विभीतकञ्च । तस्याः त्वचः । पृथक् प्रत्येकं पलांशाः । वाग्भटेऽपि—पटोलमूलं त्रिफला विशालेति ( अ० हृ० चि० १६ ) । मिलित्वा पञ्च पलानि । त्रायमाणा कटुरोहिणी च प्रत्येकं नागरपादयुक्ता सत्येव भागार्द्धिका अर्द्ध-भागपरिमिता अर्थात् पलार्द्धप्रमाणा । तथाच त्रायमाणायाः षट् शाणाः । नागरस्य द्वौ । मिलित्वा अष्टौ शाणाः । तदेव पलार्द्धं । एवं कटुरोहिणी च नागरपादयुक्ता भागार्द्धिका बोद्धव्या । नागरपादयुक्ता त्रायमाणा भागार्द्धिका । नागरपादयुक्ता कटुरोहिणी च भागार्द्धिका । इत्येकं पलं । मिलित्वा षट् पलानि भवन्ति । ना कुष्ठी पुमान् एषां पटोलमूलादीनां सर्वेषां षट्पलमितानां सह एकत्र चूर्णितानां प्रतिदिनं एकं पलं जले श्रृतं क्वथितं पिबेत् । तस्मिन् जीर्णे च सति धन्वमृगद्विजानां जाङ्गल-पशुपक्षिणां रसे मांसरसे पुराणं शाल्योदनं आददीत जाङ्गलआरसेन पुराणशाल्यन्न-मश्नीयात् । कुष्ठानीति । तच्च षट्पलचूर्णं एवं प्रतिदिनं एकं पलं एवं क्रमेण षड्रात्र-योगेन षड्भिः दिनैः प्रयुक्तं । तेन षण्णां पलानामुपयोगः । कुष्ठानि । शोफं । ग्रहणी-प्रदोषं । कृच्छ्राणि अर्शांसि । हलीमकञ्च । हृदः बस्तेश्च शूलं हृद्बस्तिशूलं । विषमज्वरञ्च । निहन्ति । वृद्धवाग्भटस्तु—प्रतिदिनापेक्षया पटोलमूलादीनां सर्वेषां मिलितानां पल-प्रमाणमाह । तथाच—पटोलविशालयोर्मूलं त्रिफला च पृथक् भागोनत्रिशाणाः कटुकात्रायमाणे शाणांशे । शुण्ठ्यास्त्रिभागोनः शाणः । तदेतत् पलमैकध्यं सलिले विपाच्य पाययेत् । ऊर्ध्वाधोविरिक्तश्च जीर्णे जाङ्गलरसेनाश्नीयात् । एवमेतत् षड्-रात्रप्रयोगात् परं पित्तकफशोफकुष्ठदुष्टनाडीव्रणार्शोभगन्दरग्रहणीपाण्डुहलीमक-

६१ । त्रिफलात्वचश्च इति ङ पुस्तके ।
६१ । अयं श्लोकः ख ग पुस्तकयोर्न पठ्यते ।

कुष्ठानि शोफं ग्रहणीप्रदोषमर्शांसि कृच्छ्राणि हलीमकञ्च ।
पड्रात्रयोगेन निहन्ति चैष हृद्बस्तिशूलं विषमज्वरञ्च ॥६३॥

इति पटोलमूलादि चूर्णम् ।

मुस्तं व्योषं त्रिफला मञ्जिष्ठा दारु पञ्चमूल्यौ द्वे ।
सप्तच्छदनिम्बत्वक् सविशाला चित्रको मूर्वा ॥६४॥
चूर्णं तर्पणभागैर्नवभिः संयोजितं समध्वंशम् ।
सिद्धं कुष्ठनिवर्हणमेतत् प्रायोगिकं भक्ष्यम् ॥६५॥

कामलाविषमज्वरहृद्बस्तिवेदनाघ्नं ॥ इति (अ० सं० चि० २१) । षोडश शाणाः पलं । शाणश्च त्रयो धानकाः। इत्थं च अष्टाचत्वारिंशत् धानकाः पलं। पटोलमूलं। विशाला-मूलं। त्रिफला आमलकहरीतकीविभीतकानि च। पृथक् प्रत्येकं त्रिभागोनत्रिशाणाः। त्रिभागेन शाणस्य तृतीयभागेन अर्थात् एकधानकेन । त्रयो धानकाः शाणः । ऊनाः हीनाः त्रयः शाणाः परिमाणं यासां ताः त्रिभागोनत्रिशाणाः। अर्थात् प्रत्येकं अष्ट धान-काः। पञ्चानां प्रत्येकमष्टधानकमानत्वे मिलितानां प्रमाणं चत्वारिंशत् धानकाः भवन्ति। कटुकात्रायमाणे प्रत्येकं शाणांशे। कटुकायाः शाणः। त्रायमाणायाश्च शाणः। शुण्ठ्याः त्रिभागोनः त्रिभागोनशाणस्य तृतीयभागेन एकधानकेन ऊनः शाणः । अर्थात् द्वौ धान-कौ । पटोलमूलादीनि प्रत्येकं अष्ट धानकानि । कटुकात्रायमाणे नागरपादयुक्ते एव भागार्द्धिके। भागार्धं चत्वारो धानकाः। कटुकायाः शाणः त्रयो धानकाः। नागरस्य च एकः। इति चत्वारो धानकाः। एवं नागरपादयुक्ता त्रायमाणा चापि भागा-र्द्धिका विज्ञेया। इति अष्टचत्वारिंशत् धानकाः। तदेव पलं। इत्यास्तां विस्तरः ॥ ६१—६३ ॥

मुस्तमिति। मुस्तं। व्योषं। त्रिकटु। त्रिफला। मंजिष्ठा। दारु। द्वे पञ्चमूल्यौ दशमूलं। सविशाला। सप्तच्छदनिम्बयोस्त्वक्। चित्रकः। मूर्वा च। तत्सर्वं एकत्र चूर्णयेत्। तच्चूर्णं नवभिः तर्पणभागैः नवगुणैः सक्तुभिः संयोजितं। समध्वंशं सक्षौद्रं। एतत् सिद्धं सिद्धफलं कुष्ठनिवर्हणं कुष्ठशमनं। प्रयोगः अभ्यासः। तत्रोचितं

६४। संयोजितं समध्वा ण्यं इति क पुस्तके।

श्वयथुं सपाण्डुरोगं श्वित्रं ग्रहणीप्रदोषमर्शांसि ।
व्रध्नभगन्दरपिडकाकण्डूकोठांश्च विनिहन्ति ॥६६॥

इति मुस्तादि चूर्णम् ।

त्रिफलातिविषाकटुकानिम्बकलिङ्गकवचापटोलानाम् ।
मागधिकारजनीद्वयपद्मकमूर्वाविशालानाम् ॥६७॥
भूनिम्बपलाशानां दद्याद्द्विपलं ततस्त्रिवृद् द्विगुणा ।
तस्याश्च पुनर्ब्राह्मी तच्चूर्णं सुखितुत् परमम् ॥६८॥

प्रायोगिकं भक्ष्यं । प्रतिदिनं भक्षयेत् । वृद्धवाग्भटेऽपि—त्रिफलादशमूलमूर्वामुस्तसप्तच्छददारुनिम्बत्वक्सराक्ष चित्रकमंजिष्ठाव्योषचूर्णं नवगुणैः सक्तुभिर्युक्तं सक्षौद्रं शीलयेत् । इति ( अ० सं० चि० २१ ) । तर्पणभागैरित्यत्र पलभागैरिति पठित्वा जल्पकल्पतरुकृता व्याख्यातं । तद्धेयं । तच्च चूर्णं तथा नित्यमभ्यासात् श्वयथुं सपाण्डुरोगं श्वित्रं ग्रहणीप्रदोषं अर्शांसि व्रध्नभगन्दरादींश्च विनिहन्ति शामयति ॥ ६४-६६ ॥

त्रिफलेति । त्रिफला । अतिविषा । कटुका कटुरोहिणी । निम्बः । कलिंगकः इन्द्रयवः । पटोलं पटोलपत्रं च । तेषां । मागधिका पिप्पली । रजनीद्वयं द्वे हरिद्रे । पद्मकं पद्मकाष्ठं । मूर्वा । विशाला इन्द्रवारुणी च । तासां । तथा भूनिम्बपलाशानां । भूनिम्बः किराततिक्तकः । त्रिफलादीनां प्रत्येकं द्विपलं दद्यात् । ततः द्विगुणा त्रिवृत् । तस्याः त्रिवृतः द्विगुणा ब्राह्मी च । तत् सर्वं एकत्र चूर्णयेत् । तच्चूर्णं घृतमधुभ्यां लीढं अंगानां परमं सुखितुत् । सुखितिः स्पर्शाज्ञता । वृद्धवाग्भटेनाप्ययं योगः उक्तः । तथा च—भूनिम्बनिम्बत्रिफलापद्मकातिविषाकणाः । मूर्वापटोलीद्विनिशापाठातिक्तेन्द्रवारुणीः ॥ कलिंगकावचास्तुल्या द्विगुणा च यथोत्तरं । लिह्याद्दन्तीत्रिवृद्ब्राह्मीश्चूर्णिता मधुसर्पिषा ॥ इति ( अ० सं० चि० २१ ) । इह पलाशस्थाने पाठा पठ्यते । दन्ती चाप्यधिकं ॥ ६७ । ६८ ॥

---

६७-७१ । एते श्लोकाः न पठ्यन्ते ह पुस्तके ।

लेलीतकप्रयोगो रसेन जात्याः समाक्षिकः परमः ।
सप्तदशकुष्ठघाती माक्षिकधातुश्च मूत्रेण ॥६९॥

एवं गन्धकयोगात् सुवर्णमाक्षिकप्रयोगाद्वा ।
सर्व्वव्याधिविनाशनमद्यात् कुष्ठी रसञ्च निगृहीतम् ॥७०॥

वज्रशिलाजतुसहितं सहितं वा योगराजेन ।
सर्वव्याधिप्रशमनमद्यात् कुष्ठी निगृह्य नित्यञ्च ॥७१॥

लेलीतकेति । जात्याः रसेन स्वरसेन । समाक्षिकः सक्षौद्रः । लेलीतकस्य लेलीतकवसायाः प्रयोगः परमः सप्तदशकुष्ठघाती काकणमसाध्यं वर्जयित्वा । उक्तं च—आसीद् दैत्यो महाबाहुर्लेलीतको महासुरः । योजनानां त्रयस्त्रिंशत् करेणाच्छाद्य तिष्ठति ॥ विष्णुचक्रेण संछिन्नः पपात धरणी तले । वसा तस्य समाख्याता लेलीतक इति क्षितौ ॥ इति लेलीतकः पाषाणभेदः औत्तरापथिकः । इत्यन्ये । वृद्धवाग्भटे च—यतेर्लेलीतकवसा क्षौद्रजातीरसान्विता । कुष्ठघ्नी ॥ इति ( अ० सं० चि० २१ ) । माक्षिकधातुः सुवर्णमाक्षिकं मूत्रेण गोमूत्रेण सह प्रयुक्तः सप्तदशकुष्ठघाती ॥ ६९ ॥

एवमिति । एवं गन्धकस्य योगात् । सुवर्णमाक्षिकस्य प्रयोगात् वा । निगृहीतं मारितं सर्वव्याधिविनाशनं । न केवलं तत् कुष्ठघ्नं सर्वव्याधिघ्नं चापि । रसं पारदं अद्यात् खादेत् कुष्ठी ॥ ७० ॥

वज्रशिलाजत्विति । वज्रशिलाजतुसहितं मारितहीरकशिलाजतुभ्यां सहितं । योगराजेन तदाख्ययोगभेदेन पांडुचिकित्सितोक्तेन सहितं वा । सर्वव्याधिप्रशमनं रसं निगृह्य मारयित्वा नित्यं प्रतिदिनं अद्यात् शीलयेत् । श्लोकद्वयं क्वचित् न पठ्यतेऽपि ॥ ७१ ॥

---

६९-७१ । एते श्लोकाः न पठ्यन्ते ठ पुस्तके ।

६९ । नवनीतकप्रयोगः इति क पुस्तके ।

७०-७१ । श्लोकद्वयं ख ग पुस्तकयोर्न पठ्यते ।

खदिरसुरदारुसारं श्रपयित्वा तद्रसेन तोयार्थः ।
क्षौद्रप्रस्थे कार्यः कार्ये ते चाष्टपलिके च ॥७२॥
तत्रायश्चूर्णानामष्टपलं प्रक्षिपेत् तथामूनि ।
त्रिफलैले त्वङ्मरिचं पत्रं कनकञ्च कर्षांशम् ॥७३॥
मत्स्यण्डिका मधुसमा तन्मासं जातमायसे भाण्डे ।
मध्वासवमाचरतः कुष्ठकिलासौ शमं यातः ॥७४॥

इति मध्वासवः ।

मध्वासवमाह—खदिरेति । खदिरसुरदारुसारं खदिरस्य सुरदारुणश्च सारं । सुरदारु देवदारु । श्रपयित्वा क्वाथयित्वा । तद्रसेन तेन क्वाथेन । तोयार्थः जलप्रयोजनं । द्रवकार्यमित्यर्थः । क्षौद्रप्रस्थे कार्यः । खदिरसुरदारुणोर्मानमाह—कार्ये इति । ते खदिरसुरदारुणी प्रत्येकं अष्टपलिके कार्ये । अष्टौ पलाः प्रस्थार्धः । खदिरस्य प्रस्थार्धं । सुरदारुणश्च प्रस्थार्धं । उभयोर्मिलितयोः क्वाथप्रस्थः । तत्र खदिरसुरदारुक्वाथप्रस्थे क्षौद्रप्रस्थे च अयश्चूर्णानां अष्टपलं प्रस्थार्धं प्रक्षिपेत् । तथा अमूनि वक्ष्यमाणानि त्रिफलादीनि च । तथा च त्रिफला एला च ते । त्वक् गुड़त्वक् । मरिचं च । तयोः समाहारः । तत् । पत्रं तेजपत्रं । कनकं नागकेशरं च । चूर्णितं प्रत्येकं कर्षांशं कर्षपरिमाणं प्रक्षिपेत् । मत्स्यण्डिका मिछरीति भाषायां । मधुसमा क्षौद्रसमा अर्थात् प्रस्थपरिमिता । तत्सर्वं आयसे लौहमये भाण्डे प्रक्षिप्य । मासं व्याप्य स्थापितं । जातं जातगन्धरसं । तथा आसुतं । तत् मध्वासव इत्युच्यते । मध्वासवमाचरतः उपयुञ्जानस्य पुंसः कुष्ठं किलासश्च तौ शमं यातः शाम्यतः । वृद्धवाग्भटेऽपि—खदिरसुरदारुक्वाथप्रस्थं क्षौद्रप्रस्थं मत्स्यण्डिकाप्रस्थं लौहचूर्णार्धप्रस्थं त्रिफला चतुर्जातकमरिचानि च कार्षिकाणि प्रक्षिप्यायसे भाण्डे मासस्थितं तदुपयोजयेत् । इति ( अ० सं० चि० २१ ) ॥ ७२-७४ ॥

खदिरकषायद्रोणं कुम्भे घृतभाविते समावाप्य ।
द्रव्याणि चूर्णितानि च षट्पलिकान्यत्र देयानि ॥७५॥
त्रिफलाव्योषविडङ्गं रजनीमुस्ताटरूषकेन्द्रयवाः ।
सौवर्णी च तथा त्वक् छिन्नरुहा चेति तन्मासम् ॥७६॥
निदधीत धान्यमध्ये प्रातः प्रातः पिबेत्ततो युक्त्या ।
मासेन महाकुष्ठं हन्त्येवाल्पन्तु पक्षेण ॥७७॥
अर्शःश्वासभगन्दरकासकिलासप्रमेहशोषांश्च ।
ना भवति कनकवर्णः पीत्वारिष्टं कनकबिन्दुम् ॥७८॥

इति कनकबिन्द्वरिष्टम् ।

खदिरकषायेति । खदिरकषायद्रोणं खदिरकषायस्य कलसं । घृतभाविते कुम्भे समावाप्य प्रक्षिप्य । द्रव्याणि वक्ष्यमाणत्रिफलादीनि चूर्णितानि प्रत्येकं षट्पलिकानि च तत्र देयानि । कानि तानि द्रव्याणीत्याकाङ्क्षायामाह—त्रिफलेति । त्रिफला । व्योषं त्रिकटु । विडंगं । रजनी हरिद्रा । मुस्तः । आटरूषकः वासकः । इन्द्रयवश्च ते । तथा सौवर्णी त्वक् आरग्वधवृक्षत्वक् । छिन्नरुहा गुडूची च । इति एतानि चूर्णितानि प्रत्येकं षट्पलिकानि तत्र देयानि । एतत्सर्वं घृतभाविते कुम्भे प्रक्षिप्य तत् कुम्भं मासं व्याप्य धान्यमध्ये धान्यराशौ निदधीत स्थापयेत् । ततः मासात् परं जातगन्धरसं तदरिष्टं प्रातः युक्त्या अग्निबलापेक्षया मात्रया पिबेत् । एवं पीतं तत् महाकुष्ठं मासेन हन्ति । अल्पं क्षुद्रं कुष्ठं तु पक्षेण हन्ति । तथा अर्शःश्वासादींश्च हन्ति । ना पुमान् कनकबिन्द्वरिष्टं पीत्वा कनकवर्णः सुवर्णवर्णः भवति ॥ ७५-७८ ॥

---

७५-७६ । एते श्लोकाः न पठ्यन्ते ङ पुस्तके ।

७६ । त्रिफला त्रिकटुको रजनी स्याटरूषकवाकुचिका इति ख ग ठ पुस्तकेषु ।

७८ । प्रमेहशोषांश्च इति ख ग पुस्तकयो ।

कुष्ठेष्वनिलकफकृतेष्वेवं पेयस्तथापि पैत्तिकेषु ।
कृतमालकाथश्चाप्येष विशेषात् कफकृतेषु ॥७९॥
त्रिफलासवश्च गौडः सचित्रकः कुष्ठरोगविनिहन्ता ।
क्रमुकदशमूलदन्तीवरांगमधुयोगसंयुक्तः ॥८०॥

लघूनि चान्नानि हितानि विद्यात् कुष्ठेषु शाकानि च तिक्तकानि ।
भल्लातकैः सत्रिफलैः सनिम्बैर्युक्तानि चान्नानि घृतानि चैव॥८१॥
पुराणधान्यान्यथ जांगलानि मांसानि मुद्गाश्च युक्ताः ।
शस्ता न गुर्वन्नपयोदधीनि नानूपमत्स्या न गुडस्तिलाश्च॥८२॥

कुष्ठेष्वनिलेति । एवं अर्शःश्वासादिष्विव अनिलकफकृतेषु वातश्लेष्मकृतेषु तथा पैत्तेष्वपि कुष्ठेषु । एष कनकचिररिष्टः पेयः । कृतमालकाथः सम्पाकक्वाथश्चापि पेयः । कफकृतेषु कुष्ठेषु पुनः एष विशेषादेष विशिष्यैव पेयः ॥ ७९ ॥

त्रिफलासवश्चेति। त्रिफलासवः । गौडः गुडेन कृतः । गौड इति गुडः शर्करासाने । सचित्रकः । क्रमकं पूगफलं । दशमूलं । दन्ती । वरांगं । गुग्गुलु । मधु च । तेषां योगः । तेन संयुक्तः । त्रिफलाक्वाथं गुडं मधु चित्रकादीनि च चूर्णितानि आयसे भाण्डे प्रक्षिप्य । मासं स्थापयेत् । त्रिफलादीनां मानमिहानुक्तमपि आसवान्तरोक्तद्रव्यमानविभागेन बोद्धव्यं । स च त्रिफलासवः कुष्ठरोगविनिहन्ता ॥ ८० ॥

कुष्ठिनां पथ्यमाह—लघूनि चान्नानि चेति । कुष्ठेषु लघूनि प्रकृत्या मात्रया च । अन्नानि । तिक्तकानि शाकानि च । हितानि विद्यात् जानीयात् । तथा सत्रिफलैः सनिम्बैः भल्लातकैः युक्तानि अन्नानि घृतानि च हितानि विद्यात् । पुराणधान्यानि जांगलानि मांसानि पटोलयुक्ताः मुद्गाः पटोलाः मुद्गाश्च शस्ताः हिताः । कुष्ठिनामपथ्यमाह—न गुर्वम्लेति । गुरु अन्नं । अम्लरसं द्रव्यं । पयः । दधि च । तानि न शस्तानि । आनूपमत्स्याः । आनूपमांसानि मत्स्यमांसानि च । न शस्ताः । न गुडः शस्तः । न तिलाश्च शस्ताः । तस्मात् गुर्वम्लादीनि वर्जयेत् कुष्ठी ॥ ८१ । ८२ ॥

एला कुष्ठं दार्वी शतपुष्पा चित्रको विडंगश्च ।
कुष्ठालेपनमिष्टं रसाञ्जनश्चाभया चैव ॥८३॥
चित्रकमेलां निम्बं वृषकं त्रिवृदर्कनागरकम् ।
चूर्णीकृतमष्टाहं भावयितव्यं पलाशस्य ॥८४॥
क्षारेण गवां मूत्रे स्रुतेन तेनास्य मण्डलान्याशु ।
भिद्यन्ते विलयन्ति च लिप्तान्यर्काभितप्तानि ॥८५॥
मांसी मरिचं लवणं रजनी तगरं सुधा गृहाद्धूमः ।
मूत्रं गोः पित्तं च क्षारः पालाशः कुष्ठहा लेपः ॥८६॥

कुष्ठेष्वालेपनमाह—एलेति । एला । कुष्ठं । दार्वी दारुहरिद्रा । शतपुष्पा शताह्वा । चित्रक. । विडग. । रसाजनं । अभया हरीतकी च । एलादिभिः पिष्टैः कृतं कुष्ठेषु आलेपनं कुष्ठालेपनं इष्टं ॥ ८३ ॥

चित्रकमेलामिति । चित्रकं । एला । निम्बं । वृषकं वासकं । त्रिवृत् । अर्क. । नागरं शुंठी च । तत् । तत्सर्वं एकत्र चूर्णीकृतं अष्टाह यावत् गवा मूत्रे स्रुतेन क्षारितेन पलाशस्य क्षारेण भावयितव्यं । ततः तेन लिप्तानि तत. अर्काभितप्तानि आतपतप्तानि च अस्य कुष्ठिन मण्डलानि कुष्ठानि आशु भिद्यन्ते । विलयन्ति विलयं यान्ति च । वृद्धवाग्भटे त्रिवृत्स्थाने कुरुविन्देति पाठ । तथाच—एलाचित्रकनिम्बं वृषकं कुरु-विन्दं नागरार्कं च । चूर्णीकृतमष्टाहं भावयितव्यं पलाशस्य ॥ क्षारेण गवा मूत्रे स्रुतेन तेनास्य मण्डलान्याशु । भिद्यन्ते विलयन्ति च लिप्तान्यर्काभितप्तानि ॥ इति ( अ० सं० चि० २१ ) ॥८४ । ८५ ॥

मासीति । मांसी मुरामासी । मरिचं । लवणं सैन्धवं । रजनी हरिद्रा । तगरं । सुधा स्नुही । गृहाद् धूम· गृहधूम । मूत्रं पित्त च गो । पालाश क्षारश्च । तत्सर्वं एकत्र पिष्ट्वा कृत लेप· कुष्ठघ्न ॥ ८६ ॥

त्रपु सीसमयश्चूर्णं मण्डलनुत् फल्गुचित्रकौ बृहती ।
गोधारसः सलवणो दारु च मूत्रं च मण्डलनुत् ॥८७॥

कदलीपलाशपाटलिनिचुलक्षाराम्भसा प्रसन्नेन ।
मांसेषु तोयकार्यं कार्यं पिष्टे च किण्वे च ॥८८॥

तैर्मेदकः सुजातः किण्वैर्जनितं प्रलेपनं शस्तम् ।
मण्डलकुष्ठविनाशनमातपसंस्थं क्रिमिघ्नञ्च ॥८९॥

त्रपु सीसमिति । त्रपु वङ्गं । सीसं । तयोश्चूर्णं । अयश्चूर्णं लौहचूर्णं । फल्गु काकोदुम्बरः । चित्रकश्च । तौ । बृहती च । तैः कृतः प्रलेपः मण्डलनुत् मण्डलकुष्ठघ्नः । सलवणः । लवणं सैन्धवं । गोधारसः गोधामांसरसः । दारु । गोमूत्रं च । तैः प्रलेपश्च मण्डलनुत् ॥ ८७ ॥

कदलीति । कदली । पलाशः । पाटलिः । निचुलो वेतसश्च । तेषां क्षाराम्भसा क्षारोदकेन प्रसन्नेन स्वच्छेन मांसेषु पिष्टे च किण्वे सुराबीजे च तोयकार्यं द्रवकार्यं कर्त्तव्यं । कदल्याद्यन्यतमक्षारोदकभावितशालितण्डुलपिष्टं तेन क्षारोदकेनैव स्वेदितं किण्वं च भाण्डे मासं स्थापयेत् । ततस्तैः पिष्टकिण्वक्षारोदकैः मासं भाण्डे स्थापितैः मेदकः जगलः । जगलः पिष्टकिण्वकृतसुरा । सुजातः सम्यग् गन्धरसोपपन्नो जातः । तं मेदकं कुष्ठिने पातुं दद्यात् । किण्वैः जनितं कृतं प्रलेपनं शस्तं । तच्च आतपसंस्थं मण्डलकुष्ठस्य विनाशनं शमनं । क्रिमिघ्नं च ॥ ८८ । ८९ ॥

---

८७ । श्लोकद्वय न  च पुस्तके ।

८८ । मांसेषु तोयकार्यं इति क पुस्तके ।

८८ । पिष्टं च किण्वं च इति ख ग  ः ।

८९ । तैर्मोदकः सुजात इति ख ग पुस्तकयोः । तैर्मेदकः सुजात इति ङ पुस्तके । आसवसंस्थं क्रिमिघ्नं च इति क पुस्तके ।

मुस्तं त्रिफला मदनं कर　आरग्वधकलिङ्गयवाः ।
दार्वी ससप्तपर्णा स्नानं सिद्धार्थकं नाम ॥ ०॥

एष कषायो वमनं विरेचनं वर्णकस्तथोद्घर्षः ।
त्वग्दोषशोफकुष्ठप्रबाधनः पाण्डुरोगघ्नः ॥६१॥

कुष्ठं करञ्जबीजान्येडगजः कुष्ठसूदनो लेपः ।
प्रपुनाडबीजसैन्धवरसाञ्जनकपित्थलोध्राश्च ॥६२॥

श्वेतकरवीरमूलं कुटजकरञ्जय ः फलं त्वचो दार्व्याः ।
सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥६३॥

मुस्तमिति । मुस्तं । त्रिफला । मदन । करंजः । आरग्वधः । कलिंगयवाः इन्द्रयवाः । ससप्तपर्णा दार्वी सप्तपर्णः दारुहरिद्रा च । तैः कषायः कार्यः । तत्र स्नानं । सिद्धः अर्थः प्रयोजनं कुष्ठशमनरूपं येन तत् सिद्धार्थकं नाम ॥ ६० ॥

एष कषाय इति । एष उक्तः मुस्तादीनां कषायः क्वाथरूपः । वमनं विरेचनं उभयदोषहरणं । कल्करूपश्च उद्घर्षः उद्घर्षणं । वर्णकः वर्णकरः । तथा त्वग्दोषस्य शोफस्य कुष्ठानां च प्रबाधनः नाशनः । पाण्डुरोगघ्नश्च भवति ॥ ६१ ॥

कुष्ठमिति । कुष्ठं । करंजबीजानि । एडगजः । प्रपुनाडबीजं । सैन्धवं । रसांजनं । कपित्थः । लोध्रश्च । ते । कुष्ठादिभिर्जलपिष्टैः कृतो लेपः कुष्ठसूदनः कुष्ठनाशन. ॥६२॥

श्वेतेति । श्वेतकरवीरस्य मूलं । कुटजः । करंजश्च । तयोः समाहारः । तत् । तस्मात् कुटजकरंजात् फलं कुटजकरंजयोः फलं । दार्व्याः त्वचः । सुमनाः जाती । तस्याः प्रवालेन पल्लवेन युक्तः जातीपल्लवयुक्तः लेपः । श्वेतकरवीरमूलकुटजफलकरंजफलदार्वीत्वग्जातीपल्लवैः एकत्र जलपिष्टैः कृतः लेपः कुष्ठापहः कुष्ठनाशनः सिद्धः सिद्धफलः ॥ ६३ ॥

---

६३ । कुष्ठकरजात् पलं इति ठ पुस्तके ।

लोध्रस्य धातकीनां वत्सकबीजस्य नक्तमालस्य ।
कल्कश्च मालतीनां कुष्ठेषूद्वर्त्तनालेपौ ॥९४॥
शैरीषी त्वक् पुष्पं कार्पास्या राजवृक्षपत्राणि ।
पिष्टा च काकमाची चतुर्विधः कुष्ठनुल्लेपः ॥९५॥
दार्व्या रसाञ्जनस्य च निम्बपटोलस्य खदिरसारस्य ।
आरग्वधवृक्षकयोस्त्रिफलायाः सप्तपर्णस्य ॥९६॥
इति षट्कषाययोगाः कुष्ठघ्नाः सप्तमश्च तिनिशस्य ।
स्नाने पाने च हितास्तथाष्टमश्चाश्वमारस्य ॥९७॥

लोध्रस्येति । लोध्रस्य । धातकीना । वत्सकबीजस्य इन्द्रयवस्य । नक्तमालस्य । मालतीनां च । कल्कः । लोध्रादीनां कल्कः । तेन कुष्ठेषु उद्वर्त्तनं आलेपश्च । तौ शस्तौ इत्यर्थः ॥ ९४ ॥

शैरीषीति । शैरीषी शिरीषसम्बन्धिनी त्वक् । कार्पास्याः पुष्पं । राजवृक्षस्य आरग्वधस्य पत्राणि । काकमाची च । इति चत्वारि द्रव्याणि । पृथक् पिष्ट्वा तत्-कृतः चतुर्विधः लेपः कुष्ठनुत् । शिरीषत्वगादिभिः जलपिष्टैः पृथक् चत्वारो लेपाः कुष्ठघ्नाः ॥ ९५ ॥

दार्व्या इति । दार्व्याः । रसांजनस्य च । दार्वीरसांजनाभ्यां एकः कषाययोगः । निम्बपटोलस्य निम्बपटोलाभ्या द्वितीयः । खदिरसारस्य इति तृतीयः । आरग्वधः । वृक्षकः कुटजश्च । तौ । तयोः । आरग्वधवृक्षकाभ्यां चतुर्थः । त्रिफलायाः इति पंचमः । सप्तपर्णस्य इति षष्ठः । इति षट् कषायाः क्वाथकल्कादिरूपाः योगाः कषाययोगाः । तिनिशस्य कषाययोग. सप्तमः । अश्वमारस्य श्वेतकरवीरस्य कषाययोगः अष्टमः । एते कषाययोगाः क्वाथरूपाः कुष्ठिना स्नाने पाने च हिताः ॥ ९६ । ९७ ॥

---

९४ । वत्सकबीजस्य नकुलमालस्य इति ख पुस्तके ।

आलेपनं प्रघर्षणमवचूर्णनमेत एव च कषायाः ।
तैलघृतपाकयोगे चेष्यन्ते कुष्ठशान्त्यर्थम् ॥९८॥

त्रिफला निम्बपटोलं मञ्जिष्ठा रोहिणी वचा रजनी ।
एष कषायोऽभ्यस्तो [illegible]न्ति कफपित्तजं कुष्ठम् ॥

एतैरेव च सर्पिः सिद्धं वातोल्वणं जयति कुष्ठम् ।
एष च कल्पो दिष्टः खदिरासनदारुनिम्बानाम् ॥१००॥

आलेपनमिति । एते उक्ता एव कषायाः । कल्करूपेण कुष्ठिनां आलेपनं प्रघर्षणं मवचूर्णनं चूर्णैरवध्वंसनं चूर्णरूपेण प्रयोगः । तथ कुष्ठशान्त्यर्थं तैलं घृतं च । तयोः पाकः । तस्मिन् योग. । तस्मिन् कुष्ठशमनतैलघृतसिद्धौ च इष्यन्ते क्वाथ-कल्करूपेण ॥ ९८ ॥

त्रिफलेति । त्रिफला । निम्बः पटोलं च । तयोः समाहारः । तत् । मंजिष्ठा । रोहिणी । वचा । रजनी हरिद्रा च । एष कषायः । त्रिफलादिभि· कल्कितैः क्वाथ-विधिना कृतः क्वाथः अभ्यस्तः शीलितः प्रतिदिनं पीतः । कफपित्तजं कुष्ठं निहन्ति ॥ ९९ ॥

एतैरिति । एतैः उक्तैरेव त्रिफलादिभिः स्नेहपादिकैः स्नेहचतुर्गुणे जले सिद्धं सर्पिः गव्यं वातोल्वणं कुष्ठं जयति । खदिरासनदारुनिम्बानां । असनः पीतशालः । एष त्रिफलायुक्त एव कल्पः विधिः दिष्ट उपदिष्टः । तथा च कुष्ठे कफपित्तोल्वणे खदिरादीनां कषायं पिबेत् । वातोल्वणे च तै. सिद्धं सर्पिः ॥१००॥

---

९८। प्रघर्षणमुद्वर्त्तनं इति ठ पुस्तके ।

१०० । कल्कश्च एष दृष्टः इति ठ पुस्तके ॥ खदिरामरदारुकुष्ठानां इति ठ पुस्तके ।

१०० । खदिरसुरदारुनिम्बानां इति ग पुस्तके ।

कुष्ठार्कतुत्थकट्फलमूलकवीजानि रोहिणी कटुका ।
कुटजफलोत्पलमुस्तं बृहतीकरवीरकासीसम् ॥१०१॥
एडगजनिम्बपाठा दुरालभा चित्रको विडङ्गश्च ।
तिक्तालावुकवीजं कम्पिल्लकसर्षपौ वचा दार्वी ॥१०२॥
एतैस्तैलं सिद्धं कुष्ठघ्नं योग एष चालेपः ।
उद्वर्त्तनं प्रघर्षणमवचूर्णनमेष एव चेष्टः ॥१०३॥
श्वेतकरवीरकरसो गोमूत्रं चित्रको विडङ्गश्च ।
कुष्ठेषु तैलयोगः सिद्धोऽयं सम्मतो भिषजाम् ॥१०४॥

इति श्वेतकरवीराद्यं तैलम् ।

कुष्ठार्कतुत्थेति । कष्ठं । अर्कः । तुत्थं । कट्फलं । मूलकवीजं च । तानि । कटुका रोहिणी कटुरोहिणी । कुटजफलं कुटजफलवीजं इन्द्रयवः । उत्पलं नीलोत्पलं । मुस्तं च । तत् । बृहती । करवीरः । कासीसं च । तत् । एडगजः चक्रमर्द्दः । निम्बः । पाठा च । ताः । दुरालभा । चित्रकः । विडंगश्च । तिक्तालावुकवीजं । कम्पिल्लकः । सर्षपश्च । तयोः समाहारः । तत् । वचा । दार्वी च । एतैः कुष्ठादिभिः कल्कितैः स्नेहपाकविधिना चतुर्गुणे जले सिद्धं तैलं कुष्ठघ्नं अभ्यंगात् । एष एव आलेपः योगः तैः पिष्टैः कुष्ठेषु आलेपनं । तैः कल्कितैः उद्वर्त्तनं प्रघर्षणं । अवचूर्णनञ्चापि । एष एव उद्वर्त्तनादिरूपः योगः इष्टः ॥ १०१-१०३ ॥

श्वेतकरवीरेति । श्वेतकरवीरस्य रसः स्वरसः क्वाथो वा द्विगुणः । गोमूत्रं द्विगुणं । एवं हि स्नेहाच्चातुर्गुण्यं द्रवस्य भवति । चित्रको विडंगश्च । तयोः कल्कः पादिकः । अयं तैलयोगः कुष्ठेषु सिद्धः सिद्धफलः भिषजां संमतः ॥१०४॥

---

१०२ । दुरालभा रोचना विडगश्च इति ख ग ए पुस्तकेषु ।

श्वेतकरवीरपल्लवमूलत्वग् वत्सको विडङ्गश्च ।
कुष्ठार्कमूलसर्षपशिग्रुत्वचो रोहिणी कटुका ॥१०५॥
एतैस्तैलं सिद्धं कल्कैः पादांशिकैर्गवां मूत्रम् ।
दत्त्वा तैलचतुर्गुणमभ्यङ्गात् कुष्ठकण्डूघ्नम् ॥१०६॥

इति श्वेतकरवीरपल्लवाद्यं तैलम् ।

तिक्तालाबुकबीजं द्वे तुत्थे रोचना हरिद्रे द्वे ।
बृहतीफलमेरण्डः सविशालश्चित्रको मूर्वा ॥१०७॥
कासीसहिंगुशिग्रुत्र्यूषणसुरदारुतुम्बुरुविडङ्गम् ।
लाङ्गलकं कुटजत्वक् कटुकाख्या रोहिणी चैव ॥१०८॥

श्वेतेति । श्वेतकरवीरस्य पल्लव. । मूलत्वक् च । तत् । वत्सकः । विडंगश्च । कुष्ठं । अर्कमूलं । सर्षप. । शिग्रु' शोभाजनः । तस्य त्वक् च । तत् । कटुका रोहिणी कटुरोहिणी च । तैलचतुर्गुणं गवां मूत्रं दत्त्वा तत्र । एतैरुक्तैः श्वेतकरवीरपल्लवादीनां कल्कै' तैर्मिलितै. कल्कितैः पादांशिकै. तैलपादिकैः सिद्धं पक्वं तैलं अभ्यंगात् कुष्ठकण्डूघ्नं कुष्ठानि कण्डूञ्च नाशयति ॥१०५ । १०६ ॥

तिक्तालबुकेति ; तिक्तालाबुकबीजं । द्वे तुत्थे मयूरतुत्थं खर्परातुत्थं च । रोचना गोरोचना । द्वे हरिद्रे हरिद्रा दारुहरिद्रा च । बृहतीफलं । एरण्डः एरण्डमूलत्वक् । सह विशालया वर्त्तमानः सविशालः । विशाला गोरक्षकर्कटी । चित्रकः । मूर्वा । कासीसं । हिंगु । शिग्रु' । त्र्यूषणं त्रिकटु । सुरदारु । तुम्बुरु । विडंगश्च । तेषां समाहारः । तत् । लांगलकं लांगलिका । कुटजत्वक् । कटुकाख्या रोहिणी कटुरोहिणी च । एतैः कल्कै. तिक्तालाबुकबीजादीनां कल्कैः मिलितैः तैलपादिकै. तैलात् चतु-

---

१०४-१०६ । ' श्लोकद्वय ख ग पुस्तकयोर्न पठ्यते ।

१०५-१०६ । श्वेतकरवीरकल्कैः पादांशिकै. गवां मूत्र । [illegible] तैल चतुर्गुणं अभ्यगः कुष्ठकण्डू-घ्नः । इति ट पुस्तके ।

सर्षपतैलं कल्कैरेतैर्मूत्रे चतुर्गुणे साध्यम् ।
कण्डूकुष्ठविनाशनमभ्यङ्गान्मारुतकफघ्नं ॥१०९॥

इतीक्ष्वाकुतैलम् ।

कनकक्षीरी शैला भार्गी दन्त्याः फलानि मूलञ्च ।
जातीप्रवालसर्षपलशुनविडङ्गं करंजत्वक् ॥११०॥
सप्तच्छदार्कपल्लवमूलत्वङ्निम्बचित्रकास्फोताः ।
गुञ्जैरण्डं बृहती मूलकसुरसार्जकफलानि ॥१११॥
कुष्ठं तुम्बुरु पाठा मूर्वा मुस्तं वचाऽथ षड्ग्रन्था ।
एडगजकुटजशिग्रुत्र्यूषणभल्लातकक्षवकाः ॥११२॥

गुणे गवां मूत्रे सर्षपतैलं साध्यं पाच्यं । तथा साधितं तच्च तैलं अभ्यंगात् कण्डू-कुष्ठविनाशनं मारुतकफघ्नं च भवेत् ॥ १०७--१०९ ॥

कनकक्षीरीति । कनकक्षीरी स्वर्णक्षीरी । शैला मनःशिला । भार्गी । दन्त्याः फलानि मूलं च । जात्याः प्रवालः पल्लवः । सर्षपः । लशुनः । विडंगश्च । तेषां समाहारः । तत् । करंजत्वक् । सप्तच्छदस्य अर्कस्य च पल्लवः मूलत्वक् च । निम्बः । चित्रकः । आस्फोता अपराजिता च । ताः । गुंजा । एरण्डः । बृहती । मूलकः । सुरसः । अर्जकश्च । ते । सुरसार्जकौ पर्णासभेदौ श्वेतकृष्णतुलस्यौ । तेषां फलानि । कुष्ठं । तुम्बुरु । पाठा । मूर्वा । मुस्तं । वचा । अथ षड्ग्रन्था श्वेतवचा । एडगजः । कुटजः । शिग्रुः शोभांजनः । त्र्यूषणं त्र्योषं । भल्लातकः क्षवकश्च ते । क्षवकः स्वनामख्यातः । हरितालं । अवाक्पुष्पी शताह्वा । तुत्थं मयूरतुत्थं । कम्पिल्लकः रोचनिका । अमृ-

१०९ । मण्डलकुष्ठविनाशन इति ठ पुस्तके ।

११० । कनकक्षीरी सेला इति ठ पुस्तके । भार्गी जातीफलानि इति ग पुस्तके ।

१११ । मूलत्वक चित्रकास्फोता इति क पुस्तके ॥ कुटजैरण्डबृहतीमूल इति ठ पुस्तके ।

हरितालमवाक्पुष्पी तुत्थं कम्पिल्लकोऽमृतासंगः।
सौराष्ट्री कासीसं दार्वीत्वक् सर्ज्जिका लवणम् ॥११३॥
कल्कैरेतैस्तैलं करवीरकमूलपल्लवकषाये।
सार्षपमथवा तैलं गोमूत्रचतुर्गुणं साध्यम् ॥११४॥
स्थाप्यं कटुकालावुनि तत् सिद्धं तेन मण्डलान्याशु।
भिन्द्याद्भिषगभ्यङ्गात् क्रिमींश्च कण्डूश्च विनिहन्यात्॥११५॥

इति कनकक्षीरीतैलम्।

कुष्ठं तमालपत्रं मरिचं समनःशिलं सकासीसम्।
तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे ॥११६॥

तासंग. खर्परातुत्थं। अमृता गुडुची। आसंगः रसांजनमिति केचित्। सौराष्ट्री मृत्। कासीसं। दार्वीत्वक्। सर्ज्जिका क्षारः। लवणं च। एतैः कल्कैः कनकक्षीर्यादिभिः कल्कितैः स्नेहपादिकैः तैलं तिलभवं करवीरमूल पल्लवकषाये करवीरस्य मूलत्वक्-पल्लवान् पलिकतान् क्वाथविधिना क्वाथयित्वा तस्मिन् क्वाथे चतुर्गुणे साध्यं पाच्यं। अथवा सार्षपतैलं एतैरेव कल्कैः। गोमूत्रं चतुर्गुणं यस्मिन् तत् गोमूत्रचतुर्गुणं। तैलात् चतुर्गुणे गोमूत्रे साध्यं। साधयित्वा च तत कटुकालावुनि तिक्तालावुपात्रे स्थाप्यं। भिषक तेन तैलेन अभ्यंगात् मण्डलानि कुष्ठानि भिन्द्यात्। क्रिमीन् कण्डूश्च विनिहन्यात् ॥११०—११५॥

कुष्ठमिति। कुष्ठं। तमालपत्रं। मरिचं। समनःशिलं सकासीसं मनःशिला कासीसं च। तत् सर्वं तैलेन युक्तं ताम्रभाजने ताम्र पात्रे सप्ताहं व्याप्य उषितं स्थापितं। तेन आलिप्तं सिध्मं कुष्ठं घर्मसेविनः आतपसेविनः स्नानं मुक्त्वा विशुद्धतनोः स्नान-

११२। एडगजकुटजशिग्रु इति ठ पुस्तके।
११३। हरिताल वचांपुष्पी इति ट पुस्तके।
११४। करवीरमूलकषाय इति ट पुस्तके।

तेनालिप्तं सिध्मं सप्ताहाद् घर्मसेविनो व्येति ।
मासान्नवं किलासं स्नानं मुक्त्वा विशुद्धतनोः ॥११७॥
इति सिध्मे लेपः ।

सर्षपकरंजकोपातकीनां तैलान्यथेंगुदीनश्च ।
कुष्ठेषु हितान्याहुस्तैलं यच्चापि खदिरसारस्य ॥११८॥
जीवन्ती मंजिष्ठा दार्वी कम्पिल्लकं पयस्तुल्यम् ।
एष घृततैलपाकः सिद्धः सिद्धे च सर्ज्जरसो देयः ॥११९॥
समधूच्छिष्टो विपादिका तेन शाम्यतेऽभ्यक्ता ।
चर्मैककुष्ठकिटिभं कुष्ठं शाम्यत्यलसकश्च ॥१२०॥
इति विपादिकाहरघृततैले ।

वर्जे कृतः संशुद्धे पुंसः सप्ताहात् व्येति नश्यति । नवं किलासं तेन आलिप्तं घर्मसेविनः स्नानं मुक्त्वा विशुद्धतनोश्च मासात् व्येति ॥११६ । ११७॥

सर्षपेति । सर्षपकरंजकोपातकानि सर्षपकरंजकोपातकीसम्बन्धीनि तैलानि इंगुदीनां तैलानि च कुष्ठेषु हितानि आहुः भिषजः । यच्च खदिरसारस्य तैलं । तच्चापि कुष्ठेषु हितं ॥ ११८ ॥

जीवन्तीति । जीवन्ती मंजिष्ठा । दार्वी । कम्पिल्लकः । पयः क्षीरं । तुल्यं च । एष घृततैलपाकः सिद्धः । जीवन्तीमंजिष्ठादार्वीकम्पिल्लकतुल्यैः कल्कितैः पयसि चतुर्गुणे घृततैलं यमकं साधयेत् । स्नेहपाकविधिना । तस्मिन् सिद्धे पूते च समधूच्छिष्टः सर्ज्जरसो देयः । तेन अभ्यक्ता विपादिका शाम्यते शाम्यति । चर्मैककुष्ठं किटिमं अलसकं कुष्ठं च तेन अभ्यक्त शाम्यति ॥ ११९—१२० ॥

---

११८। तैलानि सर्षपानां करंजकोपातक इंगुदानां च इति ठ पुस्तके । कुष्ठेष्वहितानि इति ठ पुस्तके ।

११९। पयस्तुल्यं इति रा ह या पुस्तकेषु ।

किण्वं वराहरुधिरं पृथ्वीका सैन्धवञ्च लेपः स्यात् ।
लेपो योऽयः कुस्तुम्बुरूणि कुष्ठञ्च मण्डलनुत् ॥१२१॥
पूतिकदारुजटिलाः पक्कसुरा क्षौद्रमुद्गपर्ण्यौ च ।
लेपः सकाकनासो मण्डलकुष्ठापहः सिद्धः ॥१२२॥
चित्रकशोभाञ्जनकौ गुडूच्यपामार्गदेवदारूणि ।
खदिरो धवश्च लेपः श्यामा दन्ती द्रवन्ती च ॥१२३॥
लाक्षारसाञ्जनैलाः पुनर्नवा चेति कुष्ठिनो लेपाः ।
दधिमण्डयुताः सर्वे देयाः षण्मारुतकफघ्नाः ॥१२४॥

किण्वमिति । किण्वं सुरावीजं । वराहरुधिरं । पृथ्वीका सूक्ष्मैला । सैन्धवं च । पिष्ट्वा ेन कृतः लेपः मण्डलकुष्ठनुत् स्यात् । कुस्तुम्बुरूणि आर्द्रधन्याकानि । कुष्ठं च । पिष्ट्वा मण्डलकुष्ठनुत् लेपः योज्यः । इह मण्डलकुष्ठघ्नं लेपद्वयं ॥ १२१ ॥

पूतिकेति । पूतिकं-करंजभेदः । दारु दारुहरिद्रा । देवदारु इत्यन्ये । जटिला जटामांसी च । ताः । पक्कसुरा-पक्वान्नसंधानजाता सुरा । क्षौद्रं मधु । मुद्गपर्णी च । ते । सकाकनासः लेपः । काकनासा केउयाठुंटीति वंगेषु । पूतिकादिकाकनासान्तैः एकत्र पिष्टैः कृतो लेपः मण्डलकुष्ठापह. सिद्धः सिद्धफलः ॥ १२२ ॥

चित्रकेति । चित्रकः । शोभांजनकश्च । तौ लेपः । इत्येको लेपः । गुडूची । अपामार्गः । देवदारु च । तानि । इनि द्वितीयः । खदिरः । धवश्च । इति तृतीयः । श्यामा । दन्ती । द्रवन्ती च । इति चतुर्थः । लाक्षा । रसांजनं । एला च । ताः । इति पंचमः । पुनर्नवा च । इति षष्ठः । चित्रकादयः श्लोकपादोक्ताः षट् लेपाः । इति कुष्ठिनां षट् लेपाः । ते च सर्वे दधिमण्डयुताः देयाः । मारुतकफघ्नाश्च ॥ १२३ । १२४ ॥

---

१२१ । किह वराहरुधिर इति ङ च पुस्तकयोः ।

१२२ । जटिलायष्मधुरा इति ग पुस्तके ।

एड्गजकुष्ठसैन्धवसौवीरकसर्षपैः क्रिमिघ्नैश्च ।
क्रिमिकुष्ठमण्डलाख्यं दद्रुः कुष्ठं च शममेति ॥१२५॥
एड्गजः सर्ज्जरसो मूलकबीजञ्च सिध्मकुष्ठानाम् ।
काञ्जिकयुक्तन्तु पृथङ्क्तमिदमुद्वर्तनं लेपाः ॥१२६॥
वासा त्रिफला पाने स्नाने चोद्वर्तने प्रदेहे च ।
वृहती सेव्यपटोली ससारिवा रोहिणी चैव ॥१२७॥
खदिरावघातककुभा रोहीतकलोध्रकुटजधवनिम्बाः ।
सप्तच्छदकरवीराः शस्यन्ते स्नानपानेषु ॥१२८॥

एडंगजेति । एडगजः चक्रमर्दः । कुष्ठं । सैन्धवं । सौवीरकं कांजिकभेदः । सर्षपश्च । तैः । क्रिमिघ्नः विडंगेश्च । एडगजादिभिः सौवीरकपिष्टैः प्रलेपात् । क्रिमि ुष्ठं । मण्डलाख्यं कुष्ठं च । तत् । दद्रुः । कुष्ठं च । शममेति शाम्यति ॥१२५॥

एडगज इति । एडगजः चक्रमर्दः । सर्ज्जरसः । मूलकबीजं च । एतत् त्रयं पृथक् प्रत्येकं कांजिकयुक्तं कल्कितं सिध्मकुष्ठानां इदं उद्वर्त्तनं मतं । पिष्टं च लेपाः मताः ॥ २६ ॥

**वासा त्रिफलेति । वासा वासक. । त्रिफला । वृहती । सेव्यमुशीरं । तत्सहिता पटोली पटोलं सेव्यपटोली च । ससारिवा । सारिवा अनन्तमूलं । रोहिणी कटुरोहिणी च । वासादयः कथिताः कुष्ठिनां पाने स्नाने । चूर्णिताः उद्वर्तने । उन्मर्दने इति कचित् पाठ. । पिष्टाश्च प्रदेहे प्रलेपे शस्यन्ते ॥ १२७ ॥**

खदिरेति । खदिरः । अवघातः कर्णिकारः । ककुभः अर्ज्जुनश्च । ते । रोहीतकः प्लोहशत्रुः । लोध्रः । कुटजः । धवः । निम्बश्च । ते । सप्तच्छदाः सप्तपर्णाः । करवीराश्च । ते । खदिरादयः कथिताः । कुष्ठिनां स्नानपानेषु स्नानेषु, पानेषु च शस्यन्ते ॥ १२८ ॥

जलवाप्यलोहकेसरपत्रप्लवचन्दनं मृणालानि ।
भागोत्तराणि सिद्धं प्रलेपनं पित्तकफकुष्ठे ॥१२९॥
यष्टयाह्वलोध्रपद्मकपटोलपिचुमर्दचन्दनरसाश्च ।
स्नाने पाने च हिताः सुशीतलाः पित्तकुष्ठिभ्यः ॥१३०॥
आलेपनं प्रियंगुर्हरेणुका वत्सकस्य च फलानि ।
सातिविषा च ससेव्या सचन्दना रोहिणी कटुका ॥१३१॥
तिक्तघृतैर्धौतघृतैरभ्यङ्गो दह्यमानकुष्ठेषु ।
तैलैश्चन्दनमधुकप्रपौण्डरीकोत्पलयुतैश्चाभ्यङ्गः ॥१३२॥

जलेति । जलं वालकं । वाप्यं कुष्टं । लोहमगुरु । केसरः नागकेसरः । पत्रं तेजपत्रं । प्लवः कैवर्त्तमुस्तं । चन्दनं च । तेषां समाहारः तत् । मृणालानि च । एतानि भागोत्तराणि उत्तरोत्तरं एकभागाधिकानि नीत्वा पिष्ट्वा तैः कफपित्तकुष्ठे प्रलेपनं सिद्धं सिद्धफलं । जल्पकल्पतरौ चन्दनेत्यत्र चण्डेति पाठः । तथात्वे छन्दोदुष्टिः स्यात् । अर्याछन्दसि षष्ठगणे जलयोरन्यतरस्य नियतत्वात् । क्वचित् न्लौ वा भवतः । तत्र पदं द्वितीयाक्षरादारभ्य प्रवर्त्तते । न्लौ चेत् पदं द्वितीयादि । इति ( पि० सू० ४ । १८ ) यथा इह पूर्वश्लोके लोध्रकुटजेत्यत्र ॥ १२९ ॥

यष्ट्याह्वेति । यष्ट्याह्वं यष्टिमधु । लोध्रः । पद्मकं पद्मकाष्ठं । पटोलः । पिचुमर्दः निम्बः । चन्दनञ्च । तेषां रसाः क्वाथाः । सुशीतलाः स्नाने पाने च पित्तकुष्ठिभ्यः हिताः ॥ १३० ॥

आलेपनमिति । प्रियंगुः । हरेणुका । वत्सकस्य फलानि इन्द्रयवाः । सातिविषा ससेव्या । सेव्यमुशीरं । कटुका रोहिणी कटुरोहिणी च । प्रियंग्वादिभिः पिष्टैः पित्तकुष्ठेषु आलेपनं हितं ॥ १३१ ॥

तिक्तघृतैरिति । दह्यमानकुष्ठेषु दह्यमानेषु क्षारेण दाह्यमानेषु दाह्ययुक्तेषु वा

१३१ । सातिविषा च संसेव्या इति वा पुस्तके ।

एडगजकुष्ठसैन्धवसौवीरकसर्षपैः क्रिमिघ्नैश्च ।
क्रिमिकुष्ठमण्डलाख्यं दद्रुः कुष्ठं च शममेति ॥१२५॥
एडगजः सर्ज्जरसो मूलकबीजञ्च सिध्मकुष्ठानाम् ।
काञ्जिकयुक्तन्तु पृथक्कृतमिदमुद्वर्तनं लेपाः ॥१२६॥
(वासा त्रिफला पाने स्नाने चोद्वर्तने प्रदेहे च ।
बृहती सेव्यपटोली ससारिवा रोहिणी चैव ॥१२७॥
खदिराश्वघातककुभा रोहीतकलोध्रकुटजधवनिम्बाः ।
सप्तच्छदकरवीराः शस्यन्ते स्नानपानेषु ॥१२८॥)

एडगजेति । एडगजः चक्रमर्दः । कुष्ठं । सैन्धवं । सौवीरकं कांजिकभेदः । सर्षपश्च । तैः । क्रिमिघ्नैः विडंगैश्च । एडगजादिभिः सौवीरकपिष्टैः प्रलेपात् । क्रिमिकुष्ठं । मण्डलाख्यं कुष्ठं च । तत् । दद्रुः । कुष्ठं च । शममेति शाम्यति ॥१२५॥

एडगज इति । एडगजः चक्रमर्दः । सर्ज्जरसः । मूलकबीज च । एतत् त्रयं पृथक् प्रत्येकं कांजिकयुक्तं कल्कितं सिध्मकुष्ठानां इदं उद्वर्त्तनं मतं । पिष्टं च लेपाः मताः ॥ २२६ ॥

वासा त्रिफलेति । वासा वासकः । त्रिफला । बृहती । सेव्यमुशीरं । तत्सहिता पटोली पटोलं सेव्यपटोली च । ससारिवा । सारिवा अनन्तमूलं । रोहिणी कटुरोहिणी च । वासादयः क्वथिताः कुष्ठिना पाने स्नाने । चूर्णिताः उद्वर्तने । उन्मर्दने इति क्वचित् पाठः । पिष्टाश्च प्रदेहे प्रलेपे ॥ १२७ ॥

खदिरेति । खदिरः । अश्वघातः कर्णिकारः । ककुभः अर्ज्जुनश्च । ते । रोहीतकः प्लीहशत्रुः । लोध्रः । कुटजः । धवः । निम्बश्च । ते । सप्तच्छदाः सप्तपर्णाः । करवीराश्च । ते । खदिरादयः क्वथिताः । कुष्ठिनां स्नानपानेषु स्नानेषु पानेषु च शस्यन्ते ॥ १२८ ॥

जलवाप्यलोहकेसरपत्रप्लवचन्दनं मृणालानि ।
भागोत्तराणि सिद्धं प्रलेपनं पित्तकफकुष्ठे ॥१२९॥
यष्टयाह्वलोध्रपद्मकपटोलपिचुमर्दचन्दनरसाश्च ।
स्नाने पाने च हिताः सुशीतलाः पित्तकुष्ठिभ्यः ॥१३०॥
आलेपनं प्रियंगुर्हरेणुका वत्सकस्य च फलानि ।
सातिविषा च ससेव्या सचन्दना रोहिणी कटुका ॥१३१॥
तिक्तघृतैर्धौतघृतैरभ्यङ्गो दह्यमानकुष्ठेषु ।
तैलैश्चन्दनमधुकप्रपौण्डरीकोत्पलयुतैश्चाभ्यङ्गः ॥१३२॥

जलेति। जलं वालकं। वाप्यं कुष्टं। लोहमगुरु। केसरः नागकेसरः। पत्रं तेजपत्रं। प्लवः कैवर्त्तमुस्तं। चन्दनं च। तेषां समाहारः तत्। मृणालानि च। एतानि भागोत्तराणि उत्तरोत्तरं एकभागाधिकानि नीत्वा पिष्ट्वा तैः कफपित्तकुष्ठे प्रलेपनं सिद्धं सिद्धफलं। जलपकल्पतरौ चन्दनेत्यत्र चण्डेति पाठः। तथात्वे छन्दोदुष्टिः स्यात्। अर्याछन्दसि पष्ठगणे जलयोरन्यतरस्य नियतत्वात्। क्वचित् न्लौ वा भवतः। तत्र पदं द्वितीयाक्षरादारभ्य प्रवर्त्तते। न्लौ चेत् परं द्वितीयादि। इति पि० सू० ४।१८) यथा इह पूर्वश्लोके लोध्रकुटजेत्यत्र ॥ १२९ ॥

यष्ट्याह्वेति। यष्ट्याह्वं यष्टिमधु। लोध्रः। पद्मकं पद्मकाष्ठं। पटोलः। पिचुमर्दः निम्बः। चन्दनञ्च। तेषां रसाः क्वाथाः। सुशीतलाः स्नाने पाने च पित्तकुष्ठिभ्यः हिताः ॥ १३० ॥

आलेपनमिति। प्रियंगुः। हरेणुका। वत्सकस्य फलानि इन्द्रयवाः। सातिविषा ससेव्या। सेव्यमुशीरं। कटुका रोहिणी कटुरोहिणी च। प्रियंग्वादिभिः पिष्टैः पित्तकुष्ठेषु आलेपनं हितं ॥ १३१ ॥

तिक्तघृतैरिति। दह्यमानकुष्ठेषु दह्यमानेषु क्षारेण दह्यमानेषु दाहयुक्तेषु वा

क्लेदे प्रपतति चाङ्गे दाहे विस्फोटके सचर्मदले ।
शीताः प्रदेहसेका व्यधो विरेको घृतं तिक्तम् ॥१३३॥
खदिरघृतं निम्बघृतं दार्वीघृतमुत्तमं पटोलघृतम् ।
कुष्ठेषु रक्तपित्तप्रबलेषु भिषग्जितं सिद्धम् ॥१३४॥
त्रिफलात्वचोऽर्द्धपलिकाः पटोलपत्रञ्च कार्षिकाः शेषाः ।
कटुरोहिणी सनिम्बा यष्टयाह्वं त्रायमाणा च ॥१३५॥

कुष्ठेषु तिक्तकघृतैः तिक्तद्रव्यसाधितैः घृतैः वक्ष्यमाणैः । तथा धौतघृतैः शतधौतैः सहस्रधौतैश्च घृतैः । अभ्यंगः हितः । तथा चन्दनं । मधुकं यष्टीमधु । प्रपौण्डरीकं पुण्डरीककाष्ठं । उत्पलं च । तैः युतैः चन्दनादिभिः शीतवीर्यैः द्रव्यैः दाहज्वरचिकित्सिते प्रागुक्तैः साधितैः तैलैश्च अभ्यंगः दह्यमानकुष्ठेषु हितः ॥१३२॥

क्लेद इति । क्लेदे प्रपतति प्रकर्षेण पतति सति । अंगे दाहे सचर्मदले विस्फोटके च अंगे दाहविस्फोटकचर्मदलयुक्ते च । शीताः शीतस्पर्शाः । शीतवीर्यद्रव्यैश्च कृताः । प्रदेहाः सेकाः परिषेकाश्च ते प्रदेहसेकाः । तैः पिष्टैः प्रदेहाः प्रलेपाः । क्वथितैश्च सेकाः परिषेकाः । व्यधः सिराव्यधनं । विरेकः तिक्तं घृतं तिक्तघृतेन चाभ्यंगः हितः ॥ १३३ ॥

खदिरघृतमिति । रक्तपित्तप्रबलेषु कुष्ठेषु खदिरघृतं वक्ष्यमाणं । निम्बघृतं दार्वीघृतं पटोलघृतं च उत्तमं श्रेष्ठं सिद्धं सिद्धफलं भिषग्जितं औषधं । इह खदिरदार्व्योः सारः । निम्बस्य त्वक् । पटोलस्य च पत्रं ग्राह्यं । तथाच–सारः स्यात् खदिरादीनां निम्बादीनां त्वचस्तथा । फलं तु दाडिमादीनां पटोलादेर्दलं तथा॥ इति ॥१३४॥

त्रिफलेति । त्रिफला हरीतकी आमलकं विभीतकं च । तस्याः त्वचः प्रत्येकं अर्धपलिकाः अर्धपलमात्राः । पटोलपत्रं च अर्धपलिकं । शेषाः कटुरोहिण्यादयः वक्ष्यमाणाः कार्षिकाः । तथा च कटुरोहिणी सनिम्बा निम्बश्च । यष्ट्याह्वं यष्टिमधु त्रायमाणा च । प्रत्येकं कार्षिकाः कर्षप्रमाणाः । तत्सर्वं कल्कीकृत्य सलिलस्य

एष कषायः साध्यो दत्त्वा द्विपलं मसूरविदलानाम् ।
सलिलाढकेऽष्टभागे शेषे पूतो रसो ग्राह्यः ॥१३६॥
तत्र कषायेऽष्टपले चतुष्पलं सर्पिषश्च पक्तव्यम् ।
यावत् स्यादष्टपलं शेषं पेयं ततः कोष्णम् ॥१३७॥
तद्वातपित्तकुष्ठं वीसर्पं वातशोणितं प्रबलम् ।
ज्वरदाहगुल्मविद्रधिविभ्रमविस्फटकान् हन्ति ॥१३८॥
निम्बपटोलं दार्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम् ।
कुर्य्यादर्द्धपलांशां पर्पटकं त्रायमाणाञ्च ॥१३९॥
सलिलाढकसिद्धानां रसेऽष्टभागे स्थिते क्षिपेत् पूते ।
चन्दनकिराततिक्तकमागधिकास्त्रायमाणाञ्च ॥१४०॥

आढके दत्त्वा। चतुःप्रस्थमथाढकमिति। तत्र मसूरविदलानां च द्विपलं दत्त्वा। एष कषायः साध्यः पाच्यः। तस्मिन् कषाये अष्टभागे शेषे अष्टमभागावशिष्टे सति अवतार्य। पूतः वस्त्रेण स्रावितः रसः क्वाथः ग्राह्यः। तत्र कषाये क्वाथे अष्टपले अष्टपल-परिमिते सर्पिषः घृतस्य गव्यस्य चतुष्पलं पक्तव्यं। यावत् तत् अष्टपलं शेषं अष्टपलावशिष्टं स्यात् तावत् पक्तव्यं। ततः अष्टपलावशिष्टं तत् अवतार्य पूतं कृत्वा कोष्णं ईषदुष्णं पेयं पातव्यं। तच्च पीतं। प्रबलं वातपित्तकुष्ठं। वातशोणितं। ज्वरः। दाहः। गुल्मः। विद्रधिः। भ्रमः। विस्फोटकश्च। तान्। हन्ति ॥१३५—१३८॥

निम्बपटोलमिति। निम्बः पटोलश्च तत्। निम्बस्य त्वक्। पटोलस्य पत्रं। दार्वीं। दुरालभां। तिक्तरोहिणीं कटुरोहिणीं। त्रिफलां। त्रिफलामित्यत्र पाठेति वृद्धवाग्भटे पाठः। तथा च—पटोलपिचुमर्द्ददार्वीदुरालभातिक्तरोहिणीपाठापर्पटकत्रायमाणानामिति (अ० सं० चि० २१)। पर्पटकं त्रायमाणाञ्च अर्द्धपलांशां। अर्द्ध-पलांशामिति निम्बपटोलादिष्वपि यथालिंगवचनं योज्यं। निम्बादित्रायमाणान्तं सर्वं प्रत्येकं अर्द्धपलमात्रं कुर्यात्। तेषां निम्बपटोलादीनां कल्कितानां सलिलस्य आढके सिद्धानां रसे क्वाथे अष्टभागे स्थिते अष्टमभागावशिष्टे अवतारिते पूते कृते

मुस्तं वत्सकबीजं कल्कीकृत्यार्धकार्षिकान् भागान् ।
नवसर्पिषश्च षट्पलमेतत् तिक्तकं घृतं पेयम् ॥१४१॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्डवामयश्वयथुहारि ।
पामावीसर्पपिड़काकण्डूमदगण्डनुत् सिद्धं ॥१४२॥

इति तिक्तषट्पलकं घृतम् ।

सप्तच्छदं प्रतिविषां शम्पाकं तिक्तरोहिणीं पाठाम् ।
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्दपर्पटकम् ॥१४३॥
धन्वयवासं चन्दनमुपकुल्यां पद्मकं हरिद्रे द्वे ।
षड्ग्रन्थां सविशालां शतावरीं सारिवे चोभे ॥१४४॥

तस्मिन् । चन्दनं । किराततिक्तकः भूनिम्बः । मागधिका पिप्पली च । ताः । त्रायमाणा । मुस्तं । वत्सकबीजं इन्द्रयवं । प्रत्येकं अर्धकार्षिकान् भागान् गृहीत्वा कल्कीकृत्य क्षिपेत् । तथा नवस्य सर्पिषः घृतस्य गव्यस्य षट्पलं क्षिपेत् । क्षिप्त्वा साधयेत् । एवं साधितं एतत् तिक्तकं तिक्तषट्पलाख्यं घृतं पेयं । तच्च पीतं । कुष्ठं । ज्वरः । गुल्मः । अर्शांसि । ग्रहणी । पाण्ड्वामयः । श्वयथुः शोथश्च । ते । तान् हन्तुं शीलमस्य तत् कुष्ठादिहारि । पामा कुष्ठभेदः । वीसर्पः । पिडका । कण्डूः । मदः । गण्डश्च । ते । तान् नुदति अपसारयति । नाशयतीत्यर्थः । तत् पामादिनुत् सिद्धं सिद्धफलञ्च ॥ १३९-१४२ ॥

महातिक्तकं घृतमाह—सप्तच्छदमिति । सप्तच्छदं सप्तपर्णं । प्रतिविषामतिविषां । शम्पाकमारग्वधं । तिक्तरोहिणीं कटुरोहिणीं । पाठां । मुस्तं । उशीरं । त्रिफलां । पटोलं । पिचुमर्दः निम्बः । पर्पटकश्च तत् । धन्वयवासं दुरालभां । चन्दनं । उपकुल्यां पिप्पलीं । पद्मकं पद्मकाष्ठं । हरिद्रे द्वे । षड्ग्रन्थां वचां । सविशालां ।

---

१३३ । पीताम्रेदहस्तेका वमन विरेकौ इति च पुस्तके ।

१३३ । प्रदेहलेपास्तिक्तघृत ञ्यधनविरेकौ इति ठ पुस्तके ।

वत्सकबीजं वासां मूर्वामसृतां किराततिक्तञ्च ।
कल्कान् कुर्य्यान्मतिमान् यष्ट्याह्वं त्रायमाणाञ्च ॥१४५॥
कल्कश्चातुर्भागो जलमष्टगुणं रसोऽमृतफलानाम् ।
द्विगुणो घृतात् प्रदेयस्तत् सर्पिः पाययेत् सिद्धम् ॥१४६॥
कुष्ठानि रक्तपित्तप्रबलान्यर्शांसि रक्तवाहीनि ।
वीसर्परक्तपित्तं वातासृक्पाण्डुरोगञ्च ॥१४७॥
विस्फोटकान् सपामानुन्मादं कामलां ज्वरं कण्डूम् ।
हृद्रोगगुल्मपिड़का असृग्दरं गण्डमालाञ्च ॥१४८॥
हन्यादेतत् सर्पिः पीतं काले यथाबलं सद्यः ।
योगशतैरप्यजितान् महाविकारान् महातिक्तम् ॥१४९॥

विशाला गवाक्षी । शतावरी । द्वे स रिवे अनन्तमूले । वत्सकबीजं । वासां । अमृतां गुडूची । किराततिक्तकं भूनिम्बं । यष्ट्याह्वं यष्टिमधु । त्रायमाणां च । कल्कान् कुर्यात् कल्कीकुर्यात् मतिमान् भिषक् । स च कल्कः घृतात् चतुर्भागः पादिकः प्रदेयः । जलं घृतात् अष्टगुणं प्रदेयं । अमृतफलानां आमलकानां रसः स्वरसश्च घृतात् द्विगुणः प्रदेय. । दत्त्वा तत् सर्वं एकत्र साधयेत् । तथा सिद्धं तत् सर्पिः पाययेत् आतुरं भिषक् । एतत् महातिक्तं तदाख्यं सर्पि. काले योग्ये दोषशोधनरक्तमोक्षणानन्तरं यथाबलं यथाग्निबलं अग्निबलापेक्षा मात्रया पीतं । सद्यः तत्क्षणात् । शीघ्रमित्यर्थः । रक्तपित्तप्रबलानि कुष्ठानि । रक्तवाहीनि अर्शांसि । वीसर्पः रक्तपित्तं च । तत् वीसर्परक्तपित्तं । वातासृक् वातशोणितं । पाण्डुरोगं । विस्फोटकान् । सपामान् । पामा कुष्ठभेद· । उन्मादं । कामलां । ज्वरं । कण्डूं । हृद्रोगः । गुल्मः । पिडका च । ताः । असृग्दरं प्रदरं । गण्डमालां च । किं बहुना । योगशतैरपि अजितान् शमयितुमशक्यान् अन्यानपि महाविकारान् सद्यः हन्यात् ॥ १४३-१४९ ॥

१४७ । कुष्ठानि वातपित्तप्रबलानि इति ख पुस्तके ।

दोषे हृतेऽपनीते रक्ते वाह्यान्तरे कृते शमने ।
स्नेहे च कालयुक्ते न कुष्ठमतिवर्त्तते साध्यम् ॥१५०॥

इति महातिक्तकं घृतम् ।

खदिरस्य तुलाः पञ्च शिंशपासनयोस्तुले ।
तुलार्द्धाः सर्व एवैते करञ्जारिष्टवेतसाः ॥१५१॥
पर्पटः कुटजश्चैव वृषः क्रिमिहरस्तथा ।
हरिद्रे कृतमालश्च गुडूची त्रिफला त्रिवृत् ॥१५२॥

कुत इति चेत्? आह—दोष इति । दोषे हृते शोधनेन निर्हृते सति । रक्ते अपनीते सिराव्यधनेन । वाह्यान्तरे शमने वहिरन्तःशमने औषधे च कृते । स्नेहे च कालयुक्ते काले शोधनात् रक्तमोक्षणाच्चानन्तरं प्रयुक्ते सति । स हि स्नेहप्रयोगस्य कालः । यदुक्तं—स्नेहस्य पानमिष्टं शुद्धे कोष्ठे प्रवाहिते रक्ते । इति । नातिवर्त्तते कुष्ठं साध्यं भावं साध्यतां अतिवर्त्तते अतिक्रामति न असाध्यं भवति । एवमन्योऽपि व्याधिर्वोद्धव्यः । इत्थञ्च काले प्रयोगात् महातिक्तकसर्पिषः कुष्ठार्शोवीसर्पादिना योगशतैरजय्यानामपि अन्येषां च महाविकाराणां हन्तृत्वमुपपद्यते ॥१५०॥

महाखदिरघृतमाह—खदिरस्य तुला इति । खदिरस्य पञ्च तुलाः । शिंशपा असनः शालभेदश्च तौ । तयोः मिलितयोः तुले तुलाद्वयं । प्रत्येकमेकतुला । एते वक्ष्यमाणाः करंजादयः सर्वे तुलार्द्धाः । प्रत्येकमर्धतुलाः । के ते इति? अत आह—करंजेति । करंजः गोकरंजः । अरिष्टः निम्बः । वेतसश्च । ते । पर्पटः । कुटजः । वृषः वासकः । क्रिमिहरः क्रिमिघ्नः विडंगः । हरिद्रे द्वे । कृतमालः लाटाकरंजः इति वंगेषु । गुडूची । त्रिफला । त्रिवृत् । सप्तपर्णश्च । एते सर्वे प्रत्येकं तुलार्द्धाः । संक्षुण्णाः कुट्टिताः । तत् सर्वं वारिणः जलस्य दशसु द्रोणेषु क्वाथयित्वा अष्टभागावशिष्टं कषायं क्वाथं अवतारयेत् । तस्मिन् पूते च तुल्यांशं सर्पिषः तुल्यमानं धात्र्या आमलकस्य रसं स्वरसं सर्पिषः घृतस्य आढकं यथोक्तैः प्राक् यथा उक्तैः सप्तच्छदं प्रतिविषामित्यादिना त्रायमाणा

१५०-१५४ । महाखदिर घृत ट ड पुस्तयोर्न पठ्यते ।

सप्तपर्णश्च संचूर्णा दशद्रोणेषु वारिणः ।
अष्टभागावशेषन्तु कषायमवतारयेत् ॥१५३॥
धात्रीरसञ्च तुल्यांशं सर्पिषश्चाढकं पचेत् ।
महातिक्तककल्कैस्तु यथोक्तैः पलसम्मितैः ॥१५४॥
निहन्ति सर्वकुष्ठानि पानाभ्यङ्गनिषेवणात् ।
महाखदिरमित्येतत् परं कुष्ठविकारनुत् ॥१५५॥

इति महाखदिरं घृतम् ।

प्रपतत्सु लसीकाप्रस्रुतेषु गात्रेषु जन्तुजग्धेषु ।
मूत्रं निम्बविडंगे स्नानं पानं प्रदेहश्च ॥१५६॥
वृषकुटजसप्तपर्णाः करवीरकरञ्जनिम्बखदिराश्च ।
स्नाने पाने लेपे क्रिमिकुष्ठनुदः सगोमूत्राः ॥१५७॥

ञ्चेत्यन्तेन महातिक्तककल्कैः पलसम्मितैः प्रत्येकं पलपरिमितैः पचेत् । तथा पक्वं तत् घृतं । पानाभ्यंगाभ्यां निषेवणं । तस्मात् पानाभ्यंगनिषेवणात् । पानात् अभ्यंगाच्च इत्यर्थः । महाकुष्ठानि निहन्ति । महाखदिरमिति आख्यातं एतत् घृतं परं श्रेष्ठं कुष्ठविकारनुत् ॥ १५१—१५५ ॥

प्रपतत्स्विति । कुष्ठिनां गात्रेषु अंगेषु प्रपतत्सु गलन्मांसेषु । लसीका प्रस्रुता येभ्यः तेषु । तथा जन्तुजग्धेषु क्रिमिभिर्भक्षितेषु सत्सु । मूत्रं गोमूत्रं । निम्बः । विडंगश्च । ते । तैः क्वथितैः स्नानं पानं । पिष्टैश्च प्रदेहः ॥ १५६ ॥

वृषेति । वृषः वासकः । कुटजः । सप्तपर्णश्च । ते । करवीरः । करंजः । निम्बः । खदिरश्च । ते । वृषादयः सगोमूत्राः क्वथिताः स्नाने पाने । कल्किताश्च लेपे । क्रिमिकुष्ठनुदः भवन्ति ॥ १५७ ॥

---

१५३ । महातिक्तककल्कैस्तु यथोक्तैः पलसंमितैः इति न पठ्यते च पुस्तके ।

पानाहारविधाने प्रसेचने धूपने प्रदेहे च ।
क्रिमिनाशनं विडंगं विशिष्यते कुष्ठहा खदिरः ॥१५८॥
एड़गजः सविडंगो मूलान्यारग्वधस्य कुष्ठानाम् ।
उद्दालनं श्वदन्ता गोऽश्ववराहोष्ट्रदन्ताश्च ॥१५६॥
एड़गजः सविडंगो द्वे च निशे राजवृक्षमूलञ्च ।
कुष्ठोद्दालनमग्र्यं सपिप्पलीपाकलं योज्यम् ॥१६०॥
श्वित्राणां प्रशमार्थं योक्तव्यं सर्वतो विशुद्धानाम् ।
श्वित्रे स्रंसनमग्र्यं मलपूरस इष्यते सगुड़ः ॥१६१॥

पानाहारेति । कुष्ठिनां पानाहारविधाने पाने आहारविधौ च । क्रिमिनाशनं विडंगं । क्रिमिनाशनत्वेन विडंगं । कुष्ठहा खदिरः । कुष्ठहन्तृत्वेन च खदिरः । विशिष्यते सर्वेभ्यः अतिरिच्यते । तदुक्तं यज्जःपुरुषीयेऽपि—विडंगः क्रिमिघ्नानामिति । खदिरः कुष्ठघ्नानामिति च ॥ १५८ ॥

एडगज इति । एडगजः सविडंगः । आरग्वधस्य च मूलानि । एतत् त्रयं पिष्टं बहिःप्रयुक्तं कुष्ठानामुद्दालनं , निविडत्वक्त्याजनं भवति । तथा श्वदन्ताः कुक्कुर-दन्ताः । गौः । अश्वः । वराहः । उष्ट्रश्च । तेषां दन्ताश्च कुष्ठानामुद्दालनं । तैरपि कुष्ठानामुद्दालनं कुर्यात् ॥ १५६ ॥

एडगज इति ॥ एडगजः सविडंगः । द्वे निशे हरिद्रे । राजवृक्षस्य आरग्वधस्य मूलं । सपिप्पलीपाकलं । पाकलं कुष्ठं । एडगजादिकं अग्र्यं श्रेष्ठं । कुष्ठानामुद्दालनं कुष्ठोद्दालनं कुष्ठविनाशनं योज्यं ॥ १६० ॥

कुष्ठैकसम्भवत्वात् इहैव श्वित्रचिकित्सितमाह—श्वित्राणामिति । श्वित्राणां सर्वतः विशुद्धानां कृतशोधनानामेव । प्रशमाय इदं प्रशमार्थं । प्रशम एव अर्थः प्रयोजनं यस्य वा तत् प्रशमार्थं । प्रशमनं भेषजं योक्तव्यं । अयमाशयः श्वित्रिणः स्निग्धस्य

---

१६० । सपिप्पलीपांशुलवणं च इति ख ग पुस्तकयोः ।

तं पीत्वा सुस्निग्धो यथाबलं सूर्यपादसन्तापम् ।
संसेवेत विरिक्तस्त्र्यहं पिपासुः पिबेत् पेयाम् ॥१६२॥
श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात् ।
स्फोटेषु विस्रुतेषु प्रातः प्रातः पिबेत् पक्षम् ॥१६३॥
मलपूमसनं प्रियंगुं शतपुष्पाञ्चाम्भसा समुत्क्वाथ्य ।
पालाशं वा क्षारं यथाबलं फाणितोपेतम् ॥१६४॥

विशिष्यैव संशोधनं योजयेत्। पश्चात् अन्यत् प्रशमनमौषधं। शोधनेषु पुनः श्वित्रे स्रंसनं विरेचनमग्र्यं श्रेष्ठं प्रधानं। विरेचनयोगमाह—मलपूरस इति। श्वित्रे स्रंसनार्थं मलपूरसः काकोदुम्बरिकारसः सगुडः इष्यते। तदुक्तं वृद्धवाग्भटेनाऽपि—संशोधनं विशेषात् पीतस्नेहस्य योजयेदनु च। श्वित्रे स्रंसनमग्र्यं मलपूरस इष्यते सगुडः॥ इति (अ० सं० चि० २२)॥ १६१॥

तं पीत्वेति। श्वित्री पुमान्। सुस्निग्धः सम्यक् स्निग्धः अभ्यक्ततनुः। यथाबलं तं सगुडं मलपूरसं स्रंसनार्थं पीत्वा। सूर्यपादसन्तापं सूर्यकिरणसन्तापं संसेवेत। विरिक्तः पिपासुः तृष्णावान् चेत् तदा त्र्यहं त्रीणि दिनानि पेयां पिबेत्। एवं त्र्यहं विरेचनं। तृषिते पेया। नान्यत् किंचित्॥ १६२॥

श्वित्रेऽङ्गे इति। श्वित्रे अंगे ये स्फोटा जायन्ते। तान् स्फोटान् कंटकेन भिन्द्यात् दारयेत् भिषक्। कंटकेन भेदनात् स्फोटेषु विस्रुतेषु विशेषेण स्रुतेषु निःसृतपूयादिषु सत्सु। पक्षं व्याप्य प्रातः प्रातः प्रतिदिनं प्रातः। मलपुं। ह्रस्वश्छान्दसः। मलपूं काकोदुम्बरिकां। मलयूमिति पाठे स एवार्थः। असनं। असनः शालभेदः। प्रियंगुं। शतपुष्पां शताह्वां च। अम्भसा जलेन समुत्क्वाथ्य क्वाथविधिना। तं क्वाथं। पालाशं क्षारं पलाशक्षारोदकं वा। फाणितेन क्षुद्रगुडेन उपेतं युक्तं कृत्वा यथाबलं अग्निबलापेक्षया मात्रया पिबेत् श्वित्री॥ १६३। १६४॥

---

१६२। पिबेत्तोयं इति ठ पुस्तके।

१६४। यथाबलं फणिज्झकोपेतं इति च पुस्तके।

यच्चान्यत् कुष्ठघ्नं श्वित्राणां सर्वमेव तच्छस्तम् ।
खदिरोदकसंयुक्तं खदिरोदकपानमग्र्यं वा ॥१६५॥
समनःशिलं विडंगं कासीसं रोचनां कनकपुष्पीम् ।
श्वित्राणां प्रशमार्थं ससैन्धवं लेपनं दद्यात् ॥१६६॥
कदलीक्षारयुतं खरास्थि दग्धं गवां रुधिरयुक्तं ।
हस्तिमदाध्युषितं वा मालत्याः कोरकक्षारम् ॥१६७॥
नीलोत्पलं सकुष्ठं ससैन्धवं हस्तिमूत्रपिष्टं वा ।
मूलकबीजावल्गुजालेपः पिष्टो भवेद् गवां मूत्रे ॥१६८॥

कुष्ठोक्तमौषधं श्वित्रे अतिदिशन्नाह—यच्चान्यदिति । अन्यत् यच्च औषधं कुष्ठघ्नं कुष्ठचिकित्सिते उक्तं । तत् सर्वमेव खदिरोदकसंयुक्तं कृत्वा प्रयुक्तं चेत् । श्वित्राणां सम्बन्धे शस्तं हितं । श्वित्रेषु खदिरोदकपानं केवलं वा अग्र्यं श्रेष्ठं ॥१६५॥

समनःशिलमिति । समनःशिलं विडंगं मनःशिलां विडंगं च । कासीसं । रोचनां गोरोचनां । कनकपुष्पीं च । पिष्ट्वा श्वित्राणां प्रशमार्थं ससैन्धवं लेपनं दद्यात् । कदलीति । कदलीक्षारयुतं । गवां रुधिरयुक्तं वा । दग्धं खरास्थि खरास्थिभस्म । लेपनं दद्यात् । हस्तिमदाध्युषितं हस्तिमदे पर्युषितं मालत्याः कोरकाणां मुकुलानां क्षारं वा लेपनं दद्यात् ॥ १६६-१६७ ॥

नीलोत्पलमिति । सकुष्ठं ससैन्धवं नीलोत्पलं हस्तिमूत्रपिष्टं हस्तिमूत्रेण पिष्ट्वा वा लेपनं दद्यात् । गवां मूत्रे पिष्टः । मूलकबीजं । अवल्गुजा सोमराजी । तस्याः बीजं । ताभ्यां लेपः भवेत् । मूलकबीजावल्गुजाबीजाभ्यां गोमूत्रपिष्टाभ्यां लेपं दद्यात् ॥ १६८ ॥

---

१६७। कदलीक्षारयुतं खदिरं वा दग्धं इति ख ग पुस्तकयोः ॥ कदलीक्षारपूर्वं वा खदिरास्थ दग्धं इति ठ पुस्तके ॥ खदिरास्थिदग्धं गोधारुधिरयुक्तं इति घ पुस्तके ।

काकोदुम्बरिका वा सावल्गुजचित्रका गवां मूत्रे ।
पिष्टा मनःशिला वा संयुक्ता बर्हिपित्तेन ॥१६९॥
लेपः किलसहन्ता बीजान्यवल्गुजानि लाक्षा च ।
गोपित्तमञ्जने द्वे पिप्पल्यः काललोहरजः ॥१७०॥
शुद्ध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम् ।
श्वित्रं कस्यचिदेव प्रणश्यति क्षीणपापस्य ॥१७१॥
दारुणञ्चारुणं श्वित्रं किलासं नामभिस्त्रिभिः ।
यदुच्यते तत् त्रिविधं त्रिदोषं प्रायशस्तु तत् ॥१७२॥

काकोदुम्बरिकेति । काकोदुम्बरिका । अवल्गुजः सोमराजी । चित्रकश्च । तौ । ताभ्यां सह वर्त्तमाना सावल्गुजचित्रका । गवां मूत्रे पिष्टा वा । लेपः भवेत् ॥१६९॥

लेप इति । अवल्गुजानि अवल्गुजसम्बन्धीनि बीजानि । लाक्षा । गोपित्तं । द्वे अञ्जने स्रोतोजं सौवीरञ्च । पिप्पल्यः । काललोहरजः कृष्णलौहरजश्च । तैः पिष्टैः दत्तः लेपः किलासहन्ता ॥ १८० ॥

शुद्ध्येति । शुद्ध्या शोधनेन । शोणितमोक्षैः रक्तमोक्षणैः । विरूक्षणैः । सक्तूनां भक्षणैश्च । इत्यादिभिः युक्तिव्यपाश्रयैरौषधैः श्वित्रं प्रणश्यति सर्वेषां । अपि च कस्यचित् एव पुंसः क्षीणपापस्य दैवव्यपाश्रयेण शान्तिस्वस्त्ययनादिना पापक्षयाद् वा श्वित्रं प्रणश्यति । तस्य पापजत्वात् पापक्षयात् प्रणाशः ॥१७१॥

दारुणमिति । किलासं । दारुणं । अरुणं । चारुणमिति वक्ष्यमाणमालुकि-वचने । श्वित्रं च । इति एभिर्नामभिः यत् उच्यते तत् त्रिविधं रक्तमांसमेदःश्रितत्वात् । तच्च प्रायशः त्रिदोषं । प्रायश इत्यनेन कदाचित् एकदोषं द्विदोषं वापि भवतीति ख्याप्यते ॥ १७२ ॥

---

१७० । मूलान्यवल्गुजानि लाक्षा च इति ङ. पुस्तके ।

दोषे रक्ताश्रिते रक्तं ताम्रं मांससमाश्रिते ।
श्वेतं मेदःश्रिते श्वित्रं गुरु तच्चोत्तरोत्तरम् ॥१७३॥
अरक्तलोम तनु यत् पाण्डु नातिचिरोत्थितम् ।
मध्यावकाशे चोच्छूनं श्वित्रं तत् साध्यमुच्यते ॥१७४॥
यत् परस्परतोऽभिन्नं बहु यद्रक्तलोमवत् ।
यच्च वर्षगणोत्पन्नं तच्छ्वित्रं नैव सिध्यति ॥१७५॥

त्रिविधमित्युक्तं । तदेव दर्शयति—दोषे इति । दोषे किलासारम्भके रक्तमाश्रिते रक्ताश्रिते सति दारुणं । रक्ताश्रये दारुणसंज्ञा । तच्च इहानुक्तमपि भालुकिवचनात् स्फुटीभवति । एवं मांसाश्रये अरुणसंज्ञा । तत् रक्तं रक्तवर्णं । दोषे मांससमाश्रिते अरुणं । मांसाश्रये अरुणसंज्ञा । तच्च ताम्रं ताम्रवर्णं । मेदःश्रिते च श्वित्रं श्वित्रसंज्ञं । तत् श्वेतं श्वेतवर्णं । तदुक्तं भालुकिनापि—वारुणं तत्तु विज्ञेयं मांसधातुसमाश्रयात् । मेदःश्रिते भवेच्छ्वित्रं दारुणं रक्तसंश्रयम् ॥ इति । तच्च उत्तरोत्तरं उत्तरोत्तरधातुगतत्वेन गुरुं कृच्छ्रं । तथा च रक्ताश्रितात् मांसाश्रितं कृच्छ्रं । ततोऽपि मेदःश्रितं ॥१७३॥

साध्यं श्वित्रमाह—अरक्तेति । यत् श्वित्रं । अरक्तलोम । तनु अघनं । पाण्डु । न अतिचिरोत्थितं नवमित्यर्थः । मध्यावकाशे च उच्छूनं उत्सेधवत् । तत् श्वित्रं साध्यमुच्यते ॥ १७४ ॥

असाध्यं श्वित्रमाह—यच्चेति । यत् श्वित्रं परस्परतः अभिन्नं अन्योन्यसंसक्तं । बहु बहुलं । रक्तलोमवत् । यच्च वर्षगणैरुत्पन्नं अतिपुराणं । तत् श्वित्रं नैव सिध्यति । तत् असाध्यमेव । तदुक्तं—अशुक्ललोमाबहलमसंसक्तं मिथो नवं । अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥ इति ( अ० सं० नि० १४ ) ॥ १७५ ॥

---

१७४ । अयं श्लोकः न पठ्यते क पुस्तके ।

१७५ । अस्मादनन्तरं अधिकः पाठः ख ग ठ पुस्तकेषु ।
सरक्तलोम बहुलं संभिन्नं यत् परस्परम् ।
यच्च वर्षगणोत्पन्नं तच्छ्वित्रं नैव सिध्यति ॥ इति

वचांस्यतथ्यानि कृतघ्नभावो निन्दा गुरूणां गुरुधर्षणञ्च ।
पापक्रियापूर्वकृतञ्चकर्महेतुः किलासस्यविरोधिचान्नम् ॥१७६॥

तत्र श्लोकाः ।

हेतुर्द्रव्यं लिंगं विविधं ये येषु चाधिका दोषाः ।
कुष्ठेषु दोषलिंगं समासतो दोषनिर्देशात् ॥१७७॥
साध्यमसाध्यं कृच्छ्रं कुष्ठं कुष्ठापहाश्च ये योगाः ।
सिद्धाः किलासहेतुलिङ्गं गुरुलाघवं तथा शान्तिः ॥१७८॥

किलासस्य निदानमाह—वचांस्यतथ्यानीति । अतथ्यानि असत्यानि वचांसि मिथ्यावचांसि । कृतघ्नभावः कृतघ्नता । गुरूणां पूज्यानां निन्दा । गुरूणां धर्षणं अभिभवः । पापक्रिया इह पापकर्मानुष्ठानं । पूर्वकृतं पूर्वस्मिन् जन्मनि कृतं पापं कर्म च । विरोधि विरुद्धमन्नं । यथा मत्स्यः पयसा सह विरुध्यते । एतत् सर्वं किलासस्य हेतुः निदानं ॥१७६॥

अध्यायार्थसंग्रहं करोति—तत्र श्लोका इति । कुष्ठानां हेतुर्निदानं । द्रव्यं दोषदूष्यरूपः सप्तको गणः । त्रिविधं लिंगं कपालादिभेदेन अष्टादशविधानां कुष्ठानां लिंगं । येषु कुष्ठेषु कपालादिषु ये दोषाः अधिकाः तत् । यथा वातेऽधिकतरे कुष्ठं कपालमित्यादि । समासतः कुष्ठेषु न तु प्रतिकुष्ठं दोषलिंगं वातादिलिंगं । रौक्ष्यं शोष इत्यादि दोषनिर्देशात् । साध्यं कृच्छ्रं असाध्यं च कुष्ठं वातिकत्वादिना कुष्ठानां साध्यासाध्यविभागः । साध्यं सुखसाध्यं । कृच्छ्रं कृच्छ्रसाध्यं । असाध्यं च कुष्ठं । सर्वैलिंगैर्युकमित्यादिना कृच्छ्रसाध्यानीत्यन्तेन उक्तं । कुष्ठापहा ये च सिद्धाः योगाः ते । किलासस्य हेतुः निदानं वचांस्यतथ्यानीत्यादि । किलासस्य लिंगं दोषे रक्ताश्रिते रक्तमित्यादि । गुरुलाघवं । गुरु तच्चोत्तरोत्तरमिति । तथा शान्तिः किलासस्य चिकित्सा च । इति संग्रहः कुष्ठनाशने अस्मिन् अध्याये महर्षिणा भगवता आत्रेयेण

इति संग्रहः प्रणीतो महर्षिणा कुष्ठनाशनेऽध्याये ।
स्मृतिबुद्धिवर्द्धनार्थं शिष्याय हुताशवेशाय ॥१७६॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
कुष्ठचिकित्सितं नाम सप्तमोऽध्यायः ।

## अष्टमोऽध्यायः ।

अथातो राजयक्ष्मचिकित्सितं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ॥१॥

दिवौकसां कथयतामृषिभिर्वै श्रुता कथा ।
कामव्यसनसंयुक्ता पौराणी शशिनं प्रति ॥२॥

पुनर्वसुना शिष्याय हुताशवेशाय अग्निवेशाय तमुद्दिश्य तस्य स्मृतेः बुद्धेश्च विवर्द्धनार्थं प्रणीतः ॥ १७७—१७६ ॥

इति वैद्यरत्नश्रीयोगीन्द्रनाथविद्याभूषणकृते चरकोपस्कारे चिकित्सितस्थाने
सप्तमोऽध्यायः ।

अष्टमोऽध्यायः ।

अथोद्देशक्रमात् कुष्ठचिकित्सितानन्तरं राजयक्ष्मचिकित्सितमभिधीयते—अथात इति । सर्वं पूर्ववद् व्याख्येयं । ननु निदानस्थाने शोषस्य निदानमुक्तं । इह पुना राजयक्ष्मणश्चिकित्सितमुच्यते । कथमेतत् समंजसं स्यादिति चेत् ? न । शोषराजयक्ष्मणोरनर्थान्तरत्वात् । यदाह सुश्रुतः—संशोषणाद् रसादीनां शोष इत्यभिधीयते । क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते पुनः ॥ राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः । तस्मात्तं राजयक्ष्मेति केचिदाहुर्मनीषिणः ॥ इति ( सु० उ० ४१ ) ॥ १ ॥

तत्रादौ राजयक्ष्मणः प्रागुत्पत्तिमाह—दिवौकसामिति । कामव्यसनं कामजदोषः मैथुने अत्यासक्तिः । तत्संयुक्ता । शशिनं प्रति शशिनः सम्बन्धिनी । पौराणी कथा वार्ता वक्ष्यमाणा । कथयतां दिवौकसां देवानां सकाशात् ऋषिभिः श्रुता ॥२॥

रोहिण्यामतिसक्तस्य शरीरं नानुरक्षतः ।
आजगामाल्पतामिन्दोर्देहः स्नेहपरिक्षयात् ॥३॥
दुहितॄणामसंभोगाच्छेषाणाञ्च प्रजापतेः ।
क्रोधो निःश्वासरूपेण मूर्त्तिमान् निःसृतो मुखात् ॥४॥
प्रजापतेर्हि दुहितॄरष्टाविंशतिमंशुमान् ।
भार्य्यार्थं प्रतिजग्राह न च सर्वास्ववर्त्तत ॥५॥
गुरुणा तमवध्यातं भार्य्यास्वसमवर्त्तिनम् ।
रजःपरीतमबलं यक्ष्मा शशिनमाविशत् ॥६॥

कीदृशी कथा श्रुता ? तदाह—रोहिण्यामिति । अश्विन्यादयः अष्टाविंशतिः दक्षसुताश्चन्द्रस्य भार्याः । तासु रोहिण्यां तदाख्यायां भार्यायामतिसक्तस्य अतिमैथुनं कुर्वतः । अन्याः वर्जयित्वा । शरीरं न अनुरक्षतः अनुपालयतः रसायनवाजीकरणाद्य-सेवनात् । इन्दोश्चन्द्रस्य देहः स्नेहस्य शारीरस्य शुक्रोजोरूपस्य परिक्षयात् अतिमैथुनेन । अलपतां क्षीणत्वं आजगाम प्राप ॥३॥

दुहितॄणामिति । शेषाणां रोहिण्याः अन्यासां सप्तविंशतेः दुहितॄणां असंभो-गात् हेतोः शशिनं प्रति प्रजापतेर्दक्षस्य क्रोधः निःश्वासरूपेण मूर्तिमान् मुखात् निःसृतः अभूत् ॥ ४ ॥

प्रजापतेर्हीति । कुतः ? हि यतः अंशुमान् चन्द्रः प्रजापतेर्दक्षस्य अष्टाविंशतिं दुहितॄः सुताः भार्यार्थं प्रतिजग्राह । किन्तु स तासु सर्वासु न समं अवर्त्तत । स केवलं रोहिण्यामासक्तः । न तु अन्यासु ॥ ५ ॥

गुरुणेति । भार्यासु असमवर्त्तिनं । अत एव गुरुणा श्वशुरेण दक्षेण क्रुद्धेन अवध्यातं चिन्तितं रजःपरीतं मलिनं अबलं शशिनं यक्ष्मा रोगः गुरोः क्रोधरूपः आविशत् ॥ ६ ॥

सोऽभिभूतोऽतिमहता गुरुक्रोधेन निष्प्रभः ।
देवदेवर्षिसहितो जगाम शरणं गुरुम् ॥७॥
अथ चन्द्रमसः शुद्धां मतिं बुद्ध्वा प्रजापतिः ।
प्रसादं कृतवान् सोमस्ततोऽश्विभ्यां चिकित्सितः ॥८॥
स विमुक्तग्रहश्चन्द्रो विरराज विशेषतः ।
ओजसा वर्द्धितोऽश्विभ्यां शुद्धं सत्त्वमवाप च ॥९॥
क्रोधो यक्ष्मा ज्वरो रोग एकार्थो दुःखसंज्ञकः ।
यस्मात् स राज्ञः प्रागासीद्राजयक्ष्मा ततो मतः ॥१०॥

सोऽभिभूत इति। स चन्द्रः। अतिमहता गुरुक्रोधेन यक्ष्मरूपेण अभिभूतः। अतः निष्प्रभः सन्। देवदेवर्षिसहितः देवैः देवर्षिभिश्च सह गुरुं श्वशुरं दक्षं शरणं रक्षितारं जगाम प्राप ॥ ७ ॥

अथेति। अथ प्रजापतिः दक्षः चन्द्रमसः चन्द्रस्य शुद्धां सात्त्विकीं बुद्धिं सर्वासु समवर्तित्वबुद्धिं बुद्ध्वा ज्ञात्वा तस्मै प्रसादं कृतवान्। तस्मिन् प्रसन्नोऽभूत्। ततः गुरोः प्रसादमासाद्य सोमश्चन्द्रः अश्विभ्यां चिकित्सितः ॥ ८ ॥

स विमुक्तेति। स चन्द्रः। अश्विभ्यां। विमुक्तो ग्रहो यक्ष्माख्यो यस्य सः। ओजसा वर्द्धितः सन्। विशेषतः विरराज। शुद्धं निर्दोषं सत्त्वं च अवाप ॥ ९ ॥

राजयक्ष्मेतिसंज्ञानिरुक्तिमाह—क्रोध इति। क्रोधः यक्ष्मा ज्वरो रोगो दुःखसंज्ञकः शब्दः दुःखवचनः शब्दः एकार्थः। क्रोधः यक्ष्मा ज्वरो रोगो दुःखमित्यनर्थान्तर। क्रोधादयः शब्दाः पर्यायवाचिनः। एवमस्तु यक्ष्मा। कथं राजयक्ष्मेति ? अत आह—यस्मादिति। यस्मात् स यक्ष्मा प्राक् राज्ञः चन्द्रस्य आसीत् ततः राजयक्ष्मा मतः राजयक्ष्मेत्युच्यते। राज्ञः चन्द्रस्य यक्ष्मा इति राजयक्ष्मा। अनेकरोगानीकपरिवृतत्वेन यक्ष्मा रोगाणां मध्ये राजा। राजा चासौ यक्ष्मा चेति कर्मधारयसमासव्युत्पत्त्या राजयक्ष्मा वा। तथा च वृद्धवाग्भटः—नक्षत्राणां द्विजानां च राज्ञोऽभूद् यदयं पुरा। यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥ इति ( अ० सं० नि० ५ ) ॥१०॥

स यक्ष्मा हुंकृतोऽश्विभ्यां मानुषं लोकमागतः ।
लब्ध्वा चतुर्विधं हेतुं समाविशति मानवम् ॥११॥
अयथाबलमारम्भं वेगसन्धारणं क्षयम् ।
यक्ष्मणः कारणं विद्याच्चतुर्थं विषमाशनम् ॥१२॥
युद्धाध्ययनभाराध्वलङ्घनप्लवनादिभिः ।
पतनैरभिघातैर्वा साहसैर्वा तथाऽपरैः ॥१३॥
अयथाबलमारम्भैर्जन्तोरुरसि विक्षते ।
वायुः प्रकुपितो दोषावुदीर्योभौ प्रधावति ॥१४॥

स यक्ष्मेति । स राज्ञश्चन्द्रस्य यक्ष्मा अश्विभ्यां हुंकृतः हुंकारेण ताडितः । मानुषं लोकं आगतः । तत्र स चतुर्विधं वक्ष्यमाणं हेतुं लब्ध्वा मानवं समाविशति ॥११॥

चतुर्विधं हेतुमुद्दिशति—अयथेति । बलमनतिक्रम्य यथाबलं । न यथाबलं अयथाबलं । अयथाबलमारम्भः साहसं । सहसा शक्तिमनालोच्य यत् कर्म क्रियते तत् साहसं । तं । वेगानां वातमूत्रपुरीषवेगानां सन्धारणं निरोधं । क्षयं ओजसः शुक्रस्य च क्षयं । एतत् त्रयं यक्ष्मणः कारणं विद्यात् जानीयात् । विषमाशनं प्रकृतिकरणराशिसंयोगादिभिराहारविधिविशेषायतनैर्विषममपथ्यं पानाशनाद्युपयोगं यक्ष्मणः चतुर्थं कारणं विद्यात् ॥ १२ ॥

उद्दिष्टं चतुर्विधं हेतुं क्रमान्निर्दिशन् तन्निमित्तां यक्ष्मणः सम्प्राप्तिं दर्शयति । तत्रादौ अयथाबलमारम्भनिमित्तं यक्ष्मागममाह—युद्धाध्ययनेत्यादि । युद्धं । अध्ययनं । भारः भारवहनं । अध्वा अध्वगमनं । लंघनं । प्लवनं च । तदादिभिः कर्मभिः । पतनैः । अभिघातैर्वा । अनुक्तसंग्रहार्थमाह—साहसैर्वा तथाऽपरैरिति । तथा अपरैः अन्यैः साहसैः गोवाजिगजनिग्रहादिभिर्वा । यक्ष्मणो हेतुभूतं साहसं युद्धाध्ययनादिकं यदिहोच्यते तत्सर्वं निदानस्थाने प्रपंचेनोक्तं प्राक् । वक्ष्यते चापि क्षतक्षीणचिकित्सिते पश्चात् । युद्धाध्ययनादिभिरुक्तैः एवमन्यैरनुक्तैश्चापि अयथाबलमारम्भैः साहसैः

स शिरःस्थः शिरःशूलं करोति गलमाश्रितः ।
कण्ठोद्ध्वंसञ्च कासञ्च स्वरभेदमरोचकम् ॥१५॥
पार्श्वशूलञ्च पार्श्वस्थो वर्चोभेदं गुदे स्थितः ।
जृम्भां ज्वरञ्च सन्धिस्थ उरःस्थश्चोरसो रुजम् ॥१६॥
क्षणनादुरसः कासात् कफं ष्ठीवेत् सशोणितम् ।
जर्जरेणोरसा कृच्छ्रमुरःशूलातिपीड़ितः ॥१७॥

कर्मभिः । जन्तोः प्राणिनः । उरसि विक्षते सति। तेन प्रकुपितः वायुः उभौ दोषौ पित्त-श्लेष्माणौ उदीर्य स्वस्थानात् च्यावयित्वा ऊर्ध्वमधस्तिर्यक् च सर्वतः प्रधावति ताभ्यां सह ॥ १३ । १४ ॥

स च वायुः पित्तश्लेष्मभ्यां सह सर्वतः प्रधावन् यत्र यत्र यं यं रोगं करोति तदाह—स शिरःस्थ इति । स वायुः शिरःस्थः शिरसि स्थितः सन् शिरःशूलं करोति । गलं आश्रितः कण्ठोद्ध्वंसं कण्ठभेदं । कासं । स्वरभेदं च । करोति । अरोचकं करोति रसनास्थितः । तदुक्तं—यो रसनां तेनास्यारोचकः । इति (च० नि० ६) । रसनां आविशतीति शेषः । पार्श्वस्थः पार्श्वशूलं करोति । गुदे स्थितः वर्चसः पुरीषस्य भेदं करोति। सन्धिस्थः सन् जृंभां ज्वरं च करोति। उरःस्थः उरसि स्थितः उरसः रुजं करोति। इह वायोर्यत् शिरःशूलादिकर्तृत्वं तत् तस्य पित्तकफसहकृतस्यैव । एवं वेगसंधारणजे क्षयजे चापि बोद्धव्यं । सर्व एव यक्ष्मा त्रिदोषजन्यः । सर्वस्त्रिदोषजो यक्ष्मा इति । उरसः क्षणनात् हेतोः कासात् तन्निमित्तकासप्रसंगात् कफं निष्ठीवति । कीदृशं कफं ? सशोणितमिति । कुतः सशोणितं ? जर्जरेणोरसेति । जर्जरेण उरसा हेतुना । उरसः क्षतस्य कासप्रसंगात् पुनः क्षणनात् सशोणितं कफं निष्ठीवति । कथमिव निष्ठीवति ? कृच्छ्रमिति । कुतः कृच्छ्रं ? उरःशूलातिपीडित इति । उरःशूलेन अतिपीडितः । अतः कृच्छ्रं यथा तथा सशोणितं कफं निष्ठीवति ॥ १५—१७ ॥

---

१६ । पार्श्वशूलं च कुक्षिस्थः इति ठ पुस्तके ।
जृम्भां ज्वरं सन्धिगतः इति ख ग ठ पुस्तकेषु ।

इति साहसिको यक्ष्मा रूपैरेतैः प्रपद्यते ।
एकादशभिरात्मज्ञः सेवेतातो न साहसम् ॥१८॥)
(ह्रीमत्त्वाद्वा घृणित्वाद्वा भयाद्वा वेगमागतम् ।
वातमूत्रपुरीषाणां निगृह्णाति यदा नरः ॥१९॥
तदा वेगप्रतीघातात् कफपित्ते समीरयन् ।
ऊर्ध्वं तिर्यगधश्चैव विकारान् कुरुतेऽनिलः ॥२०॥
प्रतिश्यायञ्च कासञ्च स्वरभेदमरोचकम् ।
पार्श्वशूलं शिरःशूलं ज्वरमंसावमर्दनम् ॥२१॥
अङ्गमर्दं मुहुश्छर्दिं वर्चोभेदं त्रिलक्षणम् ।
रूपाण्येकादशैतानि यक्ष्मा यैरुच्यते महान् ॥२२॥

इतीति। साहसं अयथाबलमारम्भः। तज्ज्ञः साहसिकः। यक्ष्मा इति एतैरुक्तैः शिरः-शूलादिभिः एकादशभिः रूपैः प्रपद्यते। शिरःशूलं कण्ठोद्ध्वंसः कासः स्वरभेदः अरोचकः पार्श्वशूलं वर्चोभेदः जृम्भा ज्वरः उरोरुक् सशोणितकफनिष्ठीवनञ्च इत्येकादश रूपाणीह उपद्रवरूपाणि। एवं वेगसंधारणजे क्षयजे विषमाशनजे चापि। यक्ष्मणो रूपाणि तु पश्चाद् वक्ष्यमाणानि कासोऽसंताप इत्यादि। अतः आत्मज्ञः पुमान् साहसं न सेवेत ॥ १८ ॥

वेगसंधारणहेतुकं यक्ष्माणमाह—ह्रीमत्त्वाद्वेति। यदा नरः ह्रीमत्त्वात् लज्जया वा। घृणित्वात् घृणया वा। भयात् वा। गुर्वादीनां समीपे अवस्थानाद्वापि। आगतमुपस्थितं वातमूत्रपुरीषाणां वेगं निगृह्णाति। तदा वेगप्रतीघातात् वातादिवेगनिरोधात् कुपितः अनिलः वायुः कफपित्ते समीरयन् स्वस्थानात् चालयन् ताभ्यां सह ऊर्ध्वं अधः तिर्यक् च विहरन् तत्र तत्र विकारान् वक्ष्यमाणप्रतिश्यायादीन् कुर्यात्। यान् विकारान् कुर्यात् तानाह—प्रतिश्यायञ्चेति। प्रतिश्यायं। कासं। स्वरभेदं। अरोचकं। पार्श्वशूलं। शिरःशूलं। ज्वरं। अंसावमर्दनं। अंगमर्दं। मुहुः छर्दिं। त्रिलक्षणं त्रिदोषलिंगं। वर्चोभेदमतीसारं च। एतान् एकादश विकारान् कुर्यात्। एतानि उक्तानि प्रतिश्यायादीनि एकादश वेगसंधारणजस्य यक्ष्मणः रूपाणि। यैरुपद्रुतः यक्ष्मा महान् उच्यते ॥१९-२२॥

ईर्ष्योत्कण्ठाभयत्रासक्रोधशोकातिकर्शनात् ।
अतिव्यवायानशनाच्छुक्रमोजश्च हीयते ॥२३॥
ततः स्नेहक्षयाद्वायुर्वृद्धो दोषावुदीरयन् ।
प्रतिश्यायं ज्वरं कासमङ्गमर्दं शिरोरुजम् ॥२४॥
श्वासं विड्भेदमरुचिं पार्श्वशूलं स्वरक्षयम् ।
करोति चांससन्तापमेकादश गदानिमान् ॥२५॥
लिंगान्यावेदयन्त्येतान्येकादश महागदम् ।
संप्राप्तं राजयक्ष्माणं क्षयात् प्राणक्षयप्रदम् ॥२६॥
विविधान्यन्नपानानि वैषम्येण समश्नताम् ।
जनयन्त्यामयान् घोरान् विषमान् मारुतादयः ॥२७॥

क्षयजं यक्ष्माणमाह—ईर्ष्योत्कण्ठेति । ईर्ष्या पराभ्युदयासहिष्णुता । उत्कण्ठा प्रियाद्यभिलाषे उन्मनस्कत्वं । भयं । त्रासः । उद्वेगः । क्रोधः । शोकश्च । तैरतिकर्शनं । तस्मात् । अतिव्यवायः अतिमैथुनं । अनशनं च । तयोः समाहारः । तस्मात् । पुंसः शुक्रं ओजश्च हीयते क्षीयते । ततः स्नेहक्षयात् देहस्नेहभूतस्य शुक्रौजसः क्षयात् । वृद्धः वायुः दोषौ पित्तकफौ उदीरयन् । प्रतिश्यायं । ज्वरं । कासं । अंगमर्दं । शिरोरुजं । श्वासं । विड्भेदं । अतिसारं । अरुचिं । पार्श्वशूलं । स्वरक्षयं स्वरभेदं । अंससन्तापं च । इमान् एकादश गदान् रोगान् करोति । एतानि उक्तानि प्रतिश्यायादीनि एकादश लिंगानि रूपाणि क्षयात् संप्राप्तं उपस्थितं प्राणक्षयप्रदं महागदं राजयक्ष्माणं आवेदयन्ति ज्ञापयन्ति । प्रतिश्यायादीनि एकादश क्षयजस्य राजयक्ष्मणो रूपाणि ॥ २३—२६ ॥

विषमाशननिमित्तं यक्ष्माणं विवृणोति—विविधानीति । विविधानि अन्नपानानि वैषम्येण प्रकृतिकरणराश्यादिभिः आहारविधिविशेषायतनैर्विरुद्धत्वेन समश्नतां

२५। करोति मांससंतापं इति ठ पुस्तके । पार्श्वशूलं वलक्षयं इति ख ग पुस्तकयोः ।

स्रोतांसि रुधिरादीनां वैषम्याद्विषमं गताः ।
रुद्ध्वा रोगाय कल्पन्ते पुष्यन्ति च न धातवः ॥२८॥
प्रतिश्यायं प्रसेकञ्च कासं छर्दिमरोचकम् ।
ज्वरमंसाभितापञ्च च्छर्दनं रुधिरस्य च ॥२९॥
पार्श्वशूलं शिरःशूलं स्वरभेदमथापि च ।
कफपित्तानिलकृतं लिङ्गं विद्याद् यथाक्रमम् ॥३०॥
इति व्याधिसमूहस्य रोगेशस्य समुत्थितम् ।
रूपमेकादशविधं हेतुश्चोक्तश्चतुर्विधः ॥३१॥

प्रकृतिकरणादिविषमाणि अन्नपानानि अभ्यवहरतां पुंसां । मारुतादयः वातादयो दोषाः । विषमान् कृच्छ्रसाध्यान् । घोरान् दारुणान् । आमयान् रोगान् वक्ष्यमाण-प्रतिश्यायादीन् जनयन्ति । कथमिति चेत् ? आह—स्रोतांसीति । ते मारुतादयः अन्न-पानानां वैषम्यात् विषमाशनात् विषमं भावं गताः वैषम्यं प्राप्ताः । रुधिरादीनां स्रोतांसि रुद्ध्वा रोगाय कल्पन्ते रोगान् जनयन्ति । स्रोतसां रुद्धतया आहाररसस्य असम्यग् वहनात् । तदा धातवः शारीराः न पुष्यन्ति उपचीयन्ते । धातूनामनुपचयात् शोषात्मको यक्ष्मा प्रवर्तते ॥ २७ । २८ ॥

मारुतादयो यानामयान् जनयन्ति तानाह—प्रतिश्यायमित्यादि । प्रतिश्यायं । प्रसेकं मूखप्रसेकं । कासं । छर्दिं । अरोचकं च । इति कफकृतं लिंगं । ज्वरं । अंसा-भितापं । रुधिरस्य छर्दनं च । इति पित्तकृतं लिंगं । पार्श्वशूलं । शिरःशूलं । अथ स्वरभेदं च । इति अनिलकृतं लिंगं । इति श्लोकार्द्धोक्तं यथाक्रमं कफः पित्तं अनिलो वातश्च ते । तैः कृतं लिंगं विद्यात् । उपसंहरति—इतीति । इति व्याधिसमूहस्य प्रतिश्यायाद्यनेकव्याध्यात्मकस्य रोगेशस्य रोगराजस्य विषमाशननिमित्तस्य यक्ष्मणः । समुत्थितं विषमाशनहेतुजं । प्रतिश्यायः । प्रसेकः । कासः । छर्दिः । अरोचकः । ज्वरः । अंसाभितापः । रुधिरच्छर्दनं । पार्श्वशूलं । शिरःशूलं । स्वरभेदश्च । इति एकादशविधं रूपं । सर्वेषामुपसंहारमाह—हेतुश्चोक्त इति । इति यक्ष्मणः चतुर्विधो हेतुः उक्तः ॥ २९-३१ ॥

पूर्वरूपं प्रतिश्यायो दौर्बल्यं दोषदर्शनम् ।
अदोषेष्वपि भावेषु काये बीभत्सदर्शनम् ॥३२॥
घृणित्वमश्नतश्चापि बलमांसपरिक्षयः ।
स्त्रीमद्यमांसप्रियता प्रियता चावगुण्ठने ॥३३॥
मक्षिकाघूणकेशानां तृणानां पतनानि च ।
प्रायोऽन्नपाने केशानां नखानां चाभिवर्द्धनम् ॥३४॥
पतत्रिभिः पतंगैश्च श्वापदैश्चाभिधर्षणम् ।
स्वप्ने केशास्थिराशीनां भस्मनश्चाधिरोहणम् ॥३५॥
जलाशयानां शैलानां वनानां ज्योतिषामपि ।
शुष्यतां क्षीयमाणानां पततां यच्च दर्शनम् ॥३६॥

यक्ष्मणः पूर्वरूपमाह—पूर्वरूपमित्यादि । यक्ष्मणः पूर्वरूपं । प्रतिश्यायः । दौर्बल्यं । अदोषेषु अल्पदोषेषु चापि भावेषु दोषदर्शनं । आत्मनः काये शोभनेऽपि बीभत्सस्य विकृतरूपस्य दर्शनं । घृणित्वं । अश्नतः भुंजानस्यापि बलमांसपरिक्षयः । स्त्री मद्यं मांसं च । तानि प्रियाणि यस्य तस्य भावः स्त्रीमद्यमांसप्रियता । अवगुंठने वस्त्रादिना शिरसः प्रच्छादने प्रियता । प्रायः अन्नपाने । मक्षिका । घूणः काष्ठक्रिमिः । केशश्च । तेषां तथा तृणानां च पतनानि । केशानां नखानां च अभिवर्द्धनं । स्वप्ने पतत्रिभिः पक्षिभिः । पतंगैः शलभादिभिः । श्वापदैः व्याघ्रादिभिश्च । अभिधर्षणं अभिभवः । स्वप्ने केशोस्थिराशीनां केशराशीनां अस्थिराशीनां च । भस्मनः भस्मराशीनां च । उपरि अधिरोहणं । स्वप्ने शुष्यतां जलाशयानां । अनुदकानां उदकस्थानानां । क्षीयमाणानां भग्नानां वनानां । पततां शैलानां पर्वतानां । पततां ज्योतिषां नक्षत्रादीनां च । यत् दर्शनं । तच्चापि यक्ष्मणः पूर्वरूपं ॥ ३२—३६ ॥

---

३४ । केशानां वनानां ज्योतिषामपि इति ख ग पुस्तकयोः ।

३५ । अयं श्लोकः ङ पुस्तके नास्ति ।

प्राग्रूपं बहुरूपस्य तज्ज्ञेयं राजयक्ष्मणः ।
रूपं त्वस्य यथोद्देशं परं शृणु सभेषजम् ॥३७॥
यथास्वेनोष्मणा पाकं शारीरा यान्ति धातवः ।
स्रोतसा च यथास्वेन धातुः पुष्यति धातुतः ॥३८॥

प्राग्रूपमिति । बहुरूपस्य अनेकरोगात्मकस्य राजयक्ष्मणः । तत् प्रतिश्यायादिकं प्रागुक्तं । प्राग्रूपं पूर्वरूपं ज्ञेयं । परं अतः परं पूर्वरूपानन्तरं । अस्य राजयक्ष्मणः रूपं । यथोद्देशं सभेषजं रूपाणां उद्देशक्रमेण पश्चात् रूपाणां यथा उद्देशः करिष्यते । तथैव । तेषां भेषजं चापि । मया उपदेक्ष्यमाणं शृणु ॥ ३७ ॥

रूपं भेषजं च अभिधास्यन् यथा धातूनामपोषणात् शोषात्मको यक्ष्मा जायते आदौ तद्दर्शयितुमाह—यथास्वेनेति । शारीराः धातवः रसादिशुक्रान्ताः सप्त यथास्वेन ऊष्मणा षड्भिः धात्वग्निभिः पाकं यान्ति । अतः धातुः उत्तरधातुतः पूर्वस्मात् धातोः यथास्वेन स्रोतसा पुष्यति । पूर्वधातुः स्वेनोष्मणा पच्यमानः उत्तरधातूरूपतां प्राप्य । उत्तरधातुस्रोतः पूरयन् उत्तरधातुं पोषयति । तथाहि भुक्त आहारः पंचभूतात्मकः पञ्चभिः महाभूताग्निभिः पच्यमानः प्राक् रसरूपतां याति । स च आहाररसः पुनः षट्सु धात्वग्निषु क्रमात् पच्यमानः रक्ताद्युत्तरोत्तरधातुरूपत्वमायाति । तद्यथा । रसः पच्यमानः रक्ततामाप्नोति । रक्तं मांसत्वं । मांसं मेदोरूपत्वं । मेदः अस्थिरूपत्वं । अस्थि मज्जतां । मज्जा च शुक्रत्वं । आहाररस एव धात्वग्निभिः क्रमात् पच्यमानः । उत्तरोत्तरधातुरूपतां प्राप्य । उत्तरोत्तरधातुस्रोतांसि पूरयन् । तत्तद्धातून् पोषयति । एवं धात्वाहारा हि धातवः । ग्रहणीचिकित्सिते च वक्ष्यति—भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः । पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्ति हि ॥ यथास्वं स्वं च पुष्यन्ति देहद्रव्यगुणाः पृथक् । पार्थिवाः पार्थिवानेव शेषाः शेषांस्तु कृत्स्नशः ॥ सप्तभिर्देहधातारो द्विविधाश्च पुनः पुनः । यथास्वमग्निभिः पाकं यान्ति किट्टप्रसादवत् ॥ रसाद् रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च । अस्थ्नो मज्जा ततः शुक्रं ॥ इति ( च० चि० १५ ) ॥ ३८ ॥

स्रोतसां संनिरोधाच्च रक्तादीनाञ्च संक्षयात् ।
धातूष्मणाञ्चापचयाद्राजयक्ष्मा प्रवर्त्तते ॥३९॥
तस्मिन् काले पचत्यग्निर्यदन्नं कोष्ठसंश्रितम् ।
मलीभवति तत् प्रायः कल्पते किञ्चिदोजसे ॥४०॥
तस्मात् पुरीषं संरक्ष्यं विशेषाद्राजयक्ष्मिणः ।
सर्वधातुक्षयार्त्तस्य बलं तस्य हि विड्बलम् ॥४१॥

स्रोतसामिति । स्रोतसां रक्तादिवहानां सन्निरोधात् दोषैर्निरुद्धत्वात् । तेन रक्तादीनां धातूनां संक्षयात् । धात्वग्निषु क्रमात् पच्यमान आहाररस एव स्वात्मभावप्रच्युतिसमनन्तरं प्राप्तरक्तादिसंज्ञः रक्तादिधातुस्रोतांसि पूरयन् तत्तद्धातून् पोषयति । स्रोतसां निरुद्धतया रसस्यासम्यग्वहनात् रक्तादीनां सम्यक् पोषणं न भवति । तेन रक्तादीनां संक्षयः । धातूष्मणां धात्वग्नीनां अपचयात् क्षीणत्वात् । धातूनां संक्षयात् धात्वग्नयोऽपि क्षीणाः । क्षीणत्वात् धात्वग्नयोऽपि तदा न सम्यक् पचन्ति । रसाग्नेर्दुर्बलत्वात् रसस्य न तथा पाकः । तेन रक्तं नाधिकं जायते । एवं रक्तादिष्वपि बोद्धव्यम् । धातूष्मणां अपचयाच्चापि रक्तादीनां संक्षयः । तदा भूतोष्मणामपचयः । तेन आहारः सम्यक् न पच्यते । असम्यक्पक्वादाहारात् किट्टमेवाधिकं जायते । रसः पुनरल्पः । एतच्च परश्लोके वक्ष्यते । रसस्याल्पत्वात् रक्तादीनां सम्यक् पोषणं न भवति । तेनापि रक्तादीनां संक्षयः । रक्तादीनां धातूनां संक्षयात् शोषात्मा राजयक्ष्मा प्रवर्त्तते ॥ ३९ ॥

न केवलं धात्वग्नीनामपचयः । तदा भूताग्नयोऽपि क्षीणाः । येन भुक्तः आहारः सम्यक् न पच्यते । तदेव दर्शयति—तस्मिन्निति । तस्मिन् काले अग्निः जाठरः कोष्ठसंश्रितं आमाशयस्थितं अभ्यवहृतं यत् अन्नं पचति । तदन्नं प्रायः बाहुल्येन मलीभवति । किंचित् अल्पमेव ओजसे सारभागाय रसाय कल्पते । तदा भूताग्नीनां मन्दीभावात् भुक्तमन्नपानं न सम्यक् पच्यते । तस्मात् मलः बाहुल्येन जायते । धातुपोषणकरः सारभूतो रसाख्यः प्रसादः पुनरल्पः ॥ ४० ॥

तस्मादिति । तस्मात् राजयक्ष्मिणः विशेषात् विशिष्य । न तु अन्येषां रोगिणां

रसः स्रोतःसु रुद्धेषु स्वस्थानस्थो विवर्द्धते ।
स ऊर्द्ध्वं कासवेगेन बहुरूपः प्रवर्त्तते ॥४२॥
जायन्ते व्याधयश्चातः षडेकादश वा पुनः ।
येषां सङ्घातयोगेन राजयक्ष्मेति कथ्यते ॥४३॥
कासोऽंसतापो वैस्वर्यं ज्वरः पार्श्वशिरोरुजा ।
छर्दनं रक्तकफयोः श्वासा वर्चोगदोऽरुचिः ॥४४॥

पुरीषं संरक्ष्यं । कुतः ? हि यतः सर्वधातुक्षयार्तस्य तस्य विड्बलमेव अधिकं बलं । तदा स शकृतैव अवष्टब्धो वर्त्तते ॥ ४१ ॥

रस इति । स्रोतःसु रक्तादिवहेषु रुद्धेषु सत्सु । तैरवहनात् रसः आहारजो स्वस्थानस्थः हृदयस्थः विवर्द्धते । स रसः कासवेगेन ऊर्ध्वं बहुरूपः पिच्छिलं बहलमित्यादिना वक्ष्यमाणबहुरूपः सन् प्रवर्त्तते ॥ ४२ ॥

जायन्ते इति । अतः षट् अथवा पुनः एकादश व्याधयः वक्ष्यमाणाः कासादयः जायन्ते । येषां संघातयोगेन राजयक्ष्मा इति कथ्यते । येषां षण्णां एकादशानां वा व्याधीनां संघातः समवायः मेलनं राजयक्ष्मा इत्युच्यते ॥ ४३ ॥

षडेकादश वा व्याधयो जायन्ते इत्युक्तं । तान् विवृणोति—कासोऽंसताप इति । कासः । अंसयोर्भुजशिरसोस्तापः । वैस्वर्यं विस्वरत्वं स्वरभेदः । ज्वरः । पार्श्वशिरोरुजा पार्श्वरुजा शिरोरुजा च । शोणितश्लेष्मणोः छर्दिः शोणितस्य छर्द्दनं श्लेष्मणश्छर्द्दनञ्च । श्वासः । वर्चोगदः अतिसारः । अरुचिश्च । इति । कासादीनि एकादश यक्ष्मणः बलवद्दोषारब्धस्य रूपाणि । वा अथवा यक्ष्मणो मध्यमबलदोषारब्धत्वे । कासः । ज्वरः । पार्श्वशूलं । स्वरवर्चोगदः स्वरगदः स्वरभेदः । वर्चोगदः अतिसारः । अरुचिश्च । इति इमानि षट् रूपाणि भवन्ति । सुश्रुतेनाप्युक्तं—स्वरभेदोनिलाच्छूलं संकोचश्चांसपार्श्वयोः । ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः ॥ शिरसः परिपूर्णत्वमभक्तच्छन्द एव च । कासः कंठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः ॥ एकादशभिरेभिर्वा षड्भिर्वापि समन्वितं । कासातिसारपार्श्वार्तिस्वरभे-

रूपाण्येकादशैतानि यक्ष्मणः षड्मिानि वा ।
कासो ज्वरः पार्श्वशूलं स्वरवर्चोगदोऽरुचि ॥४५॥
सर्वैरर्द्धैस्त्रिभिर्वापि लिंगैर्मांसवलक्षये ।
युक्तो वर्ज्यश्चिकित्स्यस्तु सर्वरूपोऽप्यतोन्यथा ॥४६॥
घ्राणमूले स्थितः श्लेष्मा रुधिरं पित्तमेव वा ।
मारुताध्मातशिरसो मारुतं श्यायते प्रति ॥४७॥

यारुचिज्ज्वरैः ॥ त्रिभिर्वा पीडितं लिंगैर्ज्वरकासासृगामयैः । जह्याच्छोपार्द्दितं जन्तुमिच्छन् सुविपुलं यशः ॥ इति ( सु० उ० ४१ ) ॥ ४४ । ४५ ॥

यक्ष्मिणः साध्यासाध्यत्वमाह—सर्वैरिति । वलमांसक्षये सति सर्वैः एकादशभिः लिंगैः युक्तः । अर्द्धैः षड्भिः लिंगैर्युक्तः । सर्वरूपाणि एकादश । तदर्द्धयोः षट्पञ्चरूपयोरेव सम्भवात् । तत्र उत्कृष्टत्वात् षड्रूप एवार्द्धो ग्राह्यः । त्रिभिः तदर्द्धैः पादैर्वापि युक्तः । यक्ष्मी वर्ज्यः । प्रक्षीणवलमांसतया व्याध्यौपवधवलस्यासहत्वात् । तथाविधं यक्ष्मिणमसाध्यं वर्जयेत् । अतः अन्यथा असति वलमांसक्षये अक्षीणवलमांसश्चेत् सर्वैर्लिंगैर्युक्तोऽपि चिकित्स्यः । व्याध्यौवधवलस्य सहत्वात् स हि साध्यः । साध्य इह कृच्छ्रसाध्यः । अल्परूपश्चेत् सुखसाध्यः । इति विशेषोऽनुक्तोऽपि वोद्धव्यः । पश्चात् अध्यायार्थसंग्रहे साध्यताकृच्छ्रसाध्यतेति वचनात् ॥ ४६ ॥

यथोद्देशं भेषजं विवक्षुः रूपाणि उद्दिशति । तत्रादौ प्रतिश्यायमाह—घ्राणमूले इत्यादि । घ्राणमूले स्थितः श्लेष्मा । पित्तं शोणितं रक्तं चापि । मारुतेन वातेन आध्मातं पूर्णं शिरो यस्य तस्य पुंसः । मारुतं शिरःस्थितं प्रति श्यायते गच्छति । ततः तेभ्यः शिरोगतेभ्यः दोषेभ्यः घोरः दारुणः देहकर्शनः शरीरशोषणः प्रतिश्यायो जायते । मारुतं प्रति श्यायः कफादीनां गमनं यत्र स प्रतिश्यायः तदाख्यः रोगः । शोणितस्यापि इह प्रतिश्यायकर्तृत्वमुक्तं । रोगाधिकारे तु—चत्वारः प्रतिश्याया इति । चत्वारः वातपित्तकफसन्निपातनिमित्ताः । तत्र शोणितजं पित्तजे अवरुध्य चत्वार

---

४७ । मारुतं श्यायते प्रति ख ग द च पुस्तकेषु ।

प्रतिश्यायस्ततो घोरो जायते देहकर्शनः ।
तस्य रूपं शिरःशूलं गौरवं घ्राणविप्लवः ॥४८॥
ज्वरः कासः कफोत्क्लेशः स्वरभेदोऽरुचिः क्लमः ।
इन्द्रियाणामसामर्थ्यं यक्ष्मा चाथ प्रवर्त्तते ॥४९॥
पिच्छिलं बहलं विस्रं हरितं श्वेतपीतकम् ।
कासमानो रसं यक्ष्मीनिष्ठीवति कफानुगम् ॥५०॥
अंसपार्श्वाभितापश्च सन्तापः करपादयोः ।
ज्वरः सर्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः ॥५१॥

इत्युक्तं । इह प्रतिश्यायो यक्ष्मणः रूपतया उच्यते । स पुनः स्वतन्त्रोऽपि रोगः । तथा च रोगाधिकारे चत्वारः प्रतिश्याया इति प्रतिज्ञाय पश्चात् त्रिमर्मीयचिकित्सिते तथैव तस्य निदानपूर्वकसम्प्राप्तिश्चिकित्सा च पृथक् वक्ष्यते । एवं इह वक्ष्यमाणाः कासादयोऽपि विज्ञेयाः ॥ ४७ । ४८ ॥

तस्य रूपमिति । तस्य प्रतिश्यायस्य रूपं । शिरःशूलं । शिरसः गौरवं च । घ्राणविप्लवः घ्राणावघातः गन्धाघ्राणादिरूपः । ज्वरः । कासः । कफस्य उत्क्लेशः । स्वरभेदः । क्लमः अनायासश्रमः । इन्द्रियाणां असामर्थ्यं यथास्वविषयग्रहणे अपाटवं । एतत् सर्वं तस्य प्रतिश्यायस्य रूपं । अथ प्रतिश्यायात् यक्ष्मा शोषात्मकः प्रवर्त्तते ॥ ४९ ॥

स उर्द्ध्वं कासवेगेन बहुरूपः प्रवर्त्तते इति यदुक्तं तद् विवृण्वन् कासमाह—पिच्छिलमिति । यक्ष्मी पुमान् कासमानः । प्रतिश्यात् कासः । पिच्छिलं बहलं घनं विस्रं आमगन्धिनं हरितं श्वेतपीतकं हरितश्वेतपीतवर्णं इत्येवं बहुरूपं कफानुगं रसं आहारजं । स्रोतोनिरोधात् स्वस्थाने विवृद्धं निष्ठीवति ॥ ५० ॥

यक्ष्मिणो ज्वरं रूपमाह—अंसपार्श्वेति । अंसयोः भुजशिरसोः । पार्श्वयोश्च । अभितापः सन्तापः । करपादयोः करयोः पादयोश्च सन्तापः । एवं सर्वांगगः । ज्वरः । इति राजयक्ष्मणो लक्षणं ज्वररूपं ॥ ५१ ॥

वातात् पित्तात् कफाद्रक्तात् कासवेगात् सपीनसात् ।
स्वरभेदो भवेद् वाताद्रूक्षः क्षामश्चलः स्वरः ॥५२॥
तालुकण्ठपरिप्लोषः पित्ताद् वक्तुमसूयते ।
कफाद् भेदो विबद्धश्च स्वरः खुनखुनायते ॥५३॥
सन्नो रक्तविबद्धत्वात् स्वरः कृच्छ्रात् प्रवर्त्तते ।
कासातिवेगात् करुणः पीनसात् कफवातिकः ॥५४॥
पार्श्वशूलन्त्वनियतं सङ्कोचायामलक्षणम् ।
शिरःशूलं ससन्तापं यक्ष्मिणः स्यात् सगौरवम् ॥५५॥

स्वरभेदमाह—वातात् पित्तादिति । वातात् । पित्तात् । कफात् । रक्तात् । कासवेगात् । सपीनसात् पीनसाच्च । इति षड्भ्यः कारणेभ्यः स्वरभेदो भवेत् । तस्य वातिकत्वादिलक्षणमाह—वातादिति । तत्र वातात् स्वरः रूक्षः । क्षामः क्षीणः । चलश्च । पित्तात् स्वरभेदे तालुनः कण्ठस्य च परिप्लोषः दाहः । वक्तुं असूयते नेच्छति । पैत्तिकस्वरभेदी । कफात् स्वरस्य भेदः । स्वरः विबद्धः । अखुनखुनः खुनखुनो भवति खुनखुनायते खुनखुन इतिरूपो भवति च । रक्तजस्वरभेदे स्वरः सन्नः अवसन्नः दुर्वलः । रक्तविबद्धत्वात् रक्तस्यानिष्ठीवनात् तेन विबद्धत्वात् रुद्धत्वात् । रक्तस्य विबद्धत्वात् विबन्धात् वा तेन रुद्धतयापि । कृच्छ्रात् प्रवर्त्तते च । कासजस्वरभेदे कासातिवेगात् स्वरः करुणः क्षीणः । पीनसात् स्वरभेदः कफवातिकः कफवातलिंगयुक्तः ॥ ५२—५४ ॥

यक्ष्मिणः पार्श्वशूलमाह—पार्श्वशूलन्त्विति । यक्ष्मिणः पार्श्वयोः शूलं । संकोचः । आयामः दैर्घ्यञ्च । लक्षणं यस्य तत् तथाविधं । तच्च अनियतं न नियतं । कदाचित् विरमति । कदाचित् भवति । कदाचित् संकोचरूपं । कदाचित् आयामलक्षणं वा । शिरःशूलमाह—शिरःशूलमिति । यक्ष्मिणः शिरःशूलं ससन्तापं सगौरवं च स्यात् ॥५५॥

---

५३ । तालुकण्ठपरीदाहः इति क पुस्तके ।

५४ । रक्ते रक्तविबद्धत्वात् इति ख ग पुस्तकयोः । सद्योरक्त विबद्धत्वात् इति क ।

अतिस्विन्ने शरीरे तु यक्ष्मिणो विषमाशनात् ।
कण्ठात् प्रवर्त्तते रक्तं श्लेष्मा चोत्क्लिष्टसञ्चितः ॥५६॥
रक्तं विबद्धमार्गत्वान्मांसादीन् नोपपद्यते ।
आमाशयस्थमुत्क्लिष्टं बहुत्वात् कण्ठमेति वा ॥५७॥
वातश्लेष्मविबद्धत्वादुरसः श्वासमृच्छति ।
दोषैरुपहते चाग्नौ सपिच्छमतिसार्यते ॥५८॥
पृथग्दोषैः समस्तैर्वा जिह्वाहृदयसंश्रितैः ।
जायतेऽरुचिराहारे द्विष्टैरथैश्च मानसैः ॥५९॥

शोणितश्लेष्मणोश्छर्दिमाह—अतिखिन्ने इति । यक्ष्मिणः शरीरे अतिखिन्ने सति । विषमाशनात् रक्तं कण्ठात् प्रवर्त्तते । श्लेष्मा च उत्क्लिष्टसंचितः संचितः उत्क्लिष्टः उत्क्लेशं गतः । कण्ठात् प्रवर्त्तते । श्लेष्मवत् रक्तं चापि उत्क्लिष्टसंचितं कण्ठात् प्रवर्त्तते । तदेवाह—रक्तमिति । रक्तं विबद्धमार्गत्वात् मांसादिवहस्रोतसां निरुद्धत्वात् मांसादीन् धातून् न उपपद्यते प्राप्नोति । किन्तु आमाशयस्थं चीयते । तेन तत् आमाशयस्थं आमाशये स्थितं । बहुत्वात् संचितत्वात् । उत्क्लिष्टं उत्क्लेशं गतं वा । कण्ठं एति कण्ठात् निःसरति । इति रक्तस्य श्लेष्मणश्छर्दनमुक्तं ॥ ५६ । ५७ ॥

यक्ष्मिणः श्वासमाह—वातश्लेष्मेति । वातश्लेष्मभ्यां विबद्धत्वात् उच्छ्वासपंथरोधात् यक्ष्मी उरसः श्वासं ऋच्छति प्राप्नोति । अतिसारमाह—दोषैरिति । अग्नौ जाठरे दोषैः उपहते सति । भुक्तस्याविपाकात् । संपिच्छं । पिच्छा शाल्मलिनिर्यासः । तद्वत् । अतिसार्यते यक्ष्मी ॥ ५८ ॥

अरोचकमाह—पृथग् दोषैरिति । जिह्वाहृदयसंश्रितैः दोषैः वातादिभिः पृथग् व्यस्तैः समस्तैर्वा । द्विष्टैर्मानसैरर्थैश्च । आहारे अरुचिः जायते । क्वचित् आहारैरिति पाठः । द्विष्टैः अहृद्यैः आहारैः । वातात् । पित्तात् । कफात् । सन्निपातात् । द्वेषात् । अरुचिर्जायते । अष्टोदरीयेऽप्युक्तं—पंच भक्तस्यानशनस्थानानीति वातपित्तकफसन्निपातद्वेषाः । इति ॥ ५९ ॥

---

५७ । बहुत्वात् कफमेति च इति ख ठ ग पुस्तकेषु ।

कषायतिक्तमधुरैर्विद्यान्मुखरसैः क्रमात् ।
वाताद्यैररुचिं जातां मानसीं दोषदर्शनात् ॥६०॥
अरोचकात् कासवेगाद्दोषोत्क्लेशाद्भयादपि ।
छर्दिर्या सा विकाराणामन्येषामप्युपद्रवः ॥६१॥
सर्वस्त्रिदोषजो यक्ष्मा दोषाणान्तु बलाबलम् ।
परीक्ष्यावस्थिकं वैद्यः शोषिणं समुपाचरेत् ॥६२॥

अरुचेः सम्प्राप्तिमुक्त्वा वातिकत्वादिलक्षणमाह—कषायतिक्तेति। कषाय-तिक्तमधुरैः व्यस्तसमस्तैः मुखरसैः क्रमात् वाताद्यैः वातपित्तकफसन्निपातैः जातां अरुचिं विद्यात् भिषक्। तथा च अरुचौ वातजायां मुखस्य कषायरसत्वं। पित्तजायां तिक्तरसत्वं। कफजायां मधुररसत्वं। सन्निपातजायां कषायादीनां सर्वेषां मेलनात् अनेकरसत्वं। तदुक्तं माधवेन—त्रिदोषजे नैकरसं भवेत्तु। इति (मा० नि० अरोचक)॥ सर्वोत्थे विरसमिति (अ० सं० नि० ५) वृद्धवाग्भटवचने विरसमिति निश्चितैकरसाज्ञानात्। मानसीं मानसद्विष्टार्थजां अरुचिं दोषस्य मानसस्य दर्शनात् विद्यात्॥ ६०॥

अरोचकादिति। यक्ष्मिणः अरोचकात् कासस्य वेगात् दोषस्य कफादेः उत्क्लेशात् भयादपि वा या छर्दिर्जायते सा उपद्रवः। तथाविधा छर्दिर्न केवलं यक्ष्मणः। किन्तु अन्येषां विकाराणामपि उपद्रवः। या तु स्वतन्त्ररोगभूता छर्दिः रोगाधिकारे पञ्चच्छर्द्दय इति द्विष्टार्थसंयोगवातपित्तकफसन्निपातोद्रेकात्मिका इति पञ्चविधा उद्दिष्टा तस्यास्तथैव निदानपूर्वकसम्प्राप्तिः पृथक् चिकित्सा च पश्चात् वक्ष्यमाणा॥ ६१॥

सर्व इति। सर्वो यक्ष्मा त्रिदोषजः। तत्रापि दोषाणां आवस्थिकं तत्तद-वस्थायां बलमबलं च तत् बलाबलं परीक्ष्य। वैद्यः शोषिणं यक्ष्मिणं समुपाचरेत् चिकित्सेत्॥ ६२॥

प्रतिश्याये शिरःशूले कासे श्वासे स्वरक्षये ।
पार्श्वशूले च विविधाः क्रियाः साधारणीः शृणु ॥६३॥
पीनसे स्वेदमभ्यङ्गं धूममालेपनानि च ।
परीषेकावगाहांश्च पानकं वाट्यमेव च ॥६४॥
लवणाम्लकटूष्णांश्च रसान् स्नेहोपबृंहितान् ।
लावतित्तिरिदक्षाणां वर्त्तकानाञ्च कल्पयेत् ॥६५॥
सपिप्पलीकं सयवं सकुलत्थं सनागरम् ।
दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत् ॥६६॥
तेन षड् विनिवर्त्तन्ते विकाराः पीनसादयः ॥६७॥

यथोद्देशं भेषजं वक्ष्यते । तत्रादौ क्रियाक्रममाह—प्रतिश्यायेति । प्रतिश्याये शिरःशूले कासे स्वासे श्वरक्षये स्वरभेदे पार्श्वशूले च विविधाः प्रतिश्यायदीनां षण्णां साधारणीः क्रियाः शृणु ॥ ६३ ॥

पीनसे इत्यादि । पीनसे प्रतिश्याये । शिरःशूलादिष्वपि । प्रतिश्याये तु विशेषेण । स्वेदं । अभ्यंगं । धूमं । आलेपनानि । परीषेकाः । अवगाहाश्च । ते । तान् । पानकं पानीयद्रवद्रव्यं । वाट्यं यवमण्डं । लवणाम्लकटूष्णान् लवणाम्लकटून् उष्णांश्च । स्नेहोपबृंहितान् स्नेहाढ्यान् । लावतित्तिरिदक्षाणां । दक्षः कुक्कुटः । वर्त्तकानां च पक्षिणां । रसान् मांसरसान् उपकल्पयेत् ॥ ६४ । ६५ ॥

सपिप्पलीकमिति । सपिप्पलीकं । सयवं । सकुलत्थं । सनागरं । दाडिमामलकाभ्यामुपेतं युक्तं । पिप्पल्यादिभिः संस्कृतं । आजं मांसरसं दाडिमरसेन आमलकरसेन च युक्तं । घृतादिस्नेहे भृष्टं । पिबेत् आतुरः पीनसादिषु । तेन रसेन पीतेन पीनसादयः पार्श्वशूलान्ताः षट् विकाराः विनिवर्त्तन्ते ॥ ६६ । ६७ ॥

मूलकानां कुलत्थानां यूषैर्वा सूपसंस्कृतैः ।
यवगोधूमशाल्यन्नैर्यथासात्म्यमुपाचरेत् ॥६८॥
पिबेत् प्रसादं वारुण्या जलं वा पाञ्चमूलिकम् ।
धान्यनागरसिद्धं वा तामलक्याथ वा श्रृतम् ।
पर्णिनीभिश्चतसृभिस्तेन चान्नानि कल्पयेत् ॥६९॥
कृशरोत्कारिकामाषकुलत्थयवपायसैः ।
सङ्करस्वेदविधिना कण्ठं पार्श्वमुरः शिरः ॥ ७० ॥
स्वेदयेत् पत्रभंगेण शिरश्च परिषेचयेत् ।
बलागुडूचीमधुकश्रृतैर्वा वारिभिः सुखैः ॥७१॥

मूलकानामिति । भिषक् । सूपकल्पितैः सैन्धवादिभिः सुष्ठु उपसंस्कृतैः कृत-संस्कारैः । मूलकानां कुलत्थानां वा यूषैः । रसिका मृदवः स्निग्धाः पटुद्रव्याभि-साधिताः । हिना मौलककौलत्थास्तद्वद् यूषाश्च साधिताः ॥ इति (अ० सं० चि० ६)। यवगोधूमशाल्यन्नैः यवाद्यन्यतमान्नैः । यथासात्म्यमुपाचरेत् आतुरं पीनसादिषु । यूषाणामन्नानां च विकल्पः सात्म्यापेक्षया ॥ ६८ ॥

पिबेदिति । वारुण्याः मदिरायाः प्रसादं उपरिस्थितं स्वच्छांशं पिबेत् । पाञ्च-मूलिकं पञ्चमूलसिद्धं वा । धान्यनागराभ्यां धन्याकशुण्ठीभ्यां सिद्धं वा । अथ तामलक्या भूम्यामलक्या श्रृतं कथितं वा । चतसृभिः पर्णिनीभिः शालपर्णीपृश्निपर्णी-मुद्गपर्णीमाषपर्णीभिः श्रृतं वा । जलं पिबेत् पीनसादिषु । तेन पंचमूलादिश्रृतेन जलेन अन्नानि कल्पयेत् ॥ ६९ ॥

पीनसे स्वेदमभ्यंगमित्यादि क्रियासूत्रमुक्तं । सम्प्रति तद् विवृणोति । तत्रादौ स्वेदमाह—कृशरोत्कारिकेति । कृशरा तिलतण्डुलमाषकृता यवागूः । तिलतण्डुल-माषैस्तु कृशरा त्रिसर्रांत च । इति । उत्कारिका लप्सिका । तिलः । कुलत्थः । यवः । तेषां ओदनानि । पायसं क्षीरसिद्धास्तण्डुलाः । तैः । एतानि पिण्डस्वेद-द्रव्याणि स्वेदाध्यायेऽप्युक्तानि । तिलमाषकुलत्थाम्लघृततैलामिषौदनैः । पायसैः कृशरैर्मांसैः पिण्डस्वेदं प्रयोजयेत् ॥ इति । संकरस्वेदः पिण्डस्वेदापरनामा । तद्-

वस्तमत्स्यशिरोभिर्वा नाड़ीस्वेदं प्रयोजयेत् ।
कण्ठे शिरसि पार्श्वे च पयोभिर्वा सवातिकैः ॥७२॥
औदकानूपमांसानि सलिलं पाञ्चमूलिकम् ।
सस्नेहमारनालं वा नाड़ीस्वेदे प्रयोजयेत् ॥७३॥
जीवन्त्याः शतपुष्पाया बलाया मधुकस्य च ।
वचाया वेशवारस्य विदार्य्या मूलकस्य च ॥७४॥
औदकानूपमांसानामुपनाहाः सुसंस्कृताः ।
शस्यन्ते सचतुःस्नेहाः शिरःपार्श्वांसशूलिनाम् ॥७५॥

विधिना स्वेदाध्यायोक्तेन । स्वेदयेदिति च्छेदः । कण्ठं पार्श्वं उरः शिरश्च स्वेदयेत् । पिण्डस्वेदमुक्त्वा परिषेकस्वेदमाह—पत्रभंगेनेति । पत्रभंगेन पत्रखंडेन स्वेदाध्यायोक्तानां वरुणाद्यर्जकान्तानां पत्रैरित्यर्थः । पत्रभंगेन शृतैः उत्क्वथितैः बलागुडूची-मधुकैः । शृतैर्वापि सुखैः सुखोष्णैः वारिभिः । परिषेचयेत् ॥ ७० । ७१ ॥

नाडीस्वेदमाह—वस्तेति । वस्तानां छागानां मत्स्यानां च शिरोभिः । उत्क्वथितैर्वा । पयोभिः सवातिकैः क्षीरैः वातहरैरन्यैर्द्रव्यैरुत्क्वथितैर्वा । कण्ठशिरसि पार्श्वे च नाडीस्वेदं प्रयोजयेत् । स्वेदाध्यायोक्तनाडीस्वेदविधिना ॥ ७२ ॥

नाडीस्वेदे द्रव्यान्तराण्याह—औदकेति । औदकानि आनूपानि च मांसानि । पांचमूलिकं पञ्चमूलसिद्धं सलिलं । सस्नेहं आरणालं कांजिकं वा । नाडीस्वेदे प्रयोजयेत् ॥ ७३ ॥

उपनाहस्वेदमाह—जीवन्त्या इति । शिरःपार्श्वांसशूलिनां शिरःशूले पार्श्व-शूले अंसशूले च । जीवन्त्याः । उपनाहा इत्यनेन सम्बन्धः । एवं परत्रापि । शतपुष्पायाः । बलायाः । मधुकस्य यष्टीमधुनः । वचायाः । वेशवारस्य । वेशवारः—अनस्थि पिशितं पिष्टं स्विन्नं गुडघृतान्वितं । कृष्णामरिचसंयुक्तं वेशवार इति स्मृतं ॥ इति । विदार्याः विदारीकन्दस्य । मूलकस्य । औदकानि आनूपानि च मांसानि । तेषां । सुसंस्कृताः सुष्ठु उपकल्पिताः । सचतुःस्नेहाः । चत्वारः स्नेहाः घृततैलवसामज्जानः । उपनाहाः स्वेदाः शस्यन्ते ॥ ७४ । ७५ ॥

शतपुष्पा-समधुकं कुष्ठं तगरचन्दने ।
आलेपनं स्यात् सघृतं शिरःपार्श्वांसशूलनुत् ॥७६॥
बलारास्नातिलाः सर्पिर्मधुकं नीलमुत्पलम् ।
पलङ्कषा देवदारु चन्दनं केसरं घृतम् ॥७७॥
वीरा बला विदारी च कृष्णगन्धा पुनर्नवा ।
शतावरी पयस्या च कत्तृणं मधुकं घृतम् ॥७८॥
चत्वार एते श्लोकार्द्धैः प्रदेहाः परिकीर्त्तिताः ।
शस्ताः संसृष्टदोषाणां शिरःपार्श्वांसशूलिनाम् ॥७९॥
नावनं धूमपानानि स्नेहाश्चौत्तरभक्तिकाः ।
तैलान्यभ्यङ्गयोगीनि वस्तिकर्म तथा परम् ॥८०॥

आलेपनमाह--शतपुष्पेति । शतपुष्पा । समधुकं कुष्ठं । तगर तगरपादं । चन्दनञ्च । ते । तैः पिष्टैः सघृतं आलेपनं । शिरःपार्श्वांसशूलनुत् ॥ ७६ ॥

बलेत्यादि । बला रास्ना तिलश्च । ते । सर्पिः । मधुकं नीलमुत्पलं च । बलारास्नातिलमधुकनीलोत्पलैः पिष्टैः सघृतः प्रदेहः । एवं सर्वत्र । इत्येकः प्रदेहः । पलंकषा गुग्गुलु । देवदारु । चन्दनं । केसरं नागकेसरं । घृतं च । इति द्वितीयः । वीरा शालपर्णी । बला । विदारी विदारिकन्दः । कृष्णगन्धा शोभांजनः । पुनर्नवा च । इति तृतीयः । शतावरी । पयस्या क्षीरकाकोली । कत्तृणं गन्धतृणं । मधुकं यष्टीमधु । घृतं च । इति चतुर्थः । इति । एते श्लोकार्द्धैः चतुर्भिः परिकीर्तिताः उक्ताः चत्वारः प्रदेहाः प्रलेपाः संसृष्टदोषाणां संसर्गोल्वणानां शिरःपार्श्वांसशूलिनां शस्ताः । ते च संसर्गोल्वणेषु यथादोषं विकल्प्य योज्याः ॥७७-७९॥

नावनमिति । शिरःपार्श्वांसशूलिनां नावनं नस्तःकर्म शिरोविरेचनं । धूमपानानि प्रायोगिकानि । उत्तरभक्तभवाः औत्तरभक्तिकाः । भक्तादुत्तरं प्रयोज्याः स्नेहाः । अभ्यंगयोगीनि तैलानि चन्दनाद्यादीनि । तैः अभ्यंगः । तथा वस्तिकर्म च । परं प्रधानं ॥ ८० ॥

शृङ्गालाबूजलौकोभिः प्रदुष्टं व्यधनेन वा ।
शिरःपार्श्वांसशूलेषु रुधिरं तस्य निर्हरेत् ॥८१॥
प्रदेहः सघृतैश्चेष्टः पद्मकोशीरचन्दनैः ।
दूर्वामधुकमञ्जिष्ठाकेसरैर्वा घृताप्लुतैः ॥८२॥
प्रपौण्डरीकं पद्मस्य केशरं नीलमुत्पलम् ।
कशेरुका पयस्या च ससर्पिष्कं प्रलेपनम् ॥८३॥
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा ।
अभ्यङ्गः पयसा सेकः शस्तश्च मधुकाम्बुना ॥८४॥
माहेन्द्रेण सुशीतेन चन्दनादिशृतेन वा ।
परिषेकः प्रयोक्तव्य इति संशमनी क्रिया ॥८५॥

शृङ्गेति । शिरःपार्श्वांसशूलेषु शिरःशूले पार्श्वशूले अंसशूले च । तस्यातुरस्य वातकफपित्तैः प्रदुष्टं रुधिरं क्रमात् शृंगालाबूजलौकोभिः निर्हरेत् । तदुक्तं—पित्ताचितं जलौकोभिरलाबूभिस्तु कफाचितं । शोणितं वातदुष्टं तु विषाणैराशु निर्हरेत् ॥ इति । वा अथवा व्यधनेन सिराव्यधनेन प्रदुष्टं रुधिरं निर्हरेत् भिषक् ॥ ८१ ॥

प्रदेह इति । शिरःपार्श्वांसशूलेषु पद्मकोशीरचन्दनैः पिष्टैः सघृतैः प्रदेहः इष्टः । दूर्वामधुकमंजिष्ठाकेसरैः पिष्टैः घृतेन आप्लुतैर्वा प्रदेहः इष्टः ॥ ८२ ॥

प्रपौण्डरीकमिति । शिरःशूलादिषु । प्रपौण्डरीकं पुण्डरीकशाष्ठं । पद्मस्य केशरं किंजल्कं । नीलमुत्पलं । कशेरुका केशुर इति ख्याता । पयस्या क्षीरकाकोली च । प्रपौण्डरीकादिभिः पिष्टैः ससर्पिष्कं सघृतं प्रलेपनं इष्टं ॥ ८३ ॥

चन्दनाद्येनेति । शिरःशूलादिषु चन्दनाद्येन तैलेन दाहज्वरचिकित्सिते उक्तेन । शतधौतेन सर्पिषा वा । अभ्यंगः शस्तः । पयसा क्षीरेण केवलेन । मधुकाम्बुना यष्टिमधुकक्वाथेन शीतीकृतेन । सेकः परिषेकः शस्तः ॥ ८४ ॥

माहेन्द्रेणेति । सुशीतेन माहेन्द्रेण अन्तरीक्षोदकेन । चन्दनादिभिः शीतवीर्यैः

दोषाधिकानां वमनं शस्यते सविरेचनम् ।
स्नेहस्वेदोपपन्नानां सस्नेहं यन्न कर्शनम् ॥८६॥
शोषी मुञ्चति गात्राणि पुरीषस्रंसनादपि ।
अबलापेक्षिणीं मात्रां किं पुनर्यो विरिच्यते ॥८७॥
योगान् संशुद्धकोष्ठानां कासे श्वासे स्वरक्षये ।
शिरःपार्श्वांसशूलेषु सिद्धानेतान् प्रयोजयेत् ॥८८॥

द्रव्यैः शृतेन उदकेन वा । परिषेकः प्रयोक्तव्यः । उपसंहरति–इतीति । इति संशमनी क्रिया उक्ता शमनमुक्तं ॥ ८५ ॥

शोधनमाह—दोषाधिकानामिति । दोषौ श्लेष्मपित्ते अधिकौ उल्वणौ येषां तेषां दोषाधिकानां यक्ष्मिणां बलिनां । बलिनो दोषाधिक्ये हि शोधनं । तथा च—बलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनं । ऊर्ध्वाधो यक्ष्मिणः कुर्यात् सस्नेहं यन्न कर्शनं ॥ इति ( अ० सं० चि० ७ ) । इहापि कफप्रसेके बलवान् श्लैष्मिकश्छर्दयेन्नरः । इति । स्नेहस्वेदोपपन्नानां प्राक् स्नेहस्वेदाभ्यामुपपादितानां सतामेव सविरेचनं वमनं यत् न कर्शनं देहक्षपणं भवति । तथाविधं मृदु वमनं विरेचनं च सस्नेहं शस्यते ॥ ८६ ॥

कुत इति चेत् ? आह—शोषीति । यतः शोषी यक्ष्मी पुरीषस्रंसनात् स्वल्पादपि गात्राणि मुञ्चति अवसीदति । उक्तं च प्राक्—तस्मात् पुरीषं संरक्ष्यं विशेषाद् राजयक्ष्मिणः । सर्वधातुक्षयार्त्तस्य बलंतस्य हि विड्बलं । इति॥ यः यक्ष्मी अबलापेक्षिणीं बलमनपेक्ष्य प्रयुक्तां मात्रां अतिमात्रां विरिच्यते । तस्य किं पुनर्वक्तव्यं । स गात्राणि मुञ्चत्येव ॥ ८७ ॥

योगानिति । संशुद्धकोष्ठानां कृतशोधनानां यक्ष्मिणां शोधनार्हाणां । कासे । श्वासे । स्वरक्षये । शिरःपार्श्वांसशूलेषु शिरःशूले पार्श्वशूले अंसशूले च । एतान् वक्ष्यमाणान् सिद्धान् सिद्धफलान् योगान् प्रयोजयेत् भिषक् ॥ ८८ ॥

बलाविदारिगन्धाभ्यां विदार्या मधुकेन च ।
सिद्धं सलवणं सर्पिर्नस्यं स्वर्यमनुत्तमम् ॥८६॥
प्रपौण्डरीकं मधुकं पिप्पली बृहती बला ।
साधितं क्षीरसर्पिश्च तत् स्वर्यं नावनं परम् ॥६०॥
शिरःपार्श्वांसशूलघ्नं कासश्वासनिवर्हणम् ।
प्रयुज्यमानं बहुशो घृतमौत्तरभक्तिकम् ॥६१॥
दशमूलेन पयसा सिद्धं मांसरसेन च ।
बलागर्भं घृतं सद्यो रोगानेतान् प्रबाधते ॥६२॥

तत्रादौ नावनयोगानाह—बलेति । बलाविदारीगन्धाभ्यां विदार्या क्षीरकाकोल्या मधुकेन यष्टिमधुना च सलवणं सिद्धं । लवणं सैन्धवं । सर्पिः नस्यं कृतं । नास्ति उत्तमं यस्मात् तत् अनुत्तमं अत्युत्तमं स्वराय हितं स्वर्यं भवति ॥ ८६ ॥

प्रपौण्डरीकमिति । प्रपौण्डरीकं । मधुकं । पिप्पली । बृहती । बला । क्षीरं । सर्पिश्च । तत् । एकत्र साधितं । तथा च प्रपौण्डरीकादिभिः कल्कितैः स्नेहपादिकैः । चतुर्गुणे क्षीरे साधितं सर्पिः । क्षीरसर्पिः क्षीरात् सर्पिः क्षीरोत्थं सर्पिः इत्यर्थः । इति केचित् । न तु दध्युत्थं सर्पिः । ते जलेनैव पाचयन्ति । तथा साधितं तत्सर्पिः नावनं नस्यं कृतं परं स्वर्यं स्यात् ॥ ६० ॥

शिरःपार्श्वांसेति । उक्तमेव घृतं औत्तरभक्तिकं औत्तरभक्तिकत्वेन औत्तरभक्तरूपेण बहुशः पुनः पुनः प्रयुज्यमानं शिरःपार्श्वांसशूलघ्नं । कासश्वासयोर्निवर्हणं उपशामनं च भवति ॥ ६१ ॥

दशमूलेनेति । दशमूलेन दशमूलक्काथेन । पयसा क्षीरेण । मांसरसेन च । बलागर्भं बलाकल्कं दत्त्वा । सिद्धं घृतं । सक्षीरं रास्नाघृतं रास्नाकल्कं दत्त्वा सिद्धं वा घृतं । सक्षीरं बलाघृतं केवलक्षीरे बलाकल्कं दत्त्वा सिद्धं घृतं वा । सर्वत्र पाके द्रवस्य

८६ । पिप्पल्या मधुकेन च इति क पुस्तके । बलाविदारिगन्धाद्यैर्विदार्या मधुकेन च इति ङ पुस्तके ।

भक्तस्योपरि मध्ये वा यथाग्न्यभ्यवचारितम् ।
रास्नाघृतं वा सक्षीरं सक्षीरं वा बलाघृतम् ॥९३॥
लेहान् कासापहान् स्वर्य्यान् हिक्काश्वासनिवर्हणान् ।
शिरःपार्श्वांसशूलघ्नान् स्नेहांश्चातः परं शृणु ॥९४॥
घृतं खर्जूरमृद्वीकामधुकैः सपरूषकैः ।
सपिप्पलीकं वैस्वर्यकासश्वासज्वरापहम् ॥९५॥
दशमूलशृतात् क्षीरात् सर्पिर्यदुदियान्नवम् ।
सपिप्पलीकं सक्षौद्रं तत् परं स्वरबोधनम् ॥९६॥

घृताच्चातुर्गुण्यं। औषधस्य च पादिकत्वं बोद्धव्यं। दशमूलेन मांसरसेन च साधित बलाघृतं क्षीरसिद्धं रास्नाघृतं केवलक्षीरसाधितं बलाघृतं वा। भक्तस्य उपरि भक्तात् उत्तरं। भक्तस्य मध्ये अर्द्धं भुक्त्वा वा। यथाग्निबलं अग्निबलापेक्षया मात्रया। अभ्यवचारितं सत्। एतान् रोगान् शिरःशूलादीन् प्रबाधते ॥ ९२। ९३ ॥

लेहानिति। अतः परं कासापहान् स्वर्यान् श्वासहिक्कानिबर्हणान् शिरःपार्श्वांसशूलघ्नान् लेहान् स्नेहांश्च मया वक्ष्यमाणान् शृणु ॥ ९४ ॥

स्नेहान् लेहांश्चाह—घृतमिति। खर्जूरमृद्वीकामधुकैः। मृद्वीका द्राक्षा। सपरूषकैः। खर्जूरादीनां क्वाथकल्काभ्यां साधितं। सपिप्पलीकं पिप्पलीचूर्णप्रक्षेपयुतं घृतं। वैस्वर्यं विस्वरत्वं स्वरसादः। कासः। श्वासः। ज्वरश्च। तान् अपहन्ति तत् ॥ ९५ ॥

दशमूलेति। दशमूलेन शृतात् पक्वात् क्षीरात् मथितात् यत् नवं सर्पिः नवनीतं उदियात् उत्तिष्ठेत्। तत् सपिप्पलीकं सक्षौद्रं पिप्पलीचूर्णक्षौद्रप्रक्षेपयुतं परं उत्कृष्टं स्वरबोधनं स्वर्यं ॥ ९६ ॥

शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम् ।
पञ्चभिः पञ्चमूलैर्वा शृताद् यदुदियाद्घृतम् ॥९७॥
पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे ।
सिद्धं सर्पिर्जयत्येतद् यक्ष्मणः सप्तकं बलम् ॥९८॥
खर्जूरं पिप्पली द्राक्षा पथ्या शृङ्गी दुरालभा ।
त्रिफला पिप्पली मुस्तं शृङ्गाटगुडशर्कराः ॥९९॥
वीरा शटी पुष्कराख्यं सुरसः शर्करा गुडः ।
नागरं चित्रको लाजाः पिप्पल्यामलकं गुडः ॥१००॥

शिर इति । पञ्चभिः पञ्चमूलैः आद्ये रसायनपादे उक्तैः ह्रस्वमध्यमहज्जीवनी-यतृणाख्यैः । शृतात् क्षीरात् यत् घृतं उदियात् तत् शिरःपार्श्वांसशूलघ्नं कासश्वास-ज्वरापहं च ॥ ९७ ॥

पंचानामिति । पंचानां पंचमूलानां प्रागुक्तानां रसे क्वाथे । क्षीरं क्वाथात् चतुर्गुणं यस्मिन् तस्मिन् क्षीरचतुर्गुणे । क्षीरेण चतुर्गुणः । तस्मिन् क्षीरचतुर्गुणे इति केचित् । तेषां मते क्वाथस्त्रिगुणः । क्षीरं च स्नेहसमं । तेन क्षीरेण घृताच्चातुर्गुण्यं द्रवस्य भवति । क्षीरचतुर्गुणे पंचानां पंचमूलानां रसे सिद्धं सर्पिः यक्ष्मणः एतत् सप्तकं वलं स्वरसादशिरःशूलपार्श्वशूलांसशूलश्वासकासज्वरा इति सप्तभी रूपैः कृतं वलं जयति ॥ ९८ ॥

खर्जूरमित्यादि । खर्जूरं । पिप्पली । द्राक्षा । पथ्या हरीतकी । शृङ्गी कर्कट-शृङ्गी । दुरालभा च । खर्जूरादयः चूर्णिताः । एवं परत्रापि । इत्येको लेहः । त्रिफ-ला । पिप्पली । मुस्तं । शृङ्गाटः शृङ्गाटकः पानीयफलं । गुडः । शर्करा च । ताः । इति द्वितीयः । वीरा पृश्निपर्णी । शटी । पुष्कराख्यं पुष्करमूलं । सुरसः तुलसी-भेदः । शर्करा । गुडश्च । इति तृतीयः । नागरं शुण्ठी । चित्रकः । लाजाः । पिप्पली । आमलकं । गुडश्च । इति चतुर्थः । इति श्लोकार्द्धैः चतुर्भिः विहितान् उक्तान् कास-

श्लोकार्द्धैर्विहितानेतान् लिह्यान्ना क्षौद्रसर्पिषा ।
कासश्वासापहान् स्वर्यान् पार्श्वशूलापहांस्तथा ॥१०१॥
(सितोपला तुगाक्षीरी पिप्पली बहुला त्वचः ।
अन्त्यादूर्ध्वं द्विगुणितं लेहयेन्मधुसर्पिषा ॥१०२॥
चूर्णितं प्राशयेद्वा तच्छ्वासकासज्वरापहम् ।
सुप्तजिह्वारोचकिनमल्पाग्निं पार्श्वशूलिनम् ॥१०३॥
हस्तपादांसदाहेषु ज्वरे रक्ते तथोर्ध्वगे ।
वासाघृतं शतावर्या सिद्धं वा परमं हितम् ॥१०४॥)

श्वासापहान् स्वर्यान् तथा पार्श्वशूलापहान्। एतान् चतुरः लेहान् ना आतुरः पुमान् क्षौद्रसर्पिषा घृतमधुभ्यां लिह्यात् ॥ ९९-१०१ ॥

सितोपलेति । सितोपला मिछरी इति ख्याता। तुगाक्षीरी वंशलोचना । पिप्पली । बहुला एला । त्वचः गुडत्वचश्च । अन्त्यादन्त्यादूर्ध्वं द्विगुणितं । अन्त्या त्वक् । तत ऊर्ध्वं पूर्वपूर्वं द्विगुणितं । तथाच । त्वचः एको भागः । बहुलायाः भागद्वयं । पिप्पल्या भागाश्चत्वारः । तुगाक्षीर्याः अष्टौ । सितोपलायाः षोडश भागाः । तत् सर्वं एकत्र चूर्णितं मधुसर्पिषा घृतमधुभ्यां लेहयेत् ॥ १०२ ॥

चूर्णितमिति। श्वासकासज्वरापहं एतत् चूर्णितं सितोपलादि चूर्णं। सुप्ता रसाज्ञा जिह्वा यस्य स सुप्तजिह्वः। स चासौ आरोचकी चेति । तं सुप्तजिह्वारोचकिनं । अल्पाग्निं । पार्श्वशूलिनं । आतुरं प्राशयेत् भोजयेत् वा ॥ १०३ ॥

हस्तपादांसदाहेष्विति । यक्ष्मिणः हस्तपादांसदाहेषु। ज्वरे। तथा ऊर्ध्वगे रक्ते रक्तपित्ते च । शतावर्या सिद्धं वासाघृतं । शतावर्याः रसे चतुर्गुणे वासककल्कैः पादिकैः सिद्धं घृतं परमं हितं ॥ १०४ ॥

---

१०४। हस्तपादाङ्गदाहेषु इति क पुस्तके ।

दुरालभां श्वदंष्ट्रां च चतस्रः पर्णिनीर्बलाम् ।
भागान् पलोन्मितान् कृत्वा पलं पर्पटकस्य च ॥१०५॥
पचेद्दशगुणे तोये दशभागावशेषिते ।
रसे सुपूते द्रव्याणामेषां कल्कान् समावपेत् ॥१०६॥
शट्याः पुष्करमूलस्य पिप्पलीत्रायमाणयोः ।
तामलक्याः किराताानां तिक्तस्य कुटजस्य च ॥१०७॥
फलानां सारिवायाश्च सुपिष्टान् कर्षसम्मितान् ।
ततस्तेन घृतप्रस्थं क्षीरद्विगुणितं पचेत् ॥१०८॥
ज्वरं दाहं भ्रमं कासमंसपार्श्वशिरोरुजम् ।
तृष्णां छर्दिमतीसारमेतत् सर्पिर्व्यपोहति ॥१०९॥
इति दुरालभाद्यं घृतम् ।

दुरालभाद्यं घृतमाह—दुरालभामित्यादि । दुरालभां । श्वदंष्ट्रां गोक्षुरं । चतस्रः पर्णिनीः शालपर्णीपृश्निपर्णीमुद्गपर्णीमाषपर्णीः । बलां च । पलोन्मितान् भागान् कृत्वा । पर्पटकस्य च पलं कृत्वा । दुरालभादिबलान्तानां सप्तानां प्रत्येकं पलपरिमितान् भागान् । तथा पर्पटकस्य च पलं गृहीत्वा । ततः दशगुणे तोये पचेत् क्वाथयेत् दशभागावशेषं यावत् । रसे क्वाथे दशभागावशेषिते सति । तमवतार्य । तस्मिन् सुपूते कृते । तं वस्त्रेण सम्यक् परिस्राव्य । तत्र एषां वक्ष्यमाणानां द्रव्याणां कल्कान् प्रत्येकं कर्षमितान् समावपेत् प्रक्षिपेत् । प्रक्षेपद्रव्याण्याह—शट्या इति । शट्याः । पुष्करमूलस्य । पिप्पली । त्रायमाणा च । तयोः पिप्पलीत्रायमाणयोः । पिप्पल्याः त्रायमाणायाश्च । तामलक्याः भूम्यामलक्याः । किराताानां तिक्तस्य किराततिक्तस्य । कुटजस्य फलानां इन्द्रयवानां । सारिवायाश्च । प्रत्येकं कर्षसम्मितान् सुपिष्टान् कल्कितान् भागान् समावपेत् । ततः तेन सर्वेण क्षीरं घृतात् द्विगुणितं यत्र तत् क्षीरद्विगुणितं घृतप्रस्थं पचेत् । तत्र क्षीरस्य प्रस्थद्वयं दत्त्वा घृतस्य प्रस्थं पचेत् । तथा पक्वं एतत् सर्पिः दुरालभाद्यं घृतं । ज्वरं । दाहं । भ्रमं । श्वासं । अंसपार्श्व शिरोरुजं अंसयोः पार्श्वयोः शिरसश्च रुजं अंसशूलं पार्श्वशूलं शिरःशूलं च । तृष्णां । छर्दिं । अतीसारं च । व्यपोहति नाशयति ॥ १०५-१०९ ॥

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च ।
शटीं पुष्करमूलं च व्याघ्रीं गोक्षुरकं बलाम् ॥११०॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।
पिप्पलीं च समं पिष्ट्वा घृतं वैद्यो विपाचयेत् ॥१११॥
एतद् व्याधिसमूहस्य रोगेशस्य समुत्थितम् ।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥११२॥

इति जीवन्त्याद्यं घृतम् ।

बलां स्थिरां पृश्निपर्णीं बृहतीं सनिदिग्धिकाम् ।
साधयित्वा रसे तस्मिन् पयो गव्यं सनागरम् ॥११३॥
द्राक्षाखर्जूरसर्पिर्भिः पिप्पल्या च शृतं सह ।
सक्षौद्रं ज्वरकासघ्नं स्वर्यञ्चैतत् प्रयोजयेत् ॥११४॥

जीवन्त्याद्यं घृतमाह—जीवन्तीमित्यादि । वैद्यः । जीवन्तीं । मधुकं । द्राक्षां । कुटजस्य फलानि । शटीं । पुष्करमूलं । व्याघ्रीं कण्टकारिकां । गोक्षुरकं । बलां । नीलोत्पलं । तामलकीं । त्रायमाणां । दुरालभां । पिप्पलीं च । प्रत्येकं समं समभागं यथा तथा गृहीत्वा पिष्ट्वा कल्कीकृत्य । तेन घृतं जले चतुर्गुणे विपाचयेत् । अग्र्यं श्रेष्ठं एतत् सर्पिः जीवन्त्याद्यं घृतं । व्याधिसमूहस्य अनेकरोगात्मकस्य रोगेशस्य रोगराजस्य यक्ष्मणः समुत्थितं उत्पन्नं एकादशविधं रूपं व्यपोहति नाशयति ॥ ११०—११२ ॥

बलामिति । बलां । स्थिरां शालपर्णीं । सनिदिग्धिकां बृहतीं । निदिग्धिका कण्टकारी । प्रत्येकं समभागं गृहीत्वा कल्कीकृत्य साधयित्वा क्वाथयित्वा । क्वाथविधिना । तस्मिन् रसे क्वाथे गव्यं पयः क्षीरं सनागरं द्राक्षाखर्जूरसर्पिर्भिः पिप्पल्या च सह शृतं । तथा च बलादीनां क्वाथे नागरद्राक्षाखर्जूरपिप्पलीभिः गव्यं क्षीरं सर्पिश्च पाचयेत् । ततः घृतावशेषं अवतारितं पूतं शीतं च । एतत् घृतं सक्षौद्रं मधुप्रक्षेपयुक्तं । ज्वरकासघ्नं स्वर्यञ्च प्रयोजयेत् ॥ ११३—११४ ॥

आजस्य पयसश्चैवं प्रयोगो जाङ्गला रसाः ।
यूषार्थं चणका मुद्गा मुकुष्ठाश्चोपकल्पिताः ॥११५॥
ज्वराणां शमनीयो यः पूर्वमुक्तः क्रियाविधिः ।
यक्ष्मिणां ज्वरदाहेषु ससर्पिष्कः प्रशस्यते ॥११६॥
कफप्रसेके बलवान् श्लैष्मिकश्छर्दयेन्नरः ।
पयसा फलयुक्तेन मधुरेण रसेन वा ॥११७॥
सर्पिष्मत्या यवाग्वा वा वामनीयोपसिद्धया ।
वान्तोऽन्नकाले लघ्वन्नमाददीत सदीपनम् ॥११८॥

आजस्येति । एवं गव्यपयस इव प्रागुक्तविधिना आजस्य पयसश्चापि प्रयोगः । जांगलाः रसाः जांगलमांसरसाः । यूषार्थं उपकल्पिताः । चणकाः । मुद्गाः । मुकुष्ठा वनमुद्गाश्च । चणकमुद्गमुकुष्ठैरुपकल्पिता यूषाश्च यक्ष्मिणे हिताः ॥ ११५ ॥

ज्वराणामिति । ज्वराणां शमनीयः यः क्रियाविधिः पूर्वं दाहज्वरचिकित्सिते उक्तः । यक्ष्मिणां ज्वरदाहेषु स शमनीयः क्रियाविधिः ससर्पिष्कः सर्पिरभ्यंगसहितः प्रशस्यते ॥ ११६ ॥

कफप्रसेके इति । श्लैष्मिकः श्लेष्मोत्तरः नरः । श्लेष्मणि वमनं कफप्रसेके सति । बलवान् चेत् । बलवतो दोषाधिक्ये हि शोधनं । स्निग्धस्विन्नः सन् फलयुक्तेन मदनफलसिद्धेन पयसा क्षीरेण मधुरेण । रसेन मांसरसेन फलयुक्तेन वा । वामनीयैः वमनद्रव्यैर्मदनफलादिभिः उपसिद्धया पक्वया सर्पिष्मत्या घृतवत्या यवाग्वा वा । छर्दयेत् वमेत् । वान्तः कृतवमनः सः अन्नकाले आहारकाले । सदीपनं । दीपनमग्निसंधुक्षणं शुण्ठादि । तत्साधितं लघु अन्नं आददीत भुञ्जीत ॥ ११७ । ११८ ॥

---

११७ । रसेन माधुकेन वा इति क पुस्तके ।

यवगोधूममाध्वीकसीध्वरिष्टसुरासवान् ।
जाङ्गलानि च शूल्यानि सेवमानः कफं जयेत् ॥११९॥
श्लेष्मणोऽतिप्रसेकेन वायुः श्लेष्माणमस्यति ।
कफप्रसेकं तं विद्वान् स्निग्धोष्णेनैव निर्जयेत् ॥१२०॥
क्रिया कफप्रसेके या वम्यां सैव प्रशस्यते ।
हृद्यानि चान्नपानानि वातघ्नानि लघूनि च ॥१२१॥
प्रायेणोपहताग्नित्वात् सपिच्छमतिसार्यते ।
प्राप्नोति चास्यवैरस्यं न चान्नमभिनन्दति ॥१२२॥

यवगोधूमेति। यवः । गोधूमः । माध्वीकं मध्वासवः। सीधुः पक्वेक्षुरसकृता सु अरिष्टः क्वाथसिद्धः। सुरा प्रसिद्धा। आसवः कथितौषधैः कृतः। तान्। शूल्यानि शूलपक्वानि च मांसानि। सेवमानः श्लैष्मिकः पुमान् कफं जयेत् ॥११९॥

श्लेष्मण इति। श्लेष्मणः अतिप्रसेकेन हेतुभूतेन वायुः श्लेष्माणं क्षिपति। तं तथाविधं वातोत्तरं कफप्रसेकं कफस्य अतिप्रसेकं। [illegible] भेषजेन निर्जयेत् भिषक् ॥ १२० ॥

कफप्रसेकोक्तं कर्म वम्यामतिदिशन्नाह—क्रियेति। कफप्रसेके या क्रिया उक्ता वम्यामपि सा एव क्रिया प्रशस्यते। तत्र हृद्यानि रुचिकराणि वातघ्नानि लघूनि च अन्नपानानि प्रशस्यन्ते ॥ १२१ ॥

प्रायेणेति। उपहताग्नित्वात् यक्ष्मी प्रायेण सपिच्छं अतिसार्यते। प्रागपि उक्तं—दोषैरुपहते चाग्नौ सपिच्छमतिसार्यते। इति। आस्यस्य मुखस्य वैरस्यं विरसतां प्राप्नोति च। आस्यवैरस्यात् स च अन्नं न च अभिनन्दति अभिलषति। अन्नं तस्मै न रोचते ॥ १२२ ॥

---

११९। माध्वीकारिष्टमदिरासीधुगोधूमयावकान् इति ख पुस्तके ॥ जाङ्गलानि च मांसानि इति ठ पुस्तके।

१२१। अन्नपानानि मधुराणि मृदूनि च इति ठ पुस्तके।

तस्याग्निदीपनान् योगानतीसारनिर्बर्हणान् ।
वक्त्रशुद्धिकरान् कुर्यादरुचिप्रतिबाधकान् ॥१२३॥
सनागरानिन्द्रयवान् पाययेत् तण्डुलाम्बुना ।
सिद्धां यवागूं जीर्णे च चांगेरीतक्रदाडिमैः ॥१२४
पाठा विल्वं यमानी च पातव्यं तक्रसंयुतम्
दुरालभा शृङ्गबेरं पाठा च सुरया सह ॥१२५॥
जम्ब्वाम्रमध्यं बिल्वञ्च सकपित्थं सनागरम् ।
सुरामण्डेन पातव्यमतीसारनिवृत्तये ॥१२६॥

तस्येति । तस्य उपहताग्नेः अतिसारिणः विरसमुखस्य अरोचकिनश्च । अग्निदीपनान् । अतीसारनिर्बर्हणान् । वक्त्रशुद्धिकरान् मुखशुद्धिकरान् । मुखवैरस्यनाशकान् । अरुचिप्रतिबाधकांश्च । योगान् वक्ष्यमाणान् कुर्यात् भिषक् ॥ १२३ ॥

तत्रादावग्निदीपनानतिसारनिवर्त्तकान् योगानाह— सनागरानिन्द्रयवानिति । सनागरानिन्द्रयवान् तण्डुलाम्बुना तण्डुलधावनोदकेन पिवेत् वा । तेषु जीर्णेषु सत्सु चांगेरीतक्रदाडिमैः सिद्धां यवागूं पिवेत् ॥ १२४ ॥

पाठेत्यादि । अतीसारनिवृत्तये । पाठा । विल्वं बिल्वशलाटु । यमानी च । एतत् सर्वं चूर्णितं तक्रसंयुतं तक्रेण सह पातव्यं । इत्येको योगः । दुरलभा । शृङ्गवेरं शुण्ठी । पाठा च । तत्सर्वं चूर्णितं सुरया सह पातव्यं । इति द्वितीयः । सकपित्थं सनागरं जम्ब्वाम्रमध्यं । जम्ब्वाम्रयोरस्थ्नोर्मज्जा । विल्वं विल्वशलाटु च । तत्सर्वं अग्निदीपनं अतिसारनिवृत्तये सुरामण्डेन सह । वक्ष्यमाणवृद्धवण्डेग्भटवचने—पेयामण्डानेति पाठः । पातव्यं । तदुक्तं वृद्धवाग्भटेन —सनागरानिन्द्रयवान् पाययेत् तण्डुलाम्बुना । जीर्णेषु तेषु पेयां च चांगेरीतक्रदाडिमैः ॥ पाठाविल्वयमानीनां चूर्णं तक्रेण वा पिवेत् । सुरया वाप्लुतां पाठां सनागरदुरालभां ॥ जम्ब्वाम्रविल्वमध्यं वा सकपित्थं सनागरं । पेयामण्डेन ॥ इति ( अ० सं० चि० ७ ) ॥ १२५ । १२६ ॥

एतानेव च योगांस्त्रीन् पाठादीन् कारयेत् खड़ान् ।
ससूप्यधान्यान् सस्नेहान् साम्लान् सांग्राहिकान् परम् ॥१
वेतसार्जुनजम्बूनां मृणालीकृष्णगन्धयोः ।
श्रीपर्ण्या मदयन्त्याश्च यूथिकायाश्च पल्लवान् ॥१२८॥
मातुलुङ्गस्य धातक्या दाड़िमस्य च कारयेत् ।
स्नेहाम्ललवणोपेतान् खड़ान् सांग्राहिकान् परम् ॥१२९॥
चांगेर्याश्चुक्रिकायाश्च दुग्धिकायाश्च कारयेत् ।
खड़ान् दधिसरोपेतान् ससर्पिष्कान् सदाड़िमान् ॥१३०॥

एतानिति । एतान् अनन्तरोक्तान् पाठादीन् । पाठेत्यादिः । दुरालभेत्यादिः । जम्बवाम्रमध्यमित्यादिश्च । इति त्रीन् योगान् । तैः । सह । सूप्यं विदलं । धान्यं धन्याकं च । ताभ्यां वर्त्तमानाः । तान् ससूप्यधान्यान् । सस्नेहान् घृतादिस्नेहयुतान् । कपित्थाद्यम्लरसैः साम्लान् । परम् अत्यर्थं । सांग्राहिकान् मलसंग्रहकरान् । सल- घणानिति वक्ष्यमाणवृद्धवाग्भटवचने पाठः । त्रीन् खडान् खड्यूपान् कारयेत् । तदुक्तं—पिशितेन रसस्तत्र यूपो धान्यैः खडः फलैः । मूलैश्च तिलकल्काम्लप्रायः काम्बलिकः स्मृतः ॥ इति । वृद्धवाग्भटेनाप्युक्तं—योगैश्च पाठाद्यैः कारयेत् त्रिभिः । सपूप्यधान्यान् सस्नेहान् साम्लान् सलवणान् खडान् ॥ इति ( अ० सं० चि० ७ ) ॥ १२७ ॥

वेतसेति । वेतसः अम्लवेतसः । अर्जुनः । जम्बूश्च । तासां । पल्लवानित्यनेनसम्बन्धः । एवं सर्वत्र । मृणाली वीरणं । कृष्णगन्धा शिग्रुश्च । तयोः । श्रीपर्ण्याः । मदयन्त्याः नवमल्लिकायाः । यूथिकायाः । मातुलुंगस्य बीजपूरकस्य । धातक्याः । दाडिमस्य च । पल्लवान् क्राथयित्वा । स्नेहाम्ललवणोपेतान् परं सांग्राहिकान् खडान् कारयेत् भिषक् यक्ष्मिणः अवस्थाभेदेषु ॥ १२८ । १२९ ॥

चांगेर्या इति । चांगेरी आमरूल इति वंगेषु ख्याता । तस्याः । चुक्रिकायाः चुक्रपालंकस्य । दुग्धिकायाः क्षीरिण्याश्च । पल्लवान् क्राथयित्वा । दधिसरोपेतान्

पिबेद्धूमं ततो मृष्टमद्याद्दीपनपाचनम् ।
भेषजं पानमन्नञ्च हितमिष्टोपकल्पितम् ॥१३५॥
त्वङ्मुस्तमेला धान्यानि मुस्तमामलकं त्वचम् ।
त्वचो दार्वी यमानी च तेजोह्वा पिप्पली तथा ॥१३६॥
यमानी तिन्तिड़ीकञ्च पञ्चैते मुखधावनाः ।
श्लोकपादेष्वभिहिता रोचना मुखशोधनाः ॥१३७॥

तदिति चक्रपाणिव्याख्यानं । तदित्यं । दन्तपवनं दन्तधावनं मुखधावनं वक्ष्यमाणं भक्षयेत् । तद्वत् द्वौ कालौ आस्यं मुखं प्रक्षालयेत् । कवलग्रहान् वक्ष्यमाणान् मुखे धारयेच्च ॥ १३४ ॥

पिबेद्धूममिति । धूमं प्रायोगिकं प्राक् मात्राशितीये उक्तं पिबेत् । ततः मृष्टं शुद्धं यथा तथा बहिरन्तर्मार्जनं कृत्वा । बहिर्मार्जनं पश्चाद् वक्ष्यमाणं । अन्तर्मार्जनं मनःशुद्धिः चित्तमलानां क्षालनं । दीपनं पाचनं च भेषजं । तथा इष्टैः प्रियजनैः उपकल्पितं हितं अन्नं पानं च अद्यात् भुञ्जीत । तदुक्तं—विचित्रमन्नमश्नीयात् हितैरुपहितं हितं । बहिरन्तर्मृजाचित्तनिर्वाणकृद्यमौषधं । द्वौ कालौ दन्तपवनं भक्षयेन्मुखधावनं । कषायैः क्षालयेदास्यं धूमं प्रायोगिकं पिबेत् ॥ इति ( अ० सं० चि० ७ ) ॥१३५॥

मुखधावनद्रव्याण्याह—त्वङ्मुस्तमिति । त्वक् मुस्तं च । तयोः समाहारः । तत् । एला । धान्यानि धन्याकानि च । इत्येको मुखधावनयोगः । मुस्तं । आमलकं । त्वचं । त्वचशब्दोऽदन्तोऽप्यस्ति । गुडत्वक् । इति द्वितीयः । त्वचः । दार्वी । यमानी च । इति तृतीयः । तेजोह्वा वचा । पिप्पली च । इति चतुर्थः । यमानी । तिन्तिडीकं च । इति पंचमः । इति श्लोकपादेषु पंचसु एते पंच रोचनाः अन्नरुचिकराः । मुखशोधनाः मुखधावनाः । अभिहिताः उक्ताः ॥ १३६ । १३७ ॥

---

१३५ । हितमिष्टोपकल्पितं इति घ पुस्तके ।

१३६ । आमलकद्वयं इति घ पुस्तके ।

१३६ । दार्वीत्वचः इति घ पुस्तके । १३७ पञ्चैते मुखशोधनाः इति च पुस्तके ।

१३७ । मुखधारणाः इति क ग पुस्तकयोः ।

गुड़िकां धारयेदास्ये चूर्णैर्वा शोधयेन्मुखम् ।
एषामालोड़ितानां वा धारयेत् कवड़ग्रहान् ॥१३८॥
सुरामाध्वीकसीधूनां तैलस्य मधुसर्पिषोः ।
कवड़ान् धारयेदिष्टान् क्षीरस्येक्षुरसस्य च ॥१३९॥
यमानीं तिन्तिड़ीकञ्च नागरं साम्लवेतसम् ।
दाड़िमं वदरञ्चाम्लं कार्षिकञ्चोपकल्पयेत् ॥१४०॥
धान्यसौवर्चलाजाजीवराङ्गञ्चार्द्धकार्षिकम् ।
पिप्पलीनां शतञ्चैकं द्वे शते मरिचस्य च ॥१४१॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत् ।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचनम् ॥१४२॥
हृत्प्लीहपार्श्वशूलघ्नं विवन्धानाहनाशनम् ।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत् ॥१४३॥

यमानीषाड़वम् ।

गुडिकामिति । प्रागुक्तत्वङ्मुस्तादिभिः कृतां गुडिकां आस्ये मुखे धारयेत् । तेषां चूर्णैर्वा मुखं शोधयेत् । एषां चूर्णानां जलेनालोडितानां कवडग्रहान् धारयेत् वा ॥ १३८ ॥

सुरेति । सुरा मद्यसामान्यं । माध्वीकं मध्वासवः । सीधुः पक्वेक्षुरसकृता सुरा च । तेषां । तैलस्य । मधुसर्पिषोः मधुनः सर्पिषश्च । क्षीरस्य । इक्षुरसस्य च । एषु इष्टान् कवडग्रहान् धारयेत् ॥ १३९ ॥

यमानीषाडवमाह—यमानीमित्यादि । यमानीं । तिन्तिडीकं । साम्लवेतसं अम्लवेतससहितं । नागरं शुण्ठीं । दाडिमं । अम्लं वदरं च । प्रत्येकं कार्षिकं कर्षप्रमाणं उपकल्पयेत् । तथा धान्यं धन्याकं । सौवर्चलं लवणं । अजाजी कृष्णजीरकं । वरांगं गुडत्वक् च । तत् प्रत्येकं अर्द्धकार्षिकं अर्द्धकर्षपरिमितं उपकल्पयेत् । पिप्पलीनां एकं शतं । मरिचस्य द्वे शते । शर्करायाः चत्वारि पलानि च । तत् सर्वं

तालीशपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्ध्या त्वगेले चार्द्धभागिके ॥१४४॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
कासश्वासारुचिहरं तच्चूर्णं दीपनं परम् ॥१४५॥
हृत्पाण्डुग्रहणीदोषशोषप्लीहज्वरापहम् ।
वम्यतीसारशूलघ्नं मूढवातानुलोमनम् ॥१४६॥

एकत्र चूर्णयेत् । तच्च चूर्णं जिह्वाया विशोधनं । हृद्यं मनोज्ञं । भक्तरोचनं अन्ने रुचिकरं । हृत्प्लीहपार्श्वशूलघ्नं । विबन्धानाहयोर्नाशनं । श्वासकासहरं । ग्राहि मलसंग्रहकरं । ग्रहण्यर्शोविकारनुच्च ॥ १४० --१४३ ॥

तालीशाद्यं चूर्णमाह—तालीशपत्रमित्यादि । तालीशपत्रं । मरिचं । नागरं । शुभा पिप्पली । शुभेति पिप्पलीविशेषणं । शुभा वंशलोचनेति केचित् । तदन्ये न मन्यन्ते । समानतन्त्रे हारीतादावदृष्टत्वात् । तथाच—तालीशं मरिचं शुण्ठी पिप्पल्योऽस्तांशका मताः । त्वगेलार्द्धांशके दद्यात् शर्कराष्टपलं भवेत् ॥ इति । तालीशपत्रमरिचशुण्ठीपिप्पल्यः यथोत्तरं उत्तरोत्तरं भागवृद्ध्या प्रदेयाः । तद्यथा—तालीशपत्रस्य एकः कर्षः । मरिचस्य द्वौ । शुण्ठ्याः त्रयः । पिप्पल्याः चत्वारः । त्वक् च एला च ते त्वगेले च प्रत्येकं अर्द्धभागिके प्रदेये । भागश्च इह नियामकः तालीशस्य । स च कर्षः । तदर्द्धं । इत्थं च त्वचः अर्द्धकर्षः । एलायाश्च अर्द्धकर्षः । पिप्पल्यष्टगुणा पिप्पलीभ्यः चतुष्कर्षमिताभ्यः अष्टगुणा द्वात्रिंशत्कर्षमिता सितशर्करा च तत्र प्रदेया । तत् सर्वं एकत्र चूर्णयेत् । तत् चूर्णं श्वासकासारुचिहरं । परं दीपनं अग्निदीपनं । हृत्पाण्डुग्रहणीदोषापहं । वम्यतीसारशूलघ्नं । मूढस्य रुद्धमार्गस्य वातस्य अनुलोमनं च । भवति ॥ १४४—१४६ ॥

---

१४६ । वम्यतीसारशूलघ्नं विबन्धानाहनाशनं इति ख ग पुस्तकयोः ।

कल्पयेद्गुडिकाश्चैतच्चूर्णं पक्त्वा सितोपलाम् ।
गुडिका ह्यग्निसंयोगाच्चूर्णाल्लघुतरा स्मृता ॥१४७॥

तालीशाद्यं चूर्णं गुडिका च ।

शुष्यतां क्षीणमांसानां कल्पितानि विधानवित् ।
दद्यान्मांसादमांसानि बृंहणानि विशेषतः ॥१४८॥
शोषिणे बर्हिणं दद्याद्बर्हिशब्देन चापरान् ।
गृध्रानुलूकांश्चाषांश्च विधिवत् सूपकल्पितान् ॥१४९॥
काकांस्तित्तिरिशब्देन वर्मिशब्देन चोरगान् ।

चूर्णमुक्त्वा गुडिकामाह—कल्पयेदिति । एतच्चूर्णं तालीशाद्यचूर्णं सितोपलां च एकत्र पक्त्वा सितोपलोऽर्धे तच्चूर्णं पक्त्वा आलोड्य गुडिकां कल्पयेत् । कुतः ? हि यतः सा गुडिका अग्निसंयोगात् पाकात् चूर्णादपि लघुतरा स्मृता । तस्मात् स्वल्पाग्नये प्रक्षिप्ते हिता ॥ १४७ ॥

शोषिणामाहारविधिमाह—शुष्यतामित्यादि । विधानवित् विधिज्ञः वैद्यः विशेषतः अन्यमांसेभ्यो विशिष्येव । बृंहणानि मांसादानां मांसाशिनां प्रसहानां मांसानि कल्पितानि सम्यगुपकल्प्य । क्षीणमांसानां शुष्यतां शोषिणां शोषिभ्यः दद्यात् । उक्तं च—प्रसहानां विशेषेण मांसं मांसाशिनां भिषक् । जीर्णार्शोग्रहणीदोषशोषार्तानां प्रयोजयेत् ॥ इति ( च० स्लो० २७ ) ॥ १४८ ॥

मांसादमांसानीति सामान्येन उक्तं । तदेव विशिष्याह—शोषिणे इति । शोषिणे बर्हिणं मयूरं तन्मांसं उपकल्प्य दद्यात् । तदलाभे गृध्रान् उलूकान् चाषांश्च पक्षिणः । अपरान् अन्यान् वा । एवं विधिवत् सूपकल्पितान् सुष्ठु उपकल्पितान् संस्कृतान् कृत्वा । बर्हिशब्देन बर्हिमांसच्छलेन एतानि मयूरमांसानीति कृत्वा दद्यात् । जानंश्चेद् घृणया न भुञ्जीत । कथमपि भुक्तं पुनरुल्लिखेद् वा । एवं विधिवत् सूपकल्पितान्

भृष्टान्मत्स्यान्त्रशब्देन दद्याद् गण्डूपदानपि ॥१५०॥
लोपाकान् स्थूलनकुलान् विड़ालांश्चोपकल्पितान् ।
शृगालशावांश्च भिषक् शशशब्देन दापयेत् ॥१५१॥
सिंहानृक्षांस्तरक्षूंश्च व्याघ्रानेवंविधांस्तथा ।
मांसादान् मृगशब्देन दद्यान्मांसाभिवृद्धये ॥१५२॥
गजखड्गितुरङ्गाणां वेशवारीकृतं भिषक् ।
दद्यान्महिषशब्देन मांसं मांसाभिवृद्धये ॥१५३॥

काकान् तित्तिरिशब्देन दद्यात् । उरगान् सर्पान् सूपकल्पितान् वर्मिशब्देन । वमा मत्स्यभेदः । वाईनमाछ इति वंगेषु ख्यातः । दद्यात् भिषक् । भृष्टान् ... दान् किंचुलकान् केंचो इति ख्यातान् मत्स्यान्त्रशब्देन मत्स्यानां अन्त्राणि इति कथयित्वा दद्यात् । उपकल्पितान् । लोपाकान् लोपाकः लांगूलप्रधानः स्वल्पशृगालः । खेंकशियाल इति ख्यातः । स्थूलान् नकुलान् । शृगालानां शावाः शिशवः । तान् । शशशब्देन शशमांसच्छलेन दापयेत् । सिंहान् । ऋक्षान् भल्लूकान् । तरक्षून् क्षुद्रव्याघ्रान् । तरक्षुस्तु मृगादन इति । व्याघ्रान् । तथा एवंविधान् अन्यान् मांसादान् अपि सूपकल्पितान् क्षीणमांसानां यक्ष्मिणां मांसाभिवृद्धये मृगशब्देन मृगमांसानि एतानि इति कृत्वा । दद्यात् भिषक् ॥ १४६—१५२ ॥

गजखड्गितुरंगाणामित्यादि । गजाः । खड्गिनः गण्डकाः । तुरंगाः अश्वाश्च । ते । एते अमांसादाः । तेषां मांसं वेशवारीकृतं वेशवारीकृत्य । वेशवारः—निरस्थि पिशितं पिष्टं स्विन्नं गुडघृतान्वितं । कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः ॥ इति । शोषिणां मांसाभिवृद्धये महिषशब्देन दद्यात् ॥ १५३ ॥

---

१५० । संभृष्टान् मत्स्यशब्देन इति क पुस्तके ।

मांसेनोपचितांगानां मांसं मांसकरं परम् ।
तीक्ष्णोष्णलाघवाच्छस्तं विशेषान्मृगपक्षिणाम् ॥१५४॥
मांसानि यान्यनभ्यासादनिष्टानि प्रयोजयेत् ।
तेषूपधा सुखं भोक्तुं तथा शक्यानि तानि हि ॥१५५॥
जानन् जुगुप्सन्नैवाद्याज्जग्धं वा पुनरुल्लिखेत् ।
तस्माच्छद्मोपसिद्धानि मांसान्येतानि दापयेत् ॥१५६॥
बर्हितित्तिरिदक्षाणां हंसानां शूकरोष्ट्रयोः ।
खरगोमहिषाणाञ्च मांसं मांसकरं परम् ॥१५७॥

मांसेनेति। मांसेन उपचितांगानां। मांसाशिनामित्यर्थः। मृगपक्षिणां। मांसं परं मांसकरं अन्यमांसेभ्यः अतिबृंहणं। तीक्ष्णोष्णलाघवात् तीक्ष्णत्वात् उष्णत्वात् लाघवात् लघुत्वाच्च विशेषात् अन्येभ्यो मांसेभ्यः विशिष्य शस्तं च ॥ १५४ ॥

ननु किमर्थं गृध्रादीनां मांसान्यन्यनाम्ना देयानीति ? अत आह--मांसानीति। मांसानि यानि अनभ्यासात् अनिष्टानि अनभिमतानि अरुचिकराणि प्रयोजयेत् भिषक्। सुखं रुचिपूर्वकं भोक्तुं तेषु अनिष्टेषु मांसेषु उपधा छलं कार्या। यथा गृध्रोलूकादीनां मांसेषु बर्हिमांसमिति। इत्येवं उपधा कार्या। तानि सम्यगुपकल्प्य अन्यनाम्नैव आतुराय देयानि। तथा कृते तानि सुखं भोक्तुं शक्यानि स्युः। अन्यथा आतुरः जानन् चेत् जुगुप्सन् घृणां कुर्वन् नैव अद्यात् भक्षयेत्। जग्धं वा कथमपि भक्षितं चेत् तत् पुनः घृणया उल्लिखेत् वमेत्। तस्मात् एतानि अनभिमतानि मांसानि छद्मोपसिद्धानि छद्मना छलेन नामान्तरेण सिद्धानि कृत्वा दापयेत् भिषक् ॥१५५। १५६॥

बर्हीति। बर्ही मयूरः। तित्तिरिः। दक्षः कुक्कुटश्च। तेषां। हंसानां। शूकरोष्ट्रयोः शूकरस्य उष्ट्रस्य च। खरः गर्दभः। गौः। महिषश्च। तेषां। मांसं चापि परं मांसकरं ॥ १५७ ॥

१५५। मांसानि यान्यनिष्टानि छद्मसृष्टानि प्रयोजयेदिति क घ पुस्तकयोः।

१५७। खराणां महिषाणां च इति क ग पुस्तकयोः।

योनिरष्टविधा प्रोक्ता मांसानामन्नपानिके ।
तां परीक्ष्य भिषग्विद्वान् दद्यान्मांसानि शोषिणे ॥१५८॥
प्रसहा भूशयानूपवारिजा वारिचारिणः ।
आहारार्थं प्रयोक्तव्या मात्रया वातशोषिणे ॥१५९॥
प्रतुदा विष्किराश्चैव धन्वजाश्च मृगद्विजाः ।
कफपित्तपरीतानां प्रयोज्याः शोषरोगिणाम् ॥१६०॥
विधिवत् सूपसिद्धानि मनोज्ञानि मृदूनि च ।
रसवन्ति सुगन्धीनि मांसान्येतानि भक्षयेत् ॥१६१॥
मांसमेवाश्नतः शोषो माध्वीकं पिबतोऽनु च ।
नियतानल्पचित्तस्य चिरं काये न तिष्ठति ॥१६२॥

योनिरिति । अन्नपानिके अन्नपानविध्यध्याये प्रोक्ता । मांसानां । प्रसहाः । भूशयाः । आनूपाः । जलजाः । जलचारिणः । जांगलाः । विष्किराः । प्रतुदाः । इत्यष्टविधा योनिः प्रोक्ता । विद्वान् भिषक् तां मांसानां योनिं परीक्ष्य शोषिणे मांसानि दद्यात् ॥ १५८ ॥

प्रसहा इति । तथा च प्रसहाः । भूशयाः । आनूपाः । वारिजाश्च । ते । वारिचारिणश्च । तेषां मांसानि एव मत्स्य । वातशोषिणे वातोल्बणाय शोषिणे आहारार्थं प्रयोक्तव्याः । प्रतुदाः विष्किराः धन्वजाः जांगलाश्च मृगद्विजाः । तेषां मांसानि कफपित्ताभ्यां उल्बणाभ्यां परीतानां युक्तानां शोषिणां सम्बन्धे मात्रया प्रयोज्यानि ॥ १५९ । १६० ॥

विधिवदिति । एतानि मांसानि । विधिवत् सूपसिद्धानि सुष्ठु उपसिद्धानि । मनोज्ञानि मृदूनि । रसवन्ति । सुगन्धीनि च । कृत्वा भक्षयेत् ॥ १६१ ॥

मांसमेवेति । मांसं एव मात्रया अश्नतः । माध्वीकं मध्वासवं अनुपिबतः । तथा नियतं एकाग्रं समाहितं । अनल्पं उदारं । प्रशस्तं च । चित्तं यस्य तस्य । तथाविधस्य शोषिणः काये शरीरे शोषः चिरं न तिष्ठति । किन्तु शीघ्रं निवर्त्तते ॥ १६२ ॥

---

१६२ । नियतस्याल्पचित्तस्य चिरं कालं न तिष्ठति इति ख ग घ पुस्तकेषु ।

वारुणीमण्डनित्यस्य बहिर्मार्जनसेविनः ।
अविधारितवेगस्य यक्ष्मा न लभते बलम् ॥१६३॥
प्रसन्नां वारुणीं सीधुमरिष्टानासवान् मधु ।
यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयन् ॥१६४॥
[1] मद्यं तैक्ष्ण्यौष्ण्यवैशद्यसूक्ष्मत्वात् स्रोतसां मुखम् ।
प्रमथ्य विवृणोत्याशु तन्मोक्षात् सप्त धातवः ।
पुष्यन्ति धातुपोषाच्च शीघ्रं शोषः प्रशाम्यति ॥१६५॥

वारुणीति । वारुणीमण्डनित्यस्य वारुणीमण्डं शीलयतः । बहिर्मार्जनसेविनः । बहिर्मार्जनं पश्चात् वक्ष्यमाणं । सेवमानस्य । अविधारितवेगस्य मूत्रपुरीषादिवेगान् अनिरुन्धतश्च पुंसः । यक्ष्मा बलं न लभते । तदुक्तं—मांसमेवाश्नतो युक्त्या माध्वीकं पिबतोऽनु च । अविधारितवेगस्य यक्ष्मा न लभते बलं ॥ सुरां समण्डां माध्वीकमरिष्टान् सीधुमासवान् । यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयन् ॥ स्रोतोविबन्धमोक्षार्थं बलौजःपुष्टये च तत् । इति ( अ० सं० चि० ७ ) ॥ १६३ ॥

मांसमश्नतो यक्ष्मिणोऽनुपानार्थमाह—प्रसन्नामिति । यक्ष्मी मांसानि मात्रया भक्षयन् । अनुपानार्थं यथार्हं यथायोग्यं । प्रसन्नां स्वच्छां वारुणीं मदिरां । सीधुं पक्वेक्षुरसकृतां सुरां । सीधुरिक्षुरसैः पक्वैरिति । अरिष्टान् क्वथितौषधैः कृतान् । अरिष्टः क्वाथसिद्धः स्यादिति । आसवान् । यदपक्वौषधाम्बुभ्यां कृतं मद्यं स आसवः । इति । मधु मार्द्वीकं च पिबेत् ॥ १६४ ॥

मद्याद्यनुपाने गुणमाह—मद्यमिति । मद्यं । तैक्ष्ण्यं तीक्ष्णत्वं । औष्ण्यं उष्णत्वं । वैशद्यं विशदत्वमपिच्छिलत्वं । सूक्ष्मत्वं च । तेषां समाहारः तत् । तस्मात् तैक्ष्ण्यौष्ण्यवैशद्यसूक्ष्मत्वात् तैक्ष्ण्यादिगुणयुक्तत्वात् स्रोतसां मुखं दोषैः रुद्धं प्रमथ्य

१६३ । बर्हिमांमानुसेविनः इति ख ग पुस्तकयोः ।
१६५ । अयं श्लोकः ग ङ ठ पुस्तकेषु न पठ्यते ।

मांसादमांसस्वरसे सिद्धं सर्पिः प्रयोजयेत् ।
सक्षौद्रं पयसा सिद्धं सर्पिर्दशगुणेन वा ॥१६६॥
सिद्धं मधुरकैर्द्रव्यैर्दशमूलकषायकैः ।
क्षीरमांसरसोपेतैर्घृतं शोषहरं परम् ॥१६७॥
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
सयावशूकैः सक्षीरैः स्रोतःसंशोधनं घृतम् ॥१६८॥

प्रविलोड्य आशु विवृणोति प्रसारयति । तन्मोक्षात् स्रोतसां विबन्धस्य मोक्षणात् तेन स्रोतोभिराहाररसस्य सम्यक् वहनात् तदा सप्त धातवः पुष्यन्ति । तुः धातूनां पोषणात् शोषः शीघ्रं प्रशाम्यति । ॥ १६५ ॥

शोषिणामाहारार्थमाह—मांसादेत्यादि । मांसादमांसस्वरसे मांसादानां मांसादीन मांसानि । तेषां स्वरसे । यन्त्रनिष्पीडिताद् द्रव्याद्रस स्वरस उच्यते इति । ( च० श्लो ४ ) चतुर्गुणे सिद्धं सर्पिः शोषिणे प्रयोजयेत् । दशगुणेन पयसा क्षीरेण सिद्धं सक्षौद्रं मधुप्रक्षेपयुतं वा सर्पिः प्रयोजयेत् । अथवा मधुरकैः द्रव्यैः जीवकर्षभकादिभिः मधुरस्कन्धोक्तैः कल्कितैः पादिकैः दशमूलकषायकैः दशमूलक्वाथैः घृतात् द्विगुणैः क्षीरमांसरसोपेतैः क्षीरमांसरसाभ्यां द्विगुणाभ्यां उपेतैः । द्वैगुण्यं च तयोर्मिलितयोः । एवं हि द्रवस्य चातुर्गुण्यं भवति । सिद्धं सर्पिः परं शोषहरं ॥ १६६ । १६७ ॥

पिप्पलीति । पिप्पली । पिप्पलीमूलं । चव्यं । चित्रकः । नागरं च । एतत् पंचकोलं । तैः सयावशूकैः सयवक्षारैः सक्षीरैः सिद्धं । क्षीरे चतुर्गुणे पंचकोलयवक्षारकल्कं पादिकं दत्त्वा । शृतं घृतं स्रोतःसंशोधनं स्रोतसां शोधनं ॥ १६८ ॥

रास्नेति । रास्ना । बला । गोक्षुरकः । स्थिरा शालपर्णी । वर्षाभुः वर्षाभूः पुनर्नवा च । ह्रस्वश्छान्दसः । ताभिः साधितं । जीवन्तीपिप्पलीगर्भं सक्षीरं घृतं । तथाच रास्नादीनां क्वाथे जीवन्तीपिप्पलीकल्कं दत्त्वा । स्नेहपाकविधिना सिद्धंस्त्वं । ततः

रास्नाबलागोक्षुरकस्थिरावर्षाभुसाधितम् ।
जीवन्तीपिप्पलीगर्भं सक्षीरं शोषनुद् घृतम् ॥१६९॥

यवाग्वा वा पिबेन्मात्रां लिह्याद्वा मधुना सह ।
सिद्धानां सर्पिषामेषामद्यादन्नेन वा सह ॥१७०॥

शुष्यतामेष निर्दिष्टो विधिराभ्यवहारिकः ।
बहिःस्पर्शनमाश्रित्य वक्ष्यतेऽतः परं विधिः ॥१७१॥

स्नेहक्षीराम्बुकोष्ठेषु स्वभ्यक्तमवगाहयेत् ।
स्रोतोविबन्धमोक्षार्थं बलपुष्ट्यर्थमेव च ॥१७२॥

उत्तीर्णं मिश्रकैः स्नेहैः पुनराक्तं सुखैः करैः ।
मृद्नीयात् सुखमासीनं सुखश्चोत्सादयेन्नरम् ॥१७३॥

सक्षीरं क्षीरसंयुक्तं । रास्नादीनां क्वाथे समक्षीरे वा साधितं । घृतं शोषनुत् । तदुक्तं—रास्नाबलागोक्षुरकस्थिरावर्षाभुवारिणि । जीवन्तीपिप्पलीगर्भं सक्षीरं शोषजिद् घृतम् ॥ इति ( अ० सं० चि० ७ ) ॥ १६९ ॥

यवाग्वेति । एषां उक्तानां सिद्धानां सिद्धफलानां सर्पिषां मात्रां अग्निबलापेक्षया प्रयुक्तां यवाग्वा सह वा पिबेत् । मधुना सह वा लिह्यात् । अन्नेन सह वा अद्यात् भक्षयेत् ॥ १७० ॥

उपसंहरति—शुष्यतामिति । इति शुष्यतां शोषिणां आभ्यवहारिकः विधिः आहारविधिः निर्दिष्टः उक्तः । बहिर्मार्जनसेविन इत्युक्तं । सम्प्रति बहिर्मार्जनमभिधातुं प्रतिजानीते—बहिस्पर्शनमिति । अतः परं बहिःस्पर्शनं आश्रित्य बहिर्मार्जनमधिकृत्य विधिः वक्ष्यते ॥ १७१ ॥

स्नेहक्षीरेति । स्वभ्यक्तं तैलेन सम्यक् अभ्यक्तगात्रं शोषिणं । स्रोतसां विबन्धः निरोधः । तन्मोक्षार्थं । बलपुष्ट्यर्थं च । स्नेहः । क्षीरं । अम्बु उदकं च । तेषां कोष्ठेषु बृहत्पात्रेषु अवगाहयेत् । ततः स्नेहाद्यन्यतमकोष्ठात् उत्तीर्णं मिश्रकैः मिश्रितैः स्नेहैः

जीवन्तीं शतवीर्य्याञ्च विकसां सपुनर्नवाम् ।
अश्वगन्धामपामार्गं तर्कारीं मधुकं बलाम् ॥१७४॥
विदारीं सर्षपं कुष्ठं तण्डुलानतसीफलम् ।
माषांस्तिलांश्च किण्वं च सर्वमेकत्र चूर्णयेत् ॥१७५॥
यवचूर्णत्रिगुणितं दध्ना युक्तं समाक्षिकम् ।
एतदुत्सादनं कार्य्यं पुष्टिवर्णबलप्रदम् ॥१७६॥
गौरसर्षपकल्केन कल्कैश्चापि सुगन्धिभिः ।
स्नायादृतुसुखैस्तोयैर्जीवनीयौषधैः शृतैः ॥१७७॥
गन्धैः समाल्यैर्वासोभिर्भूषणैश्च विभूषितः ।
स्पृश्यान् संस्पृश्य संपूज्य देवताः सभिषग्द्विजाः ॥१७८॥

पुनः आक्तं अभ्यक्तगात्रं सुखमासीनं तं नरं सुखैः सुखस्पर्शैः करैः सुखं यथा तथा मृद्गीयात् उत्सादयेत् उद्धर्त्तयेच्च ॥ १७२ । १७३ ॥

उत्सादनद्रव्याण्याह—जीवन्तीमिति । जीवन्तीं । शतवीर्यां दूर्वां । विकसां मंजिष्ठां । सपुनर्नवां । अश्वगन्धां । अपामार्गं । तर्कारीं । मधुकं । बलां । विदारीं विदारीकन्दं । सर्षपं । कुष्ठं । तण्डुलान् । अतसीफलं अतसीबीजं । माषान् । तिलान् । किण्वं सुराबीजं च । तत्सर्वं एकत्र चूर्णयेत् । यवचूर्णं सर्वेभ्यस्त्रिगुणं । एतत् सर्वं दध्ना युक्तं समाक्षिकं सक्षौद्रं उत्सादनं कार्यं । तच्च पुष्टिवर्णबलप्रदं ॥ १७४—१७६ ॥

गौरसर्षपेति । गौरसर्षपाणां कल्केन खलिना । अन्यैः सुगन्धिभिः कल्कैश्चापि । उत्सादनं कृत्वा । जीवनीयैः जीवकर्षभादिभिः औषधैः शृतैः । ऋतुसुखैः । यस्मिन् ऋतौ यादृशं तोयं सुखकरं । यथा शीते सुखोष्णं । ग्रीष्मे च सुशीतं । तथाविधैः तोयैः स्नायात् । ततः वासोभिः वस्त्रैः अहतैः समाल्यैः पुष्पमाल्यसहितैः गन्धैश्चन्दनादिभिः

१७५ । माषांस्तिलांश्च बिल्वं च इति क पुस्तके ।
१७६ । द्विगुणितं दध्यवायुक्तं इति च पुस्तके ॥
१७६ । द्विगुणं यवचूर्णं इति ङ पुस्तके

इष्टवर्णरसस्पर्शगन्धवत् पानभोजनम् ।
इष्टमिष्टैरुपहितं हितमद्यात् सुखप्रदम् ॥१७६॥
समातीतानि धान्यानि कल्पनीयानि शुष्यताम् ।
लघून्यहीनवीर्याणि स्वादूनि गन्धवन्ति च ।
यानि प्रहर्षकारीणि तानि पथ्यतमानि हि ॥१८०॥
यच्चोपदेक्ष्यते किञ्चित् क्षतक्षीणचिकित्सिते ।
यक्ष्मिणस्तत् प्रयोक्तव्यं बलमांसाभिवृद्धये ॥१८१॥

भूषणैरलंकारैश्च विभूषितः सन् । स्पृश्यान् गोहिरण्यादीन् संस्पृश्य । सह भिषजः द्विजाश्च । तैः वर्त्तमानाः । ताः देवताः संपूज्य । देवान् द्विजान् भिषजश्च पूजयित्वा । इष्टाः । वर्णः रसः गन्धश्च ते । तद्वत् । इष्टैः वर्णरसस्पर्शगन्धैर्युक्तं । इष्टैः प्रियजनैः उपहितं उपकल्पितं । इष्टं अभिमतं भोक्तुं सुखप्रदं च । पानभोजनं अन्नपानं च अद्यात् भुञ्जीत ॥ १७७—१७६ ॥

समातीतानीति । धान्यानि शूकधान्यानि शमीधान्यानि च । यानि समां वत्सरमतीतानि समातीतानि एकवर्षातीतानि । प्रथमवर्षे उत्पत्तिजन्यं गुरुत्वं स्यात् । तदुक्तं—शूकधान्यं शमीधान्यं समातीतं प्रशस्यते । पुराणं प्रायशो रूक्षं प्रायेणाभिनवं गुरु ॥ इति ( च० श्लो० २७ ) । समातीतत्वात् लघूनि । अहीनवीर्याणि अनतिपुराणत्वात् । अतिपुराणत्वे वीर्यहानिः । धान्यं यावदंकुरजननसमर्थं तावदेव हितं । स्वादूनि मधुररसानि । गन्धवन्ति च । तस्मात् मनसः प्रहर्षकारीणि भवन्ति । तानि तथाविधानि धान्यानि एव पथ्यतमानि । पथ्यतमत्वात् शुष्यतां शोषिणां सम्बन्धे आहारार्थं कल्पनीयानि स्युः । तथाविधैर्धान्यैः शोषिणामन्नमुपकल्पयेत् ॥ १८०॥

यच्चेति । क्षतक्षीणचिकित्सिते पश्चात् अन्यत् यच्चापि किंचित् वृंहणं भेषजमन्नपानं च उपदेक्ष्यते । यक्ष्मिणः बलमांसाभिवृद्धये तत् सर्वं प्रयोक्तव्यं ॥१८१॥

---

१८० । अयं श्लोकः न पठ्यते च पुस्तके ।

यथर्तु विहितैः स्नानैरवगाहैर्विमार्जनैः ।
अभ्यङ्गोत्सादनैश्चैव वासोभिरहतैः प्रियैः ॥१८२॥
वस्तिभिः क्षीरसर्पिर्भिर्मांसैर्मांसरसौदनैः ।
इष्टैर्मद्यैर्मनोज्ञानां गन्धानामुपसेवनैः ॥१८३॥
सुहृदां रमणीयानां प्रमदानाञ्च दर्शनैः ।
गीतवादित्रशब्दैश्च प्रियश्रुतिभिरेव च ॥१८४॥
हर्षणाश्वासनैर्नित्यं गुरूणां समुपासनैः ।
ब्रह्मचर्येण दानेन तपसा देवतार्चनैः ॥१८५॥
सत्येनाचारयोगेण मङ्गलैरप्यहिंसया ।
वैद्यविप्रार्चनाच्चैव रोगराजो निवर्त्तते ॥१८६॥

यथर्तु विहितैरिति । यथर्तु विहितैः शीतोष्णजलैः स्नानः । तेषु अवगाहैः । विमार्जनैः शरीरमार्जनैः । अभ्यंगोत्सादनैः अभ्यंगैः उत्सादनैः उद्वर्त्तनैश्च । उत्सादनं च जीवन्त्यादिभिः प्रागुक्तैः । अहतैः अच्छिन्नैः नूतनैरित्यर्थः । प्रियैः मनोज्ञैः वासोभिः वस्त्रैः । वस्तिभिः । क्षीरसर्पिर्भिः क्षीरैः सर्पिर्भिश्च । मांसैः मांसरसैः । मांसरसौदनैः मांसरसे पक्वैरोदनैश्च । इष्टैः मद्यैः यथार्हं मद्याद्यनुपानैः। मनोज्ञानां गन्धानामुपसेवनैः । माल्यानां भूषणानां च धारणैरपि । सुहृदां तथा रमणीयानां मनोज्ञानां प्रमदानां स्त्रीणां च दर्शनैः । गीतवादित्रशब्दैः । प्रियश्रुतिभिः प्रियवचनश्रवणैश्च । हर्षणाश्वासनैः हर्षणैः आश्वासनैः सान्त्वनैश्च । गुरूणां पूज्यानां समुपासनैः पूजनैः । ब्रह्मचर्येण । ब्रह्मचर्यमुपस्थसंयमः । दानेन । तपसा तपश्चरणेन चान्द्रायणाद्याचरणेन । देवतानां अर्चनैः पूजनैः। सत्येन सत्यभाषणेन । आचारयोगेण सद्वृत्तेन सदाचारेण ।

---

१८२। अयं श्लोको न पठ्यते च पुस्तके ।

१८२। अस्य द्वितीयार्धं ग पुस्तके नास्ति ।

१८६। मङ्गलैरभिहिंसया इति ग ङ ग पुस्तकेषु ।

यया प्रयुक्तया चेष्ट्या राजयक्ष्मा पुरा जितः ।
तां वेदविहितामिष्टिमारोग्यार्थी प्रयोजयेत् ॥१८७॥

तत्र श्लोकौ ।

प्रागुत्पत्तिर्निमित्तानि प्राग्रूपं रूपसंग्रहः ।
समासाद् व्यासतश्चोक्तं भेषजं राजयक्ष्मणः ॥१८८॥

मंगलैः शान्तिस्वस्त्ययनादिभिः दैवव्यपाश्रयैः कर्मभिः । तथा वैद्यविप्रार्चनात् वैद्यानां भिषजां विप्राणां ब्राह्मणानां च अर्चनात् पूजनाच्च । रोगाणां राजा रोगराजः राजयक्ष्मा निवर्त्तते प्रशाम्यति ॥ १८२-१८६ ॥

ययेति । यया इष्ट्या प्रयुक्तया अनुष्ठितया सत्या पुरा राज्ञः चन्द्रस्य यक्ष्मा राजयक्ष्मा जितः निराकृतः । तां वेदविहितां कृष्णयजुर्वेदोक्तां इष्टिं आदित्येष्टिं (कृष्णयजुर्वेद, तैत्तिरीयसंहिता, २ । ३ । ५) । आरोग्यार्थी यक्ष्मी प्रयोजयेत् कारयेत् । तदुक्तं— गन्धमाल्यादिकां भूषामलक्ष्मीनाशनीं भजेत् । सुहृदां दर्शनं गीतवादित्रोत्सवसंश्रुतीः ॥ वस्तयः क्षीरसर्पींषि मद्यं मांसं सुशीलता । दैवव्यपाश्रयं तद्वदथर्वोक्तं च पूजितं । इष्ट्या यया च चन्द्रस्य राजयक्ष्मा पुरा जितः । पुरोहितः प्रयुञ्जीत वेदोक्तां तां जितात्मनः इति ( अ० सं० चि० ७ ) ॥ १८७ ॥

अध्यायार्थसंग्रहं करोति । तत्र श्लोकाविति । राजयक्ष्मणः प्रागुत्पत्तिः प्रथमोत्पत्तिः । सा च दिवौकसां कथ्यतामित्यादिना प्रकरणेनोक्ता । निमित्तानि हेतवश्चतुर्विधाः अयथाबलमारम्भ इत्यादिना समासतः व्यासतश्च उक्ताः । प्राग्रूपं पूर्वरूपं । रूपसंग्रहः । भेषजं च समासात् व्यासतश्च उक्तं । नामहेतुः राजयक्ष्मेति नाम्नो हेतुः क्रोधो यक्ष्मेत्यादिना उक्तः । असाध्यत्वं साध्यत्वं सुखसाध्यत्वं कृच्छ्रसाध्यता च । असाध्यत्वादिकं सर्वैरर्धैरित्यादिना उक्तं । यद्यपि तत्र चिकित्स्यस्तु सर्वरूपोप्यतोन्यथा इति यक्ष्मणः साध्यत्वमात्रमुक्तं तथापि असति बलमांसक्षये स्वल्परूपश्चेत् सुखसाध्यः । सर्वरूपस्तु कृच्छ्रसाध्यः । इति भेदः अनुक्तोऽप्यु-

नामहेतुरसाध्यत्वं साध्यत्वं कृच्छ्रसाध्यता ।
इत्युक्तः संग्रहः कृत्स्नो राजयक्ष्मचिकित्सिते ॥१८९॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
राजयक्ष्मचिकित्सितं नामाष्टमोऽध्यायः ॥८॥

## नवमोऽध्यायः ।

अथात उन्मादचिकित्सितं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ॥ १ ॥
बुद्धिस्मृतिज्ञानतपोनिवासः पुनर्वसुः प्राणभृतां
उन्मादहेत्वाकृतिभेषजानि कालेऽग्निवेशाय शशंस

न्नेयः। साध्यत्वमित्यस्य विवरणं वा कृच्छ्रसाध्यतेति । तत्र कृच्छ्रस
इति कृत्स्नः सर्वः संग्रहः राजयक्ष्माणमधिकृत्य । अस्मिन् राजयक्ष्म
अध्याये भगवता आत्रेयेण पुनर्वसुना उक्तः ॥ १८८ । १८९ ॥

इति वैद्यरत्नश्रीयोगीन्द्रनाथविद्याभूषणकृते चरकोपस्कारे चिकित्सितस्थानेऽष्टमो

नवमोऽध्यायः ।

राजयक्ष्मचिकित्सितमभिधाय क्रमप्राप्तमुन्मादचिकित्सितं ब्रूते—अथा
सर्वं पूर्ववद् व्याख्येयं ॥ १ ॥

बुद्धीति। बुद्धिः वस्तूनामवबोधः। स्मृतिः स्मरणं । अनुभूतविषयासंप्रमोषः
इति (पातंजल, समाधि, ११) । ज्ञानं तत्त्वतः अवधारणं । तत्त्वज्ञानमित्यर्थः ।
द्वन्द्वसहनं कृच्छ्रचान्द्रायणव्रताद्यनुष्ठानं च । तानि । तेषां निवासः अ
प्राणान् बिभ्रति धारयन्तीति प्राणभृतः प्राणिनः । तेषां शरणे रक्षणे साधुः
पुनर्वसुः भगवान् आत्रेयः । अन्तेसदा अग्निवेशेन । काले अवसरे । पृष्टः उ
हेत्वादिकं तस्मै अग्निवेशाय । उन्मादस्य हेतुर्निदानं । आकृतिः लक्षणं ।
तानि । शशंस कथयामास ॥ २ ॥

विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम् ।
उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमाश्च चेष्टाः ॥३॥
तैरल्पसत्त्वस्य मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य ।
स्रोतांस्यधिष्ठाय मनोवहानि विमोहयन्त्याशु नरस्य चेतः ॥४॥
धीविभ्रमः सत्त्वपरिप्लवश्च पर्य्याकुला दृष्टिरधीरता च ।
अबद्धवाक्त्वं हृदयञ्च शून्यं सामान्यमुन्मादगदस्य लिङ्गम् ॥५॥

तत्रादावुन्मादस्य सामान्यतो हेतुं सम्प्राप्तिं लिंगं च वक्ति । हेतुमाह—विरुद्धेति । विरुद्धानि संयोगादिभिः । यथा मत्स्याः पयसा विरुध्यन्ते । दुष्टानि गरादिभिः । अशुचीनि अमेध्यानि च । तथाविधानि भोजनानि अन्नपानानि । देवाः । गुरवः पूज्याः । द्विजाश्च । तेषां प्रधर्षणं अभिभवः । भयं हर्षश्च तौ पूर्वौ यस्य स भयहर्षपूर्वः मनोऽभिघातः । भयहर्षाभ्यां मनसः अभिघातः । भयहर्षेत्युपलक्षणं । क्रोधशोकचिन्तोद्वेगादिभिश्चापि मनसः अभिघातः । विषमाः चेष्टाः शारीरचेष्टाश्च । एतत् सर्वं उन्मादस्य हेतुः निदानं ॥ ३ ॥

हेतुमुक्त्वा सम्प्राप्तिमाह—तैरिति । मलाः दोषाः वातादयः । तैः उक्तैः हेतुभिः विरुद्धान्नपानादिभिः दुष्टाः कुपिताः सन्तः । अल्पसत्त्वस्य अल्पसत्त्वगुणस्य दुर्बलमनसः नरस्य बुद्धेः ज्ञानस्मृत्यादीनां चापि निवासं आश्रयं हृदयं प्रदूष्य । मनोवहानि स्रोतांसि अधिष्ठाय । तस्य चेतः आशु विमोहयन्ति भ्रंशयन्ति ॥ ४ ॥

लिंगमाह—धीविभ्रम इति । धीविभ्रमः बुद्धिभ्रंशः । सत्त्वस्य मनसः परिप्लवः अतिचांचल्यं । पर्याकुला दृष्टिः नेत्रयोः व्याकुलतया इतस्ततः प्रेरणं । अधीरता । अबद्धा असंबद्धा वाक् यस्य तस्य भावः तत् अबद्धवाक्त्वं । हृदयं शून्यं भाववर्जितं च । एतत् सर्वं उन्मादगदस्य उन्मादरोगस्य । निजागन्तुनिमित्तभेदात् द्विविधस्य । निजस्य पुनश्चातुर्विध्यकल्पने पंचविधस्यापि वा । सामान्यं लिंगं ॥ ५ ॥

स मूढचेता न सुखं न दुःखं नाचारधर्मौ कुत एव २।...
विन्दत्यपास्तस्मृतिबुद्धिसंज्ञो भ्रमत्ययं चेत इतस्ततश्च ॥६
समुद्भ्रमं बुद्धिमनःस्मृतीनामुन्मादमागन्तुनिजोत्थमाहुः ।
तस्योद्भवं पञ्चविधं पृथक् तु वक्ष्यामि लिङ्गानि ...

स मूढचेता इति। स मूढचेताः विभ्रान्तचित्तः पुमान्। न सुखं विन्दति न दुःखं विन्दति। न वा आचारधर्मौ आचारं धर्मं च विन्दति। अतः स शान्तिं चेतसो निर्वृतिं विन्दति? न कुतोऽपि शान्तिं लभते। ... अपास्ताः नष्टाः। स्मृतिः। बुद्धिः। संज्ञा च। ताः यस्य स तथोक्तः। अयं चेतः इतस्ततः भ्रमति भ्रामयति। णिजर्थोऽन्तर्भूतः ॥ ६ ॥

समुद्भ्रममिति। बुद्धिमनःस्मृतीनां समुद्भ्रमं विभ्रंशं। एतदुन्मादस्य तथाच—उन्मादं पुनर्मनोबुद्धिसंज्ञाज्ञानस्मृतिभक्तिशीलचेष्टाचारविभ्रंशं विद्यात् (च० नि० ७)। बुद्ध्यादीनां विभ्रंशरूपं उन्मादं प्रथमं तावत् ... आगन्तुनिजोत्थं आगन्तूत्थं आगन्तुजं निजोत्थं शारीरदोषोत्थं वात... निमित्तं च इति द्विविधं आहुः भिषजः। दोषाणां पृथक्सन्निपाताभ्यां चतुर्धा. नात् निजः पुनश्चतुर्विधो भवति। तेनोन्मादः पंचविधः। तदुक्तमष्टोदरीये— इति। वातपित्तकफसन्निपातागन्तुनिमित्ताः। इति। एवं पंचविधस्य तस्य तस्य। पंचविधं। उद्भवत्यस्मादिति उद्भवः कारणं। तं। लिंगानि ... पृथक् पृथक् एकैकस्य विशिष्य वक्ष्यामि। सामान्यतो हेतुलिंगानि ...

ननु कथं पंचोन्मादा इत्युच्यते? विषजोऽप्युन्मादोऽस्ति। तथाच सुश्रुतः षति षष्ठश्च। इति (सु० उ० ६२)। तेन विषजमादाय उन्मादाः षड् भवन्ति। वृद्धवाग्भटः—षडुन्मादा भवन्ति। वातपित्तकफसन्निपातविषनिमित्ताः। ... सं० उ० ६)। इति चेत्? उच्यते। विषजस्य मदसंज्ञतया मदे अन्तर्भावात्

७। तं विभ्रमं बुद्धिमनःस्मृतीनां इति ख ग पुस्तकयोः।

रूक्षाल्पशीतान्नविरेकधातुक्षयोपवासैरनिलोऽतिवृद्धः ।
चिन्तादिदुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिञ्चाप्युपहन्ति शीघ्रम् ॥८॥
अस्थानहासस्मितनृत्यगीतवागङ्गविक्षेपणरोदनानि ।
पारुष्यकार्श्यारुणवर्णताश्च जीर्णे बलञ्चानिलजस्य रूपम् ॥९॥

दभिन्नचिकित्सतया निजेनापि संग्रहाच्च नेह पृथगभिधानं । तथाच सुश्रुते तत्रैव—यथास्वं तत्र भेषजं । स चापवृद्धस्तरुणो मदसंज्ञां बिभर्ति च ॥ इति ( सु०उ० ६२)। स च मदेऽपि निजे अन्तर्भवति । तथाच विषिशोणितोये—यश्च मद्यकृतः प्रोक्तो विषजो रौधिरश्च यः । सर्व एव मदा नर्त्ते वातपित्तकफात् त्रयात् ॥ इति ॥ ७ ॥

तत्रादौ वातजस्य निदानपूर्वकसंप्राप्तिमाह—रूक्षाल्पेति । अनिलो वातः । रूक्षं अल्पं शीतं च यत् अन्नं तत् । विरेकः विरेचनं दोषनिर्हरणं । तेन वमनं विरेचनं च । विरेचनशब्दस्य उभयवाचित्वात् । तद्वक्ष्यति—उभयं वा शरीरमलविरेचनात् विरेचनशब्दं लभते । इति ( च० क० १ ) ॥ धातुक्षयः रसादीनां ह्रासः । उपवासश्च । तैः । अतिवृद्धः प्रवृद्धः सन् । अल्पसत्त्वस्य पुंसः । चिन्तादिभिः दुष्टं उपहतं । आदिना कामक्रोधलोभशोकहर्षभयादीनां ग्रहणं । चिन्तादिजुष्टमिति क्वचित् पाठः । चिन्तादिभिः जुष्टं सेवितं युक्तमित्यर्थः । हृदयं प्रदूष्य बुद्धिं स्मृतिं चापि शीघ्रं उपहन्ति विभ्रंशयति ॥ ८ ॥

वातजस्य लिंगमाह—अस्थानहासेति । अस्थाने हासादीनामविषये । हासः उच्चैर्हास्यं । स्मितमीषद्धास्यं । नृत्यं । गीतं । वाक् वचनं । अंगानां विक्षेपणं अंगविक्षेपणं । रोदनं च । तानि । पारुष्यं । कार्श्यं कृशत्वं । अरुणवर्णता च । अरुणवर्णकारित्वात् वातस्य । ताः । आहारे जीर्णे सति व्याधेर्बलं । इति अनिलजस्य वातजस्य उन्मादस्य रूपं लिंगं ॥ ९ ॥

---

८। चिन्तादिजुष्टं इति ख पुस्तके । चिन्ताप्रदुष्टं इति ठ पुस्तके ।

अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम् ।
उन्मादमत्युग्रमनात्मकस्य हृदि स्थितं पूर्ववदाशु कुर्यात् ॥१०॥
अमर्षसंरम्भविनग्नभावाः सन्तर्जनाभिद्रवणौष्ण्यरोषाः ।
प्रच्छायशीतान्नजलाभिलाषाः पीता च भाः पित्तकृतस्य लिङ्गम् ॥११॥
संपूरणैर्मन्दविचेष्टितस्य सोष्मा कफो मर्मणि सम्प्रवृद्धः ।
बुद्धिं स्मृतिञ्चाप्युपहत्य चित्तं प्रमोहयन् सञ्जनयेद्विकारम् ॥१२॥

पित्तजस्य निदानं सम्प्राप्तिञ्चाह—अजीर्णेति । पित्तं । अजीर्णानि । कटूनि । अम्लानि । विदाहीनि । अशीतानि उष्णानि च । तानि । तैः अजीर्णकट्वम्लविदाह्यशीतैः । तथाविधैः भोज्यैः आहारैः चितं संचितं । ततः उदीर्णवेगं प्रकुपितं । अनात्मकस्य अनात्मवतः पुंसः हृदि स्थितं सत् हृदयं प्रदूष्य पूर्ववत् आशु अत्युग्रं अतिदारुणं उन्मादं कुर्यात् जनयेत् ॥ १० ॥

पित्तजस्य लिंगमाह—अमर्षेति । अमर्षः अक्षमा । संरम्भः आरम्भः । अस्थाने अमर्षसंरम्भौ । विनग्नभावः विनग्नत्वं च । ते । संतर्जनं भर्त्सनं । अभिद्रवणं पलायनं । औष्ण्यं गात्रस्य उष्णत्वं । रोषः क्रोधश्च । ते । प्रकृष्टा छाया यत्र तत् प्रच्छायं स्थानं । तथा शीते । अन्नं जलं च ते अन्नजले च । तेषु अभिलाषाः । छायायां शीतयोरन्नजलयोश्च अभिलाषः । पीता भाः पीतावभासत्वं गात्राणां । आहारे जीर्यमाणे बलं चापि । एतत् सर्वं पित्तकृतस्य उन्मादस्य लिंगं रूपं ॥ ११ ॥

कफजस्य निदानं सम्प्राप्तिं चाह—संपूरणैरिति । मन्दं विचेष्टितं यस्य तस्य मन्दविचेष्टितस्य । प्रायेण शयनासनस्थानादिषु प्रसक्तस्य । एतन्निदानं । तथाविधस्य पुंसः सोष्मा कफः । सोष्मा आतुरः । तत्सम्बन्धित्वेन इह कफोऽपि सोष्मा उच्यते । येन तज्जन्यत्वेन कफजोन्मादे सोष्मत्वमपि लिंगं । इति व्यज्यते । सोष्मत्वमुष्णाभिलाषित्वं । कफोन्मादे उष्णाभिलाषित्वं । निद्रापरोऽल्पकथनोऽल्पभुगुष्णसेवी रात्रौ भृशं भवति चापि कफप्रकोपात् । इति (सु० उ० ६२) । सोष्मा सपित्त इति केचित् । तदयुक्तं । तथात्वे द्वन्द्वजः स्यात् । कफः सम्पूरणैः कुक्षेः सम्यक्

१० । उन्मादमत्युग्रमनल्पकस्य इति ठ पुस्तके ।

वाक्चेष्टितं मन्दमरोचकश्च नारीविविक्तप्रियता च निद्रा ।
छर्दिश्च लाला च बलञ्च भुक्ते नखादिशौक्ल्यञ्च कफात्मकस्य॥१३॥
यः सन्निपातप्रभवोऽतिघोरः सर्वैः समस्तैः स तु हेतुभिः स्यात्।
सर्वाणि रूपाणि बिभर्त्ति तादृग् विरुद्धभैषज्यविधिर्विवर्ज्यः॥१४॥
देवर्षिगन्धर्वपिशाचयक्षरक्षःपितॄणामभिधर्षणानि ।
आगन्तुहेतुर्नियमव्रतादि मिथ्याकृतं कर्म च पूर्वदेहे ॥१५॥

पूरणैः अतिभोजनैरित्यर्थः । मन्दचेष्टितैश्चापि । एवमादिभिः श्लेष्मणः प्रकोपणैः मर्मणि हृदये संप्रवृद्धः सन् । बुद्धिं स्मृतिं चापि उपहत्य । चित्तं विमोहयन् विकारं उन्मादाख्यं जनयेत् ॥ १२ ॥

कफजोन्मादस्य लिंगमाह—वाक्चेष्टितमिति । वाक् चेष्टितं शारीरं च । तयोः समाहारः । तत् मन्दमल्पं । अल्पवाक्त्वं अल्पचेष्टत्वं च । अरोचकः । नारी । विविक्तं निर्जनं स्थानं च । तयोः प्रियता । निद्रा अतिनिद्रा । छर्दिः । लाला लालास्रवणं । आहारे भुक्ते भुक्तमात्रेव व्याधेर्बलं । नखादीनां शौक्ल्यं शुक्लवर्णत्वं । आदिशब्देन त्वङ्मूत्रनेत्रादीनां ग्रहणं । एतत् सर्वं कफात्मकस्य उन्मादस्य लिंगं ॥ १३ ॥

त्रयाणामुक्तहेतुलिंगसंमिश्रणात्मकं सन्निपातजमाह—यः सन्निपातेति । यः उन्मादः । सन्निपातः प्रभवो यस्य स सन्निपातप्रभवः त्रिदोषजः । सः अतिघोरः अतिदारुणः । सर्वैः वातिकादिषु त्रिषु उक्तैः हेतुभिः समस्तैर्मिलितैरेव स्यात् । तादृक् सन्निपातज उन्मादः सर्वाणि वातिकाद्युक्तानि रूपाणि बिभर्ति धारयति । स च । विरुद्धो भैषज्यविधिर्यस्य स विरुद्धभैषज्यविधिः । त्रिदोषजे प्रत्येकप्रत्यनीका क्रिया कार्या । सा च परस्परविरोधिनी । तेन विरुद्धभैषज्यविधिः । तस्मात् विवर्ज्यः वर्जनीयः । असाध्य इत्यर्थः ॥ १४ ॥

निजश्चतुर्विधः उक्तः । सम्प्रति आगन्तुरुच्यते । तत्रादावागन्तुहेतुमाह—देवर्षीति । देवाः । ऋषयः । गन्धर्वाः । पिशाचाः । यक्षाः । रक्षांसि राक्षसाः । राक्षसब्रह्म-

अमर्त्यवाग्विक्रमवीर्यचेष्टो ज्ञानादिविज्ञानबलादिभिर्यः ।
उन्मादकालोऽनियतश्च यस्य भूतोत्थमुन्मादमुदाहरेत्तम् ॥१६॥
अदूषयन्तः पुरुषस्य देहं देवादयः स्वैस्तु गुणप्रभावैः ।
विशन्त्यदृश्यास्तरसा यथैव च्छायातपौ दर्पणसूर्यकान्तौ ॥१७॥

राक्षसभेदेन द्विविधानि । पित्तरश्च । ते । देवादयः अष्टौ ग्रहाः । ग्रहाणामसंख्येयत्वेऽपि ते च आविष्कृततमत्वादुक्ताः । तेषां अभिधर्षणानि । इह मिथ्याकृतं अयथाविधि आचरितं नियमव्रतादि । पूर्वदेहे च मिथ्याकृतं कर्म अप्रशस्तं कर्म । एतत् सर्वं उन्मादस्य आगन्तुहेतुः । आगन्तोरुन्मादस्य हेतुर्वा ॥ १५ ॥

आगन्तुजस्य सामान्यतो लिंगमाह—अमर्त्येति । यः उन्मादी पुमान् । अमर्त्याः अमानुष्यः । अमर्त्या देवादयः । तेषामिव वाक् । विक्रमः पराक्रमः । वीर्यं शौर्यं । चेष्टा शारीरक्रिया च । ताः यस्य तथोक्तः । ज्ञानादिभिः । आदिना बुद्धिस्मृत्यादीनां ग्रहणं । विज्ञानं शिल्पादिषु ज्ञानं । विज्ञानं शिल्पशास्त्रयोः । इति । बलं च । आदिशब्देन पौरुषपराक्रमादीनां संग्रहः । तदादिभिश्च अमर्त्यैः उपलक्षितः । यस्य उन्मादिनः उन्मादस्य कालः अनियतः । कदाचित् प्रातः । कदाचित् मध्याह्नः । कदाचित् वा सायं । इत्येवमनियतः । न तु वातजादीनां आहारजरणादिकालवत् नियतः । वातिकादिषु बलं यथा आहारजरणादिकालनियतं । नैवं यस्य । तं तथाविधं उन्मादं भूतोत्थं उदाहरेत् । भूता देवादयो ग्रहाः ॥ १६ ॥

अदूषयन्त इति । देवादयः पुरुषस्य अभिगम्यस्य देहं अदूषयन्तः । वातादयो यथा शरीरं दूषयन्ति नैवं देवादयः । देवादीनामाविशतां शरीरदूषणत्वे तज्ज उन्मादो निजादभिन्न एव स्यात् । स्वैः गुणप्रभावैः अदृश्या एव तरसा वेगेन देहं विशन्ति आविशन्ति । तत्र दृष्टान्तमाह—यथैवेति । यथा छाया प्रतिबिम्बं आतपश्च तौ क्रमात् दर्पणः सूर्यकान्तश्च तौ विशतः । यथा स्वगुणप्रभावैः छाया दर्पणं विशति । यथा वा सूर्यकिरणः सूर्यकान्तमणिं विशति । न च दृश्यते । तद्वत् । सुश्रुतेनाप्युक्तं—दर्पणादीन् यथा च्छाया शीतोष्णं प्राणिनं यथा । स्वमणिं भास्करस्यार्चिर्यथा देहं

आघातकालास्तु सपूर्वरूपाः प्रोक्ता निदानेऽथ सुरादिभिश्च ।
उन्मादरूपाणि पृथङ्निबोध कालञ्च गम्यान् पुरुषांश्च तेषाम् ॥ १८ ॥

तद्यथा । सौम्यदृष्टिं गम्भीरमधृष्टमकोपनमस्वप्नमभोजनाभिलाषिणमल्पस्वेदमूत्रपुरीषवाचं शुभगन्धं फुल्लपद्मवदनमिति देवोन्मत्तं विद्यात् ॥ १९ ॥

च देहधृक् ॥ विशन्ति न च दृश्यन्ते ग्रहास्तद्वच्छरीरिणं । इति (सु० उ० ६०)। देहधृक् जीवात्मा ॥ १७ ॥

आघातकालास्त्विति । आघातकालाः तु पुनः सपूर्वरूपाः पूर्वरूपसंहिताः प्राक् निदानस्थाने प्रोक्ताः । तस्मात् पुनरिह नाभिधास्यन्ते । अभिगमनीयानां पुंसामाघातकालाः आगन्तून्मादस्य च पूर्वरूपाणि निदानस्थाने उक्तानि । क्रमात् पापस्य कर्मणः समारम्भे इत्यादिना तत्र देवादिप्रकोपनिमित्तेनागन्तून्मादेन पुरस्कृतस्येत्यादिना च । अथ साम्प्रतं सुरादिभिर्देवादिभिः अष्टाभिर्ग्रहैः कृतस्य उन्मादस्य रूपाणि लिंगानि अष्टविधानि । कालं अभिगमनकालं । गम्यान् पुरुषांश्च । पृथक् पृथक् मया वक्ष्यमाणान् निबोध जानीहि । यद्यपि आविशन्तो देवादयो न दृश्यन्ते । तेषामावेशस्तु अनुरूपैः आविश्यमानस्य ज्ञानविज्ञानशीलवेशवाक्चेष्टाचारादिभिः हेतुभिरेव अनुमेयः ॥ १८ ॥

तत्रादौ देवकृतोन्मादस्य लक्षणमाह—तद्यथेत्यादि । सौम्यदृष्टिं प्रसन्नदृष्टिं । गम्भीरं गाम्भीर्ययुक्तं । अधृष्टं लज्जाशीलं । अकोपनं अक्रोधनं । अस्वप्नं अनिद्रं । अभोजनाभिलाषिणं भोजने अनभिलाषिणं । अल्पाः स्वेदः मूत्रं पुरीषं वाक् च ताः यस्य तं तथोक्तं । शुभगन्धं । फुल्लपद्मवदनं प्रफुल्लपद्मोपममुखं । इति हेतोः सौम्यदृष्टित्वादिभिः लिंगैः देवोन्मत्तं देवग्रहैः उन्मत्तं विद्यात् जानीयात् ॥ १९ ॥

१९ । अमूत्रपुरीषवातं इति क पुस्तके ।

गुरुवृद्धसिद्धर्षीणामभिशापाभिचाराभिध्यानानुरूपचेष्टाहाव्याहारं तैरुन्मत्तं विद्यात् ॥२०॥

अप्रसन्नदृष्टिमपश्यन्तं निद्रालुं प्रतिहतवाचमनन्नाभिलाषिणमरोचकाविपाकपरीतञ्च पितृभिरुन्मत्तं विद्यात् ॥२१॥

ऋषिभिरुन्मत्तस्य लक्षणमाह—गुरुवृद्धेत्यादि । गुरवः वृद्धाः सिद्धा ऋषयश्च ते । गुरुवृद्धसिद्धानामसूत्रितानामप्युदाहरणं ऋषिसधर्मत्वात् । गुर्वादयस्त्रयो ग्रहभेदाः । तथाच–अष्टादश ग्रहाधिपतयः । तद्यथा—सुरासुरगन्धर्वोरगयक्षब्रह्मराक्षसराक्षसपिशाचप्रेतकूष्माण्डककालादौ किरवेतालपितृऋषिगुरुसिद्धवृद्धाश्च । इति ( अ० सं० उ० ७) । इत्थं च जल्पकल्पतरौ गुरवश्च वृद्धाश्च सिद्धाश्च ते ऋषयश्चेति गुर्वादयस्त्रयो विशेषणशब्दा ऋषिशब्दस्येति गुर्वादीनां यत् ऋषिविशेषणत्वेनाभिधानं तच्चिन्त्यं। तेषां गुरुवृद्धसिद्धर्षीणामभिशापः । अभिचारः । अभिध्यानं अभिध्या च । अभिध्या परस्वविषयस्पृहेति । तेषां अनुरूपाः चेष्टा आहारः व्याहारो वचनं च ते यस्य तं तथोक्तं । अभिशापादीनि गुर्वादीनां कार्याणि । तदनुरूपं यस्य उन्मादिनः चेष्टादिकं । तैः लिंगैः तं तैः गुर्वादिभिः उन्मत्तं विद्यात् ॥ २० ॥

पितृभिरुन्मत्तस्य लक्षणमाह—अप्रसन्नदृष्टिमित्यादि । अप्रसन्नदृष्टिं । अपश्यन्तं लोकान् प्रति दृष्टिपातमकुर्वन्तं । निद्रालुं निद्राशीलं । प्रतिहता निरुद्धा वाक् यस्य तं । अनन्नाभिलाषिणं अन्ने अनभिलाषिणं । पितृभोज्ये तिलगुडादौ साभिलाषत्वात् । तथाच– मांसेप्सुस्तिलगुडपायसाभिकामस्तद्भक्तो भवति पितृग्रहाभिजुष्टः । इति ( सु० उ० ६० ) । तेन अरोचकेनापौनरुक्त्यं । आरोचकाविपाकाभ्यां परीतं युक्तं । अरोचकिनं मन्दाग्निं च । अप्रसन्नदृष्टित्वादिभिः लिंगैः तं पितृभिरुन्मत्तं विद्यात् ॥ २१ ॥

सुखवाद्यनृत्यगीतान्नपानस्नानमाल्यधूपगन्धरतिं रक्तवस्त्रबलिकर्महास्यकथानुयोगप्रियं शुभगन्धञ्च गन्धर्वोन्मत्तं विद्यात् ॥ २२ ॥

असकृत्स्वप्नरोदनहासिनं नृत्यगीतवाद्यपाठकथान्नपानस्नानमाल्यधूपगन्धरतिं रक्तविप्लुताक्षं द्विजातिवैद्यपरिवादिनं रहस्यभाषिणं च यक्षोन्मत्तं विद्यात् ॥२३॥

नष्टनिद्रमन्नपानद्वेषिणमनाहारमप्यतिबलिनं शस्त्रशोणितमांसरक्तमाल्याभिलाषिणं संतर्जकं राक्षसोन्मत्तं विद्यात् ॥२४॥

गन्धर्वैरुन्मत्तस्य लक्षणमाह—सुखवाद्येति। सुखवाद्यं सुखवादनं। नृत्यं। गीतं। अन्नपानं। स्नानं। माल्यं। धूपः। गन्धश्च। तेषु रतिर्यस्य तं तथोक्तं। रक्तवस्त्रं। बलिकर्म। हास्यं। कथा जल्पनं। अनुयोगः पृच्छा। हास्यकथायाः अनुयोगो वा। ते प्रिया यस्य तं। शुभगन्धं च। एभिर्लिङ्गैः तं गन्धर्वोन्मत्तं गन्धर्वैरुन्मत्तं विद्यात् ॥ २२ ॥

यक्षैरुन्मत्तस्य लक्षणमाह—असकृदित्यादि। असकृत् पुनः पुनः। स्वप्नो निद्रा। रोदनं। हासश्च। ते विद्यन्ते अस्य तद्वान्। तं स्वप्नरोदनहासिनं। नृत्यं। गीतं। वाद्यं। पाठः पठनं। कथा जल्पनं। अन्नपानं। स्नानं। माल्यं। धूपः। गन्धश्च। तेषु रतिर्यस्य तं। रक्ते रक्तवर्णे विप्लुते भयचकिते च अक्षिणी यस्य तं रक्तविप्लुताक्षं। रक्तत्रस्तविप्लुताक्षमिति वृद्धवाग्भटः ( अ० सं० उ० ७ )। द्विजातयः। वैद्याश्च। तान् परिवदितुं निन्दितुं शीलं अस्य तं। रहस्यभाषिणं गुह्यभाषिणं च। असकृत् स्वप्नरोदनादिभिर्लिङ्गैः तं यक्षोन्मत्तं विद्यात् ॥ २३ ॥

राक्षसोन्मत्तस्य लक्षणमाह—नष्टनिद्रमिति। नष्टनिद्रं निशाविचारिणं। अन्नपानद्वेषिणं। अनाहारमपि अतिबलिनं। शस्त्रं। शोणितं रक्तं। मांसं। रक्तमाल्यं

२२। हास्यकलायोगप्रियं इति ठ पुस्तके।

प्रहासनृत्यप्रधानं देवविप्रवैद्यद्वेषावज्ञाभिः स्तुतिवेदमन्त्र-शास्त्रोदाहरणैः काष्ठादिभिरात्मपीड़नेन च ब्रह्मराक्षसोन्मत्तं विद्यात् ॥२५॥

अस्वस्थचित्तं नृत्यगीतहासिनं बद्धावद्धप्रलापिनं सङ्कर-कूटमलिनरथ्याचेलतृणाश्मकाष्ठाधिरोहणरतिं भिन्नरूक्षस्वरं नग्नं विधावन्तं नैकत्र तिष्ठन्तं दुःखान्यावेदयन्तं नष्टस्मृतिं च पिशाचोन्मत्तं विद्यात् ॥ २६ ॥

च। तान्यभिलपतीति तं। शोणिताद्यभिलाषिणं। संतर्जकं संतर्जनकारिणं च। उक्तैर्लिंगैः तं राक्षसोन्मत्तं विद्यात् ॥ २४ ॥

ब्रह्मराक्षसैरुन्मादितस्य लक्षणमाह—प्रहासनृत्येति। प्रहासः। नृत्यं च। ते प्रधाने यस्य तं प्रहासनृत्यप्रधानं हासनृत्यप्रियं। देवाः। विप्राः ब्राह्मणाः। वैद्याश्च। तेषु द्वेषाः अवज्ञाश्च। ताभिः। स्तुतिः। वेदः। मन्त्रः। शास्त्रं धर्मशास्त्रं। तेषामुदाहरणानि पठनानि। तैः। काष्ठादिभिः काष्ठलोष्टशस्त्रमुष्ट्यादिभिः। आ-त्मनः पीडनं अभिघातः। तेन च। एभिरुपलक्षितं। हेतुभिर्वा। तं ब्रह्मराक्षसोन्मत्तं विद्यात् ॥ २५ ॥

पिशाचोन्मत्तस्य लक्षणमाह—अस्वस्थचित्तमिति। अस्वस्थचित्तं। नृत्यगीत-हासिनं। बद्धावद्धं सम्बद्धमसम्बद्धं च प्रलपितुं शीलमस्य तं बद्धावद्धप्रलापिनं। संकरः संमार्जनीक्षिप्तरजस्तृणादि। संमार्जनी शोधनी स्यात् संकरोऽवकरस्तया। क्षिप्ते ॥ इति। कूटः मृत्तिकाराशिः। मलिना रथ्या मार्गः। मलिनं चेलं वस्त्रखण्डं च। तृणानि तृणराशिः। अश्मा प्रस्तरं। काष्ठं च। तानि। तेषु अधिरोहणं। तत्र रतिर्यस्य तं। भिन्नौ नैकविधौ रूक्षौ च वर्णः स्वरश्च तौ यस्य तं। नग्नं विवस्त्रं। विधावन्तं इतस्ततो धावन्तं। न एकत्र एकस्मिन् स्थाने तिष्ठन्तं। आत्मनः दुःखानि आवेदयन्तं

---

२६। अस्वस्थचित्तं स्थानमलभमानं नृत्यगीत० इति ख ग ट पुस्तकेषु।

तत्र चौक्षाचारं तपःस्वाध्यायकोविदं नरं प्रायः शुक्लप्रतिपदि त्रयोदश्यां च छिद्रमवेक्ष्याभिधर्षयन्ति देवाः। स्नानशुचिविविक्त-सेविनं धर्मशास्त्रश्रुतिवाक्यकुशलं प्रायः षष्ठ्यां नवम्यां चर्षयः। मातापितृगुरुवृद्धसिद्धाचार्योपसेविनं प्रायो दशम्याममावस्यायाश्च पितरः। गन्धर्वाः स्तुतिगीतवादित्ररतिं परदारगन्धमाल्य-प्रियं चौक्षाचारं प्रायो द्वादश्यां चतुर्दश्यां च। सत्त्वबलरूपगर्व-शौर्ययुक्तं माल्यानुलेपनहास्यप्रियमतिवाक्प्रवणं प्रायः शुक्लैका-

अन्यस्मै। नष्टस्मृतिं च। अस्वस्थचित्ततादिभिर्लिङ्गैः तं पिशाचोन्मत्तं पिशाचैरुन्मत्तं विद्यात्॥ २६॥

रूपाण्युक्तानि। सम्प्रति अभिगमनकालमाह— तत्रेत्यादि। तत्र तेष्वष्टासु मध्ये देवाः ग्रहाः। चौक्षः शुचिराचारो यस्य तं चौक्षाचारं। तपः। स्वाध्यायः वेदाध्ययनं च। तत्र कोविदः पंडितः। तं। तथाविधं नरं। छिद्रं अन्तरमवकाशं निदाने पापस्य कर्मणः समारम्भे इत्यादिना प्रागुपदर्शितं। अवेक्ष्य। प्रायः शुक्लायां प्रतिपदि त्रयोदश्यां च अभिधर्षयन्ति आविशन्ति। छिद्रमवेक्ष्य अभिधर्षयन्तीति एतत् सर्वत्र योज्यं। इह सर्वत्र प्रायःशब्दग्रहणं तत्र तत्र अन्यस्यामपि तिथावभिधर्षणं ख्यापयति। शुक्लप्रतिपदादिषु पुनर्बाहुल्येन। तेन देवग्रहाः पौर्णमास्यामित्यादिवक्ष्यमाणसुश्रुतवचनमविरुद्धं। ऋषयः। स्नानं। शुचि द्रव्यं। विविक्तं स्थानं च। तानि सेवितुं शीलमस्य तं। धर्मशास्त्रं स्मृत्यादिकं। श्रुतिर्वेदश्च। तयोर्वाक्यानि वचनानि। तेषु कुशलः। तं। तथाविधं नरं छिद्रमवेक्ष्य प्रायः षष्ठ्यां नवम्यां च अभिधर्षयन्ति। पितरः माता पिता च तौ मातापितरौ पितरौ। गुरवः अन्ये वृद्धाः सिद्धाः आचार्याश्च। तान् उपसेवितुं शीलमस्य। तं तथाविधं नरं छिद्रमवेक्ष्य प्रायः दशम्यां कृष्णायां अमावस्यायां च अभिधर्षयन्ति॥ गन्धर्वाः। स्तुतिः गीतं वादित्रं च तेषु रतिर्यस्य तं। परदाराः परस्त्री। गन्धः। माल्यं च। तानि प्रियाणि यस्य तं। चौक्षाचारं पवित्राचारं च। तथाविधं नरं छिद्रमवेक्ष्य प्रायः द्वादश्यां चतुर्दश्यां च अभिधर्षय-

दश्यां सप्तम्यां च यक्षाः। स्वाध्यायतपोनियमोपवासब्रह्मचर्यदेवयतिगुरुपूजाऽरतिं भ्रष्टशौचं ब्राह्मणमब्राह्मणं वा ब्राह्मणवादि-शूरमानिनं देवागारसलिलक्रीडनरतिं प्रायः शुक्लपञ्चम्यां पूर्णचन्द्रदर्शने च ब्रह्मराक्षसाः। रक्षःपिशाचास्तु हीनसत्त्वं पिशुनं स्तेनं लुब्धं शठं प्रायो द्वितीयातृतीयाऽष्टमीषु। इत्यपरिसंख्येयानां ग्रहाणामाविष्कृततमा ह्यष्टावेते व्याख्याताः ॥२७॥

न्ति। यक्षाः सत्त्वादिभिर्युक्तं। माल्यं अनुलेपनं गन्धः हास्यं च। तानि [illegible] यस्य तं। अतिवाक्श्रवणं अतिवाक्पटुं च। तथाविधं नरं छिद्रमवेक्ष्य प्रायः शुक्लायामेकादश्यां सप्तम्यां च अभिधर्षयन्ति। ब्रह्मराक्षसाः। स्वाध्यायः तपः नियमः उपवासः ब्रह्मचर्यं देवयतिगुरूणां पूजा च तासु अरतिः न रतिर्यस्य तं। भ्रष्टशौचं। स्वयं ब्राह्मणं अब्राह्मणं चापि ब्राह्मणमात्मानं वदतीति ब्राह्मणवादी। तं। शूरमात्मानं मन्यते तं शूरमानिनं। देवागारं देवगृहं। सलिलं च। तत्र क्रीडनं क्रीडा। तत्र रतिर्यस्य तं। तथाविधं नरं छिद्रमवेक्ष्य प्रायः शुक्लपंचम्यां पूर्णचन्द्रदर्शने राकायां च अभिधर्षयन्ति। रक्षांसि राक्षसाः पिशाचाश्च रक्षःपिशाचाः। ते पुनः हीनसत्त्वं पिशुनं खलं स्तेनं चौरं लुब्धं शठं धूर्तं च। तथाविधं नरं छिद्रमवेक्ष्य प्रायः। द्वितीया। तृतीया। अष्टमी च। तासु अभिधर्षयन्ति। सुश्रुते च—देवग्रहाः पौर्णमास्यामसुराः सन्ध्ययोरपि। गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यथ॥ कृष्णपक्षे च पितरः पंचम्यामपि चोरगाः। रक्षांसि निशि पैशाचाश्चतुर्दश्यां विशन्ति च॥ इति (सु० उ० ६०)। उपसंहरति—इतीति। इति अपरिसंख्येयानां ग्रहाणां मध्ये एते देवादयः अष्टौ ग्रहाः आविष्कृततमाः। तस्मात् व्याख्याताः। असंख्येया हि ग्रहा भवन्ति। न तु अष्टावेव। सुरादीनामष्टानामभिधानं तेषु आविष्कृततमत्वात् ॥ २७ ॥

२७। प्रायो दशम्यां पञ्चम्यां च पितरः इति ढ पुस्तके।

२७। सत्त्वबलरूपगन्धशौर्ययुक्तं इति ख ग ढ पुस्तकेषु।

२७। भ्रष्टशौचमब्राह्मणं ब्राह्मणवादिनं इति ढ पुस्तके।

तत्र द्वयोरपि निजागन्तुनिमित्तयोरुन्मादयोः समासविस्त
राभ्यां भेषजविधिमनुव्याख्यास्यामः ॥३०॥

उन्मादे वातजे पूर्वं स्नेहपानं विशेषवित् ।
कुर्यादावृतमार्गे तु सस्नेहं मृदु शोधनम् ॥३१॥
कफपित्तोद्भवेऽप्यादौ वमनं सविरेचनम् ।
स्निग्धस्विन्नस्य कर्त्तव्यः शुद्धे संसर्जनक्रमः ॥३२॥

भूतेन गृहीतमुन्मादिनं च। तौ साध्यौ। अनयोर्लिंगं तदनुरूपचेष्टादिकमूहनीयं। साध्ययोः पुनस्तयोर्विज्ञानं असाध्यात् यथोक्तलक्षणात् भिन्नत्वेनापि। भिषक् रत्यर्चनाकामोन्मादिनौ तौ अभिशापाभिचाराभ्यां उन्मादितौ बुद्ध्वा तयोरभिशापाभिचारयोः तदुपशमनकर्मणां अंगं अंगभूतं यः उपहारः बलिश्च तान्मश्रेण तत्सहितेन मन्त्रभैषज्यविधिना मन्त्रविधिना भैषज्यविधिना सर्पिष्पानादिना च उपाचरेत् ॥ २९ ॥

द्वयोरपीति। निजागन्तुनिमित्तयोः द्वयोरुभयोरपि उन्मादयोः भेषजविधिं समासविस्तराभ्यां संक्षेपतः विस्तरतश्च अनु पश्चाद् व्याख्यास्यामः ॥ ३० ॥

तत्रादौ निजे समासतो भेषजविधिमाह—उन्मादे वातजे इति। विशेषवित् वातिकत्वादिभेदज्ञः भिषक् वातजे उन्मादे पूर्वं प्रथमं उत्पन्नमात्रे स्नेहस्य वक्ष्यमाणस्य पानं कुर्यात् कारयेत्। तत्र वाते आवृतमार्गे कफपित्ताभ्यां रुद्धमार्गे सति मार्गरोधनिवृत्त्यर्थं पूर्वं शोधनं वमनविरेचनरूपं कुर्यात्। ननु शोधनं वायप्रकोपणमिति। अतः शोधनं विशिनष्टि—सस्नेहं मृदु इति। सस्नेहं मृदु च शोधनं कुर्यात्। तथाविधशोधनेन वातप्रकोपो न स्यात् ॥ ३१ ॥

कफपित्तेति। कफपित्तोद्भवे कफोद्भवे पित्तोद्भवेऽपि उन्मादे। स्निग्धस्विन्नस्येति छेदः। स्निग्धस्विन्नस्य पुंसः वमनं सविरेचनं कफजे पित्तजे च विरेचनं स्नेहस्वेदपूर्वकं

३१। कुर्यादावृतवाते तु इति ठ पुस्तके।

निरूहं स्नेहबस्तिश्च शिरसश्च विरेचनम् ।
ततः कुर्याद् यथादोषं तेषां भूयस्त्वमाचरेत् ॥३३॥
हृदिन्द्रियशिरःकोष्ठे संशुद्धे वमनादिभिः ।
मनःप्रसादमाप्नोति स्मृतिं संज्ञाञ्च विन्दति ॥३४॥
शुद्धस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम् ।
ताडनञ्च मनोबुद्धिदेहसंवेजनं हितम् ॥३५॥
यः शक्तो विनये पट्टैः सयम्य सुदृढैः सुखैः ।
अपेतलोष्टकाष्ठाद्ये संरोध्यश्च तमोगृहे ॥३६॥

कुर्यात् । आतुरे शुद्धे सति संसर्जनक्रमः कर्त्तव्यः । पेयां विलेपीमकृतं कृतं चेत्याः युक्तक्रमेण शुद्धस्य अन्नसंसर्जनं कारयेत् ॥ ३२ ॥

निरूहमिति । ततः निरूहमास्थापनं । स्नेहबस्तिमनुवासनं । शिरसो विरेचनं च । कुर्यात् भिषक् । यथादोषं दोषभूयस्त्वे सति तेषां वमनादीनां भूयस्त्वं पुनः पुनः प्रयोगं आचरेत् ॥ ३३ ॥

शोधनस्य गुणमाह—हृदिन्द्रियेति । वमनादिभिः कर्मभिः । हृत् हृदयं । तत्स्थानमुरः । इन्द्रियाणि चक्षुरादीनि । शिरसि सप्त मलायनानि । शिरः । कोष्ठः आमपक्वाशयस्थानं च । तत् । तस्मिन् संशुद्धे सम्यक् शुद्धे निर्हृतमले सति स च उन्मादी मनसः प्रसादं प्रसन्नतां आप्नोति । स्मृतिं संज्ञां प्रबोधं च विन्दति लभते ॥ ३४ ॥

शुद्धस्येति । शुद्धस्य कृतशोधनस्यापि आतुरस्य आचारविभ्रंशे । आचारेति मनोबुद्धिसंज्ञाज्ञानस्मृत्यादीनामुपलक्षणं । आचारविभ्रंशे तदात्मके उन्मादे सति । शोधने कृतेऽपि उन्मादस्यानुवृत्तिश्चेत् तदा । तीक्ष्णं नावनं । तीक्ष्णं अंजनं च । तथा ताडनं दण्डादिना । मनसः बुद्धेः देहस्य च संवेजनं उद्वेजनं च । हितं ॥ ३५ ॥

यः शक्त इति । यः उन्मादी विनये शक्तः विनीतः विधेयत्वं गच्छति । तेन घृतं पाययितुं शक्यते । वक्ष्यमाणस्य घृतस्य कल्याणकादेरुत्तमां मात्रां पाययित्वा ।

तर्जनं त्रासनं दानं हर्षणं सान्त्वनं भयम् ।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः ॥३७॥
प्रदेहोत्सादनाभ्यङ्गधूमाः पानञ्च सर्पिषः ।
प्रयोक्तव्यं मनोबुद्धिस्मृतिसंज्ञाप्रबोधनम् ॥३८॥
सर्पिष्पानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः ।
अतः सिद्धतमान् योगान् शृणून्मादनिवर्हणान् ॥३९॥

सुदृढैः । सुखैः । अनेन पट्टबन्धनं व्रणकारि न भवतीति दर्शयति । पट्टैः वस्त्रैः संयम्य सः । अपेतं अपनीतं लोष्टकाष्ठाद्यं यस्मात् तस्मिन् तमोगृहे रुद्धद्वारतया आलोकस्याप्रवेशात् अन्धकारगृहे संरोध्यः स्थापनीयः ॥ ३६ ॥

तर्जनमिति । तर्जनं भर्त्सनं । त्रासनं उद्वेगजननं । दानं । हर्षणं हर्षोत्पादनं । सान्त्वनं आश्वासनं । विस्मयः विस्मायनं च । तर्जनादीनि विस्मृतेर्हेतोः विस्मृतिकारकतया उन्मादिनः मनः विमूढं चेतः प्रकृतिं नयन्ति प्रापयन्ति प्रकृतिस्थं कुर्वन्ति ॥ ३७ ॥

प्रदेहोत्सादनेति । प्रदेहः । उत्सादनं उद्वर्त्तनं । अभ्यंगः । धूमश्च । ते प्रयोक्तव्याः । तथा सर्पिषः वक्ष्यमाणस्य कल्याणकादेः पानं प्रयोक्तव्यं । तत्सर्वं उन्मादिनः मनः । बुद्धिः । स्मृतिः । संज्ञा च । ताः । तासां प्रबोधनं प्रबोधजनकं भवति ॥३८॥

साम्प्रतमागन्तुजे समासतः क्रियाविधिमाह—सर्पिष्पाणादिरिति । रतिकामेन कृतः अर्चनाकामेन कृतश्च इति द्विविधः आगन्तुः साध्यः उक्तः । तस्य साध्यस्यागन्तोरुन्मादस्य सम्बन्धे सर्पिष्पाणादिः भेषजविधिः । तथा मन्त्रादिविधिश्च इष्यते । मन्त्रादिरित्यादिना ओषधिमणिमंगलबल्युपहारादीनां ग्रहणं । निदानस्थाने चोक्तं—साध्यौ पुनर्द्वावितरौ । तयोः साधनानि मन्त्रौषधिमणिमंगलबल्युपहारहोमनियमव्रतप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादीनि । इति । निजे आगन्तौ च समासतः क्रियाविधिरुक्तः । सम्प्रति व्यासतः क्रियाविधिर्विवक्षितः । तत्रादौ निजे ब्रूते—अत इति । अतः परं सिद्धतमान् अतिशयेन सिद्धान् सिद्धफलान् उन्मादनिवर्हणान् योगान् मया व्यासतो वक्ष्यमाणान् शृणु ॥ ३९ ॥

हिंगुसौवचलव्योषैर्द्विपलांशैर्घृताढकम् ।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥४०॥
विशाला त्रिफला कान्ता देवदार्वेलवालुकम् ।
स्थिरा नतं रजन्यौ द्वे सारिवे द्वे प्रियंगुका ॥४१॥
नीलोत्पलैलामञ्जिष्ठादन्तीदाडिमकेसरम् ।
तालीशपत्रं बृहती मालत्याः कुसुमं नवम् ॥४२॥
विडंगं पृश्निपर्णी च कुष्ठं चन्दनपद्मकम् ।
अष्टाविंशतिरित्येतैः कल्कैः कर्षसमन्वितैः ॥४३॥
चतुर्गुणे जले सम्यग् घृतप्रस्थं विपाचयेत् ।
अपस्मारे ज्वरे कासे शोषे मन्दानले क्षये ॥४४॥

हिंग्विति । हिंगु । सौवर्चलं । व्योषं त्रिकटु च । तैः प्रत्येकं द्विपलांशकैः द्विपल-परिमितैः कल्कितैः घृतात् चतुर्गुणे गवां मूत्रे सिद्धं घृतस्याढकं उन्मादनाशनं भवति ॥ ४० ॥

कल्याणकं घृतमाह—विशालेति । विशाला गवाक्षी ( १ ) । त्रिफला हरीतकी ( २ ) आमलकं ( ३ ) विभीतकं च ( ४ ) । कान्ता स्थूलैला ( ५ ) । कान्तेत्यत्र प्रायः सर्वत्र कौन्तीति पठ्यते । कौन्ती रेणुका । स चापपाठ एव । वराविशाला-भद्रैलादेवदार्वेलवालुकैरिति वृद्धवाग्भटवचने भद्रैलेतिदर्शनात् । देवदारु ( ६ ) । एलवालुकं ( ७ ) । स्थिरा शालपर्णी ( ८ ) । नतं तगरपादिकं ( ९ ) । द्वे रजन्यौ हरिद्रे ( १०-११ ) । द्वे सारिवे अनन्तमूलं श्यामलता च ( १२-१३ ) । प्रियंगुका ( १४ ) । नीलोत्पलं ( १५ ) । एला सूक्ष्मैला ( १६ ) । मंजिष्ठा ( १७ ) । दन्ती (१८) । दाडिमः (१९) । केसरं नागकेसरं च (२०) । तेषां समाहारः । तत् । तालीशपत्रं (२१) । बृहती ( २२ ) । मालत्याः नवं कुसुमं मुकुलं ( २३ ) । विडंगं ( २४ ) । पृश्निपर्णी ( २५ ) । कुष्ठं ( २६ ) । चन्दनं ( २७ ) । पद्मकञ्च ( २८ ) । तौ । इति अष्टाविंशतिः द्रव्याणि । एतैः उक्तैः विशालादिभिर्द्रव्यैः प्रत्येकं कर्षसमन्वितैः कर्षमानयुक्तैः कल्कैः

---

४१ । स्थिरानन्ता हरिद्रे द्वे इति ख ग पुस्तकयोः ।

४३ । कुष्ठं तगरचम्पकौ इति ठ पुस्तके ।

वातरक्ते प्रतिश्याये तृतीयकचतुर्थके ।
छर्द्यर्शोमूत्रकृच्छ्रेषु वीसर्पोपहतेषु च ॥४५॥
कण्डूपाण्ड्वामयोन्मादविषमेहगदेषु च ।
भूतोपहतचित्तानां गद्गदानामरेतसाम् ॥४६॥
शस्तं स्त्रीणाञ्च वन्ध्यानां धन्यमायुर्बलप्रदम् ।
कल्याणकमिदं सर्पिः सर्वग्रहविनाशनम् ॥४७॥

इति कल्याणकं घृतम् ।

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम् ।
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरे चतुर्गुणे ॥४८॥
वीराद्विमाषकाकोलीस्वयंगुप्तर्षभर्द्धिभिः ।

एकत्र कल्कितैः घृतात् चतुर्गुणे जले घृतस्य प्रस्थं सम्यक् विपाचयेत् । इदं कल्याणकं तदाख्यं सर्पिः घृतं अपस्मारे ज्वरे कासे शोषे मन्दानले मन्दाग्नौ क्षये धातुक्षये वातरक्ते प्रतिश्याये तृतीयके चतुर्थके च ज्वरे छर्द्यर्शोमूत्रकृच्छ्रेषु वीसर्पोपहतेषु पुंसु च कण्डूः पाण्ड्वामयः उन्मादः विषं मेहगदश्च तेषु च शस्तं । तथा भूतोपहतचित्तानां गद्गदानां अव्यक्तवाचां अरेतसां अल्पशुक्राणां पुंसां तथा वन्ध्यानां अप्रजानां स्त्रीणां सम्बन्धे चापि शस्तं । इदं कल्याणकं सर्पिः । धनाय इदं धन्यं । आयुर्बलप्रदं । सर्वग्रहविनाशनं च ॥ ४१-४७ ॥

महाकल्याणकं घृतमाह—एभ्य एवेति । एभ्यः उक्तेभ्यः विशालादिभ्यः अष्टाविंशतेर्द्रव्येभ्यः आद्यश्लोकार्द्धोक्तानि सप्त वर्जयित्वा स्थिरादीनि एकविंशतिं द्रव्याणि कल्कितानि जले पक्त्वा क्वाथविधिना । तस्मिन् रसे क्वाथे चतुर्गुणे । चतुर्गुणे । गृष्टिः एकधाप्रसूता गौः । गृष्टिः सकृत्प्रसूता गौरिति । तस्याः क्षीरे च । वीरा पृश्निपर्णी । द्विमाषं मुद्गपर्णी माषपर्णी च । द्विमाष इति माषराजमाषयोर्ग्रहणमिति चक्रपाणिः । तच्चिन्त्यं । सूप्यपर्णीयुतैरिति वृद्धवाग्भटवचनात् ( अ० सं० उ० ६ ) । सूप्यपर्णीभ्यां मुद्गपर्णीमाषपर्णीभ्यां युतैः । काकोली । स्वयंगुप्ता आत्मगुप्ता शूकशिम्बी । ऋषभः ।

---

४६ । पाण्डुपामाविषोन्मादविषमेहगदेषु च इति क पुस्तके ।

४६ । गद्गदानामनपेतसां इति ठ पुस्तके ।

मेदया च समैः कल्कैस्तत् स्यात् कल्याणकं महत् ॥४९॥

इति महाकल्याणकं घृतम् ।

जटिलां पूतनां केशीं चारटीं मर्कटीं वचाम् ।
त्रायमाणां जयां वीरां चोरकं कटुरोहिणीम् ॥५०॥
कायस्थां शूकरीं छत्रामतिच्छत्रां पलङ्कषाम् ।
महापुरुषदन्ताञ्च वयःस्थां नाकुलीद्वयम् ॥५१॥
कटम्भरां वृश्चिकालीं स्थिराञ्चाहृत्य तैर्घृतम् ।
सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम् ॥५२॥
महापैशाचिकं नाम घृतमेतद् यथामृतम् ।
बुद्धिस्मृतिकरं चैव बालानाञ्चाङ्गवर्द्धनम् ॥५३॥

इति महापैशाचिकं घृतम् ।

ऋद्धिश्च । ताः । ताभिः तथा मेदया च । एतैः द्रव्यैः कल्कैः कल्कितैः समैः सममानैः सर्पिः पचेत् । महत् कल्याणकं तदाख्यं तत् घृतं ॥ ४८ । ४६ ॥

महापैशाचिकं घृतमाह—जटिलामित्यादि । जटिलां जटामांसीं । पूतनां हरीतकीं । केशीं गन्धमांसीं । चारटीं पद्मचारिणीं । ब्रह्मयष्टिमित्यन्ये । मर्कटीं शूकशिम्बीं । वचां । त्रायमाणां । जयां अरणिकां । वीरां काकोलीं । चोरकां चण्डां । कटुरोहिणीं । कायस्थां क्षीरकाकोलीं । शूकरीं वृद्धदारकं । छत्रां धन्याकं । अतिच्छत्रां शतपुष्पां । पलंकषां लाक्षां । महापुरुषदन्तां शतावरीं । वयःस्थां धात्रीं । नाकुलीद्वयं सर्पाक्षीं सर्पगन्धां च । कटम्भरां कटभीं । वृश्चिकालीं । स्थिरां शालपर्णीं च । आहृत्य । तैः सिद्धं तेषां क्वाथकल्काभ्यां स्नेहपाकविधिना सिद्धं घृतं । चतुर्थको ज्वरः । उन्मादः । ग्रहः । अपस्मारश्च । तेषां नाशनं । एतत् महापैशाचिकं नाम घृतं । यथा अमृतं अमृतमिव अमृततुल्यं । बुद्धिस्मृतिकरं । बालानां अंगवर्द्धनं च ॥ ५०—५२ ॥

४९ । अस्मादनन्तरं बृंहणीयं विशेषेण सन्निपातहरं परं इत्यधिकः पाठः क पुस्तके ।

५३ । मेधाबुद्धिस्मृतिकरं बालानां बुद्धिवर्द्धनं इति ख ग पुस्तकयोः ।

लशुनानां शतं त्रिंशदभयात् त्र्यूषणात् पलम् ।
गवां चर्म्ममसीप्रस्थं द्व्याढकं क्षीरमूत्रयोः ॥५४॥
पुराणसर्पिषः प्रस्थमेभिः सिद्धं प्रयोजयेत् ।
हिंगुचूर्णपलं शीते दत्त्वा च मधुमाणिकाम् ॥ ५५ ॥
तद्दोषागन्तुसम्भूतानुन्मादान् विषमज्वरान् ।
अपस्मारञ्च हन्त्याशु पानाभ्यञ्जननावनैः ॥५६॥

इति लशुनाद्यं घृतम् ।

लशुनस्याविनष्टस्य तुलार्द्धं निस्तुषीकृतम् ।
तदर्धं दशमूल्यास्तु द्व्याढकेऽपां विपाचयेत् ॥५७॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा ।
कोलमूलकवृक्षाम्लमातुलुङ्गार्द्रकै रसैः ॥५८॥

लशुनाद्यं घृतमाह—लशुनानामिति । लशुनानां शतं । अभयात् अभयायाः हरीतक्याः त्रिंशत् । त्र्यूषणात् त्रिकटुनः मिलितात् पलं । गवां चर्ममसी मसीकृतं दग्धं चर्म । तस्याः प्रस्थं । गवां क्षीरमूत्रयोः द्व्याढकं । क्षीरस्याढकं । मूत्रस्य चाढकं । एभिः पुराणस्य उग्रगन्धमित्यादिना वक्ष्यमाणलक्षणस्य सर्पिषः प्रस्थं सिद्धं कृत्वा साधयित्वा अवतार्य । तस्मिन् पूते शीते च तत्र हिंगुचूर्णानां पलं मधुनः माणिकां कुडवद्वयं च । कुडवौ द्वौ तु माणिकेति ( च० क० १२ ) । दत्त्वा प्रक्षिप्य । तत् सर्पिः प्रयोजयेत् । तत् घृतं । पानं । अभ्यंजनमभ्यंगः । नावनं नस्यं च । तैः पानाभ्यंजननावनैरवचारितं सत् । दोषागन्तुसमुद्भूतान् दोषनिमित्तान् आगन्तुनिमित्तांश्च उन्मादान् विषमज्वरान् अपस्मारं च आशु शीघ्रं निहन्ति ॥ ५४—५६ ॥

लशुनाद्यं घृतान्तरमाह—लशुनस्येति । अविनष्टस्य अव्यापन्नस्य रसगंधादिसम्पन्नस्य लशुनस्य निस्तुषीकृतं त्वग्विरहितं कृतं तुलार्द्धं अर्धतुला पंचाशत् पलानि । तत् । दशमूल्याः दशमूलस्य मिलितस्य तदर्धं तस्य तुलार्धस्य अर्धं तुलापादः पंचविंशतिः पलानि । तच्च । अपां जलानां द्व्याढके आढकद्वये विपाचयेत् क्वाथयेत्

---

५८ । ५९ । ६० । एतच्छ्लोकत्रयं ठ पुस्तके न पठ्यते ।

दाड़िमाम्बुसुरामस्तुकाञ्जिकाम्लैस्तदर्धिकैः ।
साधयेत् त्रिफलादारुलवणव्योषदीप्यकैः ॥५९॥
यमानीचव्यहिंग्वम्लवेतसैश्च पलाधिकैः ।
सिद्धमेतत् पिबेच्छूलगुल्मार्शोजठरापहम् ॥६०॥
ब्रध्नपाण्ड्वामयप्लीहयोनिदोषज्वरक्रिमीन् ।
वातश्लेष्मामयान् सर्वानुन्मादांश्चापकर्षति ॥६१॥

इत्यपरं लशुनाद्यं घृतम् ।

हिंगुना हिंगुपर्ण्या च सकायस्थावयःस्थया ।
सिद्धं सर्पिर्हितं तद्वद्वयःस्थाहिंगुचोरकैः ॥६२॥
केवलं सिद्धमेभिर्वा पुराणं पाययेद् घृतम् ।
पाययित्वोत्तमां मात्रां श्वभ्रे रुन्ध्याद् गृहेऽपि वा ॥६३॥

भिषक् । पादशेषमवतार्य तस्मिन् पादशेषे क्वाथे वस्त्रेण पूते । कोलं बदरं । मूलकं । वृक्षाम्लं तिन्तिडीकः । मातुलुगः बीजपूरकः । आर्द्रकं च । तैः रसैः कोलमूलकादीनां रसैः । दाडिमाम्बु दाडिमरसः । सुरा । मस्तु । कांजिकं च । तैः अम्लैः अम्लीकृतैः । तत्सहितैरित्यर्थः । तदर्द्धिकैः प्रत्येकमर्द्धप्रस्थमितैः । तथा त्रिफला । दारु । लवणं । व्योषं त्रिकटु । दीप्यकः अजमोदश्च, तैः । यमानी चव्यः हिंगु अम्लवेतसश्च । तैः पलाधिकैः त्रिफलाद्यम्लवेतसान्तैः प्रत्येकमर्द्धपलमितैः कल्कितैः घृतप्रस्थं घृतस्य गव्यस्य पुराणस्य प्रस्थं तथा लशुनस्य रसं रसप्रस्थं च साधयेत् । तथा सिद्धं शूलाद्यपहं एतत् सर्पिः पिबेत् । एतत् सर्पिः पीतं । ब्रध्नः । पाण्ड्वामयः । प्लीहः योनेश्च दोषाः । ज्वरः । क्रिमिश्च । तान् । तथा सर्वान् वातश्लेष्मामयान् । उन्मादांश्च । अपकर्षति नाशयति ॥ ५७—६१ ॥

हिंगुनेति । हिंगुना । सकायस्थावयःस्थया कायस्थया क्षीरकाकोल्या वयःस्थया धात्र्या च सहितया । हिंगुपर्ण्या वेणुपत्र्या च । सिद्धं । तद्वत् वयःस्था-हिंगुचोरकैः । चोरकः चण्डा । सिद्धं वा । योगद्वयं । सर्पिः हितं ॥ ६२ ॥

केवलमिति । पुराणं घृतं केवलं । एभिः उक्तैः हिंगुसौवर्चलादिभिः । सिद्धं वा पाययेत् । उन्मादिनं । तस्य घृतस्य उत्तमां अहोरात्रापेक्षिजरणां । तदुक्तं स्नेहाध्याये

उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम् ।
लाक्षारसनिभं शीतं प्रपुराणमतः परम् ॥६४॥
एतानौषधवर्गान् वा विधेयत्वमगच्छति ।
अञ्जनोत्सादनालेपनावनादिषु योजयेत् ॥६५॥
शिरीषं मधुकं हिंगु लशुनं तगरं वचा ।
कुष्ठञ्च वस्तमूत्रेण पिष्टं स्यान्नावनाञ्जनम् ॥६६॥

—अहोरात्रमहः कृत्स्नमर्द्धाहं च प्रतीक्षते । प्रधाना मध्यमा ह्रस्वा स्नेहमात्रा जरां … इति । उत्तमां मात्रां । उन्मादे स्नेहस्योत्तमां मात्रां सुश्रुतोऽप्याह । तथा च— … रात्रादसन्तुष्टा या मात्रा परिजीर्यति । सा तु कुष्ठविषोन्मादग्रहापस्मारनाशिनी ॥ ( सु० चि० ३१ ) । पाययित्वा तं श्वभ्रे गर्ते निरुद्धके । गृहे स्वद्वारे … चापि वा । रुन्ध्यात् ॥ ६३ ॥

पुराणं घृतमुक्तं । सम्प्रति पुराणघृतं लक्षयति—उग्रगन्धमिति । यद्घृतं वर्षस्थितं उग्रगन्धं लाक्षारसनिभं लाक्षारससदृशं शीतं शीतवीर्यं च । यद्यपि घृतं …त्यैव शीतं । सर्वस्नेहोत्तमं शीतं मधुरं रसपाकयोः । इति (च० श्लो० २७) । इह शीतमिति वचनं दशवर्षावस्थानात् गन्धरसादीनां विपर्ययेऽपि वीर्यस्याविकृतत्वं … पयितुं । तथाविधं घृतं पुराणं स्यात् पुराणमित्युच्यते । अतः परं दशवर्षादूर्ध्वं द… वर्षातीतं घृतं प्रकृष्टमतिशयितं पुराणं प्रपुराणं स्यात् ॥ ६४ ॥

एतानिति । उन्मादिनि विधेयत्वं वचनग्राहित्वं अगच्छति न गच्छति … उन्मादी चेत् अवचनकारी । तस्मात् उक्तं घृतं पाययितुं न शक्यते चेत्तदा । … हिंगुकल्याणकादिघृतेषु उक्तान् औषधवर्गान् । अंजनं उत्सादनं आलेपनं नावनं तदादिषु योजयेत् । तैरेव औषधैः अंजनोत्सादनादिकं कुर्यात् ॥६५॥

शिरीषमिति । शिरीषं शिरषबीजं । मधुकं यष्टिमधु । हिंगु । लशुनं । तगरं … पादिकं । वचा । कुष्ठं च । एतत् सर्वं एकत्र वस्तस्य छागस्य मूत्रेण पिष्टं । … नस्यं अंजनं च । तत् स्यात् ॥ ६६ ॥

६४ । अस्मादनन्तरमधिकः पाठः ख ग ठ ग पुस्तकेषु—त्रिदोषघ्नं … नाशनं । गुणकर्माधिकं पाने स्वादे कटुकतिक्तकं ॥ कर्णाक्षिरोगशमनं विषघ्नं पावनं … लाक्षारसनिभं ज्ञातं सर्वदोषप्रहापहं ॥ मेध्यं विरेचनं धन्यं प्रपुराणमतः परं । न … नाम तस्यास्ति यत्तु द्वादशवार्षिकं ॥ दृष्टं स्पृष्टमथाघ्रातं तद्विसर्पमहापहं । … विषोन्मादवाते ग्रस्तं यथाऽमृतं ॥ इति ॥

तद्वद्व्योषं हरिद्रे द्वे मञ्जिष्ठाहिंगुसर्षपाः ।
शिरीषबीजञ्चोन्मादग्रहापस्मारनाशनम् ॥६७॥

इति नस्यमञ्जनञ्च ।

पिष्ट्वा तुल्यमपामार्गहिंगुनी हिंगुपत्रिकाम् ।
वर्त्तिः स्यान्मरिचार्द्धांशा पित्ताभ्यां गोशृगालयोः ॥६८॥
तयाञ्जयेदपस्मारभूतोन्मादज्वरार्द्दितान् ।
भूतार्त्तानमरार्त्तांश्च नरांश्चैव दृगामये ॥६९॥
मरिचञ्चातपे मासं सपित्तं स्थितमञ्जनम् ।
वैकृतं पश्यतः कार्यं दोषभूतहतस्मृतेः ॥७०॥
सिद्धार्थको वचा हिंगु करञ्जो देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ॥७१॥

तद्वदिति । व्योषं त्रिकटु । द्वे हरिद्रे । मंजिष्ठा । हिंगु । सर्षपश्च । ते । शिरीषबीजं च । एतत् सर्वं तद्वत् वस्तमूत्रेण पिष्टं नावनं अंजनं च कृतं । उन्मादः । ग्रहः । अपस्मारश्च । तेषां नाशनं नाशकरं स्यात् ॥ ६७॥

पिष्ट्वेति । अपामार्गः अपामार्गबीजं । हिंगु च । ते । हिंगुपत्रिकां च । तुल्यं समभागं यथा तथा गृहीत्वा । त्रयाणां तुल्यं एकैकभागं । ततः अर्धभागं मरिचं च गृहीत्वा । तत् सर्वं गोशृगालयोः पित्ताभ्यां एकत्र पिष्ट्वा । तेन मरिचार्धांशा वर्त्तिः स्यात् । तया वर्त्त्या अपस्मारादिभिः अर्द्दितान् पीडितान् भूतार्त्तान् अमरार्त्तान् देवग्रहैः गृहीतांश्च तथाविधान् तथा दृगामये चक्षूरोगे चापि नरान् अंजयेत् ॥६८।६९॥

मरिचं चेति । वैकृतं पश्यतः विकृतदृष्टेः । दोषैः वातादिभिः भूतैश्च उपहता स्मृतिर्यस्य तस्य पुंसः । मरिचं सपित्तं मासं व्याप्य आतपे स्थितं गोशृगालपित्ताभ्यां आतपे मासैकं भावितं । तच्च अंजनं कार्यं स्यात् ॥७०॥

सिद्धार्थक इत्यादि । सिद्धार्थकः श्वेतसर्षपः । वचा । करंजः गोकरंजः । देवदारु । मंजिष्ठा । त्रिफला । श्वेता श्वेतापराजिता । कटभी । त्वक् गुडत्वक् । कटभीत्वक्

---

६७ । अपामार्गहिंगुलं हिंगुपत्रिकां इति ठ पुस्तके ।

७० । मंजिष्ठा त्रिफला व्योषं श्वेता सकट भीत्वचं इति ठ पुस्तके ।

समांशानि प्रियंगुश्च शिरीषो रजनीद्वयम् ।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥७२॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ।
अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहः ॥७३॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते ।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥७४॥
प्रसेके पीनसे गन्धैर्धूमवर्त्तिं कृतां पिबेत् ।
वैरेचनिकधूमोक्तैः श्वेताद्यैर्वा सहिंगुभिः ॥७५॥

वा । कटुत्रिकं त्रिकटु । प्रियंगुः । शिरीषः । रजनीद्वयं द्वे हरिद्रे च । एतानि प्रत्येकं समांशानि तुल्यभागानि गृहीत्वा वस्तमूत्रेण पिष्टः अयं अगदः छागमूत्रेण एकत्र पिष्ट्वा तैः कृतः अयं अगदो नाम योगः । पानं । अंजनं । नस्यं । आलेपनं । स्नानं । तथा उद्वर्त्तनं च । कृतः पानादिषु प्रयुक्तः । अपस्मारः । विषं । उन्मादः । कृत्या मारणक्रिया अभिचारः । अलक्ष्मीः । ज्वरश्च । तान् अपहन्तीति । अपस्माराद्यपहः । अपस्मारादीन् नाशयति । तस्यागदस्य पानाभ्यंजनादिना भूतेभ्यो भयं नास्ति । राजद्वारे शस्यते सिद्धिकृत् भवति । तस्य वशीकरणकरत्वात् । एतेन उक्तेन सिद्धार्थकादिना सगोमूत्रं सिद्धं गोमूत्रे चतुर्गुणे सिद्धं सर्पिरपि तस्यागदस्यार्थान् करोति इति तदर्थकृत् । तत् सर्पिरपि अगदवत् अपस्माराद्यपहं । भूतेभ्यो भयनाशकं । राजद्वारे सिद्धिकृच्च ॥ ७१—७४ ॥

प्रसेके इत्यादि । प्रसेके मुखप्रसेके । पीनसे । उन्मादे च प्रकृतत्वात् । वैरेचनिकधूमोक्तैः श्लोकस्थाने शिरोविरेचने धूमे उक्तैः । तथाच—श्वेता ज्योतिष्मती चैव हरितालं मनःशिला । गन्धाश्चागुरुपत्राद्या धूमो मूर्धविरेचने ॥ इति (च० श्लो० ५) । गन्धैः अगुरुपत्राद्यैः दाहज्वरचिकित्सिते प्रपंचेनोक्तैः श्वेताद्यैः श्वेताज्योतिष्मतीप्रभृतिभिः द्रव्यैर्वा सहिंगुभिः धूमवर्त्तिं कृत्वा प्रायोगिकधूमोक्तविधिना पिबेत् धूमं ॥ ७५ ॥

---

७२ । स्नानपानावगाहनं इति ठ पुस्तके ।
७४ । प्रसेके पीनसेधूमवर्त्तिं इति ठ पुस्तके ।

शल्लकोलूकमार्जारजम्बूकवृकवस्तजैः ।
मूत्रपित्तशकृल्लोमनखैश्चर्मभिरेव च ॥७६॥
सेकाञ्जनं प्रधमनं नस्यं धूमञ्च कारयेत् ।
वातश्लेष्मात्मके प्रायः पैत्तिके च प्रशस्यते ॥७७॥
तिक्तकं जीवनीयञ्च सर्पिः स्नेहश्च मिश्रकः ।
शीतानि चान्नपानानि मधुराणि लघूनि च ॥७८॥
शंखकेशान्तसन्धौ वा मोचयेज् ज्ञो भिषक् सिराम् ।
उन्मादे विषमे चैव ज्वरेऽपस्मार एव च ॥७९॥
घृतमांसवितृप्तं वा निवाते स्थापयेत् सुखम् ।
त्यक्त्वा मतिस्मृतिभ्रंशं संज्ञां लब्ध्वा प्रमुच्यते ॥८०॥

शल्लकोलूकेति । शल्लकः शजारु इति वंगेषु ख्यातः पशुः । उलूकः पेचकः । मार्जारः बिडालः । जम्बूकः शृगालः । वृकः क्षुद्रव्याघ्रः । वस्तः छागश्च । तेभ्यो जायन्ते । तैः शल्लकोलूकादिजैः। मूत्रं । पित्तं। शकृत् । लोम । नखश्च । तैः । चर्मभिश्चैव वा। यथा-योगं । सेकः परिषेकः । अंजनं च। तत् । प्रधमनं विरेचनचूर्णरूपं । नस्यं । धूमं च । वातश्लेष्मात्मके वातात्मके श्लेष्मात्मके च उन्मादे प्रायः कारयेत् । पैत्तिके उन्मादे तु तिक्तकं तिक्तकैः शृतं जीवनीयं जीवनीयवर्गेण जीवकर्षभकादिना सिद्धं च सर्पिः । तथा मिश्रकः स्नेहः यमकः। प्रशस्यते । तथा शीतानि मधुराणि लघूनि च अन्नपानानि प्रशस्यन्ते ॥ ७६—७८ ॥

शंखेति । ज्ञः शस्त्रकर्मज्ञः भिषक् । उन्मादे अपस्मारे विषमे ज्वरे चापि । शंखः कर्णललाटयोर्मध्यं । केशान्तश्च । तयोः सन्धिः । तस्मिन् स्थितां सिरां मोक्षयेत् । शंखकेशान्तसन्धिगतां सिरां विद्ध्वा रक्तमोक्षणं कारयेत् । तथा च सुश्रुतः—शंख-केशान्तसन्धिगतामुरोऽपांगललाटेषु चोन्मादे । इति ( सु० शा० ८ ) ॥ ७९ ॥

घृतमांसेति । घृतं उक्तं कल्याणकादिकं । मांसं च । तयोर्वितृप्तं विशेषेण तृप्तं कृत्वा । उन्मादिनं निवाते निर्वाते गृहे सुखं यथा तथा स्थापयेत् शाययेत् वा । तेन स मतिस्मृतिभ्रंशं त्यक्त्वा संज्ञां लब्ध्वा च प्रमुच्यते उन्मादात् ॥ ८० ॥

आश्वासयेत् सुहृद्वा तं वाक्यैर्धर्मार्थसंहितैः ।
ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि च ॥८१॥
बद्धं सर्षपतैलाक्तं न्यसेद्वोत्तानमातपे ।
कपिकच्छ्वाथवा तप्तैर्लोहतैलजलैः स्पृशेत् ॥८२॥
कशाभिस्ताड़यित्वा वा बद्धन्तु विजने गृहे ।
रुन्ध्याच्चेतो हि विभ्रान्तं व्रजत्यस्य तथा शमम् ॥८३॥
सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम् ।
त्रासयेच्छस्त्रहस्तैर्वा तस्करैः शत्रुभिस्तथा ॥८४॥
अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम् ।
त्रासयेयुर्वधेनैनं तर्जयन्तो नृपाज्ञया ॥८५॥

आश्वासयेदिति । सुहृत् धर्मार्थाभ्यां संहितानि सहितानि । समो वा हिततत्तयो-रिति मकारलोपो वैकल्पिकः । धर्मार्थसंहितानि धर्मार्थयुक्तानि । तैः । तथाविधैः वाक्यैः आश्वासयेत् वा । इष्टस्य विनाशं मरणं ब्रूयात् वा । अद्भुतानि आश्चर्याणि दर्शयेत् वा ॥ ८१ ॥

बद्धमिति । सर्षपतैलाक्तं सर्षपतैलेन अभ्यक्तगात्रं बद्धं वस्त्रादिना संयतहस्तपादं तं उत्तानं कृत्वा आतपे न्यसेत् न्यस्येत् शाययेत् वा । कपिकच्छ्वा शूकशिम्ब्या । अथवा तप्तैः । लोहं । तैलं । जलं च । तैः स्पृशेत् । उन्मादिनं कशाभिः ताडयित्वा । बद्धं कृत्वा । रुन्ध्यादितिच्छेदः । विजने गृहे रुन्ध्याद् वा । तथाकृते अस्य उन्मादिनः विभ्रान्तं चेतः शमं व्रजति गच्छति ॥ ८२ । ८३ ॥

सर्पेणेत्यादि । उद्धृतदंष्ट्रेण उद्धृतविषदन्तेन । अन्यथा दंशनात् मरणं स्यात् । सर्पेण । दान्तैः विनीतैः पोषितैः । अदान्ताश्चेत् अपहन्युः । सिंहैः गजैश्च । तथा शस्त्रहस्तैः तस्करैः तस्करच्छद्मना उपस्थापितैः पुरुषैः । एवं शत्रुभिश्च । तं उन्मादिनं त्रासयेत् ॥ ८४ ॥

अथवेति । राजपुरुषाः तर्जयन्तः एनमुन्मादिनं ग्रामात् बहिर्नीत्वा । सुसंयतं कृत्वा हस्तपादं सम्यक् बद्ध्वा । नृपस्य राज्ञः आज्ञा । तया नृपाज्ञया । वधेन तव वधार्थं राज्ञा आज्ञा कृता इति ख्यापयन्तः वधेन वधार्थमुद्यमेन त्रासयेयुः ॥ ८५ ॥

देहदुःखभयेभ्यो हि परं प्राणभयं स्मृतम् ।
तेन याति शमं तस्य सर्वतो विप्लुतं मनः ॥८६॥
इष्टद्रव्यविनाशात् तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्त्या सान्त्वाश्वासैः शमं नयेत् ॥८७॥
कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान् ।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥८८॥
बुद्ध्वा देशं वयः सात्म्यं दोषं कालं बलाबले ।
चिकित्सितमिदं कुर्यादुन्मादे दोषभूतजे ॥८९॥

कुतः सर्पादिभिस्त्रासनमिति? अत आह—देहदुःखेति । हि यतः देहदुःखं कशादिताडनकृतः शारीरक्लेशः । तस्मात् भयानि । तेभ्यः प्राणभयं सर्पादिभिः प्राणनाशभयं । मरणभयमित्यर्थः । परमतिशयितं । तेन सर्पादिभिस्त्रासनात् प्राणभयेन तस्योन्मादिनः सर्वतः विप्लुतं विभ्रान्तं मनः शमं याति ॥ ८६ ॥

इष्टद्रव्येति । इष्टद्रव्यस्य प्रियवस्तुनः विनाशात् यस्य मनः उपहन्यते इष्टविनाशात् यस्योन्मादो जातः । तस्य तत् इष्टद्रव्यविनाशोपहतं मनः मुख्यं कर्म । यादृशमिष्टद्रव्यं विनष्टं तत्सदृशस्य अन्यस्य प्राप्त्या सान्त्वाश्वासैः सान्त्वनावचनैः आश्वासनैश्च शमं नयेत् प्रापयेत् ॥ ८७ ॥

कामशोकेति । कामः । शोकः । भयं । क्रोधः । हर्षः । ईर्ष्या पराभ्युदयासहिष्णुता । लोभश्च । तेभ्यः सम्भवो येषां तान् कामशोकादिसम्भवान् उन्मादान् परस्परप्रतिद्वन्द्वैः अन्योन्यप्रतिपक्षैः एभिः कामशोकादिभिः एव हेतुविपरीततया शमं नयेत् । तद्यथा कामेन क्रोधजं । क्रोधेन कामजं । भयजं शोकजं च कामक्रोधाभ्यां । इत्येवमूहनीयं ॥ ८८ ॥

सम्प्रति भिषजा देशकालवयःसात्म्यप्रभृतीन् सम्यगवेक्ष्यैव उन्मादे चिकित्सा कार्येत्याह—बुद्ध्वेति । भिषक् । देशं । वयः । सात्म्यं नाम तत् यत् सातत्येनोपसेव्यमानमुपशेते । दोषं । कालं नित्यगं आवस्थिकं च । आतुरस्य दोषाणां चापि बलम-

---

८८ । कामशोकभयक्रोधमोहेर्षाशोकसंभवान् इति ठ पुस्तके ।

देवर्षिपितृगन्धर्वैरुन्मत्तस्य तु बुद्धिमान् ।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरकर्म च ॥९०॥
सर्पिष्पानादि तस्येह मृदु भैषज्यमाचरेत् ।
पूजां बल्युपहारांश्च मन्त्राञ्जनविधींस्तथा ॥९१॥
शान्तिकर्मेष्टिहोमांश्च जपस्वस्त्ययनानि च ।
वेदोक्तान्नियमांश्चापि प्रायश्चित्तानि चाचरेत् ॥९२॥
भूतानामधिपं देवमीश्वरं जगतः प्रभुम् ।
पूजयन् प्रयतो नित्यं जयत्युन्मादजं भयम् ॥९३॥
रुद्रस्य प्रमथा नाम गणा लोके चरन्ति ये ।
तेषां पूजां च कुर्वाण उन्मादेभ्यः प्रमुच्यते ॥९४॥

मलं च ते बलाबले । बुद्ध्वा परीक्ष्य । दोषभूतजे दोषजे निजे भूतजे आगन्तुके च [illegible]
इदमुक्तं चिकित्सितं कुर्यात् ॥ ८९ ॥

आगन्तुके व्यासतः क्रियाविधिमाह—देवर्षीति । बुद्धिमान् भिषक् देव[illegible]
गन्धर्वैः देवैः ऋषिभिः पितृभिः गन्धर्वैश्च उन्मत्तस्य सम्बन्धे तीक्ष्णानि अं[illegible]
क्रूरं कर्म च ताडनबंधनादिकं वर्जयेत् । सुश्रुतेऽप्युक्तं—न चावीक्षं प्रयुञ्जीत [illegible]
देवताग्रहे । ऋते पिशाचादन्यत्र प्रतिकूलं न चाचरेत् ॥ इति ( सु० उ० ६० ) । [illegible]
देवादिभिरुन्मत्तस्य सर्पिष्पानादि मृदु अतीक्ष्णं भैषज्यं आचरेत् । [illegible]
मुक्त्वा दैवव्यपाश्रयमाह—पूजामित्यादि । पूजां । बल्युपहारान् बलीन् उपहारांश्च
मन्त्रांजनविधीन् मन्त्रैरंजनविधानं । तथा पूजाकर्म पूजनं । इष्टयो यागाः । होमाश्च
तान् । जपाः तत्तद्ग्रहमन्त्राणां । स्वस्त्ययनानि तदाख्यमंगलकर्मभेदाश्च । तानि
वेदोक्तान् नियमान् । प्रायश्चित्तानि प्रसिद्धानि च । आचरेद्वा ॥ ९०—९२ ॥

भूतानामिति । प्रयतः सन् नित्यं प्रतिदिनं भूतानां अधिपं अधिपतिं जगतः [illegible]
देवं ईश्वरं महेश्वरं पूजयन् उन्मादजं भयं जयति ॥ ९३ ॥

रुद्रस्येति । रुद्रस्य प्रमथा नाम ये गणाः लोके चरन्ति । प्रयतः नित्यं तेषां प्रमथ
गणानां पूजां कुर्वाणः उन्मादेभ्यः आगन्तुकेभ्यः प्रमुच्यते पुमान् ॥ ९४ ॥

बलिभिर्मङ्गलैर्होमैरोषध्यगदधारणैः ।
सत्याचारतपोज्ञानप्रदाननियमव्रतैः ॥९५॥
देवगोब्राह्मणानां च गुरूणां पूजनेन च ।
आगन्तुः प्रशमं याति सिद्धैर्मन्त्रौषधैस्तथा ॥९६॥
यच्चोपदेक्ष्यते किञ्चिदपस्मारचिकित्सिते ।
उन्मादे तच्च कर्त्तव्यं सामान्याद्धेतुदूष्ययोः ॥९७॥
निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः ।
निजागन्तुभिरुन्मादैः सत्त्ववान् न स युज्यते ॥९८॥
प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा ।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ।९९॥

बलिभिरिति । 'बलिभिः । मंगलैः कर्मभिः । होमैः । ओषध्यगदधारणैः ओषधीनां अगदानां च धारणैः । सत्यं सत्यभाषणं । आचारः सदाचारः । तपः । ज्ञानं । प्रदानं दानं । नियमः । व्रतं च । देवगोब्राह्मणानां देवानां गवां ब्राह्मणानां च । गुरूणां पूज्यानां पित्रादीनां च । पूजनेन । तथा सिद्धैः सिद्धफलैः मन्त्रौषधैः मन्त्रैः औषधैश्च । आगन्तुरुन्मादः प्रशमं याति ॥ ९५ । ९६ ॥

यच्चेति । अपस्मारचिकित्सिते अध्याये यच्च किंचित् अन्यत् उपदेक्ष्यते पश्चात् । उन्मादापस्मारयोः हेतुदूष्ययोः सामान्यात् तुल्यत्वात् तच्च सर्वं उन्मादेऽपि कर्त्तव्यं ॥ ९७ ॥

निवृत्तेति । यः । निवृत्तामिषमद्यः मांसात् मद्याच्च उपरतः । हिताशी पथ्यभोजी । प्रयतः संयतेन्द्रियः । शुचिः वहिरन्तःशौचवान् । अन्तःशौचं चित्तमलानामाक्षालनं । सत्त्ववान् सत्त्वगुणान्वितः । स निजागन्तुभिः निजैः आगन्तुभिश्च उन्मादैः न युज्यते ॥९८॥

शान्तोन्मादस्य लक्षणमाह—प्रसादश्चेति । इन्द्रियार्थानां इन्द्रियाणां तदर्थानां च । तथा बुद्ध्यात्ममनसां बुद्धेः आत्मनः मनसश्च । प्रसादः प्रसन्नता । धातूनां प्रकृतिस्थत्वं । एतत् सर्वेषामेव रोगाणामुपशमलक्षणं । इति विगतोन्मादस्य पुंसः विगतस्य उन्मादस्य वा लक्षणं ज्ञेयं ॥ ९९ ॥

---

९५ । देवगुरुकविप्राणां गुरूणां इति क पुस्तके ।

तत्र श्लोकः ।

उन्मादानां समुत्थानं लक्षणं सचिकित्सितम् ।
निजागन्तुनिमित्तानामुक्तवान् भिषगुत्तमः ॥१००॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
उन्मादचिकित्सितं नाम नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ।

अथातोऽपस्मारचिकित्सितं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ॥ १ ॥

स्मृतेरपगमं प्राहुरपस्मारं भिषग्विदः ।
तमःप्रवेशं बीभत्सचेष्टं धीसत्त्वसंप्लवात् ॥२॥

सम्प्रति अध्यायार्थसंग्रहं करोति—तत्र श्लोक इति । निजागन्तुनिमित्तानां निजानां आगन्तुनिमित्तानां च उन्मादानां । समुत्थानं हेतुं । लक्षणं सचिकित्सितं चिकित्सितं च । भिषक्षु उत्तमः भिषगुत्तमः भगवान् आत्रेयः पुनर्वसुः अस्मिन् उन्मादचिकित्सिते अध्याये उक्तवान् ॥ १०० ॥

इति वैद्यरत्नश्रीयोगीन्द्रनाथविद्याभूषणकृते चरकोपस्कारे चिकित्सितस्थाने नवमोऽध्यायः ॥

दशमोऽध्यायः ।

निदानोक्तक्रमेण उन्मादचिकित्सितादनन्तरमपस्मारचिकित्सितमभिधीयते—अथात इति । सर्वं पूर्ववद् व्याख्येयम् ॥ १ ॥

तत्रादावपस्मारसंज्ञां व्युत्पादयन् स्वरूपमाह—स्मृतेरपगममिति । विदन्ति जानन्तीति विदः क्विप् । विदः ज्ञानिनः । भिषजश्च ते विदश्चेति । भिषक्षु विदो वा । ते भिषग्विदः । स्मृतेः अपगमं अपायं । अनेन संज्ञाव्युत्पत्तिः दर्शिता । अप अपगतः स्मारः स्मरणं अनुभूतार्थविज्ञानं यस्मिन् रोगे सोऽपस्मारः । सुश्रुतेनाप्युक्तं—स्मृतिर्भूतार्थविज्ञानमपस्तत्परिवर्जने । अपस्मार इति प्रोक्तस्ततोऽयं व्याधिरन्तकृत् ॥ इति ( सु० उ० ६१ ) । धीसत्त्वसंप्लवात् धियाः बुद्धेः सत्त्वस्य मनसश्च संप्लवात्

विभ्रान्तबहुदोषाणामहिताशुचिभोजिनाम् ।
रजस्तमोभ्यां विहते सत्त्वे दोषावृते हृदि ॥३॥
चिन्ताकामभयक्रोधशोकोद्वेगादिभिस्तथा ।
मनस्यभिहते नृणामपस्मारः प्रवर्त्तते ॥४॥
धमनीभिः श्रिता दोषा हृदयं पीडयन्ति हि ।
संपीड्यमानो व्यथते मूढो भ्रान्तेन चेतसा ॥५॥

विभ्रंशात् । तमः अन्धकारः । तस्मिन् प्रवेश इव तमःप्रवेशः ज्ञानाभावः । तमो मोहो वा । तं । बीभत्सा विकृता चेष्टा शारीरव्यापारो यस्मिन् तं । तथाविधं रोगं अपस्मारं आहुः । प्रागप्युक्तं—अपस्मारं पुनः स्मृतिबुद्धिसत्त्वसंप्लवाद् बीभत्सचेष्टमावस्थिकं तमःप्रवेशमाचक्षते । इति ( च० नि० ८ ) ॥ २ ॥

तस्य निदानपूर्वकसम्प्राप्तिमाह—विभ्रान्तबहुदोषाणामिति । अहितमपथ्यं । एतत् शारीरदोषाणां प्रकोपणं । अशुचि अमेध्यं च । एतच्च रजस्तमसोः मानसदोषयोः । तथाविधं यदाहारजातं तत् भोक्तुं शीलमेषां । तेषां अहिताशुचिभोजिनां । विभ्रान्ताः अस्थिरा बहवः मानतः दोषाः शारीरा येषां तेषां नृणां । सत्त्वे सत्त्वसंज्ञके मनसि । रजस्तमसी मानसौ दोषौ । ताभ्यां प्रवृद्धाभ्यां विहते सति । तद्विवरणमाह—चिन्ताकामेत्यादि । मनसि । चिन्ता । कामः । भयं । क्रोधः । शोकः । उद्वेगश्च । तदादयः । ते च मानसविकाराः । तैः अभिहते सति । तथा हृदि हृदये चेतनास्थाने दोषावृते दोषैः शारीरैः आवृते व्याप्ते च सति । अनेनापस्मारस्य युगपत्कुद्धशारीरमानसोभयदोषजन्यत्वमुपदर्शितं । अपस्मारः प्रवर्त्तते ॥३ । ४॥

कुतोऽपस्मरतीति ? अत आह—धमनीभिरिति । हि यतः श्रिताः आश्रिताः स्थिताः । वेगविरतौ न तु गताः । किञ्चित्कालान्तरेण पुनर्वेगकरणात् । दोषाः शारीराः यदा कृतवेगाः धमनीभिः हृदयमूलाभिः हृदयं गत्वा पीडयन्ति । हृदि चेतनास्थाने संपीड्यमानः स पुमान् । तदा भ्रान्तेन चेतसा उपलक्षितः । मूढः मोहमुपगतः सन् । व्यथते ॥ ५ ॥

पश्यत्यसन्ति रूपाणि पतति प्रस्फुरत्यपि ।
जिह्माक्षिभ्रूः स्रवल्लालो हस्तौ पादौ च विक्षिपन् ॥६॥
दोषवेगे च विगते सुप्तवत् प्रतिबुध्यते ।
पृथग्दोषैः समस्तैश्च वक्ष्यते स चतुर्विधः ॥७॥
कम्पते प्रदशेद्दन्तान् फेनोद्वामी श्वसित्यपि ।
परुषारुणकृष्णानि पश्येद्रूपाणि चानिलात् ॥८॥

तस्य सामान्यतो रूपमाह—पश्यत्यसन्तीति । सः असन्ति मिथ्याभूतानि रूपाणि पश्यति । क्षितौ पतति । प्रस्फुरत्यपि कम्पते च । जिह्मे कुटिले अक्षिणी भ्रुवौ च अक्षि-भ्रुवं यस्य स जिह्माक्षिभ्रुः । कुटिलाक्षिभ्रुवः । स्रवन्ती लाला यस्य स स्रवल्लालः । हस्तौ पादौ च विक्षिपन् हस्तपादं विक्षिपति । एवं बीभत्सचेष्टो भवति । दोषवेगे च विगते सति स सुप्तवत् प्रतिबुध्यते । पुनः संज्ञां लभते सुप्तोत्थित इव भवति । सुश्रुते चापि—संज्ञावहेषु स्रोतःसु दोषव्याप्तेषु मानवः । रजस्तमःपरीतेषु मूढो भ्रान्तेन चेतसा ॥ विक्षिपन् हस्तपादौ च विजिह्मभ्रूर्विलोचनः । दन्तान् खादन् वमन् फेनं विवृताक्षः पतेत् क्षितौ ॥ अल्पकालान्तरे चापि पुनः संज्ञां लभेत सः । सोऽपस्मार इति प्रोक्तः स च दृष्टश्चतुर्विधः ॥ वातपित्तकफैर्नॄणां चतुर्थः सन्निपाततः । इति ( सु० उ० ६१ ) ॥

तस्य वातिकादिभेदमाह—पृथगिति । स च अपस्मारः दोषैः वातादिभिस्त्रिभिः पृथक् व्यस्तैः समस्तैः सन्निपातैश्च चतुर्विधः । अष्टोदरीयेऽप्युक्तं—चत्वारोऽपस्मारा इति वातपित्तकफसन्निपातनिमित्ताः इति । स चतुर्विधः वक्ष्यते यथास्वलक्षणैः पश्चात् । यद्यपि चतुर्विधस्य पृथक् हेतुरिहानुक्तः तथापि स उन्मादोक्त एव बोद्धव्यः । सामान्याद्धेतुरूप्ययोरिति ॥ ५—७ ॥

तत्रादौ वातिकस्य लक्षणमाह—कम्पते इति । अनिलात् वातात् अपस्मारी पुमान् कम्पते । दन्तान् प्रदशेत् । फेनोद्वामी फेनमुद्वमति । श्वसित्यपि श्वसिति च । परुषाणि अरुणानि कृष्णानि च तानि रूपाणि पश्येच्च । वातिके मुहुरपस्मारः मुहुः प्रबोधश्च । एवं पैत्तिकेऽपि ॥ ८ ॥

---

८ । अस्मादनन्तरं अधिकः पाठः ख ग पुस्तकयोः—नास्त्यागन्तुरपस्मारो यस्मान्नागन्तुरुद्भवः । प्रागुत्पतति यो व्याधिरागन्तुरिति कथ्यते ॥ अपस्मारस्तु नैवास्ति केवलागन्तुभूतता । नियोज्यागन्तुभिः कैश्चिद्धेतुः समनुबध्यते ॥ प्राक् संभवोऽनिजो यस्मादपस्मारस्तु तेन च । स हि भूतोपसर्गेऽपि तस्मान्नागन्तुरुच्यते ॥ इति ॥

पीतफेनांगवक्त्राक्षः पीतासृग्रूपदर्शनः ।
सतृष्णोष्माऽनलव्याप्तलोकदर्शी च पैत्तिकः ॥ ९ ॥
शुक्लफेनाङ्गवक्त्राक्षः शीतो हृष्टाङ्गजो गुरुः ।
पश्यञ् शुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात् ॥१०॥
सर्वैरेतैः समस्तैश्च लिङ्गैर्ज्ञेयस्त्रिदोषजः ।
अपस्मारः स चासाध्यो यः क्षीणस्यानवश्च यः ॥११॥
पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः ।
अपस्माराय कुर्वन्ति वेगं किञ्चिदथान्तरम् ॥१२॥

पैत्तिकस्य लक्षणमाह—पीतफेनेति । पैत्तिकः अपस्मारी । पीतानि पीतवर्णानि फेनः अंगानि नखादीनि वक्त्रं मुखं अक्षिणी च तानि यस्य सः । तथोक्तः । पीतं असृक् रक्तं च यत् रूपं तद्दर्शनः पीतलोहितवर्णसमस्तवस्तुदर्शी । सतृष्णोष्मेति छेदः । सह । तृष्णा ऊष्मा च । ताभ्यां वर्त्तमानः सतृष्णोष्मा । सतृष्णः सोष्मा च । सोष्मा उष्णगात्रः । अनलेन अग्निना व्याप्तः लोकः । तद्दर्शी । सर्वं अनलव्याप्तमिव पश्यति ॥९॥

श्लैष्मिकापस्मारस्य लक्षणमाह—शुक्लफेनेति । श्लैष्मिकः अपस्मारी । शुक्लानि शुक्लवर्णानि फेनः अंगानि वक्त्रं अक्षिणी च तानि यस्य स तथोक्तः । शीतः शीतगात्रः । हृष्टांगजः हृष्टरोमा । गुरुः गुरुगात्रः । शुक्लानि रूपाणि पश्यन् । चिरात् प्रमुच्यते । अपस्मारात् । चिरेण अपस्मरति । चिरेण प्रबुध्यते च ॥ १० ॥

सन्निपातजमाह—सर्वैरेतैरिति । त्रिदोषजः अपस्मारः एतैः सर्वैः वातिकादिषु त्रिषु उक्तैः लिंगैः समस्तैः मिलितैः ज्ञेयः । उक्तत्रिदोषलक्षणसमवाये सान्निपातिकं विद्यात् । स च सान्निपातिकः अपस्मारः असाध्यः । अनेन इतरेषां साध्यत्वं बोद्धव्यं । असाध्यत्वप्रसंगादाह—यः क्षीणस्येति । क्षीणस्य पुंसः यः अपस्मारः सोऽप्यसाध्यः । यश्च अपस्मारः अनवः चिरोत्पन्नः पुराणः सोऽप्यसाध्यः ॥११॥

अपस्मारकालानाह—पक्षाद्वेति । मलाः अपस्मारारम्भकदोषाः । द्वादशाहात् वा । पक्षात् वा । मासात् वा । परं । अथ किञ्चित् अन्तरं वा । ततोऽप्यूर्ध्वं वापि ।

तैरावृतानां हृत्स्रोतोमनसां संप्रबोधनम् ।
तीक्ष्णैरादौ भिषक् कुर्यात् कर्मभिर्वमनादिभिः ॥१३॥
वातिकं वस्तिभूयिष्ठैः पैत्तं प्रायो विरेचनैः ।
श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत् ॥१४॥
सर्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च ।
अपस्मारविमोक्षार्थं योगान् संशमनाञ् शृणु ॥१५॥

यदा कालप्रकृतिदूष्याद्यन्यतमाद् बलं लभन्ते तदैव । अपस्माराय वेगं कुर्वन्ति । एतत् सदृष्टान्तमुपदर्शितं प्राक् तृतीयके चतुर्थके च ज्वरे । तथा च—अधिशेते यथा भूमिं बीजं काले च रोहति । अधिशेते तथा धातुं दोषः काले च कुप्यति ॥ स वृद्धिं बलकालं च प्राप्य दोषस्तृतीयकं । चतुर्थकं च कुरुते प्रत्यनीकबलक्षयात् ॥ इति ( च० चि० ३ ) ॥ १२ ॥

सम्प्रति चिकित्सोच्यते । तत्रादौ शोधनमाह—तैरावृतानामिति । भिषक् आदौ प्राक् अपस्मारे जातमात्रे एव तीक्ष्णैः वमनादिभिः कर्मभिः तैः शारीरमानसैः दोषैः आवृतानां हृत्स्रोतोमनसां हृत्स्रोतसां हृदयवहस्रोतसां मनसश्च मनोवहस्रोतसां च सम्प्रबोधनं सम्यक् प्रबोधनं कुर्यात् ॥ १३ ॥

शोधनं सामान्यत उक्तं । विशिष्याह—वातिकमिति । तत्र वातिकमपस्मारं । वस्तिः भूयिष्ठः बहुतमो येषु तैः वस्तिभूयिष्ठैः कर्मभिः । अनेन वातिके अन्या क्रियापि सूच्यते । एवं पैत्तिकश्लैष्मिकयोरपि प्रायो विरेचनैरिति वमनप्रायैरिति च वचनात् । पैत्तं पैत्तिकमपस्मारं प्रायः विरेचनैः विरेचनप्रायैः श्लैष्मिकमपस्मारं वमनं प्रायः बाहुल्येन येषु तैः वमनप्रायैर्वमनबहुलैश्च कर्मभिः उपाचरेत् भिषक् ॥१४॥

शोधनमुक्त्वा शमनमाह—सर्वत इति । सर्वतः ऊर्ध्वमधश्च । सुविशुद्धस्य सुष्ठु कृतशोधनस्य । सम्यक् आश्वासितस्य अन्नसंसर्जनक्रमेण संजातबलस्य । अपस्मारिणः । अपस्मारविमोक्षार्थं संशमनान् योगान् मया वक्ष्यमाणान् शृणु ॥१५॥

गोशकृद्रसदध्यम्लक्षीरमूत्रैः समैर्घृतम् ।
सिद्धं पिबेदपस्मारकामलाज्वरनाशनम् ॥१६॥

इति पञ्चगव्यं घृतम् ।

द्वे पञ्चमूल्यौ त्रिफला रजन्यौ कुटजत्वचम् ।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥१७॥
शम्पाकं फल्गुमूलञ्च पौष्करं सदुरालभम् ।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥१८॥
भार्गीं पाठां त्रिकटुकं त्रिवृतां निचुलानि च ।
श्रेयसीमाढ़कीं मूर्वां दन्तीं भूनिम्बचित्रकौ ॥१९॥

पंचगव्यं घृतमाह—गोशकृदिति । गोशब्दः शकृदादिमूत्रान्तैः प्रत्येकमभिसंम्बध्यते । गोः शकृतो रसः स्वरसः शकृद्रसः । दध्यम्लं दधिरूपमम्लं । दधीत्यर्थः । क्षीरं । मूत्रं च । तैः समैः घृततुल्यभागैः सिद्धं शृतं घृतं गव्यं अपस्मारादिनाशनं पिबेत् ॥ १६ ॥

महापंचगव्यं घृतमाह-- द्वे पञ्चमूल्याविति । द्वे पञ्चमूल्यौ पञ्चमूलीद्वयं । दशमूलमित्यर्थः । त्रिफलां हरीतकीमामलकं विभीतकं च । द्वे रजन्यौ हरिद्रे । कुटजत्वचं । सप्तपर्णं । अपामार्गं । नीलिनीं । कटुरोहिणीं । सम्पाकमारग्वधं । फल्गुः काकोडुम्बरिका । तस्याः मूलं । सदुरालभं दुरालभासहितं । पौष्करं पुष्करमूलं च । एतानि द्रव्याणि प्रत्येकं द्विपलानि आदाय एकत्र कल्किতানি जलस्य द्रोणे कलसे पक्त्वा क्वाथयित्वा । तस्मिन् क्वाथे पादावशेषिते अवतारिते पूते च । भार्गीं भार्गीमूलं । पाठां । त्रिकटुकं शुण्ठीपिप्पलीमरिचानि । त्रिवृतां । निचुलानि । निचुलो जलवेतसः । तस्य फलानि । श्रेयसीं हस्तिपिप्पलीं । आढकीं तुवरीं । तस्याः बीजं ।

द्वे सारिवे रोहिषञ्च भूतीकं मदयन्तिकाम् ।
क्षिपेत् पिष्ट्वाक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत् ॥२०॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैश्च तत्समैः ।
पञ्चगव्यमिति ख्यातं महत् तदमृतोपमम् ॥२१॥
अपस्मारे ज्वरे कासे श्वयथावुदरेषु च ।
गुल्मार्शःपाण्डुरोगेषु कामलायां हलीमके ॥
अलक्ष्मीग्रहरक्षोघ्नं चातुर्थिकविनाशनम् ॥२२॥

इति महापञ्चगव्यं घृतम् ।

ब्राह्मीरसवचाकुष्ठशंखपुष्पीभिरेव च ।
पुराणं घृतमुन्मादालक्ष्म्यपस्मारपाप्नुत् ॥२३॥

मूर्वां । वन्तीं । भूनिम्बः किराततिक्तकः । चित्रकश्च । तौ । द्वे सारिवे श्वेतां कृष्णां च । श्वेतसारिवा अनन्तमूलं । कृष्णसारिवा श्यामालता । रोहिषं कत्तृणभेदं । भूतीकं यमानीं । मदयन्तिकां नवमल्लिकाञ्च । एतानि द्रव्याणि प्रत्येकं अक्षमात्राणि कर्षप्रमाणानि गृहीत्वा । एकत्र श्लक्ष्णं पिष्ट्वा । तस्मिन् क्वाथे क्षिपेत् । तैः तत्समैः घृतसमभागैः गोशकृद्रसदध्यम्लक्षीरमूत्रैश्च सर्पिषः घृतस्य गव्यस्य प्रस्थं पचेत् भिषक् । तत् घृतं महत् पञ्चगव्यमिति ख्यातं । अपस्मारे । ज्वरे । कासे । श्वयथौ शोथे । उदरेषु रोगेषु । गुल्मार्शःपाण्डुरोगेषु । कामलायां । हलीमके च । अमृतोपमं अमृततुल्यं । अलक्ष्मीः । ग्रहाः । रक्षांसि च । तानि हन्ति । तत् तथोक्तं । चातुर्थिकस्य चतुर्थकज्वरस्य विनाशनञ्च ॥ १७—२२ ॥

ब्राह्मीघृतमाह—ब्राह्मीरसेति । ब्राह्मी प्रसिद्धा । तस्या रसः स्वरसः । वचा । कुष्ठं । शंखपुष्पी च । ताभिः । ब्राह्मीरसे चतुर्गुणे वचादिभिः कल्कितैः घृतपादिकैः सिद्धं पुराणं गव्यं घृतं । उन्मादः । अलक्ष्मीः । अपस्मारः । पापञ्च । अपस्मार एव पापमिति वा । तन्नुत् ॥ २३ ॥

वचाशम्पाककटर्यवयःस्थाहिंगुचोरकैः ।
सिद्धं पलङ्कषायुक्तैर्वातश्लेष्मात्मके घृतम् ॥२४॥
घृतं सैन्धवहिंगुभ्यां वार्षे वास्ते चतुर्गुणे ।
मूत्रे सिद्धमपस्मारहृद्ग्रहायामनाशनम् ॥२५॥
तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः ।
क्षीरद्रोणे पचेत् सिद्धमपस्मारविनाशनम् ॥२६॥

वचेति । वचा । शम्पाकः आरग्वधः । कैटर्यं कट्फलं । वयःस्था क्षीरकाकोली । गुडूचीत्यन्ये । हिंगु चोरकः चोरपुष्पी च । तैः । पलंकषायुक्तैः । पलंकषा गुग्गुलु । कल्कितैः पादिकैः । जले चतुर्गुणे सिद्धं घृतं वातश्लेष्मात्मके वातिके श्लैष्मिके च । वातश्लेष्मसंसर्गजे वा । अनुक्तमपि गुल्मवद् द्वान्द्विकमपस्मारं वदन्ति केचित् । एवं परत्र वातपित्तोद्भवमित्यत्रापि बोद्धव्यं । अपस्मारे हितमिति शेषः ॥ २४ ॥

घृतमिति । वृषस्येदं वार्षं । तस्मिन् वार्षे वृषसम्बन्धिनि । बस्तः छागः । तत्सम्बन्धिनि वास्ते वा । मूत्रे । घृतात् चतुर्गुणे । यद्यपि मूत्रमधिकृत्य—स्त्रीणां गुरु च तीक्ष्णं च न तु पुंसां तथाविधं । पित्तांशिकाः स्त्रियो यस्मात् सौम्यास्तु पुरुषाः स्मृताः ॥ इति स्त्रियो मूत्रं प्रशस्तमुक्तं। तथापीह पुंमूत्रग्रहणं यौगिकत्वात् । सैन्धवहिंगुभ्यां कल्किताभ्यां पादिकाभ्यां सिद्धं घृतं । अपस्मारः । हृदः हृदयस्य ग्रहः । आयामश्च । तेषां नाशनं । क्वचित् आयाम इत्यत्र आमय इति पाठः । आमयो रोगः । अपस्मारादिनाशनं ॥ २५ ॥

यमकस्नेहमाह—तैलप्रस्थमिति । तैलस्य तिलभवस्नेहस्य प्रस्थं । घृतस्य प्रस्थञ्च । यमकं । जीवनीयैः जीवकर्षभकादिभिः दशभिः पलोन्मितैः प्रत्येकं पलमानैः कल्कितैः । क्षीरस्य द्रोणे कलसे पचेत् भिषक् । तथा सिद्धं पक्वं तत् यमकं अपस्मारविनाशनं भवेत् ॥ २६ ॥

कंसे क्षीरेक्षुरसयोः काश्मर्येऽष्टगुणे रसे ।
कार्षिकैर्जीवनीयैश्च घृतप्रस्थं विपाचयेत् ॥२७॥
वातपित्तोद्भवं क्षिप्रमपस्मारं नियच्छति ।
तद्वत् काशविदारीक्षुकुशक्काथश्रृतं घृतम् ॥२८॥
मधुकद्विपले कल्के द्रोणे चामलकीरसात् ।
तद्वत् सिद्धो घृतप्रस्थः पित्तापस्मारभेषजम् ॥२९॥
अभ्यङ्गः सार्षपं तैलं वस्तमूत्रे चतुर्गुणे ।
सिद्धं स्याद् गोशकृन्मूत्रैः स्नानोत्सादनमेव च ॥३०॥
कटभीनिम्बकट्वङ्गमधुशिग्रुत्वचां रसे ।
सिद्धं मूत्रसमं तैलमभ्यङ्गार्थे प्रशस्यते ॥३१॥

कंसे इति । क्षीरं । इक्षुरसश्च । तयोः कंसे आढ़के । क्षीरस्य कंसे । इ... कंसे । काश्मर्यरसे गाम्भारीक्वाथे घृतादष्टगुणे । जीवनीयैः दशभिः क... कार्षिकैः प्रत्येकं कर्षपरिमितैः । सर्पिषः गव्यस्य प्रस्थं विपाचयेत् । भिषक् । घृतं वातपित्तोद्भवं वातिकं पैत्तिकं च । द्वान्द्विकं वापि । अपस्मारं क्षिप्रमाशु च्छति । काशः । विदारी । इक्षुः । कुशश्च । तेषां क्वाथः । तस्मिन् चतुर्गुणे श्रृतं वा अकल्कं घृतं तद्वत् वातपित्तोद्भवं अपस्मारं क्षिप्रं नियच्छति ॥ २७ । २८ ॥

मधुकद्विपलेति । मधुकस्य यष्टिमधुनः द्विपले कल्के । आमलकीरसात् आमलकीरसद्रोणे मधुककल्कं द्विपलं दत्त्वा तेन सिद्धः पक्वः घृतस्य प्रस्थः पित्तापस्मारभेषजं पैत्तिकमपस्मारं क्षिप्रं नियच्छति ॥ २९ ॥

अभ्यंग इति । वस्तस्य छागस्य मूत्रे तैलात् चतुर्गुणे सिद्धं अकल्कं सार्षपं अभ्यंगः स्यात् । तथा गोः शकृन्मूत्रैः स्नानं उत्सादनञ्च । तत् स्यात् । पो...व शकृद्भिः उत्सादनं । गोमूत्रैश्च स्नानं ॥ ३० ॥

कटभीति । कटभी । निम्बः । कट्वंगः । श्योणाकः । मधुशिग्रुः फा...

पलङ्कषावचापथ्यावृश्चिकाल्यर्कसर्षपैः ।
जटिलापूतनाकेशीनाकुलीहिंगुचोरकैः ॥३२॥
लशुनातिरसाचित्राकुष्ठैर्विड्भिश्च पक्षिणाम् ।
मांसाशिनां यथालाभं वस्तमूत्रे चतुर्गुणे ॥३३॥
सिद्धमभ्यञ्जनं तैलमपस्मारविनाशनम् ।
एतैश्चैवौषधैः कार्यं धूपनं सप्रलेपनम् ॥३४॥
पिप्पलीं लवणं शिग्रुं हिंगु हिंगुशिराटिकाम् ।
काकोलीं सर्षपान् काकनासां कटर्यचन्दने ॥३५॥

तेषां त्वचः। तासां रसे क्वाथे त्रिगुणे। मूत्रं च तैलसमं। तेन द्रवस्य स्नेहाच्चातुर्गुण्यं। सिद्धं मूत्रं समं तैलतुल्यमानं यस्मिन् तत्। तस्मिन् क्वाथे तैलसमं मूत्रं दत्त्वा सिद्धं तैलं अपस्मारिणां अभ्यंगार्थं प्रशस्यते ॥ ३१ ॥

पलंकषेत्यादि। पलंकषा गुग्गुलु। वचा। पथ्या हरीतकी। वृश्चिकाली। अर्कः। सर्षपश्च। तैः। जटिला जटामांसी। पूतना केशी सुगन्धिजटामांसी। नाकुली सर्पगन्धा। हिंगुः। चोरकः चण्डा च। तैः। लशुनः। अतिरसा जलजयष्टिमधु। चित्रा। दन्ती। कुष्ठं च। तैः। मांसाशिनां पक्षिणां विड्भिः पुरीषैश्च। यथालाभं पलंकषादिभिः कल्कितैः पादिकैः तैलात् चतुर्गुणे वस्तमूत्रे छागमूत्रे सिद्धं तैलं। तत्कृतं अभ्यञ्जनं अभ्यंगः। अपस्मारविनाशनं स्यात्। एभिरुक्तैः औषधैः पलंकषादिभिः अपस्मारिणः धूपनं सप्रलेपनं धूपनं प्रलेपनञ्च कार्यं ॥ ३२—३४ ॥

पिप्पलीमित्यादि। पिप्पलीं। लवणं सैन्धवं। शिग्रुं शोभांजनं। हिंगु हिंगुनिर्यासं। हिंगुशिराटिकां वंशपत्रीं। काकोलीं। सर्षपं। काकनासां। कैटर्यं कट्फलं। चन्दनञ्च। ते। शुनः कुक्कुरस्य स्कन्धस्यास्थीनि। नखराश्च। तान्। पर्शुकां पार्श्वास्थि पंजरास्थि च इति। एतत्सर्वं एकत्र पुष्यर्क्षे पुष्यनक्षत्रे वस्तमूत्रेण

शुनः स्कन्धास्थिनखरान् पर्शुकां चेति पेषयेत् ।
बस्तमूत्रेण पुष्यर्क्षे प्रदेहः स्यात् सधूपनः ॥३६॥
अपेतराक्षसीकुष्ठपूतनाकेशिचोरकैः ।
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम् ॥३७॥
जलौकःशकृता तद्वद्दग्धैर्वा बस्तरोमभिः ।
खरास्थिभिर्हस्तिनखैस्तथा गोपुच्छलोमभिः ॥३८॥
कपिलानां गवां मूत्रं नावनं परमं हितम् ।
श्वशृगालविड़ालानां सिंहादीनाञ्च शस्यते ॥३६॥

छागमूत्रेण पेषयेत् । पुष्यर्क्षे पेषणं नक्षत्रयोगकृतफलातिशयार्थं । तेन अपस्मारिणः सधूपनः प्रदेहः । धूपनं लेपनश्च स्यात् ॥ ३५।३६ ॥

अपेतराक्षसीति । अपेतराक्षसी कृष्णतुलसी । कुष्ठं । पूतना हरीतकी । केशी जटामांसी । पूतनाकेशी सुगन्धिजटामांसी वा । केशिः केशी । ह्रस्वश्छान्दसः । चोरकः चण्डा च । तैः छागस्य मूत्रेण पिष्टैः अपस्मारिणः उत्सादनं स्यात् । मूत्रैश्च एव च अवसेचनं अवसेकः स्यात् ॥ ३७ ॥

जलौकःशकृतेति । जलौकःशकृता । क्वचित् जलौकः इत्यत्र जतुकेति पाठः । जतुका चर्मचटी । चामचिका इति वंगेषु ख्याता । दग्धैः बस्तस्य छागस्य रोमभिः । दग्धैः खरस्य अस्थिभिर्वा । हस्तिनः नखैर्वा । तथा गोपुच्छलोमभिः । मूत्रेण कल्कितैः । तद्वत् उत्सादनं कार्यं । उक्तं च—गोपुच्छलोमभिर्दग्धैरथवा बस्तलोमभिः । खरास्थिभि-र्हस्तिनखैस्तद्वद्वा मूत्रकल्कितैः ॥ उद्वर्त्तनं सदा कुर्यान्मूत्रैश्च परिषेचनं । इति ( अ० सं० उ० १० ) ॥ ३८ ॥

कपिलानामिति । कपिलानां गवां पिंगलगवीनां मूत्रं । तत्कृतं नावनं नस्तः-कर्म्म अपस्मारिणां परमं हितं । श्वा कुक्कुरः । शृगालः । विड़ालश्च । तेषां । सिंहा-दीनां चापि । मूत्रं नावनं अपस्मारे प्रशस्यते ॥ ३९ ॥

भार्गी वचा नागदन्ती श्वेतश्वेता विषाणिका ।
ज्योतिष्मती नागदन्ती पादोक्ता मूत्रपेषिताः ।
योगास्त्रयोऽतः षड् विन्दून् पञ्च वा नावयेद्भिषक् ॥४०॥
त्रिफलाव्योषपीतद्रुयवक्षारफणिज्झकैः ।
श्यामापामार्गकारंजफलैर्मूत्रे च बस्तजे ।
साधितं नावनं तैलमपस्मारविनाशनम् ॥ ४१ ॥
पिप्पली वृश्चिकाली च कुष्ठञ्च लवणानि च ।
भार्गी च चूर्णितं नस्तःकार्यं प्रधमनं परम् ॥ ४२ ॥

भार्गीत्यादि । भार्गी । वचा । नागदन्ती च । इत्येको योगः । श्वेतश्वेता श्वेता-पराजिता । विषाणिका मेषशृंगी । शतावरीत्यन्ये । इति द्वितीयः । ज्योतिष्मती । नागदन्ती च । इति तृतीयः । इति पादैः त्रिभिः उक्ताः । पादः श्लोकस्य तुर्यांशः । त्रयः योगाः मूत्रेण पेषिताः । तान् मूत्रेण पेषयेत् । अतः एतेभ्यः षट् पंच वा विन्दून् भिषक् नावयेत् अपस्मारिणः नासायामवसेचयेत् ॥ ४० ॥

त्रिफलेत्यादि । त्रिफला । व्योषं त्रिकटु । पीतद्रुः देवदारुः । यवक्षारः । फणि-ज्झकः तुलसीभेदश्च । तैः । श्यामा त्रिवृत् । अपामार्गः । कारञ्जं फलं करञ्जफलञ्च । तैः । त्रिफलादिभिः कल्कितैः पादिकैः वस्तजे मूत्रे छागमूत्रे चतुर्गुणे साधितं तैलं सार्षपं तिलतैलं वा नावनं अपस्मारविनाशनं ॥ ४१ ॥

पिप्पलीति । पिप्पली । वृश्चिकाली । कुष्ठं । लवणानि पंच । यथालाभं ग्राह्याणि । भार्गी च । एतत् सर्वं चूर्णितं परं प्रधमनं नस्तःकर्म नस्यं । तच्च विरेचनचूर्ण-रूपं स्यात् ॥ ४२ ॥

---

४० । भार्गी च नागदन्ती च इति ख ग ह ठ पुस्तकेषु ।
४० । श्वेता शतविषाणिका इति थ पुस्तके ।

कायस्थां शारदान् मुद्गान् मुस्तोशीरयवांस्तथा ।
सव्योषान् वस्तमूत्रेण पिष्ट्वा वर्तीः प्रकल्पयेत् ॥ ४३ ॥
अपस्मारे तथोन्मादे सर्पदष्टे गरार्दिते ।
विषपीते जलमृते चैताः स्युरमृतोपमाः ॥ ४४ ॥
मुस्तं वयःस्थां त्रिफलां कायस्थां हिंगु शाद्वलम् ।
व्योषं माषान् यवान् मूत्रैर्वास्तमैषार्षभैस्त्रिभिः ॥४५॥
पिष्ट्वा कृत्वा च तां वर्तिमपस्मारे प्रयोजयेत् ।
किलासे च तथोन्मादे ज्वरेषु विषमेषु च ॥४६॥
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम् ।
तदेव सर्पिषा युक्तं धूपनं परमं मतम् ॥४७॥

कायस्थामिति । कायस्थां सूक्ष्मैलां । शारदान् शरदि भवान् मुद्गान् हरितमुद्गान् । ते प्रायः शरदि भवन्ति । तथा मुस्तः । उशीरं । यवश्च । ते । तान् । सव्योषान् सत्रिकटुकान् । तत् सर्वं वस्तमूत्रेण पिष्ट्वा वर्तीः नेत्रांजनवर्तीः प्रकल्पयेद् भिषक् । अपस्मारे तथा उन्मादे रोगे सर्पदष्टे गरार्द्दिते विषपीते पीतविषे जलमृते च पुंसि । जलमृतः जले मग्नो यो मृतवद्भवति । जलमृतस्य लक्षणमन्यत्र—विष्टब्धपायुमूर्धाक्षमाध्मातोदरमेहनं । विद्याज्जलमृतं जन्तुं शीतपादकराननं ॥ इति । एता वर्तयः अमृतोपमाः अमृततुल्याः जीवनप्रदाः स्युः ॥ ४३ । ४४ ॥

मुस्तमिति । मुस्तं । वयःस्थां गुडूचीं । त्रिफलां हरीतकीं आमलकं विभीतकं च । कायस्थां सूक्ष्मैलां । हिंगु । शाद्वलं नवतृणं । व्योषं त्रिकटु । माषान् । यवांश्च । वस्तः छागः । मेषः । ऋषभः वृषभः । इति त्रयः । तत्सम्बन्धिभिः वास्तमैषार्षभैः । त्रिभिः मूत्रैः पिष्ट्वा वर्तिं अंजनवर्तिं कृत्वा । तां वर्तिं अपस्मारे किलासे तथा उन्मादे विषमेषु ज्वरेषु च प्रयोजयेत् ॥ ४५ । ४६ ॥

पुष्योद्धृतमिति । पुष्यायां पुष्यानक्षत्रे उद्धृतं गृहीतं । शुनः कुक्कुरस्य । पित्तं ।

नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः ।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक् ॥ ४८ ॥
आभिः क्रियाभिः सिद्धाभिर्हृदयं संप्रबुध्यते ।
स्रोतांसि चास्य शुध्यन्ति स्मृतिं संज्ञां च विन्दति ॥४९॥
यस्यानुबन्धस्त्वागन्तुर्दोषलिङ्गाधिकाकृतिः ।
दृश्येत तस्य कार्यं स्यादागन्तून्मादभेषजम् ॥५०॥
अनन्तरमुवाचेदमग्निवेशः कृताञ्जलिः ।

तत्कृतमंजनमपस्मारघ्नं । तदेव पुष्योद्धृतं शुनः पित्तं सर्पिषा पुराणघृतेन युक्तं नावनं परमं अपस्मारघ्नं मतं ॥ ४७ ॥

नकुलोलूकेति । भिषक् । नकुलः सर्पारिः । उलूकः पेचकः । मार्जारः बिडालः । गृध्रः तदाख्यः पक्षिभेदः । कीटः वृश्चिकः । अहिः सर्पः । काकश्च । ते । तज्जैः तुण्डैः मुखैः । पक्षैः । पुरीषैश्च । नकुलोलूकादीनां यथासम्भवं तुण्डादिभिः अपस्मारिणः धूपनं कारयेत् ॥ ४८ ॥

आभिरिति । आभिः उक्ताभिः सिद्धाभिः सिद्धफलाभिः क्रियाभिः कर्मभिः शोधनादिभिः अस्य अपस्मारिणः स्रोतांसि हृन्मनोवहानि शुध्यन्ति । स स्मृतिं संज्ञां च विन्दति लभते ॥ ४९ ॥

यस्यानुबन्ध इति । दोषलिंगेभ्यः वातिकाद्यपस्मारोक्तेभ्यः अधिका विशिष्टा आकृतिलिंगं यस्य सः । तेन हि आगन्तोर्विज्ञानं भवति । आगन्तुः भूतावेशनिमित्तः यस्य दोषजस्य अनुबन्धो दृश्येत तस्य आगन्तून्मादभेषजं कार्यं स्यात् । अपस्मारे आगन्तावनुबन्धे सर्पिष्पाणादिकं मन्त्रादिकं च यत् यत् आगन्तून्मादचिकित्सिते उक्तं तत सर्वं कार्यं ॥ ५० ॥

---

४८ । अर्थैः पक्षैः पुरीषैश्च इति क पुस्तके ।

४९ । अस्मादनन्तरं—प्रायशो दुश्चिकित्स्यः स्याच्चिरकारी महागदः । अपस्मारः प्रशमनैस्तस्मात् प्राय उपक्रमेषु । इति अधिक पाठः ख पुस्तके ।

भगवन् पूर्वमुद्दिष्टः श्लोकस्थाने महागदः ।५१॥
अतत्त्वाभिनिवेशो यस्तद्धेत्वाकृतिभेषजम् ।
तत्र नोक्तं ततः श्रोतुमिच्छामि तदिहोच्यताम् ॥५२॥
शुश्रूषवे वचः श्रुत्वा शिष्यायाह पुनर्वसुः ।
महागदं सौम्य शृणु सहेत्वाकृतिभेषजम् ॥५३॥
मलिनाहारशीलस्य वेगान् प्राप्तान् निगृह्णतः ।
शीतोष्णस्निग्धरूक्षाद्यैर्हेतुभिश्चातिसेवितैः ॥ ५४ ॥
हृदयं समुपाश्रित्य मनोबुद्धिवहाः सिराः ।
दोषाः संदूष्य तिष्ठन्ति रजोमोहावृतात्मनः ॥ ५५ ॥

अतत्त्वाभिनिवेशो महागदो रोगाधिकारे प्रागुद्दिष्टः—एको महागद इत्यतत्त्वाभिनिवेशः । इति (च० श्लो० १६) । अपस्मारवत् तस्यापि शारीरमानसदोषजन्यत्वात् हेतुलिंगौषधानि इहैव वक्ष्यन्ते । सम्प्रति तत्प्रसंगमग्निवेशपृच्छया अवतारयति—अनन्तरमिति । अनन्तरमपस्मारस्य सहेतुलिंगौषधस्य एवमुपदेशात् परं अग्निवेशः कृतांजलिः सन् गुरुं भगवन्तमात्रेयं पुनर्वसुं इदं वक्ष्यमाणं वचः उवाच । हे भगवन् पूर्वं प्राक् अष्टोदरीये अध्याये अतत्त्वाभिनिवेशः तदाख्यः यो महागद उद्दिष्टः । तद्धेत्वाकृतिभेषजं तस्य हेतुः आकृतिः भेषजं च । तत् तत्र न उक्तं । ततः तत् सर्वं इह अस्मिन् अध्याये अत्रैवावसरे उच्यतां । अहं श्रोतुमिच्छामि तच्छुश्रूषा मे जाता ॥५१।५२॥

शुश्रूषवे इति । इति वचः वचनं श्रुत्वा गुरुर्भगवान् आत्रेयः पुनर्वसुः महागदस्य हेतुलिंगौषधानि शुश्रूषवे श्रोतुमिच्छवे तस्मै शिष्याय अग्निवेशाय आह । हे सौम्य महागदं अतत्त्वाभिनिवेशं सहेत्वाकृतिभेषजं मया उच्यमानं शृणु ॥ ५३ ॥

आदौ हेतुमाह—मलिनाहारेति । मलिनाहारशीलस्य अमेध्यमपथ्यं च आहारं नित्यमुपयुञ्जानस्य । प्राप्तान् जातान् वेगान् मूत्रपुरीषादीनां निगृह्णतः धारयतः । पुंसः । शीतोष्णस्निग्धरूक्षाद्यैः अतिसेवितैश्च । एवमादिभिः हेतुभिः । कुपिताः दोषाः शारीराः रजोमोहाभ्यामावृतात्मनः । मोहस्तमः । अनेन मानसदोषप्रकोपोऽप्यु-

रजस्तमोभ्यां वृद्धाभ्यां सत्त्वे मनसि संवृते ।
हृदये व्याकुले दोषैरथ मूढोऽल्पचेतनः ॥ ५६ ॥
विषमां कुरुते बुद्धिं नित्यानित्ये हिताहिते ।
अतत्त्वाभिनिवेशं तमाहुराप्ता महागदम् ॥ ५७ ॥
स्नेहस्वेदोपपन्नं तं संशोध्य वमनादिभिः ।
कृतसंसर्जनं मेध्यैरन्नपानैरुपाचरेत् ॥ ५८ ॥
ब्राह्मीस्वरसयुक्तं यत् पञ्चगव्यमुदाहृतम् ।
तत् सेव्यं शङ्खपुष्पी च यच्च मेध्यं रसायनम् ॥ ५९ ॥

प्रदर्शितः । रजोमोहावृतात्मनः पुंसः हृदयं समुपाश्रित्य मनोबुद्धिवहाः सिराः सन्दूष्य तिष्ठन्ति ॥ ५४।५५ ॥

रजस्तमोभ्यामित्यादि । वृद्धाभ्यां प्रवृद्धाभ्यां रजस्तमोभ्यां मानसदोषाभ्यां सत्त्वे सत्त्वसंज्ञके मनसि संवृते आवृते सति । दोषैः शारीरैः प्रक्षुब्धैः हृदये च व्याकुले सति । अथ स पुमान् । मूढः मोहमुपगतः । अल्पचेतनः हीनसंज्ञः सन् । नित्यमनित्यं च तत् । एवं हिताहितं । तस्मिन् नित्यानित्ये हिताहिते च । विषमां विपरीतां बुद्धिं । नित्ये अनित्यबुद्धिः । अनित्ये च नित्यधीः । एवं हिताहितयोर्बोद्धव्यं । एतत्स्वरूपं । कुरुते । अनेन संप्राप्तिराकृतिश्चापि उक्ता भवति । आप्ताः विश्वस्तवाचः शिष्टाः तं अतत्त्वाभिनिवेशं महागदं आहुः ॥ ५६।५७ ॥

भेषजमाह—स्नेहस्वेदोपपन्नमिति । तं अतत्त्वाभिनिवेशिनं पुमांसं स्नेहस्वेदोपपन्नं प्राक् स्नेहस्वेदाभ्यामुपपाद्य । स्नेहस्वेदपूर्वकत्वात् शोधनस्य । ततः वमनादिभिः शोधनैः कर्मभिः संशोध्य च । तं कृतसंसर्जनं अग्निसंधुक्षणार्थं कृतपेयादिक्रमं । मेध्यैः मेधाकरैः शुचिभिश्च अन्नपानैः उपाचरेत् भिषक् ॥ ५८ ॥

---

५६ । भूयोऽल्पचेतस इति ख ग ङ पुस्तकेषु ।

सुहृदश्चानुकूलास्तं स्वाप्ता धर्मार्थवादिनः।
संयोजयेयुर्विज्ञानधैर्यस्मृतिसमाधिभिः॥ ६० ॥
प्रयोज्यं तैललशुनं पयसा वा शतावरी।
ब्राह्मीरसः कुष्ठरसो वचा वा मधुसंयुता॥ ६१ ॥
दुश्चिकित्स्यो ह्यपस्मारश्चिरकारी महागदः।
तस्माद्रसायनैरेनं प्रायशः समुपाचरेत्॥ ६२ ॥

ब्राह्मीति। ब्राह्मीस्वरसयुक्तं यत् घृतं उक्तं ब्राह्मीरसवचाकुष्ठेत्यादिना। पंचगव्यं घृतं उदाहृतं प्रागुक्तं। तत् सर्वं तत्र सेव्यं। शंखपुष्पी। तस्याः स्वरसः सेव्या। यच्च मेध्यं मेधाकरं रसायनं प्रागुक्तं तच्चापि सेव्यं। अथवा। यच्च मेध्यं अतिशयमेधाकरं। मेध्या विशेषेण च शंखपुष्पीति। शंखपुष्पीरसायनं करप्रचितीये रसायनपादे उक्तं। तच्चापि सेव्यं॥ ५६॥

सुहृदश्चेति। मनसः अनुकूलाः अभिमताः स्वाप्ताः सुष्ठु आप्ताः धर्मार्थवादिनश्च सुहृदः। तं। विज्ञानं शास्त्रादिषु ज्ञानं। विज्ञानं शिल्पशास्त्रयोरिति। धैर्यं चेतसः स्थैर्यं। स्मृतिर्भूतार्थविज्ञानं। समाधिः मनसः एकत्र नियमनं च। तैः संयोजयेयुः॥ ६०॥

प्रयोज्यमिति। तैलं लशुनश्च तयोः समाहारः। तत्। तिलतैलमिश्रितो लशुनरसः। प्रयोज्यं प्रतिदिनं सेव्यं। महागदे अपस्मारे चापि। शतावरी। तस्याः रसः। पयसा वा प्रयोज्या। ब्राह्मीरसः ब्राह्मीस्वरसो वा प्रयोज्यः। एवं कुष्ठरसो वा प्रयोज्यः। वचा चूर्णिता वा मधुसंयुता प्रयोज्या। इह पंच योगाः॥ ६१॥

प्रकृतमनुसरन्नाह—दुश्चिकित्स्य इति। हि यतः अपस्मारः दुश्चिकित्स्यः युगपत्-क्रुद्धशारीरमानसोभयदोषजन्यत्वात्। महामर्मकृताश्रयत्वाच्च। कृतास्पदः लब्धस्थानश्चेत्। चिरकारी चिरानुबन्धी। तस्मात् अनुबन्धनिवृत्त्यर्थं एनं अपस्मारं रसायनैरुपाचरेत्। तदुक्तं—समं क्रुद्धैरपस्मारो दोषैः शारीरमानसैः। यज्जायते यतश्चैव महामर्मसमाश्रयः॥ तस्माद्रसायनैरेनं दुश्चिकित्स्यमुपाचरेत्। इति (अ०सं० उ० ११)॥ ६२॥

जलाग्निद्रुमशैलेभ्यो विषमेभ्यश्च तं सदा ।
रक्षेदुन्मादिनञ्चैव सद्यः प्राणहरा हि ते ॥ ६३ ॥

तत्र श्लोकौ ।

हेतुं कुर्वन्त्यपस्मारं दोषाः प्रकुपिता यथा ।
सामान्यतः पृथक्त्वाच्च लिंगं तेषाञ्च भेषजम् ॥ ६४ ॥
महागदसमुत्थानं लिंगञ्चोवाच सौषधम् ।
प्रजाहितार्थं भगवानपस्मारचिकित्सिते ॥ ६५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
ऽपस्मारचिकित्सितं नाम दशमोऽध्यायः ॥ १० ॥

जलाग्नीति । जलं । अग्निः । द्रुमः वृक्षः । शैलः पर्वतश्च । तेभ्यः । विषमेभ्यः अन्य-स्थानेभ्यश्चापि । विषमेभ्यो जलाग्न्यादिभ्यो वा । तं अपस्मारिणं उन्मादिनं च सदैव रक्षेत् पालयेत् । कुतः ? हि यतः ते जलाग्निद्रुमादयः तयोः सद्यः प्राणहराः । जलादीनां सान्निध्ये तयोः कृतवेगयोः मरणमेव भवति ॥ ६३ ॥

अध्यायार्थसंग्रहं करोति— तत्र श्लोकाविति । हेतुं अपस्मारस्य निदानं । दोषाः प्रकुपिताः यथा अपस्मारं कुर्वन्ति । अनेन सम्प्राप्तिरुच्यते । तत् । सामान्यतः पृथक्-त्वात् वातिकत्वादिना भेदाच्च । लिंगं । सामान्यतो लिंगं पश्यत्यसन्ति रूपाणी-त्यादि । पृथक्त्वाच्च पीतफेनांगवक्त्राक्ष इत्यादि । तेषामपस्माराणां वातिकादि-भेदात् चतुर्णां भेषजमौषधं । तथा महागदस्यातत्त्वाभिनिवेशस्य समुत्थानं हेतुं । तस्य सौषधं लिंगं लिंगमौषधं च । तत् सर्वं अस्मिन् अपस्मारचिकित्सिते अध्याये भगवान् आत्रेयः पुनर्वसुः प्रजाहितार्थं अग्निवेशाय उवाच ॥ ६४ । ६५ ॥

इति वैद्यरत्नश्रीयोगीन्द्रनाथविद्याभूषणकृते चरकोपस्कारे
चिकित्सितस्थाने दशमोऽध्यायः ।

## एकादशोऽध्यायः ।

### अथातः क्षतक्षीणचिकित्सितं व्याख्यास्यामः ।
### इति ह स्माह भगवानात्रेयः ॥१॥

## एकादशोऽध्यायः ।

निदानोक्तक्रमेण ज्वरादयोऽप्यस्मारान्ता अष्टावुक्ताः । सम्प्रति क्षतक्षयचिकित्सितमारभ्यते—अथात इति । क्षतमुरःक्षतं । तेन क्षीणः पुमान् । तस्य चिकित्सितं । अन्यत् सर्वं पूर्ववद् व्याख्येयं ॥

ननु क्षतक्षयो राजयक्ष्मणोऽभिन्न एव तुल्यसम्प्राप्तिकत्वात् ; तथाच राजयक्ष्मणश्चिकित्सिताध्याये—अयथाबलमारम्भैर्जन्तोरुरसि विक्षते । इत्यादि । इह वक्ष्यमाणवचनं च—विक्षते वक्षसि व्याधिर्बलवान् समुदीर्यते । इति । रोगाधिकारे पृथगनुद्देशाच्च । अतः कथं तस्य चिकित्सितं प्रागनुक्त्वा पृथक् कृत्वा पश्चादिहोच्यते इति चेत् ? न । उभयोर्भिन्नत्वात् । तथाच—उपेक्षिते भवेत्तस्मिन्ननुबन्धो हि यक्ष्मणः । इति अनुबन्ध्यानुबन्धत्ववचनात् अस्मन्नये क्षतक्षयो यक्ष्मणो भिद्यते । भेदेन निर्देशश्चापि । शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतं क्षयमिति । मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः । इति । शोषे कासे क्षते क्षीणे । इत्यादौ । एवमन्यत्रापि । एवमनयोर्भेदात् सम्प्राप्त्योरपि भिन्नत्वं । तथाच—एकत्र उरःक्षते जाते यक्ष्मणः स्वातन्त्र्येण सम्प्राप्तिः । अन्यत्र च क्षयस्य । यक्ष्मणस्तत्रानुबन्धरूपत्वं । वस्तुतस्तु क्षतक्षयः क्षयात्मकतया शोषादभिन्नोऽपि यक्ष्मरूपैः प्रागयोगात् भिन्न एव जायते । ततः उपेक्षया यदा यक्ष्मणः अनुबन्धः तदैव स साहसिकयक्ष्मरूपः । तस्य तद्विधस्य सम्प्राप्तिः प्रागुपदर्शिता चापि । चिकित्सायाः हेत्वादिज्ञानापेक्षित्वात् । एवं यक्ष्मणा संग्रहात् रोगाधिकारे न तस्य पृथगुद्देशः कृतः । क्षतक्षयः अनुबन्ध्यरूपेण स्वतन्त्रः । तस्मात् हेत्वादिभिः पृथगभिधीयते पश्चात् । इति सर्वमत्र ज्ञातं ॥ १ ॥

उदारकीर्त्तिर्ब्रह्मर्षिरात्रेयः परमार्थवित्।
क्षतक्षीणचिकित्सार्थमिदमाह चिकित्सितम्॥२॥

धनुषायस्यतोऽत्यर्थं भारमुद्वहतो गुरुम्।
पततो विषमोच्चेभ्यो बलिभिः सह युध्यतः॥३॥

वृषं हयं वा धावन्तं दम्यं वान्यं निगृह्णतः।
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान्॥४॥

उदारकीर्त्तिरिति। उदारकीर्तिः। ब्रह्मर्षिः। अनेन आत्रेयस्य देवर्षित्वं राजर्षित्वं च प्रतिषेधति। परमार्थवित् तत्त्वज्ञः। आत्रेयः भगवान् पुनर्वसुः। क्षतेन उरःक्षतेन क्षीणः पुमान्। तस्य चिकित्सा रोगप्रतिक्रिया। तदर्थं इदं वक्ष्यमाणं चिकित्सितं चिकित्सां तदभिधायकं ग्रन्थं आह॥ २॥

चिकित्साया हेत्वादिज्ञानापेक्षितया आदौ क्षतक्षयस्य निदानपूर्वकसम्प्राप्तिमाह—धनुषायस्यत इत्यादि। धनुषा अत्यर्थं आयस्यतः व्यायच्छतः। गुरुं दुर्वहं भारं उद्वहतः। विषमोच्चेभ्यः विषमेभ्यः निम्नोन्नतेभ्यः उच्चेभ्यश्च स्थानेभ्यः पततः। विषमेभ्यः पततः तानि लंघयत इत्यर्थः। बलिभिः बलवद्भिः स्वापेक्षया बलाधिकैः सह युध्यतः युध्यमानस्य। दम्यं तरुणं वृषं हयमश्वं अन्यं महिषादिकं वा निगृह्णतः नियच्छतः वारयतः। शिला पेषणशिला। काष्ठं मल्लकाष्ठं। अश्मा प्रस्तरः। निर्घातो मुद्गरादिश्च। तान् क्षिपतः उत्क्षिपतः। विक्षिपतश्चालयतश्च। तैः परान् अन्यान् निघ्नतः आघ्नतः। अत्युच्चैः अधीयानस्य अध्ययनं कुर्वतो वा। दूरमध्वानं द्रुतं चापि वा व्रजतः गच्छतः। महानदीः महतीः नदीः बाहुभ्यां तरतः सन्तरतो वा। हयैः सह धावतो वा। सहसा उत्पततः उत्प्लवमानस्य वा। अत्यर्थं तूर्णं त्वरितं चापि वा प्रनृत्यतः। इति उक्तैर्धनुर्व्यायामादिभिः तथा अनुक्तैरेवंविधैरन्यैः क्रूरैः कर्मभिः उपलक्षितस्य तानि कुर्वतः। परैः वक्षसि भृशमभ्याहतस्य वा। तथा स्त्रीषु अतिप्रसक्तस्य अतिव्यवायिनः अतिमैथुनात् क्षीणशुक्रौजसः। रूक्षं। अल्पं हीनमात्रं। प्रमितं एकरसं। अतीतकालं वा। आहारं अशितुं भोक्तुं शीलमस्य तस्य रूक्षाल्पप्रमिताशिनः। तथा-

अधीयानस्य वात्युच्चैर्दूरं वा व्रजतो द्रुतम्।
महानदीर्वा तरतो हयैर्वा सह धावतः ॥५॥
सहसोत्पततोऽत्यर्थं नृत्यतश्चापि प्रनृत्यतः।
तथान्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य वा ॥६॥
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्यते।
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः ॥७॥
उरो विरुज्यतेऽत्यर्थं भिद्यतेऽथ विभज्यते।
प्रपीड्येते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते ॥८॥

विधस्य पुंसः वक्षसि धनुर्व्यायामादिभिः अन्तः विक्षते सति बलवान् व्याधिः ...
क्षयाख्यः समुदीर्यते जायते। जल्पकल्पतरुकारस्तु व्याचष्टे—वक्षसि विक्षते
क्षते सति बलवान् व्याधिः समुदीर्यते। स्त्रीष्वतिप्रसक्तस्य ...
बलवान् व्याधिः समुदीर्यते। इति द्विधा क्षतक्षीणः। इति। एतन्मते क्षतक्षीणो द्वि
जायते। धनुर्व्यायामादिना उरसः क्षतादेकः। शुक्रौजसोः क्षयात्
द्वितीयः। तत्राद्यस्य निदानं धनुषायस्यत इत्यादि। अन्त्यस्य च स्त्रीषु च ...
इत्यादि। एवं चक्रपाणिरपि मन्यते। तच्चिन्त्यं। तथा च शुक्रौजसोः क्षयात्
क्षयः स न क्षतक्षयः। किन्तु क्षयहेतुकयक्ष्मा। स च प्रागेव उक्तः। तेन इद
स्त्रीष्वतिप्रसक्त्यादिकमुक्तं तत् धनुर्व्यायामादिवत् उरःक्षतहेतुतयैव। न तु
क्षतहेतुतया। तद्धि सुष्ठु संगच्छते ॥३—७॥

सम्प्राप्तिमुक्त्वा तस्य सामान्यतो लिंगमाह—उरो विरुज्यते इत्यादि। ...
अत्यर्थं विरुज्यते शूल्यते। भिद्यते इव। अथ विभज्यते द्विधा विभक्तमिव भवति
ततः पार्श्वे प्रपीड्येते। अंगं शुष्यति। प्रवेपते अंगं कम्पते च। वीर्यं शुक्रं ...
र्यं वा। बलं सामर्थ्यं। वर्णः। रुचिः कान्तिः। भक्तेच्छा वा। अग्निश्च। ...
हीयते क्षीयते। अग्निर्हीयते मन्दायते। ज्वरः। व्यथा। मनसः दैन्यं।

क्रमाद्वीर्यं बलं वर्णो रुचिरग्निश्च हीयते ।
ज्वरो व्यथा मनोदैन्यं विड्भेदोऽग्निवधस्तथा ॥ ९ ॥
दुष्टः श्यावः सुदुर्गन्धः पीतो विग्रथितो बहुः ।
कासमानस्य चाभीक्ष्णं कफः सास्रः प्रवर्त्तते ॥१०॥
स क्षतः क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् ।
अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम् ॥११॥
उरोरुक् शोणितच्छर्दिः कासो वैशेषिकः क्षते ।
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटीग्रहः ॥१२॥
अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः ।
परिसंवत्सरो याप्यः सर्वलिंगं विवर्जयेत् ॥१३॥

अतिसरणं । तथा अग्निवधः अविपाकश्च । स्यात् । अभीक्ष्णं पुनः पुनः कासमानस्य । अभीक्ष्णं कासः । दुष्टः व्यापन्नः श्यावः पीतो वा सुदुर्गन्धः विग्रथितः ग्रन्थिलः बहुः सास्रः सरक्तश्च कफः प्रवर्त्तते । तथा शुक्रौजसोः क्षयात् स क्षतः क्षतोरस्कः पुमान् अत्यर्थं क्षीयते । पूर्वरूपमाह—अव्यक्तमिति । लक्षणं रूपं यत् उरोरुजादिकं प्रागुक्तं तदेव अव्यक्तं सम्यक् अनभिव्यक्तं अल्पं यदा तदा तत् तस्य पूर्वरूपमिति स्मृतं ॥ ८—११ ॥

लिंगं सामान्यत उक्तं । सम्प्रति तद्विशिष्याह—उरोरुगिति । क्षते क्षीणे उरः-क्षतक्षीणे पुंसि । उरोरुक् उरसः रुक् रुजा शूलं । शोणितस्य छर्दिः वमनं शोणित-च्छर्दिः । वैशेषिकः अतिशयितः कासः । सरक्तं मूत्रं यस्य तस्य भावः तत्त्वं । पार्श्वं पृष्ठं कटी च । तासां ग्रहः । उरोरुजादिकं विशेषलिंगं ॥ १२ ॥

चिकित्साप्रवृत्त्यर्थं साध्यादिविभागमाह—अल्पलिंगस्येति । अल्पलिंगस्य । दीप्ताग्नेः । बलवतश्च पुंसः क्षतक्षीणस्य यो व्याधिः क्षतक्षयाख्यः स साध्यः । यश्च नवः अचिरोत्पन्नः अनतीतसंवत्सरः सोऽपि साध्यः । परिसंवत्सरः गतवत्सरः वर्षा-

उरो मत्वा क्षतं लाक्षां पयसा मधुसंयुताम्।
सद्य एव पिबेज्जीर्णे पयसाद्यात् सशर्करम् ॥१४॥
पार्श्वबस्तिरुजो चाल्पपित्ताग्निस्तां सुरायुताम्।
भिन्नविट्कः समुस्तातिविषापाठां सवत्सकाम् ॥१५॥
लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयगणं सिताम्।
त्वक्क्षीरीं समितां क्षीरे पक्त्वा दीप्तानलः पिबेत् ॥१६॥
इक्षुवालिकाबिसग्रन्थिपद्मकेशरचन्दनैः।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती ॥१७॥

तीतो यः स याप्यः। सर्वलिंगं विवर्जयेत् उक्तसर्वलक्षणयुक्तः ... मन्दाग्नेर्दुर्बलस्य च यः सोऽप्यसाध्यः ॥ १३ ॥

चिकित्सामाह—उरो मत्वेति। उरः अन्तः क्षतं मत्वा उक्तलक्षणैर्ज्ञात्वा तत्क्षणात् एव उरःक्षते ज्ञातमात्रे मधुसंयुतां लाक्षां पयसा सह पिबेत्। ... लाक्षामधुपयसि जीर्णे सति पयसा सशर्करं अन्नं अद्यात् अश्नीयात्। तदु... उरस्यन्तः क्षते सद्यो लाक्षां क्षौद्रयुतां पिबेत्। क्षीरेण शालीन् जीर्णेऽद्यात् ... सशर्करान् ॥ इति (अ०सं०चि०५)। स च क्षतोरस्कः पुमान्। पार्श्वबस्तिरुजी पार्श्वबस्तिरुजावान्। अल्पपित्ताग्निः अल्पपित्तः अल्पाग्निश्च चेत्। तदा तां लाक्षां पिबेत्। भिन्ना विट् यस्य स भिन्नविट्कः भिन्नविकस्त्वेत्। तदा तामेव लाक्षां समुस्तातिविषापाठां सवत्सकां कारयित्वा पिबेत् ॥ १४।१५ ॥

लाक्षामिति। दीप्तानलः दीप्ताग्निः क्षतोरस्कः पुमान्। लाक्षां। सर्पिः। ... सिक्थकं। जीवनीयगणं। सितां शर्करां। त्वक्क्षीरीं वंशलोचना। समितां ... सचूर्णं च। क्षीरे पक्त्वा पिबेत् ॥ १६ ॥

इक्षुवालिकेति। क्षती उरःक्षतवान् पुमान्। क्षतोरसः संधानार्थं। ... इक्षुवालिका। बिसं मृणालं। तस्य ग्रन्थिः मूलं। ग्रन्थिः पिप्पलीमूलं वा। केशरः किंजल्कः। चन्दनं च। तैः शृतं पक्वं पयः क्षीरं मधुयुतं कृत्वा पिबेत् ॥ १७

यवानां चूर्णमामानां क्षीरसिद्धं घृतप्लुतम्।
ज्वरे दाहे सिताक्षौद्रसक्तून् वा पयसा पिबेत् ॥१८॥
मधूकमधुकद्राक्षात्वक्क्षीरीपिप्पलीबलाः।
कासी पार्श्वास्थिशूली च लिह्यात् सघृतमाक्षिकाः ॥१९॥
एलापत्रत्वचोऽर्धाक्षाः पिप्पल्यर्धपलं तथा।
सितामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः ॥२०॥
सञ्चूर्ण्य मधुना युक्ता गुडिकाः संप्रकल्पयेत्।
अक्षमात्रां ततश्चैकां भक्षयेन्ना दिने दिने ॥२१॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम्।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥२२॥

यवानामिति। ज्वरे दाहे सज्वरदाहे क्षते आमानां अनग्निपृष्टानां यवानां चूर्णं क्षीरसिद्धं चतुर्गुणे क्षीरे सिद्धं घृतप्लुतं घृतेनाप्लुत्य पिबेत्। सिता शर्करा। क्षौद्रं मधु। सक्तवश्च। तान् सिताक्षौद्रयुतान् यवसक्तून् पयसा आलोड्य वा पिबेत् ॥ १८॥

मधूकेति। कासी कासवान्। पार्श्वास्थिशूली पार्श्वास्थिशूलवान्। उरःक्षती। मधूकं मधूकपुष्पं। मधुकं यष्टीमधु। द्राक्षा। त्वक्क्षीरी वंशलोचना। पिप्पली। बला च। ताः चूर्णयित्वा सघृतमाक्षिकाः घृतमधुयुक्ताः घृतमधुभ्यां लेहं कृत्वा लिह्यात् ॥ १९ ॥

एलादिगुडिकामाह—एलेत्यादि। एला। पत्रं तेजपत्रं। त्वक् गुडत्वक् च। ताः अर्धाक्षाः प्रत्येकं अर्धकर्षमिताः। तथा पिप्पल्याः अर्धपलं पिप्पल्यर्धपलं। सिता शर्करा। मधुकं यष्टिमधु। खर्जूरः। मृद्वीका द्राक्षा च। ताः पलोन्मिताः प्रत्येकं पलपरिमिताश्च। एकत्र संचूर्ण्य मधुना यावता गुडिकाः स्युः तावता युक्ताः कृताः गुडिकाः अक्षमात्राः संप्रकल्पयेत्। ना क्षतोरस्कः पुमान् दिने दिने प्रतिदिनं ततः

१९। कासीपर्वास्थि शूलो च इति क पुस्तके।

शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतं क्षयम् ।
गुड़िका तर्पणी वृष्या रक्तपित्तञ्च नाशयेत् ॥२३॥

इत्येलादिगुड़िका ।

रक्तेऽतिवृत्ते दक्षाण्डं यूषैस्तोयेन वा पिबेत् ।
चटकाण्डरसं वापि रक्तं वा छागजाङ्गलम् ॥२४॥
चूर्णं पौनर्नवं रक्तशालितण्डुलशर्करम् ।
रक्तष्ठीवी पिबेत् सिद्धं द्राक्षारसपयोघृतैः ॥२५॥
मधूकमधुकक्षीरसिद्धं वा तण्डुलीयकम् ।
मूढ़वातस्त्वजामेदः सुराभृष्टं ससैन्धवम् ॥२६॥

ताभ्यश्च अक्षमात्रां कर्षमात्रां एकां एकैकां गुड़िकामादाय भक्षयेत् । तर्पणी च सा गुड़िका एवं भक्षिता । कासादीन् । रक्तनिष्ठीवनं । पार्श्वशूलं । शोषः । प्लीहा । आढ्यवातः इह वातशोणितं । तान् । स्वरभेदं । क्षतं तज्जं क्षयं । रक्तपित्तं च । नाशयेत् ॥ २०—२३ ॥

रक्तेऽतिवृत्ते इति । रक्ते अतिवृत्ते अतिप्रवृत्ते सति दक्षाण्डं कुक्कुटाण्डं तोयेन जलेन वा पिबेत् । चटकः तदाख्यः क्षुद्रपक्षिभेदः । तस्य अण्डरसं वा । जांगलं छागभवं हरिणादिजांगलपशुभवं च रक्तं वापि पिबेत् ॥ २४ ॥

चूर्णमिति । रक्तष्ठीवी रक्तनिष्ठीवनकृत् क्षतोरस्कः पुमान् । पौनर्नवं । तण्डुलशर्करं रक्तशालितण्डुलशर्करासम्बन्धि च चूर्णं [illegible] तण्डुलानां चूर्णं । द्राक्षारसः । पयः । क्षीरं । घृतं च । तैः सिद्धं कृत्वा पिबेत् ॥ अथवा मधूकं मधूकपुष्पं मधुकं यष्टिमधु तयोः क्वाथः क्षीरसमः क्षीरं च । तत्र तण्डुलीयकं चूर्णं पिबेत् । मूढवातस्तु क्षतोरस्कः [illegible] तदा सुरया भृष्टं अजायाः मेदः ससैन्धवं । अद्यादिति परेणान्वयः । क्षामः

२६ । मधकं मधुकं द्राक्षा सिद्धं वा तण्डुलीयकं इति ठ पुस्तके ।

क्षामः क्षीणः क्षतोरस्कस्त्वनिद्रः सबलेऽनले ।
शृतक्षीरसरेणाद्यात् सघृतक्षौद्रशर्करम् ॥२७॥
शर्करां यवगोधूमौ जीवकर्षभकौ मधु ।
शृतक्षीरानुपानं वा लिह्यात् क्षीणः क्षती कृशः ॥२८॥
क्रव्यादमांसनिर्यूहं घृतभृष्टं पिबेच्च सः ।
पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्धनम् ॥२९॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षसालप्रियंगुभिः ।
तालमस्तकजम्बूत्वक्पियालैश्च सपद्मकैः ॥३०॥

क्षीणः स च क्षतोरस्कः अनिद्रः अनले सबले अग्निर्दीप्तिमान् चेत् तदा तदेवाजामेव: शृतस्य पक्वस्य क्षीरस्य सरेण उपरिस्नेहान्वितघनभागेन सघृतक्षौद्रशर्करं घृतमधु-शर्करायुतं कृत्वा अद्यात् भुंजीत ॥ २५-२७ ॥

शर्करामिति । कृशः हीनमांसः क्षती उरःक्षतवान् क्षीणः पुमान् सशर्करां यवगो-धूमौ जीवकर्षभकौ च चूर्णयित्वा तच्चूर्णं शर्करां च समभागं नीत्वा मधुना लिह्यात् । अनु च शृतं क्षीरं पिबेत् । स च मांसशोणितवर्धनं क्रव्यादानां मांसाशिनां पशुपक्षिणां मांसस्य निर्यूहं रसं घृतभृष्टं । पिप्पली पिप्पलीचूर्णं । क्षौद्रं मधु च । ताभ्यां संयुक्तं कृत्वा पिबेत् ॥ २८-२९ ॥

न्यग्रोधोदुम्बरेत्यादि । क्षतोरस्कः क्षीणशुक्रश्च मानवः । न्यग्रोधः वटः । उदुम्बरः । अश्वत्थः । प्लक्षः । सालः । प्रियंगुश्च । तैः । तालमस्तकं । जम्बूत्वक् । पियालश्च । तैः । सपद्मकैः । पद्मकं पद्मकाष्ठं । साश्वकर्णैः । अश्वकर्णः पीतसालः । तैः सर्वैः

२७—त्वनिद्रः सबलेऽनले इति ठ ग पुस्तकयोः ।

२७—क्षामः क्षीणः क्षतोरस्कः क्षीणशुक्रश्च मानवः ।

२८—अयं श्लोकः ग ग पुस्तकयोर्न पठ्यते ।

३०—न्यग्रोधोदुम्बराश्वत्थ इति ठ पुस्तके ।

साश्वकर्णैः शृतात् क्षीराद्दध्याज्जातेन सर्पिषा ।
शाल्योदनं क्षतोरस्कः क्षीणशुक्रश्च मानवः ॥३१॥
यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमं घृतम् ।
पयस्यापिप्पलीवांशीकल्कसिद्धं क्षते हितम् ॥३२॥
कोललाक्षारसे तद्वत् क्षीराष्टगुणसाधितम् ।
कल्कैः कट्वंगदार्वीत्वग्वत्सकत्वक्फलैर्घृतम् ॥३३॥
जीवकर्षभकौ वीरां जीवन्ती नागरं शठीम् ।
चतस्रः पर्णिनीर्मेदे काकोल्यौ द्वे निदिग्धिके ॥३४॥

कल्कितैः समांशैः शृतात् पक्वात् क्षीरात् जातेन सर्पिषा घृतेन सह शाल्योदनं शालितण्डुलान्नं अद्यात् भुंजीत ॥ ३० । ३१ ॥

यष्ट्याह्वेति । यष्ट्याह्वं यष्टीमधु । नागबला च । तयोः क्वाथे क्वाथविधिना कृते घृतात् त्रिगुणे । क्षीरं च घृतसमं । तेन द्रवस्य चातुर्गुण्यं । पयस्या क्षीरकाकोली । पिप्पली । वांशी वंशलोचना च । तासां कल्कैः पादिकैः सिद्धं क्षीरं समं घृततुल्यमानं यस्मिन् तत् क्षीरसमं घृतं क्षते उरःक्षते हितं ॥ ३२ ॥

कोलेति । कट्वंगः श्योणाकः । दार्वीत्वक् । वत्सकस्य त्वक् फलं च । तैः कल्कैः कल्कितैः पादिकैः । कोलं शुष्कबदरं । लाक्षा च । तयोः रसे क्वाथे घृतसमे क्षीरे घृतादष्टगुणे च साधितं । घृतं वाष्टगुणे क्षीरे कोललाक्षारसान्वितं । इति (अ० सं० चि० ५ ) । घृतं तद्वत् क्षते हितं ॥ ३३ ॥

अमृतप्राशं घृतमाह—जीवकर्षभकावित्यादि । जीवकः ऋषभकश्च । तौ । वीरां महाशतावरीं । पृश्निपर्णीमिति जल्पकल्पतरुकारः । तन्न । चतस्रःपर्णिनीरित्यनेनैव तस्या उक्तत्वात् । जीवन्तीं । नागरं शुण्ठीं । शटीं । चतस्रः पर्णिनीः शालपर्णीं पृश्निपर्णीं माषपर्णीं मुद्गपर्णीं च । मेदे द्वे मेदां महामेदां च । द्वे काकोल्यौ काकोलीं क्षीरकाकोलीं च । द्वे निदिग्धिके कण्टकारीं गोक्षुरं च । द्वे पुनर्नवे श्वेतपुनर्नवां

३२—क्वाथे क्षीरसमे घृतं इति ठ पुस्तके ।

पलार्धकञ्च मरिचत्वगेलापत्रकेशरात्।
विनीय चूर्णितं तस्माल्लिह्यान्मात्रां सदा नरः ॥३९॥
अमृतप्राशमित्येतन्नराणाममृतं घृतम्।
सुधामृतरसं प्राश्यं क्षीरमांसरसाशिना ॥४०॥
नष्टशुक्रक्षतक्षीणदुर्बलव्याधिकर्शितान्।
स्त्रीप्रसक्तान् कृशान् वर्णस्वरहीनांश्च बृंहयेत् ॥४१॥
कासहिक्काज्वरश्वासदाहतृष्णास्रपित्तनुत्।
पुत्रदं वमिमूर्च्छाहृद्योनिमूत्रामयापहम् ॥४२॥

इत्यमृतप्राशघृतम्।

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकत्तृणम्।
दर्भमूलं पृथक्पर्णीं पलाशर्षभकौ स्थिराम् ॥४३॥

संजीवनत्वात् अमृततुल्यरसत्वाद्वा अमृतप्राशं इति नाम्ना उक्तं। तच्च नरेण क्षीरमांसरसाशिना सता प्राश्यं। घृतं प्राश्य क्षीरमांसरसाभ्यामन्नमश्नीयात्। एतत् अमृतप्राशं घृतं। नष्टशुक्रः। क्षतक्षीणः। दुर्बलः। व्याधिभिः कर्शितश्च। तान्। स्त्रीषु प्रसक्तान् अत्यासक्तान् अतिव्यवायिनः। कृशान् हीनमांसान्। वर्णस्वरहीनांश्च। बृंहयेत्। तच्च घृतं कासादिनुत्। अस्रपित्तं रक्तपित्तं। पुत्रदं। वमिः मूर्च्छा हृद् योनिः मूत्रं च। तेषामामयाश्च। तान् अपहन्ति तत् वमिमूर्च्छाद्यपहं च ॥ ३९—४२ ॥

श्वदंष्ट्रादिघृतमाह—श्वदंष्ट्रोशीरेत्यादि। श्वदंष्ट्रा गोक्षुरः। उशीरं वीरणमूलं। मंजिष्ठा। बला। काश्मर्यं गाम्भारीफलं। कत्तृणं भूतिकं च। तत्। दर्भस्य मूलं। पृथक् पर्णीं पृश्निपर्णीं। पलाशः। ऋषभकश्च तौ। स्थिरां शालपर्णीं च। पलिकान् प्रत्येकं पलपरिमितान् भागान् कल्कयित्वा साधयेत् क्वाथयेत्। ततोऽष्टगुणे जले। पादशेषमवतारयेत्। पादशेषे च तस्मिन् तेषां रसे क्वाथे क्षीरं क्वाथात् घृताद्वा चतुर्गुणं यस्मिन् तस्मिन् क्षीरचतुर्गुणे। स्वगुप्ता शूकशिम्बी।

४२—कासहिक्कारुचिश्वास० इति ठ पुस्तके।

पलिकान् साधयेत् तेषां रसे क्षीरचतुर्गुणे ।
कल्कैः स्वगुप्ताजीवन्तीमेदर्षभकजीवकैः ॥४४॥
शतावर्य्यर्द्धिमृद्वीकाशर्कराश्रावणीबिसैः ।
प्रस्थः सिद्धो घृताद्वातपित्तहृद्द्रवशूलनुत् ॥४५॥
मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः ।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ॥४६॥

इति श्वदंष्ट्रादिघृतम् ।

मधूकाष्टपलद्राक्षाप्रस्थक्वाथे पचेद् घृतात् ।
पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले ॥४७॥
पृथगष्टपलं क्षौद्रशर्कराभ्यां विमिश्रयेत् ।
समसक्तु क्षतक्षीणे रक्तगुल्मे च तद्धितम् ॥४८॥

इति सक्तुप्रयोगः ।

जीवन्ती । मेदा । ऋषभकः । जीवकश्च । तैः । शतावरी । ऋद्धिः स्वनामप्रसिद्धा । मृद्वीका द्राक्षा । शर्करा । श्रावणी मुण्डोरी । बिसं मृणालं च । तैः कल्कैः स्वगुप्तादि-बिसान्तैः द्रव्यैः कल्कितैः घृतात् पादिकैः सिद्धः घृतात् प्रस्थः घृतप्रस्थः वातपित्त-हृद्द्रवशूलनुत् वातिकं पैत्तिकं च हृच्छूलं नाशयति । मूत्रकृच्छ्रप्रमेहाद्यपहः । शोषः यक्ष्मा । क्षयः क्षतक्षयः । धनुः । स्त्री । मद्यं । भारः । अध्वा च । तैः खिन्नाः । तेषां तथाविधानां पुंसां च बलमांसदः ॥ ४३—४६ ॥

मधुकाष्टपलेत्यादि । मधुकस्य यष्टिमधुनः अष्टपलं अष्टौ पलानि । द्राक्षायाः शुष्कायाः प्रस्थश्च । तयोः क्वाथे पिप्पल्यष्टपले कल्के पिप्पल्या अष्टपले कल्के तत्र पिप्पलीकल्कमष्टपलमितं दत्त्वा घृतात् प्रस्थं घृतस्य प्रस्थं षोडश पलानि पचेत् साधयेत् भिषक् । सिद्धे अवतारिते च तस्मिन् शीतले सति क्षौद्रशर्कराभ्यां पृथक्

४५—शतावर्या र्द्धिमृद्वीका० इति ग पुस्तके ।

धात्रीफलविदारीक्षुजीवनीयरसैर्घृतम् ।
अजागोपयसोश्चैव सप्त प्रस्थान् पचेद् भिषक् ॥४९॥
सिद्धशीते सिताक्षौद्रद्विप्रस्थं विनयेत् ततः ।
यक्ष्मापस्मारपित्तासृक्कासमेहक्षयापहम् ॥५०॥
वयःस्थापनमायुष्यं मांसशुक्रबलप्रदम् ।
घृतन्तु पित्तेऽभ्यधिके लिह्याद्वातेऽधिके पिबेत् ॥५१॥
लीढं निर्वापयेत् पित्तमल्पत्वाद्धन्ति नानलम् ।
आक्रामत्यनिलं पीतमूष्माणं निरुणद्धि च ॥५२॥

प्रत्येकं अष्टपलं क्षौद्रस्य अष्टपलं शर्करायाः अष्टपलं च विमिश्रयेत् । समाः तुल्य-भागाः सक्तवो यत्र तत् समसक्तु । तत् घृतं । समभागैः सक्तुभिः तस्योपयोगः । क्षतक्षीणे रक्तगुल्मे च हितं ॥ ४७ । ४८ ॥

धात्रीफलेत्यादि । भिषक् । धात्रीफलं । विदारी विदारीकन्दा । इक्षुः । जीवनीयो गणश्च । तेषां रसः । तस्मात् । धात्रीफलरसात् विदारीरसात् इक्षुरसात् जीवनीयरसाच्च इत्यर्थः । घृतात् । अजागोपयसोः । इह षष्ठी विभक्तिः । अजापयसः गोपयसश्च । इति सप्तभ्यः सप्त प्रस्थान् । प्रत्येकं प्रस्थमानत्वात् । एकत्र पचेत् साधयेत् । ततः आदौ सिद्धं पश्चात् शीतं तस्मिन् सिद्धशीते तस्मिन् घृते सति तत्र । सिता सितशर्करा । क्षौद्रं मधु च । तयोः मिलितयोः द्विप्रस्थं प्रस्थद्वयं द्वात्रिंशत्पलं । सितायाः एकप्रस्थं षोडश पलानि । क्षौद्रस्य च एकप्रस्थं । विनयेत् प्रक्षिपेत् । तच्च घृतं । यक्ष्मा । अपस्मारः । पित्तासृक् रक्तपित्तं । कासः । मेहः । क्षयः क्षतक्षयश्च । तान् अपहन्ति । तत् वयःस्थापनं जरानाशनं । आयुष्यं । मांसशुक्रबलप्रदं च ॥ ४९—५१ ॥

घृतस्य लेह्यत्वेन पेयत्वेन च उपयोगः उक्तः । सम्प्रति लेह्यपेययोर्विषयमाह—घृतन्त्विति । वाते अभ्यधिके बलवति सति घृतं लिह्यात् । पित्ते अधिके तु तत्

५०—पित्तासृग्योनिमूत्रामयापहं इति ग घ पुस्तकयोः ।

क्षामक्षीणकृशांगानामेतान्येव घृतानि तु।
त्वक्क्षीरीपिप्पलीलाजचूर्णैः स्त्यानानि योजयेत् ॥५३॥
सर्पिर्गुडान् समध्वंशान् जग्ध्वा चानु पयः पिबेत्।
रेतो वीर्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥५४॥
सर्पिर्गुडाः।
बला विदारी ह्रस्वा च पञ्चमूली पुनर्नवा।
पञ्चानां क्षीरिवृक्षाणां शुंगा मुष्ट्यंशका अपि ॥५५॥

पिबेत्। कुतः पित्ते लेहः? वाते च पानमिति? अत आह—लीढमिति। घृतं पित्ताधिके लीढं सत् पित्तं निर्वापयेत् शमयेत् शैत्यात्। पित्तमुष्णं। पित्तमुष्णं शमयदपि तच्च घृतं अनलं अग्निं जाठरं न हन्ति न नाशयति। कस्मात्? अल्पत्वात् लेहत्वेन स्त्यानत्वेन च अल्पमात्रत्वात्। प्रकृतिगुरुत्वेऽपि तदा मात्रालघुतया न अग्निनाशं करोति। वाताधिके पुनः पीतं तच्च घृतं अनिलं वातं आक्रामति जयति स्नेहात् गौरवाच्च। वातः रूक्षः लघुश्च। पेयत्वेन विलीनत्वेन च बहुत्वं। तेन मात्रया चापि गुरुत्वं। ऊष्माणमग्निं च तदा वायुना बलवता पक्तिस्थानान्नीयमानं निरुणद्धि स्वाश्रये वातं प्रशमयेत् ॥ ५२ ॥

क्षामः क्षीणेति। क्षामः क्लान्तदेहः। क्षै निष्ठा तः। क्षीणः क्षतक्षीणः। कृशाङ्गः हीनमांसश्च। तेषां पुंसां सम्बन्धे। एतानि उक्तानि एव घृतानि। त्वक्क्षीरी वंशलोचना। पिप्पली। लाजाश्च। तेषां चूर्णैः स्त्यानानि घनानि कृत्वा योजयेत् ॥ ५३ ॥

सर्पिर्गुडानाह—सर्पिर्गुडानिति। सर्पिर्गुडान् समध्वंशान् जग्ध्वा। त्वक्क्षीर्यादिचूर्णसंयुक्तैः तैरेव स्त्यानैः घृतैः मधुभागमिश्रैः घृतपिण्डकान् कृत्वा तान् जग्ध्वा भक्षयित्वा। अनु पश्चात् पयः क्षीरं पिबेत् वाते पित्ते चाभ्यधिके। तैः सर्पिर्गुडैः तथा जग्धैः स च पुरुषः आशुतरं शीघ्रतरं रेतः शुक्रं वीर्यमतिसामर्थ्यं बलं पुष्टिं च आप्नुयात् लभेत ॥ ५४ ॥

---

५३—त्वक्क्षीरीशर्करालाजचूर्णैः इति ठ पुस्तके।

एषां कषाये द्विक्षीरे विदार्याजरसांशिके ।
जीवनीयैः पचेत् कल्कैरक्षमात्रैर्घृताढकम् ॥५६॥
सितोपलानि पूते च शीते द्वात्रिंशतं क्षिपेत् ।
गोधूमपिप्पलीवांशीचूर्णं शृङ्गाटकस्य च ॥५७॥
समाक्षिकं कौडविकं तत् सर्वं खजमूर्च्छितम् ।
स्त्यानं सर्पिर्गुडान् कृत्वा भूर्जपत्रेण वेष्टयेत् ॥५८॥
तान्भक्षयित्वा पलिकान् क्षीरं मद्यं चानुपिबेत् कफे ।
शोषे कासे क्षते क्षीणे श्रमस्त्रीभारकर्शिते ॥५९॥

सर्पिर्गुडान्तराण्याह—बला विदारीत्यादि । बला । विदारी विदारीकन्दा । ह्रस्वा पंचमूली शालपर्ण्यादि लघु पंचमूलं । पुनर्नवा ।पंचानां । क्षीरिणः क्षीरप्रधाना वृक्षाः । तेषां क्षीरिवृक्षाणां अश्वत्थोदुम्बरप्लक्षवटपिप्पलानां शुंगाः नवोद्गताः पल्लवाश्च मुष्ट्यंशकाः प्रत्येकं पलांशाः । पलं मुष्टिरिति । एषामुक्तानां बलादिशुंगान्तानां त्रयोदशानां प्रत्येकं पलिकानां कल्कितानां ततोऽष्टगुणे तोये क्वथितानां कषाये क्वाथे पादशेषे अवतारिते द्विक्षीरे कषायात् द्विगुणं क्षीरं यस्मिन् तस्मिन् । विदार्याः केवलायाः । आजस्य छागमांसस्य च रसांशः रसभागः । प्रत्येकं घृतसमः । बलादिक्वाथसमो वा । यस्मित् तस्मिन्. तथाविधे एषां कषाये जीवनीयैः गणैः जीवकर्षभकादिभिर्दशभिः कल्कैः कल्कितैः अक्षमात्रैः प्रत्येकं कर्षांशैः घृतस्य आढकं चतुःप्रस्थं चतुःषष्टिपलं पचेत् साधयेत् । ततः अवतार्य तस्मिन् पूते परिस्रुते शीते च सति तत्र द्वात्रिंशतं सितायाः शर्करायाः पलानि सितायाः द्वात्रिंशपलं । गोधूमः । पिप्पली । वांशी वंशलोचना च । तासां चूर्णं शृंगाटकस्य पानीयफलस्य च चूर्णं । समाक्षिकं समधु । कौडविकं गोधूमपिप्पलीवंशलोचनाशृंगाटकाणां चूर्णं मधु च प्रत्येकं कुडवप्रमाणं चतुष्पलपरिमितं क्षिपेत् । तत् सर्वं खजेन दर्वीदण्डेन मूर्च्छितं आलोड्य मिश्रितं तत् स्त्यानं घनं कठिनं । सर्पिर्गुडान् सर्पिर्गुडिकाः घृतपिण्डान् पलिकान् कृत्वा भूर्जपत्रेण वेष्टयेत् । भूर्जपत्रेण वेष्टनं शैत्ययुक्तकरणार्थं । पलिकान् पलप्रमाणान् तान् सर्पिर्गुडान् घृतगुडिकाः

रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते ।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः ॥६०॥
द्वितीयाः सर्पिर्गुडाः ।
त्वक्क्षीरीश्रावणीद्राक्षामूर्वर्षभकजीवकैः ।
वीरर्द्धिक्षीरकाकोलीबृहतीकपिकच्छुभिः ॥६१॥
खर्जूरफलमेदाभिः क्षीरपिष्टैः पलोन्मितैः ।
धात्रीविदारीक्षुरसप्रस्थैः प्रस्थं घृतात् पचेत् ॥६२॥
शर्कराधतुलां शीते क्षौद्रार्धप्रस्थमेव च ।
क्षिप्त्वा सर्पिर्गुडान् कुर्यात् कासहिक्काज्वरापहान् ॥६३॥

प्रतिदिनं जग्ध्वा अनु पश्चात् क्षीरं पिबेत् वाते पित्ते चाधिके । कफे तु मद्यं अनुपिबेत् । ते च सर्पिर्गुडाः । शोषे यक्ष्मणि । कासे । क्षते उरःक्षते । क्षीणे क्षतक्षीणे । श्रमः अध्वगमनादिः । स्त्री । भारश्च । तैः कर्शितः । तस्मिन् । तथाविधे पुरुषे । तथा रक्तनिष्ठीवने । उरसि स्थिते तापे उरोदाहे । पीनसे । पार्श्वयोः शिरसश्च शूले । स्वर-वर्णयोः भेदे स्वरभेदे वर्णभेदे वैवर्ण्ये च । शस्ताः हिताः ॥ ५५—६० ॥

त्वक्क्षीरीत्यादि । त्वक्क्षीरी वंशलोचना । श्रावणी मुण्डेरी । द्राक्षा । मूर्वा । ऋषभकः । जीवकश्च । तैः । वीरा पृश्निपर्णी । ऋद्धिः प्रसिद्धा । क्षीरकाकोली । बृहती । कपिकच्छुः शूकशिम्बी च । ताभिः ॥ खर्जूरफलानि । मेदा च । ताभिः । त्वक्क्षीर्यादिमेदान्तैः त्रयोदशभिः द्रव्यैः पलोन्मितैः प्रत्येकं पलपरिमितैः क्षीरपिष्टैः क्षीरेण श्लक्ष्णपिष्टैः । कल्कितैः । धात्री आमलकी । विदारी विदारीकन्दा । इक्षुश्च । तेषां त्रयाणां रसप्रस्थैः त्रिभिः । धात्रीरसप्रस्थेन विदारीरसप्रस्थेन इक्षुरसप्रस्थेन च इत्यर्थः । घृतात् प्रस्थं घृतस्य प्रस्थं पचेत् भिषक् । पक्त्वा अवतार्य च तस्मिन् पूते शीते च कृते तत्र शर्करायाः अर्धतुलां पंचाशतं पलानि क्षौद्रस्य मधुनः अर्धप्रस्थं अष्टौ पलानि क्षिप्त्वा प्रक्षिप्य । तेन कासहिक्काज्वरापहान् सर्पिर्गुडान् घृतपिण्डकान् कुर्यात् । ते च सर्पिर्गुडाः । यक्ष्माणं । तमकं श्वासं । रक्तपित्तं । हलीमकं । शुक्र-

---

६२—खर्जूरविषमेदाभिः इति ङ या पुस्तकयोः ।

यक्ष्माणं तमकं श्वासं रक्तपित्तं हलीमकम्।
शुक्रनिद्राक्षयं तृष्णां हन्युः कार्श्यं सकामलम् ॥६४॥
तृतीयाः सर्पिर्गुडाः।
नवमामलकं द्राक्षामात्मगुप्तां पुनर्नवाम्।
शतावरीं विदारीश्च समंगां पिप्पलीं तथा ॥६५॥
पृथग्दशपलान् भागान् पलान्यष्टौ च नागरात्।
यष्ट्याह्वसौवर्चलयोर्द्विपलं मरिचस्य च ॥६६॥

निद्रयोः क्षया। शुक्रक्षक्षः निद्राक्षयः अनिद्रा च। तं। तृष्णां। सकामलं कार्श्यं कार्श्यं कामलां च। हन्युः। कासहिक्काज्वरहन्तृत्वमेषां प्रागेवोक्तं ॥ ६१—६४ ॥

नवमामलकमित्यादि। नवं आमलकं आमलकफलं। द्राक्षां। आत्मगुप्तां। पुनर्नवां। शतावरीं। विदारीं। समंगां मंजिष्ठां। तथा पिप्पलीं। पृथक् दशपलान् भागान् नवामलकादिपिप्पल्यान्तानां सप्तानां प्रत्येकं दश पलानि। नागरात् शुण्ठ्या अष्टौ पलानि। यष्ट्याह्व यष्टिमधु। सौवर्चलं तदाख्यलवणभेदश्च। तयोः प्रत्येकं द्विपलं। मरिचस्य द्विपलं च। गृहीत्वा। तत् सर्वं एकत्र चूर्णयित्वा। शर्कराश्रृते शर्कराभिः सहश्रृते पक्वे क्षीरं तैलं घृतं तेषां च त्रयाणां प्रत्येकं आढकं आढकमितानां त्र्याढके आढकत्रये क्वथिते क्राथयित्वा। सान्द्रे सति। नवामलकादीनां तानि चूर्णानि तत्र दत्त्वा विल्वसमान् पलप्रमाणान्। विल्वं पलं। गुडान् गुडिकाः कुर्यात्। तथा च क्षीरतैलघृतानां आढकत्रयं एकीकृत्य शर्करया संयोज्य पचेत् आसान्द्रीभावात्। पाकेन सान्द्रीभूते तस्मिन्। नवामलकादीनां प्रत्येकं दश पलानि। शुण्ठ्याः अष्टौ पलानि। यष्टिमधुन सौवर्चलस्य मरिचस्य च द्वे द्वे पले च। चूर्णीकृत्य तत्र प्रक्षिपेत्। प्रक्षिप्य आलोड्य तेन पलप्रमाणाः गुडिकाः कुर्यात्। क्षतः उरसि क्षतः। क्षीणः। शुष्कः शोषी च। मानवः तान् गुडान् भक्षयेत्। तेन स मानवः रसादीनां। आदिना रक्तमांसमेदःप्रभृतीनां ग्रहणं। वृध्या सद्यः पुष्टिं लभते विन्दति। वृद्धवाग्भटेनाऽप्युक्तं—सशर्कराश्रृते क्षीर-घृततैलाढकत्रये। चूर्णीकृत्य क्षिपेत् पक्वसान्द्रे दशपलाः पृथक्। द्राक्षात्मगुप्ता-

---

६४—हन्युस्तृष्णां सकामलां इति च पुस्तके।

क्षीरतैलघृतानाञ्च द्व्याढके शर्कराश्शते ।
कथिते तानि चूर्णानि दत्त्वा बिल्वसमान् गुडान् ॥६७॥
कुर्यात् तान् भक्षयेत् क्षीणः क्षतः शुष्कश्च मानवः ।
तेन सद्यो रसादीनां वृद्ध्या पुष्टिं स विन्दति ॥६८॥
इति चतुर्थाः सपिर्गुडाः ।
गोक्षीरार्धाढकं सर्पिःप्रस्थमिक्षुरसाढकम् ।
विदार्याः स्वरसात् प्रस्थं रसात् प्रस्थञ्च तैत्तिरात् ॥६९॥
दद्यात् सिध्यति तस्मिंस्तु पिष्टानिक्षुरसैरिमान् ।
मधूकपुष्पकुडवं पियालकुडवं तथा ॥७०॥

वर्षाभूसमंगाभीरुपिप्पलीः । तद्वद्विदार्यामलके प्रस्थार्धं विश्वभेषजं । यष्ट्याह्व-सौवर्चलयोर्द्विपलं मरिचस्य च । क्षामः क्षीणः क्षतः शुष्यंस्तान् खादेत् पलिकैर्गुडैः । तथा सद्यो रसादीनां वृद्ध्या पुष्टिं समश्नुते । इति ( अ० स० चि० ५ ) । अभीरुः शतावरी । प्रस्थार्धं अष्टपलं । इत्थं च जल्पकल्पतरुकृता समंगामित्यत्र समांशा-नीति शर्कराश्शते इत्यत्र शर्कराशते इति च पठित्वा यथाख्यातं तद्बोध्यं ॥ ६५-६८ ॥

गोक्षीरार्द्धाढकमित्यादि । गोक्षीरस्य गव्यस्य पयसः अर्धाढकं प्रस्थद्वय । दद्या-दिति परेणान्वयः । एवं परत्रापि । सर्पिषः गव्यस्य प्रस्थं षोडश पलानि । इक्षुरसस्य आढकं चतुःप्रस्थं । चतुःप्रस्थमथाढकमिति । विदार्याः विदारीकन्दायाः स्वरसात् प्रस्थं स्वरसप्रस्थं । तैत्तिरात् रसात् प्रस्थं तित्तिरिमांसरसप्रस्थं च । दद्यात् । तत् सर्व-मेकत्र पचेत् । सिध्यति पच्यमाने तस्मिन् इमान् वक्ष्यमाणान् मधूकपुष्पकुडवादीन् इक्षुरसैः पिष्टान् श्लक्ष्णपिष्टान् दद्यात् । कान् तानित्याकांक्षायामाह—मधूकपुष्प-कुडवमित्यादि । मधूकपुष्पाणां कुडवं चतुष्पलं पियालस्य कुडवं । तुगाक्षीर्याः वंशलोचनायाः कुडवार्धं द्वे पले । खर्जूराणां फलानां विभीतकानां मज्ज्ञश्च पृथक्

६७—द्व्याढके शर्कराशते इति ठ पुस्तके ।

कुडवार्धं तुगाक्षीर्याः खर्जूराणाञ्च विंशतिम्।
पृथग्विभीतकानाञ्च पिप्पल्याश्च चतुर्थिकाम् ॥७१॥
त्रिंशत् पलानि खण्डाच्च मधुकात् कर्षमेव च।
तथार्धपलिकान्यत्र जीवनीयानि दापयेत् ॥७२॥
सिद्धेऽस्मिन् कुडवं क्षौद्राच्छीते क्षिप्त्वाथ मोदकान्।
कारयेन्मरिचाजाजीपलचूर्णावचूर्णितान् ॥७३॥
वातासृक्पित्तरोगेषु क्षतकासक्षयेषु च।
शुष्यतां क्षीणशुक्राणां रक्ते चोरसि संस्थिते ॥७४॥
कृशदुर्बलवृद्धानां पुष्टिवर्णबलार्थिनाम्।
योनिदोषकृतस्रावहतानाञ्चापि योषिताम् ॥७५॥

प्रत्येकं आकृत्या विंशतिं। पिप्पल्याश्च चतुर्थिकां पलं। खण्डात् तदाख्यगुड़भेदात् त्रिंशत्-पलानि त्रिंशतं पलानि। मधुकात् यष्टिमधुनश्च कर्षं। तथा जीवनीयानि जीवकर्षभ-कप्रभृतीनि दश प्रत्येकं अर्धपलिकानि। एतत् सर्वं इक्षुरसैः श्लक्ष्णं पिष्ट्वा अत्र पच्य-माने घृतप्रस्थे दापयेत् दद्यात्। तथा च—गव्यपयसः अर्धाढकं इक्षुरसस्य आढकं विदारीस्वरसप्रस्थं तित्तिरिमांसरसप्रस्थं च एकीकृत्य तत्र मधूकपुष्पत्रतुष्पलं तुगाक्षीर्याः द्वे पले खर्जूराणां विभीतकफलमज्ज्ञां च विंशतिं पिप्पल्याः पलं खण्ड-गुडस्य त्रिंशत्पलं यष्टिमधुनः कर्षं जीवनीयानि प्रत्येकं अर्धपलमितानि च इक्षु-रसैः कल्कितानि दत्त्वा तत्र पुराणगव्यघृतस्य प्रस्थं साधयेत्। तस्मिन् सिद्धे अवतार्य शीते च कृते तत्र क्षौद्रात् मधुनः कुडवं चतुष्पलं क्षिप्त्वा प्रक्षिप्य। अथ मरिचं। अजाजी कृष्णजीरकश्च। तयोः प्रत्येकं पलं। तस्य चूर्णं। तयोः प्रत्येकं पलपरिमितं चूर्णं इत्यर्थः। तेन अवचूर्णितान् तच्चूर्णयुक्तान् मोदकान् कारयेत् तत्र मरिचाजाज्योश्चूर्णितयोः प्रत्येकं पलं दत्त्वा तेन मोदकान् कुर्यात्। ते मोदकाः। वातासृक्पित्तरोगेषु। वातशोणिते। रक्तपित्ते च। क्षतं उरःक्षतं। कासः। क्षयः

गर्भार्थिनीनां गर्भश्च स्रवेद् यासां म्रियेत वा ॥
धन्या वल्या हितास्ताभ्यः शुक्रशोणितवर्धनाः ॥७६॥

इति सर्पिर्मोदकाः।

वस्तिदेशे विकुर्वाणे स्त्रीप्रसक्तस्य मारुते।
वातघ्नान् बृंहणान् वृष्यान् योगांस्तस्य प्रयोजयेत् ॥७७॥
शर्करापिप्पलीचूर्णैः सर्पिषा माक्षिकेण च।
संयुक्तं वा शृतं क्षीरं पिबेत् कासज्वरापहम् ॥७८॥

क्षतक्षयश्च। तेषु रोगेषु। उरसि स्थिते रक्ते च। तथा शुष्यतां शोषिणां। क्षीण-शुक्राणां। कृशाः दुर्वलाः वृद्धाश्च। तेषां। पुष्टिरुपचयः। वर्णः। वलं च। तदर्थिनां च पुंसां। तथा योनिदोषः। कृतः स्रावः शोणितस्रावश्च। ताभ्यां हता उपहताः। तासां। तथा गर्भार्थिनीनां वन्ध्यतया गर्भं कामयमानानां चापि। तथाविधानां योषितां सम्बन्धे हिताः। यासां योषितां गर्भः स्रवेत्। जातो वा म्रियेत। ताभ्य-श्चापि हिताः। हितशब्दयोगाच्चतुर्थी। ते च मोदकाः धन्याः वल्याः शुक्रशोणित-वर्धनाश्च ॥ ६९—७६ ॥

वस्तिदेशे इति। स्त्रीप्रसक्तस्य अतिव्यवायिनः पुंसः मारुते वाते वस्तिदेशे विकु-र्वाणे विकारं शूलादिकं कुर्वति सति। तस्य वातघ्नान् बृंहणान् वृष्यांश्च योगान् वक्ष्यमाणान् प्रयोजयेत् ॥ ७७ ॥

योगानाह—शर्करेति। शृतं क्षीरं। शर्करा। पिप्पली च। तयोः चूर्णैः। सर्पिषा माक्षिकेण मधुना वा संयुक्तं कृत्वा शर्करादिकं तत्र प्रक्षिप्य पिबेत्। तच्च कास-ज्वरापहं ॥ ७८ ॥

७६—गर्भश्च च्यवेद्यासां इति ख पुस्तके।

फलाम्लं सर्पिषा भृष्टं विदारीक्षुरसे शृतम् ।
स्त्रीषु क्षीणः पिवेद् यूषं जीवनं वृंहणं परम् ॥७६॥

सक्तूनां वस्त्रपूतानां मन्थं क्षौद्रघृतान्वितम् ।
यवान्नसात्म्यो दीप्ताग्निः क्षतक्षीणः पिवेन्नरः ॥८०॥

जीवनीयोपसिद्धं वा घृतभृष्टं च जाङ्गलम् ।
रसं प्रयोजयेत् क्षीणे व्यञ्जनार्थं सशर्करम् ॥८१॥

गोमहिष्यश्वनागाजैः क्षीरैर्मांसरसैस्तथा ।
यवान्नं भोजयेद् यूषैः फलाम्लैर्घृतसंस्कृतैः ॥८२॥

फलाम्लमिति । स्त्रीषु क्षीणः अतिव्यवायात् क्षीणः पुमान् । विदारी इक्षुश्च । तयोः रसे शृतं पक्वं । सर्पिषा भृष्टं सन्तलितं । फलाम्लं फलैः दाडिमामलकादिभिः अम्लं अम्लीकृतं । परमतीव जीवनं । वृंहणं च । यूषं मुद्गादियूषं पिवेत् ॥ ७६ ॥

सक्तूनामिति । क्षतः क्षीणः नरः । यवान्नं सात्म्यं यस्य स यवान्नसात्म्यः । दीप्ताग्निश्चेत् । तदा वस्त्रेण पूतानां स्रावितानां वस्त्रपूतानां वस्त्रान्तरालगालितानां सक्तूनां यवसक्तूनां मन्थं । मन्थः जलेनालोडिताः सक्तवः । क्षौद्रघृतान्वितं घृतमधुयुतं कृत्वा । पिवेत् ॥ ८० ॥

जीवनीयोपसिद्धमिति । क्षीणे क्षतक्षीणे व्यंजनार्थं जीवनीयैः गणैः जीवकर्षभकादिभिः सह उपसिद्धं घृतभर्जितं जांगलं रसं जांगलमांसरसं सशर्करं शर्कराप्रक्षेपयुक्तं प्रयोजयेत् ॥ ८१ ॥

गोमहिष्यश्वेति । गौः । महिषी । अश्वः । नागः हस्ती । अजः अजा वा । तत्सम्बन्धिभिः गोमहिष्यश्वनागाजैः क्षीरैः मांसरसैश्च । क्षीरसम्बन्धित्वे इह अश्वनागयोः स्त्रीत्वेनपरिवृत्तिरूहनीया । क्षीरमांसरसयोः यथासम्भवं ग्रहणं वापि । तथा फलाम्लैः दाडिमामलकादिरसैः अम्लीकृतैः घृतसंस्कृतैः मुद्गादियूषैश्च यवान्नं भोजयेत् ॥ ८२ ॥

दीप्तेऽग्नौ विधिरेष स्यान्मन्दे दीपनपाचनः ।
यक्ष्मिणां विहितो ग्राही भिन्ने शकृति चेष्यते ॥८३॥
पलिकं सैन्धवं शुण्ठी द्वे च सौवर्चलात् पले ।
कुडवांशानि वृक्षाम्लं दाडिमं पत्रमर्जकात् ॥८४॥
एकैकं मरिचाजाज्योर्धान्यकाद्द्वे चतुर्थिके ।
शर्करायाः पलान्यत्र दश द्वे च प्रदापयेत् ॥ ८५ ॥
कृत्वा चूर्णं ततो मात्रामन्नपाने प्रयोजयेत् ।
रोचनं दीपनं बल्यं पार्श्वार्त्तिश्वासकासनुत् ॥ ८६ ॥

इति सैन्धवादिचूर्णम् ॥

दीप्तेऽग्नाविति । क्षतक्षोणस्य अग्नौ दीप्ते सति एष उक्तः बृंहणः विधिः स्यात् । अग्नौ मन्दे तु दीपनपाचनः विधिः स्यात् । शकृति भिन्ने अतिसरणे पुनः यक्ष्मिणां सम्बन्धे यः ग्राही मलसंग्रहकरः विधिः विहितः उक्तः स इष्यते ॥ ८३ ॥

सैन्धवादिचूर्णमाह—पलिकं सैन्धवमित्यादि । सैन्धवं पलिकं एकपलं । सौवर्चलात् तदाख्यलवणभेदात् द्वे पले । सौवर्चलस्य द्विपलं । वृक्षाम्लं पक्वं तिन्तिडीकं । दाडिमं । अर्जकात् तुलस्याः पत्रं च । एतानि त्रीणि कुडवांशानि । प्रत्येकं कुडवांशानि चतुष्पलमितानि । मरिचं । अजाजो जीरकश्च । तयोः एकैकं पलं । मरिचस्य एकं पलं । अजाज्याश्च एकं पलं । धान्यकात् धन्याकात् द्वे चतुर्थिके पले । शर्करायाः दश द्वे च द्वादश पलानि च । तत्र दापयेत् । ततः तत् सर्वं एकत्र चूर्णं कृत्वा चूर्णयित्वा तस्य मात्रां यथाग्नि अन्नपाने प्रयोजयेत् । तच्च चूर्णं रोचनं अन्ने रुचिकरं । अग्नेर्दीपनं । बल्यं । पार्श्वार्तिश्वासकासनुच्च । पार्श्वार्त्तिः पार्श्वशूलं ॥ ८४—८६ ॥

---

८४—दाडिमं पत्रमार्जुनं इति ठ पुस्तके ।
८५-८६—इमे श्लोकाः च पुस्तके न पठ्यन्ते ।

एका षोडशिका धान्याद् द्वे द्वेऽजाज्यजमोदयोः ।
ताभ्यां दाडिमवृक्षाम्लं द्विर्द्विः सौवर्चलात् पलम् ॥ ८७ ॥
शुण्ठ्याः कर्षं दधित्थस्य मध्यात् पञ्च पलानि च ।
तच्चूर्णं षोडशपले शर्करया विमिश्रयेत् ॥ ८८ ॥
षाडवोऽयं प्रदेयः स्यादन्नपानेषु पूर्ववत् ।
मन्दानले शकृद्भेदे यदिमणामग्निवर्धनः ॥ ८९ ॥

इति षाडवः ॥

पिबेन्नागबलामूलमर्धकर्षविवर्धनम् ।
पलं क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक् ॥ ९० ॥

षाडवमाह --एका षोडशिकेत्यादि । धान्यात् धन्याकात् एका षोडशिका पलं । पलं मुष्टिः प्रकुंचोऽथ चतुर्थिका बिल्वं षोडशिकं चाम्रमिति ( च० क० १२ ) । अजाजी । अजमोदो दीप्यकश्च । तयोः द्वे द्वे पले अजाज्या द्वे पले । अजमोदस्य च द्वे पले । दाडिमं वृक्षाम्लं च तत् । ताभ्यां अजाज्यजमोदाभ्यां द्विः द्विः प्रत्येकं द्विगुणितं । तथा च अजाज्याः चतुष्पलं वृक्षाम्लस्य च चतुष्पलं । ताभ्यामित्यनेन केचित् अजाज्यजमोदाभ्यां मिलिताभ्यामेव द्वैगुण्यं दाडिमवृक्षाम्लयोराहुः । तेषां मते दाडिमवृक्षाम्लयोः प्रत्येकमष्टपलं । सौवर्चलात् पलं । शुण्ठ्याः कर्षं । दधित्थस्य कपित्थस्य फलस्य मध्यात् मध्यस्थशस्यात् मज्जः पंच पलानि च । तत् सर्वं एकत्र चूर्णयित्वा तच्चूर्णं शर्करयाः षोडशपले विमिश्रयेत् । अयं षाडवः अग्निवर्धनः । दीपनः । क्षतक्षीणानां च मन्दानले शकृद्भेदे च अन्नपानेषु पूर्ववत् मात्रया प्रदेयः स्यात् । पूर्ववदिति पूर्वयोगसमानफलो वा । स च षाडवः रोचनः दीपनः बल्यः पार्श्वार्त्तिश्वासकासनुच्च ॥ ८७ -- ८९ ॥

पिबेदिति । नागबला गोरक्षतण्डुला । तस्याः मूलं मूलत्वक्चूर्णं । अर्धकर्षस्य विवर्धनं वृद्धिः यत्र तत् अर्धकर्षविवर्धनं पलं । प्रतिदिनं अर्धकर्षवृद्धिः पलं

एष प्रयोगः पुष्ट्यायुर्बलारोग्यकरः परः ।
मण्डूकपर्ण्याः कल्पोऽयं शुण्ठीमधुकयोस्तथा ॥ ६१ ॥
यद्यद् यत् सन्तर्पणं शीतमविदाहि हितं लघु ।
अन्नपानं निषेव्यं तत् क्षतक्षीणैः सुखार्थिभिः ॥ ६२ ॥
यच्चोक्तं यक्ष्मिणां पथ्यं कासिनां रक्तपित्तिनाम् ।
तच्च कुर्यादवेक्ष्याग्निं व्याधिं सात्म्यं बलन्तथा ॥ ६३ ॥
उपेक्षिते भवेत् तस्मिन्ननुबन्धो हि यक्ष्मणः ।
प्रागेवागमनात् तस्य तस्मात् तं त्वरया जयेत् ॥ ६४ ॥

यावत् । तथा च प्रथमेऽहनि अर्धकर्षः । द्वितीये कर्षः । तृतीये सार्धः कर्षः । चतुर्थे द्वौ कर्षौ । पंचमे सार्धौ द्वौ । षष्ठे त्रयः कर्षाः । सप्तमे सार्धास्त्रयः । अष्टमे चत्वारः कर्षाः । तदेव पलं । शेषेषु द्वाविंशतिदिनेषु च पलं । अर्धकर्षविवर्द्धनं तथाविधं तच्च पलं । क्षीरयुतं । क्षतक्षीणः अनन्नभुक् क्षीरवृत्तिः सन् । अन्नं न भुंजीत केवलं क्षीरं पीत्वा वर्त्तेत । मासं त्रिंशत् दिनं व्याप्य पिबेत् । एष प्रयोगः । परः श्रेष्ठः । पुष्टिरुपचयः । आयुः शरीरेन्द्रियसत्त्वात्मसंयोगलक्षणं । बलं । आरोग्यं च । तत्करः । मण्डूकपर्ण्याः । तथा शुण्ठी । मधुकं यष्टीमधु च । तयोश्च । अयं कल्पः विधिः । नागबलोक्तविधिना तेषामपि प्रयोगः कार्यः ॥ ६०—६१ ॥

यद्यदिति । यत् यत् अन्नपानं सन्तर्पणं । न त्वपतर्पणं । शीतं । न विदाहि । हितं । लघु च । तत्सर्वं क्षतक्षीणैः पुरुषैः सुखार्थिभिः आरोग्यार्थिभिः सेव्यं ॥ ६२ ॥

यच्चोक्तमिति । यत् यक्ष्मिणां राजयक्ष्मिणां कासिनां रक्तपित्तिनां च सम्बन्धे पथ्यं पथ्यतया उक्तं तत् तत् क्षतक्षये चापि अग्निं जाठरं व्याधिं सात्म्यं तथा बलं व्याधितस्य च अवेक्ष्य अग्न्याद्यपेक्षया विकल्प्य कुर्यात् ॥ ६३ ॥

उपेक्षिते इति । तस्मिन् क्षतक्षये उपेक्षिते कृतचिकित्साविलम्बे सति हि यस्मात् यक्ष्मणः अनुबन्धः भवेत् । तस्मात् तस्य यक्ष्मणः आगमनात् प्राक् एव यक्ष्मरूपेणाक्रमणात् प्रागेव तं क्षतक्षयं त्वरया जयेत् जातमात्रं चिकित्सेत् ॥ ६४ ॥

तत्र श्लोकौ।

क्षतक्षयसमुत्थानं सामान्यपृथगाकृतिम्।
असाध्ययाप्यसाध्यत्वं साध्यानां सिद्धिमेव च ॥९५॥
उक्तवान् ज्येष्ठशिष्याय क्षतक्षीणचिकित्सिते।
तत्त्वार्थविद् वीतरजस्तमोमोहः पुनर्वसुः ॥९६॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
क्षतक्षीणचिकित्सितं नामैकादशोऽध्यायः ॥११॥

## द्वादशोऽध्यायः।

अथातः श्वयथुचिकित्सितं व्याख्यास्यामः।
इति ह स्माह भगवानात्रेयः ॥१॥

अध्यायार्थसंग्रहमाह— तत्र श्लोकावित्यादि। क्षतक्षयस्य समुत्थानं निदानं। सामान्यपृथगाकृतिं तस्य सामान्यतो विशेषतश्च रूपं। तस्य असाध्यसाध्ययाप्यत्वं अल्पलिंगस्य दीप्ताग्नेरित्यादिना उक्तं। साध्यानां क्षतक्षीणानां सिद्धिं चिकित्सां च। एतत् सर्वं अस्मिन् क्षतक्षीणचिकित्सिते अध्याये। तत्वार्थवित् तत्वज्ञः। वीताः विगताः। रजः तमः मोहश्च। ते यस्य यस्माद्वा स तथोक्तः। पुनर्वसुः भगवानात्रेयः जेष्ठशिष्याय अग्निवेशाय उक्तवान् ॥ ९५। ९६ ॥

इति वैद्यरत्नश्रीयोगीन्द्रनाथविद्याभूषणकृते चरकोपस्कारे चिकित्सितस्थाने एकादशोऽध्यायः।

द्वादशोऽध्यायः।

क्षतक्षीणचिकित्सितमुक्तं। सम्प्रति श्वयथुचिकित्सितमारभ्यते—अथात इति। सेषं पूर्ववद्व्याख्येयं ॥ १ ॥

भिषग्वरिष्ठं सुरसिद्धजुष्टं मुनीन्द्रमत्र्यात्मजमग्निवेशः ।
महागदस्य श्वयथोर्यथावत् प्रकोपरूपप्रशमानपृच्छत् ॥ २ ॥
तस्मै जगादागदवेदसिन्धुप्रवर्त्तनाद्रिप्रवरोऽत्रिजस्तान् ।
वातादिभेदात् त्रिविधस्य सम्यङ् निजानिजैकाङ्गजसर्वजस्य ॥३॥
शुद्ध्यामयाभुक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवा ।
दध्याममृच्छाकविरोधिदुष्टगरोपसृष्टान्ननिषेवणञ्च । ४ ॥

भिषग्वरिष्ठमिति । अग्निवेशः । भिषक्षु वरिष्ठः उत्तमः । तं भिषग्वरिष्ठं । सुराः । सिद्धाः देवयोनिभेदाश्च । तैर्जुष्टः सेवितः । तं । मुनीन्द्रं मुनिश्रेष्ठं । अत्रेः आत्मजः पुत्रः । तं अत्र्यात्मजं आत्रेयं भगवन्तं पुनर्वसुं गुरुं । अग्रधानं कर्म । महागदस्य श्वयथोः शोथस्य । यथावत् । प्रकोपयतीति प्रकोपः प्रकोपणं । हेतुः । रूपं लिंगं । प्रशमं चिकित्सितं च । गुल्मं कर्म । व्याधिज्ञापकतया सम्प्राप्तिपूर्वरूपयोः इह रूपशब्देन संग्रहः । अपृच्छत् यथावत् प्रणम्य प्रांजलिर्भूत्वा अपृच्छत् ॥ २ ॥

तस्मा इति । अगदमारोग्यं । तद्वेदः आयुर्वेदः । स एव सिन्धुः नदी । इह गंगाख्या । देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियां । इति । तस्याः प्रवर्त्तने अद्रि-प्रवरो हिमाचलः । यथा हिमवतो गंगायाः प्रवृत्तिः एवमात्रेयादायुर्वेदस्य । अत्रिजः आत्रेयः भगवान् पुनर्वसुः अग्निवेशेन एवं पृष्टः सन् तस्मै अग्निवेशाय । निजः शारीर-दोषोत्थः । अनिजः आगन्तुः बाह्यहेतुजः । एकांगजः । सर्वजः सर्वगात्रजः । अर्ध-गात्रजश्चापि । सर्वार्धगात्रावयवाश्रितत्वादिति वक्ष्यमाणवचनात् । तस्य निजा-निजैकांगजसर्वजस्य । निजानिजत्वेन प्राक् द्विविधस्य । निजस्य पुनः वातादिभेदात् वातिकत्वादिना त्रिविधस्य । त्रिशोथीयोक्तानां द्वन्द्वजसान्निपातिकानामिह वाति-कादिष्ववरोधः । तस्य श्वयथोः तान् प्रकोपरूपप्रशमान् सम्यक् जगाद ॥ ३ ॥

निजागन्तुभेदेन श्वयथुर्द्विविधः । तत्रादौ निजस्य हेतुमाह—शुद्ध्यामयेत्यादि । शुद्धिः शोधनं वमनादिकर्म । आमयाः ज्वरादयो रोगाः । अभुक्तमभोजनमुपवासश्च ।

४—दध्याममृच्छाक इति ग पुस्तके ।

अर्शांस्यचेष्टा न च देहशुद्धिर्गर्भोपघातो विषमा प्रसूतिः।
मिथ्योपचारः प्रतिकर्मणाञ्च निजस्य हेतुः श्वयथोः प्रदिष्टः ॥५॥
वाह्यत्वचो दूषयिताभिघातः काष्ठाग्निशल्याश्मविषायसाद्यैः।
आगन्तुहेतुस्त्रिविधो निजश्च सर्वार्धगात्रावयवाश्रितत्वात् ॥६॥

तैः कृशाः। अवलाः दुर्वलाश्च। तेषां तथाविधानां पुंसां। शुद्ध्यादिभिरतिकर्शनं। क्षारस्य। तथा अम्लं तीक्ष्णं उष्णं गुरु च यत् आहारजातं। तस्य च उपसेवा उपसेवनं। दधि। आममपक्कं। आमः अपक्करसो वा। मृत् मृत्तिका। शाकः। तथा विरोधि विरुद्धं। यथा पयसा सह मत्स्यो विरुध्यते। दुष्टं दोषजनकं। यथा मन्दकं दधि। गरं संयोगजं विषं। तेन उपसृष्टं संस्पृष्टं च यत् अन्नं। तच्च। तेषां निषेवणं। अर्शांसि। अन्यरोगैरतिकर्शनं श्वयथुहेतुः। अर्शांसि तु स्वयमेव। अचेष्टा निष्क्रियत्वं। न च देहशुद्धिः शोधनार्हेऽपि शरीरे न शोधनं। गर्भोपघातः गर्भनिष्पीडनं। गर्भसंपीडनादिति (च० श्लो० १८)। मर्मोपघात इति पाठे मर्मोपघातः मर्मणि उपघातः। विषमा प्रसूतिः प्रसवः आमगर्भपतनादि। गर्भोपघातः विषमा प्रसूतिश्च स्त्रीणां श्वयथुहेतुः। प्रतिकर्मणां वमनादिकर्मणां मिथ्योपचारः अयथावत् प्रयोगः मिथ्याचरणं। शुद्ध्या कर्शनं तु अतियोगः। अथवा प्रतिकर्म वमनादिषु कर्मसु कृतेषु संसर्जनादिकं यत् कर्म क्रियते। तेषां मिथ्योपचारः अयथाकरणं। तदुक्तं त्रिशोथीयेऽपि—मिथ्यासंसर्जनाद्वा। इति (च० श्लो० १८)। इति निजस्य श्वयथोः हेतुः। सामान्यहेतुः इह प्रदिष्टः उक्तः। वातिकत्वादिना त्रिविधस्य तु विशेषहेतुः त्रिशोथीयोक्त एव वोद्धव्यः ॥ ४। ५॥

आगन्तोर्हेतुमाह—वाह्यत्वच इति। वाह्यत्वचः दूषयिता दुष्टिकृत्। काष्ठं। अग्निः। शल्यं कण्टकं। अश्मा प्रस्तरः। विषं। आयसः लौहदण्डादिः। तदाद्यैः तत्प्रभृतिभिः अभिघातः श्वयथोः आगन्तुहेतुः। आगन्तोः श्वयथोर्हेतुर्वा। प्रदिष्टः। निजस्य वातिकत्वादिना त्रैविध्यमुक्तं—वातादिभेदात् त्रिविधस्य इति। सम्प्रति सर्वगात्रार्धगात्रावयवाश्रितत्वेन त्रैविध्यमाह—त्रिविधो निजश्चेति। निजः श्वयथुः

वाह्याः सिराः प्राप्य यदा कफासृक्पित्तानि सन्दूषयतीह वायुः ।
तैर्बद्धमार्गः स तदा विसर्पन्नुत्सेधलिंगं श्वयथुं करोति ॥७॥
ऊर्ध्वं स्थितैरूर्ध्वमधश्च वायोः स्थानस्थितैर्मध्यगतैश्च मध्ये ।
सर्वाङ्गगः सर्वगतैः क्वचित्स्थैर्दोषैः क्वचित्स्याच्छ्वयथुस्तदाख्यः॥८॥

सर्वं अर्धं च गात्रं अवयवः एकांगं च तदाश्रितत्वात् सर्वगात्राश्रितत्वात् अर्ध-गात्राश्रितत्वात् अवयवाश्रितत्वाच्च त्रिविधः। निजः श्वयथुः वातिकादिभेदात् त्रिविधः सर्वगात्रार्धगात्रावयवाश्रितत्वाच्चापि त्रिविधः। अध्यायार्थसंग्रहे चापि—त्रिविधस्य दोषभेदात् सर्वार्धावयवगात्रभेदाच्चेति ॥ ६ ॥

सम्प्राप्तिमाह—वाह्याः सिरा इति। उक्तैर्हेतुभिः प्रकुपितः वायुः यदा इह शरीरे वाह्याः सिराः स्रोतांसि प्राप्य कफः असृक् रक्तं पित्तं च तानि सन्दूषयति दुष्टत्वात्। तदा तैः कफपित्तरक्तैः दुष्टैः बद्धमार्गः रुद्धमार्गः तेन इतस्ततो गन्तुमशन्कुवन् तत्रैव विसर्पन् उत्सेधः औन्नत्यं एव लिंगं स्वरूपं अव्यभिचारिलक्षणं यस्य तं श्वयथुं करोति। इत्थं च वायुना कफपित्तसहकृतेन आरब्धत्वात् शोथस्त्रिदोषजः ॥ ७ ॥

ऊर्ध्वस्थितैरिति। तत्र दोषैः शोथारम्भकैः। ऊर्ध्वमामाशयः श्लेष्मणः स्थानं। तत्र स्थितैः ऊर्ध्वं ऊर्ध्वदेहे श्वयथुः स्यात्। तैः। वायोः स्थानं पक्वाशयः। तत्र स्थितः पक्वाशयस्याधोभागगतैः अधः श्वयथुः स्यात्। तैः पुनः मध्यं पक्वामाशययोर्मध्यं पित्तस्थानं तद्गताः तैः मध्यगतैः मध्यस्थितैः मध्ये श्वयथुः स्यात्। सुश्रुते च—दोषाः श्वयथुमूर्ध्वं हि कुर्वन्त्यामाशयस्थिताः। पक्वाशयस्था मध्ये च वर्चःस्थानगतास्त्वधः। कृत्स्नं देहमनुप्राप्ताः कुर्युः सर्वसरं तथा॥ इति (सु० चि० २३)। पक्वाशयस्थाः पक्वाशयस्योपरिभागगताः। वर्चःस्थानमधः। सर्वसरं सर्वशरीरगं। तैः सर्वगतैः सर्वशरीरगतैस्तु सर्वांगगः श्वयथुः स्यात्। क्वचित्स्थैः शरीरस्य एकदेशे कण्ठताल्वादौ स्थितैः क्वचित् एकांगे तदाख्यः तत्तदाख्यः कण्ठशोथः तालुशोथ इत्या-

८—उरः स्थितैरूर्ध्वमधश्च वायोः इति ख ग ठ पुस्तकेषु।

ऊष्मा तथा स्याद्दवथुः सिराणामायाम इत्येव च पूर्वरूपम्।
सर्वस्त्रिदोषोऽधिकदोषलिंगैस्तच्छब्दमाप्नोति भिषग्जितञ्च॥९॥

सगौरवं स्यादनवस्थितत्वं सोत्सेधमूष्माथ सिरातनुत्वम्।
सरोमहर्षोऽङ्गविवर्णता च सामान्यलिंगं श्वयथोः प्रदिष्टम्॥१०॥

बाह्यः श्वयथुः स्यात्। अथवा तदाश्रय इति सर्वत्र योज्यं। तेन ऊर्ध्वकायशोथ इति [illegible] अधःशोथ इति मध्ये मध्यशोथ इत्यादि तत्तदाश्रयः ॥८॥

पूर्वरूपमाह--ऊष्मेति। ऊष्मा उष्णत्वं अंगानां। तथा दवथुः दाहः। सिराणां आयामः प्रसारणं च। इत्येव श्वयथोः पूर्वरूपं स्यात्। वृद्धवाग्भटे च—तत्पूर्वरूपं दवथुः सिरायामोऽङ्गगौरवं। इति ( अ० सं० नि० १३ )। सर्वः श्वयथुः त्रिदोषः त्रिदोषजः। सर्वेषां त्रिदोषजन्यत्वे कथं वातिकादिव्यपदेशः तच्चिकित्सितं च स्यादिति? अत आह—अधिकदोषलिंगैरिति। सन्निपतितेषु अधिकः उल्बणो यो दोषः वातः पित्तं—कफो वा तस्य लिंगैः तच्छब्दं तत्संज्ञां वातिकादिव्यपदेशं भिषग्जितं तच्चिकित्सितं च आप्नोति। वातलिंगाधिक्ये वातिकोऽयमिति व्यपदिश्यते। तत्र वातिकशोथचिकित्सा। एवं पित्तश्लेष्मलिंगयोराधिक्ये बोद्धव्यं। यत्र समोल्बणास्त्रयः तत्रैव सान्निपातिक इति व्यपदेशः। एवं द्वयोर्दोषयोराधिक्ये द्वन्द्वजता भवति। तदुक्तं त्रिशोथीये—यथास्वकारणाकृतिसंसर्गात् त्रिदोषजास्त्रयः शोथा भवन्ति। यथास्वकारणाकृति सन्निपातात् सान्निपातिक एकः। इति ( च० सू० १८) ॥ ९ ॥

अथ श्वयथोः सामान्यलिंगमाह--सगौरवमिति। सगौरवं सोत्सेधं च अनवस्थितत्वं स्यात्। गौरवं गुरुत्वमंगानां। उत्सेधः औन्नत्यं। अनवस्थितत्वं शोथस्य। वातिकलिंगमेतत्। ऊष्मा उष्णत्वं। अथ चार्थे। सिराणां तनुत्वं कृशत्वं। सरोमहर्षा अंगविवर्णता रोमहर्षः अंगवैवर्ण्यं च। एतत् सर्वं श्वयथोः सामान्यलिंगं प्रदिष्टमुक्तं ॥ १० ॥

चलस्तनुत्वक् परुषोऽरुणोऽसितः प्रसुप्तिहर्षार्त्तियुतोऽनिमित्ततः।
प्रशाम्यति प्रोन्नमति प्रपीडितो दिवाबली च श्वयथुः समीरणात्॥११॥
मृदुः सगन्धोऽसितपीतरागवान् भ्रमज्वरस्वेदतृषामदान्वितः।
य उष्यते स्पर्शरुगक्षिरागकृत् स पित्तशोथो भृशदाहपाकवान्॥१२॥

सम्प्रति वातिकत्वादिना त्रिविधस्य विशेषलिंगमुच्यते। तत्रादौ वातिकस्य लिंगमाह—चलस्तनुत्वगिति। समीरणात् वातादधिकात् वातोल्बणः श्वयथुः। सर्वेषां त्रिदोषजत्वात्। चलः स्थानात् स्थानान्तरं चलति। तन्वी त्वक् यत्र स तनुत्वक्। परुषः कर्कशः। अरुणः। असितः श्यावः। वायोः श्यावारुणवर्णकारित्वात् श्यावारुणान्यतरवर्णः। प्रसुप्तिः स्पर्शाज्ञता। हर्षः चिमचिमायद्वेदना। रोमहर्षो वा। अर्तिः तोदभेदादिवेदना च। ताभिर्युतः। अनिमित्ततः निमित्तं विनापि कदाचित् प्रशाम्यति अल्पादिरुपशमो भवति। वायोश्चलत्वात्। निमित्तत इति पाठे निमित्ततः निमित्तेन स्नेहस्वेदादिना प्रशाम्यति। तदुक्तं त्रिशोथीयेऽपि—स्नेहोष्णमर्दनाभ्यां च प्रणश्येत् स च वातिकः। इति (च० श्लो० १८)। प्रपीडितः अंगुल्या पीडितः अधो गच्छन् शीघ्रं पुनः प्रोन्नमति। दिवा बली प्रबलः। रात्रौ तु अल्पः स्यात्। वातिकः शोथः क्षिप्रोत्थानप्रशमः। पैत्तिकोऽप्येवं॥११॥

पैत्तिकशोथस्य लक्षणमाह—मृदुः सगन्ध इति। यः शोथः। मृदुः। सगन्धः। असितः कृष्णः। पीतः। रागवान् ताम्रश्च। तः। भ्रमः। ज्वरः। स्वेदः। तृषा तृष्णा। मदश्च। तैः अन्वितः सहितः। उष्यते। सर्वांगीणः तीव्रदाहः स्वेदारतिमान् ओषः। दाहः अग्निना दाहः भस्मसात्करणमिव। स्पर्शरुक् न स्पर्शं सहते। अक्षिरागकृत्। भृशमतिशयितः दाहः पाकश्च। तद्वान् न। स पित्तशोथो ज्ञेयः॥१२॥

---

१२—स्पर्शसहोऽक्षिरागकृत् इति ग घ पुस्तकयोः।

गुरुः स्थिरः पाण्डुररोचकान्वितः
प्रसेकनिद्रावमिवह्निमान्द्यकृत्।
स कृच्छ्रजन्मप्रशमो निपीड़ितो
न चोन्नमेद्रात्रिबली कफात्मकः ॥ १३ ॥

कृशस्य रोगैरबलस्य यो भवेदुपद्रवैर्वा वमिपूर्वकैर्युतः।
स हन्ति मर्मानुगतोऽथ राजिमान् परिस्रवेद्धीनबलस्य सर्वगः॥१

श्लैष्मिकं श्वयथुं लक्षयति—गुरुरिति। कफात्मकः श्वयथुः। गुरुः। स्थिरः। पाण्डुः श्वेतः। अरोचकान्वितः। प्रसेकः मुखस्य। निद्रा। वमिः। व[illegible] मान्द्यं च। तानि करोति प्रसेकनिद्रावमिवह्निमान्द्यकृत्। स च कृच्छ्रजन्मप्रशमः कृच्छ्रोत्थानप्रशमः। चिरेण जायते। चिरेण शाम्यति च। निपीडितः सन् न च पुनरुन्नमेत् वातिकशोथवत्। रात्रिबली रात्रौ बली। तदा कफस्य प्रवृद्धत्वात्। दिवसे पुनरल्पः ॥ १३ ॥

असाध्यं श्वयथुमाह—कृशस्येति। रोगैः कृशस्य अबलस्य च पुंसः यः श्वयथुः भवेत्। यो वा वमिपूर्वकैः वम्यादिभिः उपद्रवैः बहुभिः युतः भवेत्। उक्तं च त्रिशोथीये—छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरोऽतीसार एव च। सप्तकोऽयं सदौर्बल्यः शोथोपद्रवसंग्रहः ॥ इति ( च० श्लो० १८ )। यश्च मर्मानुगतः मर्मस्थानगतः। अथ यश्च श्वयथुः राजिमान् रेखाभिर्व्याप्तः। हीनबलस्य यः श्वयथुः परिस्रवेत्। यश्च सर्वगः सर्वांगगः। स तथाविधः शोथः शोथिनं हन्ति। स हि असाध्यः। कृशस्य रोगैरबलस्य इत्यादि पृथक् पृथक् असाध्यलक्षणं। त्रिशोथीयेऽप्युक्तं—यस्तु पादाभिनिर्वृत्तः शोथः सर्वांगगो भवेत्। जन्तोः स च सुकष्टः स्यात् प्रसृतः स्त्रीमुखाच्च यः ॥ यश्चापि गुह्यप्रभवः स्त्रिया वा पुरुषस्य वा। स च कष्टतमो ज्ञेयो यस्य च स्युरुपद्रवाः ॥ इति ( च० श्लो० १८ ) ॥ १४ ॥

---

१४—राजिमान् परिस्रवंस्तीव्रबलश्च सर्वगः इति ख पुस्तके।

अहीनमांसस्य य एकदेशजो नवो बलस्थस्य सुखः स साधने।
निदानदोषर्त्तु विपर्ययक्रमैरुपाचरेत् तं बलदोषकालवित् ॥१५॥
अथामजं लङ्घनपाचनक्रमैर्विशोधनैरुल्बणदोषमादितः।
शिरोगतं शीर्षविरेचनैरधो विरेचनैरूर्ध्वहरैस्तथोर्ध्वगम्॥ १६ ॥
उपाचरेत् स्नेहभवं विरूक्षणैः प्रकल्पयेत् स्नेहविधिञ्च रूक्षजे।
विबद्धविट्केऽनिलजे निरूहणं घृतन्तु पित्तानिलजे सतिक्तकम्॥१७॥

साध्यं श्वयथुमाह—अहीनमांसस्येति। अहीनमांसस्य अकृशस्य। बलस्थस्य बलिनः। पुंसः। यः श्वयथुर्भवेत्। यः श्वयथुः एकदेशजः। यश्च नवः अचिरोत्पन्नः। स तथाविधः श्वयथुः साधने सुखः सुखसाध्यः। साध्ये क्रियासूत्रमाह—निदानेति। बलं व्याधेर्व्याधितस्य च। दोषः। कालः नित्यगः आवस्थिकश्च। एतत् परीक्षणीयानामुपलक्षणं। तान् वेत्ति स बलदोषकालवित् भिषक्। तं साध्यं श्वयथुं। निदानं हेतुः। दोषः उल्बणः। ऋतुः कालः। स च हेतुरेव। तद्विपर्ययक्रमैः निदानादि-विपरीतैः क्रमैः उपाचरेत्॥ १५॥

निदानदोषर्त्तुविपर्ययक्रमैरित्युक्तं। तदेव विवृत्य दर्शयति—अथामजमित्यादि। अथ आमजं सर्वशरीरगं श्वयथुं आदितः प्राक् अल्पदोषं चेत् लंघनपाचनक्रमैः। उपाचरेदिति परेणान्वयः। उल्बणदोषं पुनः विशोधनैः दोषनिर्हरणैः। तदुक्तं—बहुदोषाणां पुनर्दोषावसेचनमेव कार्यमिति ( च० वि० ३ )। उल्बणतत्तद्दोषापेक्षया वमनादिभिः कर्मभिः उपाचरेत्। एकदेशाश्रयं तु यथासन्नं। तदेवाह—शिरोगतमिति। शिरोगतं श्वयथुं शीर्षविरेचनैः शिरोविरेचनैः। अधोगतं विरेचनैः। तथा ऊर्ध्वगं ऊर्ध्वकायगतं शोथं ऊर्ध्वहरैः वमनैः। उपाचरेत्। स्नेहभवं स्नेहजं शोथं च विरूक्षणैः हेतुविपरीतैः उपाचरेत्। एवं रूक्षजे च शोथे स्नेहविधिं प्रकल्पयेत्। रूक्षजं स्नेहनै-रुपाचरेत्॥ १६। १७॥

पयश्च मूर्च्छारतिदाहतर्षिते विशोधनीये तु समूत्रमिष्यते।
कफोत्थितं क्षारकटूष्णसंयुतैः समूत्रतक्रासवयुक्तिभिर्जयेत् ॥१

ग्राम्याब्जानूपं पिशितमबलं शुष्कशाकं नवान्नं
गौडं पिष्टान्नं दधि सलवणं विज्जलं मद्यमम्लम्।
धाना वल्लूरं समशनमथो गुर्वसात्म्यं विदाहि
स्वप्नश्चारात्रौ श्वयथुगदवान् वर्जयेन्मैथुनञ्च ॥ १९ ॥

विबद्धविट्क इत्यादि। विबद्धाम विट् पुरीषं यस्मिन् तस्मिन् विबद्धविट्के। विं अनिलजे वातजे शोथे निरूहणं इष्यते। पित्तानिलजे पित्तजे अनिलजे चापि थौ तु सतिक्तकं घृतं तिक्तकं घृतं इष्यते। पित्तजे। तस्य प्रकृतत्वात्। मूर्च्छा। अरतिः दाहः। तर्षः तृष्णा च। ते जाता अस्मिन्। तस्मिन् मूर्च्छारतिदाहतर्षिते मूर्च्छा सति। पयः क्षीरं इष्यते। विशोधनीये तु शोधनार्हे पुनस्तस्मिन्। शोधनमिह विरेचनं तदेव पयः समूत्रं इष्यते। कफोत्थितं शोथं क्षारकटूष्णसंयुतैः समूत्रतक्रासवयुक्तिभि मूत्रतक्रासवयोगयुक्तैश्च उपक्रमैः जयेत् शमयेत् ॥ १८ ॥

शोथिनां वर्जनीयमाह—ग्राम्याब्जानूपमिति। श्वयथुगदवान् श्वयथुरोगी। जनपदमध्यचारिप्राणिजं छागादिभवं। आब्जं जलचरमत्स्यादिभवं। नूं अनूपभूमिचरमहिषवराहादिभवं च। तत् ग्राम्याब्जानूपं। अबलं दुर्बलप्राणिजं च। पिशितं मांसं। वर्जयेदित्यनेनान्वयः। एवं सर्वत्र। शुष्कशाकं। नवान्नं नूतनधान्यान्नं। गौडं गुडविकृतं शर्करादि। पिष्टान्नं पिष्टकृतं यत् किंचित्। सलवणं दधि दधि लवणं च। विज्जलं पिच्छिलं द्रव्यं। मद्यं। अम्लं। धानाः अंकुरितभृष्टयवान्। वल्लूरं शुष्कमांसं। समशनं पथ्यापथ्यं सममेकत्र भुक्तं। पथ्यापथ्यमिहैकत्र भुक्तं समशनं स्मृतं। इति (च० चि० १५)। सममशनमिति समशनं। शकन्ध्वादिषु पररूपं

१९—दधितिलकृतं विज्जलं इति ङ पुस्तके।

व्योषत्रिवृत्तिक्तकरोहिणीश्च सायोरजस्कास्त्रिफलारसेन ।
पीत्वा कफोत्थं शमयेत्तु शोथं मूत्रेण गव्येन हरीतकीं वा ॥२०॥
हरीतकीनागरदेवदारु सुखाम्बुयुक्तं सपुनर्नवं वा ।
सर्वं पिबेत् त्रिष्वपि मूत्रयुक्तं स्नातश्च जीर्णे पयसान्नमद्यात् ॥२१॥
पुनर्नवानागरमुस्तकल्कान् प्रस्थेन धीरः पयसोऽक्षमात्रान् ।
मयूरकं मागधिकां समूलां सनागरां वा प्रपिबेत् सवाते ॥२२॥

वाच्यं इति सिद्धं । अथो अथ । गुरु प्रकृत्या मात्रया च । असात्म्यं । विदाहि विदाह-करं च । अन्नपानं । अरात्रौ दिवा स्वप्नं निद्रां । मैथुनं च । वर्जयेत् । सुश्रुतेनाप्युक्तं—शोफिनः सर्व एव परिहरेयुरम्ललवणदधिगुडवसापयस्तैलघृतपिष्टमयगुरूणि । इति (सु० चि० २३) । इह कुसुमितलतावेल्लिता नाम वृत्तं । तल्लक्षणं यथा—म्तौ न्यौ यौ ज्ञेया कुसुमितलतावेल्लिताऽक्षर्तुलोकैरिति । अक्षर्तुलोकैः इति । अक्षाणि इन्द्रियाणि पंच । ऋतवः षट् । लोकाः सप्त । पंचसु षट्सु सप्तसु च अक्षरेषु यतिः ॥ १६ ॥

व्योषेति । व्योषं त्रिकटु । त्रिवृत् । तिक्तकरोहिणी कटुरोहिणी च । ताः चूर्णिताः सायोरजस्काः मारितपुटितलोहचूर्णसहिताः त्रिफलारसेन त्रिफलाक्वाथेन पीत्वा । इतरस्त्रिवृत्त्र्यूषणकटुरोहिण्ययश्चूर्णानि त्रिफलाक्वाथेन । इति । (अ० सं० चि० १६) । हरीतकीं चूर्णितां गव्येन मूत्रेण पीत्वा वा कफोत्थं श्वयथुं शमयेत् ॥ २० ॥

हरीतकीति । वातिकादिषु त्रिष्वपि शोथेषु । हरीतकी । नागरं । देवदारु च । तेषां समाहारः । तत् सपुनर्नवं चूर्णितं । सुखाम्बुयुक्तं सुखोष्णेन अम्बुना जलेन युक्तं पिबेत् । तदुक्तं—उष्णाम्बुना नागरदेवदारुपथ्यावर्षाभ्वो वा । इति (अ० सं० चि० १६) । वर्षाभूः पुनर्नवा । वा अथवा तत् सर्वं मूत्रेण गव्येन युक्तं मूत्रयुक्तं पिबेत् । तस्मिन् औषधे जीर्णे सति आतपतप्ततोयैः स्नातः पयसा क्षीरेण अन्नं अद्यात् अश्नीयात् ॥ २१ ॥

पुनर्नवेति । धीरः निवृत्तामदोषः शोथी सवाते शोथे । पुनर्नवा । नागरं शुंठी ।

दन्तीत्रिवृत्त्र्यूषणचित्रकैर्वा पयः शृतं दोषहरं पिवेन्ना।
द्विप्रस्थमात्रञ्च पलार्धिकैस्तैरर्धावशिष्टं पवने सपित्ते ॥ २३ ॥

सशुण्ठिपीतद्रुरसं प्रयोज्यं श्यामोरुवूकोषणसाधितं वा।
त्वग्दारुवर्षाभुमहौषधैर्वा गुडूचिकानागरदन्तिभिर्वा ॥२४॥

मुस्तञ्च। तेषां कल्कात् अक्षमात्रान् प्रत्येकं कर्षप्रमाणान्। मयूरकमपामार्गं। मागधिकां पिप्पलीं। समूलां सपिप्पलीमूलां। सनागरां च। कल्कितामक्षमात्रां धा पयसः प्रस्थेन प्रपिवेत्। वातोल्वणे शोथे पुनर्नवानागरमुस्तैः समयूरकपिप्पली-पिप्पलीमूलनागरैर्वा कल्कितैः कर्षमात्रैः शृतं क्षीरप्रस्थं पाकेन अर्धावशिष्टं कृत्वा पिवेत् ॥ २२ ॥

दन्तीति। पवने सपित्ते वातजे पित्तजे चापि श्वयथौ। ना शोथी पुमान्। दन्ती। त्रिवृत्। त्र्यूषणं व्योषं। चित्रकश्च। तैः कल्कितैः शृतं पयः। मानमाह—द्विप्रस्थमात्र-मिति। पयः द्विप्रस्थमात्रं प्रस्थद्वयपरिमितं द्वात्रिंशत्पलमानं। तैः दन्त्यादिभिश्च पलार्धिकैः प्रत्येकमर्धपलमितैः। तैः शृतं पक्वं पक्त्वा च अर्धावशिष्टं कृतं। दोषहरं श्वयथुदोषहरं तत् पयः पिवेत् ॥ २३ ॥

सशुण्ठीति। सह। शुण्ठिः शुण्ठी। ह्रस्वश्छान्दसः। पीतद्रुः दारुहरिद्रा। देवदारुरिति केचित्। तयोः रसः क्वाथः। तेन वर्त्तमानं सशुंठिपीतद्रुरसं। शुंठीपीतद्रुक्वाथसाधितं वा। श्यामा त्रिवृत्। उरुवूकः एरण्डः। अनयोर्मूलं। ऊषणं मरिचं। सुश्रुते त्र्यूषणमुक्तं। तथा च—त्रिकटुकैरण्डमूलश्यामामूलसिद्धं वा। इति ( सु० चि० २३ )। तैः साधितं वा। त्वक् गुडत्वक्। वर्षाभुः वर्षाभूः पुनर्नवा। ह्रस्वश्छान्दसः। एवं दन्तिभिरित्य-त्रापि। महौषधं शुंठी च। तैः साधितं वा। गुडूचिका गुडूची। नागरं। दन्तिः दन्ती च। ताभिः साधितं वा। इह चत्वारो योगाः। पयः। तच्च द्विप्रस्थमात्रं तैस्तैर्द्रव्यैश्च अर्धपलिकैः पक्त्वा च अर्धावशिष्टं कृतं। प्रयोज्यं शीलयेत् पवने सपित्ते ॥ २४ ॥

सप्ताहमौष्ट्रन्त्वथवापि मासं पयः पिबेद्भोजनवारिवर्जी ।
गव्यं समूत्रं महिषीपयो वा क्षीराशनो मूत्रमथो गवां वा ॥२५॥
तक्रं पिबेद्वा गुरुभिन्नवर्चाः सव्योषसौवर्चलमाक्षिकञ्च ।
गुड़ाभयां वा गुड़नागरं वा सदोषभिन्नामविबद्धवर्चाः ॥२६॥
विड्वातसङ्गे पयसा रसैर्वा
प्रागभक्तमद्यादुरुबूकतैलम् ।
स्रोतोविबन्धेऽग्निरुचिप्रणाशे
मद्यान्यरिष्टांश्च पिबेत् सुजातान् ॥ २७ ॥
गण्डीरभल्लातकचित्रकांश्च व्योषं विड़ङ्गं बृहतीद्वयञ्च ।
द्विप्रास्थिकं गोमयपावकेन द्रोणे पचेत् कांजिकमस्तुनस्तु ॥२८॥

सप्ताहमिति । सप्ताहं । अथ मासं वापि । व्याप्य भोजनवारिवर्जी सन् । औष्ट्रं पयः पिबेत् । अन्नपानमन्यत् वर्जयित्वा केवलं करभीपयः पीत्वा वर्तेत । अथवा समूत्रं गव्यं पयः । अथो अथवा महिषीपयः गवां मूत्रं च । क्षीराशनः सन् पिबेत् । सगव्यमूत्रं गव्यं माहिषं वा पयः पीत्वा क्षीरमात्रवृत्तिः स्यात् ॥ २५ ॥

तक्रमिति । गुरुभिन्नवर्चाः गुरुभिन्नपुरीषश्चेत् शोथी तक्रं सव्योषसौवर्चलमाक्षिकं त्रिकटुसौवर्चलक्षौद्रयुक्तं कृत्वा पिबेत् । स चेत् सदोषभिन्नामविबद्धवर्चाः सदोषभिन्नामः विबद्धवर्चाश्च स्यात् । तदा गुडाभयां तुल्यगुडां अभयां हरीतकीं वा । गुडनागरं तुल्यगुडां शुंठीं वा । अद्यादिति परेणान्वयः । विड्वातसंगे विषः वर्चसः वातस्य च संगे विबन्धे सति उरुबूकतैलं एरण्डतैलं, पयसा क्षीरेण रसैः मांसरसैर्वा सह प्राग्भक्तं भक्तभोजनात् प्राक् अद्यात् । स्रोतोविबन्धे स्रोतसां विबन्धे । अग्निः जाठरः । रुचिर्भक्तेच्छा च । तयोः प्रणाशे च सति । मद्यानि सुजातान् सुष्ठु जातान् अरिष्टांश्च पिबेत् ॥ २६ । २७ ॥

गण्डीराद्यरिष्टमाह—गण्डीरेत्यादि । गण्डीरः शमठः । भल्लातकः भल्लातकफलं ।

त्रिभागशेषन्तु सुपूतशीतं द्रोणेन तत् प्राकृतमस्तुना च।
सितोपलायाश्च शतेन युक्तं लिप्ते घटे चित्रकपिप्पलीभ्याम्।२९।
वैहायसे स्थापितमा दशाहात् प्रयोजयंस्तद् विनिहन्ति शोफान्।
भगन्दराशःक्रिमिकुष्ठमेहान् वैवर्ण्यकार्श्यानिलहिक्कनश्च ॥३०॥

इति गण्डीराद्यरिष्टः।

चित्रकञ्च। तान्। व्योषं त्रिकटु। विडंगं। बृहतीद्वयं बृहतीं कण्टकारीं च। तयोः फलानि। तत् सर्वं प्रत्येकं द्विप्रास्थिकं द्विप्रस्थमितं द्वात्रिंशत्पलमानं। आदाय खण्डशः कृत्वा। कांजिकस्य। मस्तु मात इति ख्यातः उपरिस्थितस्वच्छभागः। तस्य द्रोणे कलसे चतुःषष्टिपले गोमयपावकेन गोमयाग्निना पचेत् त्रिभागशेषं यावत्। त्रिभागशेषं तत् अवतार्य। ततः आदौ सुपूतं वस्त्रेण सम्यक् परिस्रुतं। पश्चात् शीतं तत् सुपूतशीतं कृत्वा। प्राकृतमस्तु दधिमस्तु। तेन प्राकृतमस्तुना द्रोणेन तस्य चतुःषष्टिपलेन। सितोपला मिछ्री। तस्याः शतेन पलैः तुलया च युक्तं चित्रकपिप्पलीभ्यां पिष्टाभ्यां लिप्ते घटे समावाप्य। विहायः आकाशं। तदवलम्ब्य स्थिते वैहायसे शिक्ये। आ दशाहात्। पदद्वयं। आदशाहं दशदिनपर्यन्तं सुगुप्तं स्थापितं स्थापयेत्। ततः तत् सम्यक् जातरसगन्धं गण्डीराद्यरिष्टं प्रयोजयेत् भिषक्। तद्धि प्रयुक्तं। शोफान्। भगन्दरादीन्। वैवर्ण्यं विवर्णता। कार्श्यं। अनिलहिक्कनं वातहिक्का च। तत् शीघ्रं विनिहन्ति। वृद्धवाग्भटः पुनरिह पठति—भल्लातकचित्रकविडंगबृहतीफलानि पृथग् द्विप्रस्थांशान्यच्छधान्याम्लद्रोणे गोमयाग्निना पक्वं त्रिभागशेषमवतारयेत्। तत् पूतशीतं मस्तुकलसेन सितोपलातुलया च युक्तमग्निकमागधिकाकल्कलिप्ते दृढ़े भाण्डे समावाप्य वैहायसे सुगुप्तं स्थापयेत्। ततोदशाहस्थितोऽयमुपयुक्तो भल्लातकारिष्टः शोफोदराशोंभगन्दरग्रहणीक्रिमिकुष्ठमेहकार्श्यहिक्कसान् सत्वरमपनयति। इति (अ० सं० चि० १६) ॥ २८-३० ॥

काश्मर्यधात्रीमरिचाभयाक्षद्राक्षाफलानाञ्च सपिप्पलीनाम् ।
शतं शतं क्षुद्रगुड़ात् पुराणात्तुलान्तु कुम्भे मधुना प्रलिप्ते ॥३१॥
सप्ताहमुष्णे द्विगुणन्तु शीते
स्थितं जलद्रोणयुतं पिबेन्ना ।
शोफान् विबन्धान् कफवातजांश्च
निहन्त्यरिष्टोऽष्टशतोऽग्निकृच्च ॥ ३२ ॥
इत्यष्टशतोऽरिष्टः ।

अष्टशतारिष्टमाह--काश्मर्येत्यादि । काश्मर्यः गाम्भार । धात्री आमलकी । मरिचं । अभया हरीतकी । अक्षः विभीतकः । द्राक्षा च । तासां फलानि । तेषां । सपिप्पलीनां । शतं शतं प्रत्येकं शतं । पुराणात् क्षुद्रगुडात् । क्षौद्रगुडात् इति पाठे तु । क्षुद्र एव क्षौद्रः । न तु क्षौद्रं मधु । क्षुद्रगुड़ात् फाणितात् तुलां शतपलं च । तत् सर्वं जलद्रोणयुतं कृत्वा । द्रोणं चतुःषष्टिपलं । मधुना प्रलिप्ते कुम्भे उष्णे काले सप्ताहं स्थितं । शीते काले तु तद्द्विगुणं द्विसप्ताहं चतुर्द्दश दिनानि स्थितं तत् ना शोथी पुमान् पिबेत् । काश्मर्यधात्रीमरिचहरीतकीविभीतकद्राक्षापिप्पलीनां सप्तानां सप्त शतानि संक्षुद्य तत्र पुराणक्षुद्रगुडस्य पलशतं दत्त्वा तत् सर्वं जलद्रोणेन आलोड्य मधुलिप्ते कुम्भे समावाप्य ग्रीष्मे सप्ताहं शीते च द्विसप्ताहं स्थापयेत् । ततः सम्यक् जातरसगन्धं । अष्टाभिः शतैर्निर्वर्तितत्वात् अष्टशताख्यं । तमरिष्टं पिबेत् । स च अष्टशतोऽरिष्टः कफवातजान् शोफान् श्वयथून् विबन्धान् च निहन्ति । स चारिष्टः अग्निकृत् अग्निं दीपयति च । वृद्धवाग्भटेनाप्युक्तं --त्रिफलामरिचद्राक्षापिप्पलीकाश्मर्यफलानां प्रत्येकं शतं गुड़तुलामुदकद्रोणं च मधुलिप्तभाजनस्थं सप्ताहमुष्णे काले द्विसप्ताहं शीते धारयेत् । अयमष्टशतारिष्टः । इति ( अ० सं० चि० १६ ) ॥ ३१ । ३२ ॥

---

३१—काश्मर्यधात्रीमरिचाभयाक्षद्राफलानां च इति क पुस्तके ।

३१—शतं शतं जीर्णगुड़ात् पुराणात् इति ख पुस्तके ।

पुनर्नवे द्वे च बले सपाठे वासां गुडूचीं सह चित्रकेण ।
निदिग्धिकां च त्रिपलानि पक्त्वा द्रोणावशेषे सलिले ततस्तु॥३३॥
पूत्वा रसं द्वे च गुडात् पुराणात् तुले मधुप्रस्थयुतं सुशीतम् ।
मासं निदध्याद् घृतभाजनस्थं पल्ले यवानां परतश्च मासात्॥३४॥
चूर्णीकृतैरर्धपलांशिकैस्तं हेमत्वगेलामरिचाम्बुपत्रैः ।
गन्धान्वितं क्षौद्रघृतप्रदिग्धे जीर्णे पिबेद्व्याधिबलं समीक्ष्य ॥३५॥

पुनर्नवाद्यरिष्टमाह—पुनर्नवे द्वे इत्यादि । द्वे पुनर्नवे श्वेतपुनर्नवां रक्तपुनर्नवां च । सपाठे द्वे बले बलामतिबलां पाठां च । वासां वासकं । चित्रकेण सह गुडूचीं गुडूचीं चित्रकं च । निदिग्धिकां गोक्षुरकं च । एतानि नव द्रव्याणि त्रिपलानि प्रत्येकं पलत्रयपरिमितानि कल्किकतानि सलिले चतुर्द्रोणमिते द्रोणावशेषविधानात् । द्रोणावशेषं पक्त्वा द्रोणावशेषं क्राथयित्वा । ततः अवतार्य तं रसं क्वाथं पूत्वा वस्त्रेण स्रावयित्वा । सुशीतं सम्यक् शीतं च कृत्वा । पुराणात् गुडात् द्वे तुले तुलाद्वयं पुराणगुडस्य द्विशतपलं दत्त्वा । तं मधुप्रस्थयुतं । हेम नागकेसरः । त्वक् गुडत्वक् । एला । मरिचं । अम्बु वालकं । पत्रं तेजपत्रं च । तैः प्रत्येकं अर्धपलांशिकैः । अर्धपलमितैः चूर्णीकृतैः गन्धान्वितं क्षौद्रघृतप्रदिग्धे कुम्भे घृतभाजनस्थंच कृत्वा अर्थात् तत्र क्षौद्रस्य षोडशपलं नागकेसरादीनि प्रत्येकमर्धपलमात्रया आदाय एकत्र चूर्णयित्वा तच्चूर्णं च प्रक्षिप्य तत् सर्वं घृतमधुलिप्ते घृतभाविते कुम्भे समावाप्य यवानां पल्ले पलालराशौ मासं त्रिंशद्दिनानि सुगुप्तं निदध्यात् स्थापयेत् । मासात् परतः यदा स सम्यक् जातरसगन्धः । तदा तमरिष्टं । जीर्णे पूर्वेद्युर्भुक्ते । प्रातरित्यर्थः । व्याधिबलं समीक्ष्य तदपेक्षया मात्रया पिबेत् । अथवा तस्मिन् जीर्णे सति मांसरसेन अन्नं भोक्तुं शील-

३३—सपाठे दन्तीं गुडूचीं इति ग ङ पुस्तकयोः ।

३४—पत्रत्वगेलामरिच इति ङ पुस्तके ।

हृत्पाण्डुरोगं श्वयथुं प्रवृद्धं प्लीहज्वरारोचकमेहगुल्मान्।
भगन्दरं षड् जठराणि कासं श्वासं ग्रहण्यामयकुष्ठकण्डूः॥३६॥
शाखानिलं बद्धपुरीषताञ्च हिक्कां किलासञ्च हलीमकञ्च।
क्षिप्रं जयेद्वर्णबलायुरोजस्तेजोऽन्वितो मांसरसान्नभोजी॥३७॥
इति पुनर्नवाद्यरिष्टः।
फलत्रिकं दीप्यकचित्रकौ च सपिप्पलीलोहरजो विडङ्गम्।
चूर्णीकृतं कौडविकं द्विरंशं क्षौद्रं पुराणस्य तुलां गुडस्य॥३८॥

मस्य स मांसरसान्नभोजी तमरिष्टं पीत्वा प्रतिदिनं मांसरसेन अन्नं भुंजानः स पुमान्। हृत्पाण्डुरोगं हृद्रोगं पाण्डुरोगं च। प्रवृद्धं श्वयथुं। प्लीहादीन्। भगन्दरं। षट् जठराणि उदराणि भेषजासाध्यच्छिद्रोदकजठरे वर्जयित्वा। कासं। श्वासं। ग्रहण्यामयः ग्रहणीरोगः। कुष्ठं। कण्डूश्च। ताः। शाखानिलं शाखावातं हस्तपादाद्याश्रितवातरोगं। बद्धपुरीषतां विड्विबन्धं। हिक्कां। किलासं। हलीमकं च। क्षिप्रं शीघ्रं जयेत्। स च। वर्णः। बलं। आयुः। ओजः। तेजश्च। तैरन्वितो भवेत्॥३३—३७॥

त्रिफलाद्यरिष्टमाह—फलत्रिकमित्यादि। फलत्रिकं त्रिफलां हरीतकीविभीतकामलकानि। दीप्यकचित्रकौ दीप्यकमजमोदं चित्रकश्च। सपिप्पलीलोहरजो विडंगं पिप्पलीं लोहरजः मारितायश्चूर्णं विडंगं च। तत् सर्वं प्रत्येकं कौडविकं कुडवप्रमाणं चतुष्पलमितं। चूर्णीकृतं च। तथा क्षौद्रं मधु। ततः द्विरंशं द्विभागं द्विकुडवमितं। पुराणस्य गुडस्य तुलां शतपलं। उदकद्रोणं च। अनुक्तमपि तद् बोद्धव्यं अरिष्टान्तरे दृष्टत्वात्। तत् सर्वं घृतभाजस्थं कृत्वा घृतभाविते कुम्भे निधाय यवेषु यवराशौ मासं निदध्यात् स्थापयेत्। ततः सम्यक् जातरसगन्धं तमरिष्टं पिबेत्। तस्मिन् जीर्णे च मांसरसान्नभोजी सन् तानेव प्रागुक्तानेव रोगान् हृद्रोगपाण्डुश्वयथुप्रभृतीन्

३६—प्लीहभ्रमारोचकमेहगुल्मान् इति क पुस्तके।

मासं निदध्याद् घृतभाजनस्थं यवेषु तानेव निहन्ति रोगान्।

इति फलत्रिकाद्यरिष्टः।

येचार्शसांपाण्डुविकारिणाञ्च प्रोक्ताहिताःशोफिषुतेऽप्यरिष्टाः॥३९॥

कृष्णा सपाठा गजपिप्पली च निदिग्धिका चित्रकनागरे च।

सपिप्पलीमूलरजन्यजाजीमुस्तञ्च चूर्णं सुखतोयपीतम् ॥४०॥

हन्यात् त्रिदोषं चिरजञ्च शोफं कल्कश्च भूनिम्बमहौषधस्य।

अयोरजस्त्र्यूषणयावशूकचूर्णञ्च पीतं त्रिफलारसेन ॥४१॥

निहन्ति। एवं अर्शसां अर्शोरोगिणां पाण्डुविकारिणां च ये अरिष्टाः प्रोक्ताः तत्तच्चि-कित्सिताध्याये ते सर्वे अरिष्टा अपि शोफिषु शोथिषु हिताः॥ ३८। ३९॥

कृष्णा सपाठेत्यादि। सपाठा कृष्णा पाठा कृष्णा पिप्पली च। गजपिप्पली इह चव्य-फला वक्ष्यमाणवृद्धवाग्भटवचने पंचकोलश्रुतेः। निदिग्धिका गोक्षुरकः। चित्रकः। नागरं शुंठी च। ते। सह। पिप्पलीमूलं। रजनी हरिद्रा। अजाजी जीरकः। मुस्तश्च। तैः वर्तमानं तत् सपिप्पलीमूलरजन्यजाजीमुस्तं। चूर्णं पिप्पल्यादिमुस्तान्तं सर्वं द्रव्यं चूर्णं कृत्वा। तत् चूर्णं सुखतोयपीतं सुखोष्णेन तोयेन पीतं सत्। त्रिदोषं त्रिभिर्दोषैः पृथक् जातं। सान्निपातिकं वा। चिरजं पुराणं चापि शोफं। हन्यात्। वृद्धवाग्भटे-नाप्युक्तं—पंचकोलाजाजीनिद्ग्धिकामुस्तपाठारजनीर्वा। इति (अ० सं० चि० १६)। उष्णाम्बुना शीलयेदिति शेषः। तथा भूनिम्बः किराततिक्तकः। महौषधं शुंठी च। तयोः समाहारः। तत्। तस्य कल्कः सुखतोयपीतः त्रिदोषं चिरजं च शोफं हन्यात्। एवं अयोरजः मारितपुटितलोहचूर्णं। त्र्यूषणं त्रिकटु। यावशूकश्च। तयोः चूर्णं च। त्रिफलारसेन त्रिफलाक्वाथेन पीतं त्रिदोषं चिरजं च शोफं हन्यात्। तदुक्तं वृद्धवा-ग्भटेनापि—त्रिफलाक्वाथेन व्योषयवक्षारायोरजांसि वा। इति (अं० सं० चि० १६) ॥ ४०। ४१॥

क्षारद्वयं स्याल्लवणानि चत्वार्ययोरजो व्योषफलत्रिके च ।
सपिप्पलीमूलविडङ्गसारं मुस्ताजमोदामरदारुबिल्वम् ॥४२॥
कलिङ्गकाश्चित्रकमूलपाठे यष्ट्याह्वयं सातिविषं पलांशम् ।
सहिंगुकर्षन्तु सुसूक्ष्मचूर्णं द्रोणं तथा मूलकशुण्ठकानाम् ॥४३॥
स्याद्भस्मनस्तत् सलिलेन साध्यम्
आलोड्य यावद् घनमप्रदग्धम् ।
स्त्यानं ततः कोलसमान्तु मात्रां
कृत्वा सुशुष्कां विधिनोपयुञ्ज्यात् ॥४४॥

क्षारगुडिकामाह—क्षारद्वयमित्यादि । क्षारद्वयं सर्जिक्षारः यवक्षारश्च । स्यात् । चत्वारि लवणानि सामुद्रं वर्जयित्वा सैन्धवं सौवर्चलं विडमौद्भिदं च । तदुक्तं दीर्घंजीवितीये—सौवर्चलं सैन्धवं च विड़मौद्भिदमेव च । सामुद्रेण सहैतानि पंच स्युर्लवणानि च ॥ इति.( च० श्लो० १ ) । अयोरजः लोहचूर्णं मारितपुटितं । व्योषं त्रिकटु शुंठीपिप्पलीमरिचानि । फलत्रिकं त्रिफला हरीतकीबिभीतकामलकानि च । ते व्योषफलत्रिके । सह । पिप्पलीमूलं । विडंगसारः विडंगतण्डुलश्च । ताभ्यां वर्तमानं तत् सपिप्पलीमूलविडंगसारं । मुस्तः । अजमोदः दीप्यकः । अमरदारुः देवदारुः । बिल्वश्च । तेषां समाहारः । तत् । कलिंगकाः इन्द्रयवाः । चित्रकमूलं । पाठा च । ते । सातिविषं यष्ट्याह्वयं अतिविषा यष्ट्याह्वयं यष्टिमधु च । तत् सर्वं पलांशं प्रत्येकं पलपरिमितं । सहिंगुकर्षं हिंगुनिर्यासश्च कर्षमितः । सर्वं सुसूक्ष्मचूर्णं सूक्ष्मं चूर्णितं । मूलकशुंठकानां शुष्कमूलकानां दग्धानां भस्मनः द्रोणं स्यात् । तत् सर्वं सलिलेन चतुर्गुणेन आलोड्य । तत्सलिलेन मूलकशुंठकभस्मस्राविततोदकेन सर्वमालोड्य वा । यावत् घनं स्त्यानं संहतं अप्रदग्धं न प्रदग्धं च स्यात् तावत् साध्यं पाच्यं । ततः तस्मात् कोलसमां बदरतुल्यां द्विशाणप्रमाणां मात्रां कृत्वा तां सुशुष्कां सम्यक् शुष्कां विधिना प्रतिदिनं मांसरसान्नभोजी उप-

प्लीहोदरश्वित्रहलीमकार्शःपाण्ड्वामयारोचकशोषशोफान् ।
विसूचिकागुल्मगराश्मरीश्च सश्वासकासान्प्रणुदेत् सकुष्ठान्॥४५

इति क्षारगुडिका ।

प्रयोजयेदार्द्रकनागरं वा तुल्यं गुडेनार्धपलाभिवृद्ध्या ।
मात्रा परं पञ्च पलानि मासं जीर्णे पयोयूषरसाश्च भक्तम् ॥४६॥
गुल्मोदरार्शःश्वयथुप्रमेहाञ् श्वासप्रतिश्यालसकाविपाकान् ।
सकामलाशोषमनोविकारान् कासं कफञ्चैव जयेत् प्रयोगः ॥४७॥

इति गुडार्द्रकप्रयोगः ।

युंज्यात् । एवमुपयुंजानः सः । सश्वासकासान् । सकुष्ठान् । प्लीहा । उदरं । श्वित्रं । हलीमकः । अर्शांसि । पाण्ड्वामयः पाण्डुरोगः । अरोचकः । शोषः । शोफश्च । तान् । तथा विसूचिका । गुल्मः । गरम् । अश्मरी च । तांश्च प्रणुदेत् निहन्यात् ॥ ४२-४५ ॥

गुडार्द्रकप्रयोगमाह—प्रयोजयेदित्यादि । आर्द्रकनागरं अशुष्कनागरम् । आर्द्रकमित्यर्थः । तत् गुडेन तुल्यं तुल्यमानं अर्धपलप्रवृद्ध्या परं मात्रा उत्कृष्टमात्रा पंच पलानि । प्रतिदिनमर्धपलवृद्धिः यावत् पंच पलानि स्युः । एवं मासं प्रयोजयेत् । तथा च गुडार्द्रकयोः मिलितयोः प्रथमेऽहनि अर्धपलं । ततः परं प्रतिदिनमर्धपलवृद्धिः । तेन दशमेऽहनि पंच पलानि । एवं पंच पलानि शेषेष्वपि विंशतौ दिनेषु । आर्द्रकं तुल्यगुडं प्रतिदिनमर्धपलाभिवृद्धं पंचपलप्रकर्षं मासं प्रयोजयेत् । तस्मिन् जीर्णे सति । पयः क्षीरं । यूषाः मुद्गादियूषाः । रसाः मांसरसाश्च । ते । भक्तं ओदनः । तस्मिन् जीर्णे च यूषरसक्षीरैरन्नमश्नीयात् । एष प्रयोगः । गुल्मोदरादीन् । श्वासः । प्रतिश्याः प्रतिश्यायः । अलसकः । अविपाकश्च । तान् । सकामलाशोषमनोविकारान् । कामलां । शोषं । मनोविकाराः ये केचन मनोवहस्रोतोदुष्टिजन्याः । तांश्च । तथा कासं कफं च जयेत् शमयेत् ॥ ४६ । ४७ ॥

रसस्तथैवार्द्रकनागरस्य पेयोऽथ जीर्णे पयसान्नमद्यात्।
शिलाह्वयश्च त्रिफलारसेन हन्यात् त्रिदोषं श्वयथुं प्रसह्य॥४८॥

इति शिलाजतुप्रयोगः।

द्विपञ्चमूल्यास्तु पचेत् कषाये कंसेऽभयानाञ्च शतं गुडस्य।
लेहे सुसिद्धेऽथ विनीय चूर्णं व्योषं त्रिसौगन्ध्यमुपास्थिते च॥४९॥
प्रस्थार्धमात्रं मधुनः सुशीते किञ्चिच्च चूर्णादपि यावशूकात्।
एकाभयां प्राश्य ततश्च लेहाच्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम्॥५०॥

रसस्तथैवेति। आर्द्रकनागरस्य आर्द्रकस्य रसः स्वरसः। तथैव तुल्यगुडः। प्रतिदिनमर्धपलवृद्ध्या पंचपलप्रकर्षः मासं पेयः। अथ तस्मिन् जीर्णे सति पयसा अन्नं अद्यात्। क्षीरेण शालितण्डुलान्नमश्नीयात्। स च प्रयोगः तानेव गुल्मोदरादीन् रोगान् जयेत्। शिलाह्वयं शिलाजतु त्रिफलारसेन त्रिफलाक्वाथेन पीतं त्रिदोषं श्वयथुं प्रसह्य बलात्कृत्य हन्यात्॥ ४८॥

कंसहरीतकीमाह—द्विपंचमूल्यास्त्वित्यादि। द्विपंचमूली दशमूलं। तस्याः कषाये क्वाथे कंसे आढके आढकमिते दशमूलक्वाथे जलद्रोणेन कृते। तस्य पादः कंसः। अभयानां हरीतकीनां निरस्थीकृतानां शतं। गुडस्य च शतं पलानि तुलां। एकत्र पचेत्। अथ तस्मिन् सुसिद्धे लेहे लेहीभूते उपास्थिते सुशीते च सति। तत्र व्योषं त्रिकटुचूर्णं। किंचित् कर्षं। त्रिसौगन्ध्यं त्रिसुगन्धि त्रिजातकं त्वगेलापत्राणि। तदुक्तं—त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकं। नागकेसरसंयुक्तं चतुर्जातकमुच्यते॥ इति। त्रिसौगन्ध्यं चूर्णं च किंचित् यावशूकात् चूर्णादपि यवक्षारचूर्णादपि किंचित् कर्षं। यावता लेहत्वं न नश्यति। तथा मधुनः प्रस्थार्धमात्रं अर्धप्रस्थं च विनीय प्रक्षिप्य। तदुक्तं वृद्धवाग्भटेनापि—दशमूलकाथकंसे पथ्याशतं गुडतुलामिश्रमधिश्रयेत्। लेहीभूते तत्र त्रिकटुत्रिजातकयवक्षारचूर्णं प्रक्षिपेत् क्षौद्रार्ध-

श्वासज्वरारोचकमेहगुल्मप्लीहत्रिदोषोदरपाण्डुरोगान्।
कार्श्यामवातावसृगम्लपित्तं वैवर्ण्यमूत्रानिलशुक्रदोषान् ॥५१॥

इति कंसहरीतकी।

पटोलमूलामरदारुदन्तीत्रायन्तिपिप्पल्यभयाविशालाः।
यष्ट्याह्वयं तिक्तकरोहिणी च सचन्दना स्यान्निचुलानि दार्वी॥५२॥
कर्षोन्मितैस्तैः क्वथितः कषायो घृतेन पेयः कुडवेन युक्तः।
वीसर्पदाहज्वरसन्निपाततृष्णाविषाणि श्वयथुश्च हन्ति ॥५३॥

प्रत्यं च। इति ( अ० सं० चि० १६ )। ततः एकामभयां हरीतकीं लेहात् शुक्तिं अर्धपलं च प्रतिदिनं प्राश्य भक्षयित्वा। पुमान् प्रवृद्धमपि श्वयथुं। तथा श्वासः। ज्वरः। अरोचकः। मेहः। गुल्मः। प्लीहा। त्रिदोषं सान्निपातिकमुदरं। पाण्डुरोगश्च। तान्। कार्श्यं। आमवातश्च। तौ। असृगम्लपित्तं रक्तपित्तमम्लपित्तं च। वैवर्ण्यं विवर्णता। मूत्रं। अनिलः। शुक्रं च। तेषां दोषाः। ते च। तांश्चापि निहन्ति ॥ ४९-५१॥

पटोलमूलाद्यघृतमाह —पटोलमूलेत्यादि। पटोलमूलं। अमरदारुः देवदारुः। दन्ती। त्रायन्तिः त्रायन्ती त्रायमाणा। ह्रस्वश्छान्दसः। पिप्पली। अभया हरीतकी। विशाला गवाक्षी च। ताः यष्ट्याह्वयं यष्टिमधु। सचन्दना तिक्तकरोहिणी चन्दनं कटुरोहिणी च। निचुलो जलवेतसः। तत्फलानि। दार्वी च। तैः पटोलमूलादिदार्व्यन्तैः द्वादशभिर्द्रव्यैः प्रत्येकं कर्षोन्मितैः कर्षपरिमितैः कल्कितैः। द्वादशानां द्वादश कर्षाः। तच्च पलत्रयं। ततोऽष्टगुणे चतुर्विंशतिपले जले क्वथितः पादावशेषः। इह पादः षट् पलानि। कषायः क्वाथः घृतेन कुडवेन कुडवपरिमितेन घृतेन घृतस्य चतुष्पलेन युक्तः शोथिना पेयः स्यात्। तं कषायं। घृतचतुष्पलयुक्तं कृत्वा पिबेत्। तथा पीतः स च कषायः। वीसर्पः। दाहः। ज्वरसन्निपातः सन्निपातज्वरः। तृष्णा। विषं च। तानि। श्वयथुं च। हन्ति ॥ ५२।५३ ॥

यमानिकाचित्रकधान्यपाठाः सदीप्यकत्र्यूषणवेतसाम्लाः ।
बिल्वात् फलं दाड़िमयावशूकौ सपिप्पलीमूलमथापि चव्यम् ॥५४॥

पिष्ट्वाक्षमात्राणि जलाढ़केन
पक्त्वा घृतप्रस्थमथ प्रदद्यात् ।
अर्शांसि गुल्मं श्वयथुञ्च कृच्छ्रं
निहन्ति वह्निञ्च करोति दीप्तम् ॥ ५५ ॥

इति यमानिकादिघृतम् ।

पिवेद् घृतं वाष्टगुणाम्बु सिद्धं सचित्रकक्षारमुदारवीर्यम् ।
कल्याणकं वापि सपंचगव्यं तिक्तं महद्वाप्यथ तिक्तकं वा ॥५६॥

यमानिकाद्यं घृतमाह--यमानिकेत्यादि । सह । दीप्यकः । त्र्यूषणं त्रिकटु शुंठी—पिप्पलीमरिचानि । वेतसाम्लः अम्लवेतसश्च । ते । तैः वर्त्तमानाः ताः । यमानिका । चित्रकः । धान्यं धन्याकं । पाठा च । ताः । वक्ष्यमाणवृद्धवाग्भटवचने यवानी यवानकेति दर्शनात् दीप्यकः इह अजमोदा यवानी । यवानिका यवानीक्षुपः । वनयमानी वा । बिल्वात् फलं बिल्वफलं । दाडिमं । यावशूकः यवक्षारश्च । तौ । अथ सपिप्पलीमूलं चव्यं चापि पिप्पलीमूलं चव्यं च । यमानिकादिचव्यान्तानि चतुर्दश द्रव्याणि प्रत्येकं अक्षमात्राणि कर्षप्रमाणानि एकत्र पिष्ट्वा कल्कयित्वा जलस्य आढकेन चतुःषष्टिपलेन पक्त्वा क्वाथयित्वा पादावशेषे अवतारिते च तस्मिन् कषाये घृतप्रस्थं प्रदद्यात् । दत्त्वा साधयेत् । तच्च घृतं । अर्शांसि । गुल्मं । कृच्छ्रं कृच्छ्रसाध्यं श्वयथुं च निहन्ति । वह्निं दीप्तं करोति दीपयति च । वृद्धवाग्भटनाप्युक्तं— दाडिमयवानीयवानकधनिकापाठाम्लवेतसमरिचपंचकोलबिल्वफलयावशूकानक्षमात्रान् सलिलाढके विपाच्य तत्कषायेण घृतप्रस्थं साधयेच्छोफाऽर्शोगुल्ममेहाग्निसादहरं । इति ( अ० सं० चि० १६ ) ॥ ५४ । ५५ ॥

पिवेदिति—सचित्रकक्षारं चित्रकक्षाराभ्यां अष्टगुणे अम्बुनि जले सिद्धं उदा-

---

५४ । सचित्रकं धान्ययमान्यजाजीसौवर्चलं त्र्यूषणवेतसाम्लम् इति ङ पुस्तके ।

५४ । बिल्वोत्पलं दाडिमयावशूके इति ग पुस्तके ।

क्षीरं घटे चित्रककल्कलिप्ते दध्यागतं साधु विमथ्य तेन ।
तज्जं घृतं चित्रकमूलगर्भं तक्रेण सिद्धं श्वयथुघ्नमग्र्यम् ॥५७॥
अर्शांसि सामानिलगुल्ममेहांस्तद्धन्ति दीप्तञ्च करोति वह्निम् ।
तक्रेण चाद्यात् सघृतेन तेन भोज्यानि सिद्धामथवा यवागूम्॥५८॥
इति चित्रकघृतम् ।

जीवन्त्यजाजीशटिपौष्कराह्वैः सकारवीचित्रकबिल्वमध्यैः ।
सयावशूकैर्बदरप्रमाणैर्वृत्ताम्लयुक्ता घृततैलभृष्टा ॥५६॥

स्वीयं महावीर्यं तत् घृतं वा पिबेत् शोथो। सपंचगव्यं कल्याणकं वापि उन्माद-चिकित्सितोक्तं कल्याणकं घृतं पंचगव्यं घृतं अपस्मारोक्तं वा पिबेत्। तिक्तं तिक्तकं घृतं महत् तिक्तकं महातिक्तकं घृतं कुष्ठोक्तं वा पिबेत् ॥ ५६ ॥

चित्रकघृतमाह—क्षीरमित्यादि। क्षीरं चित्रककल्कलिप्ते घटे चित्रकमूलत्वचं पिष्ट्वा तत्कल्केन अन्तर्लिप्ते शुष्के च घटे दध्यागतं दधिभावमागतं दधिरूपेण परिणतं दधिवीजदानात्। तच्च साधु सम्यक् विमथ्य मन्थनदण्डेन तज्जं तस्मात् चित्रकदध्नः जातं घृतं नवनीतं। तच्च चित्रकमूलगर्भं चित्रकमूलत्वक्कल्कं दत्त्वा तेन तक्रेण घटान्तश्चित्रककल्कसहितेन सिद्धं। तदुक्तं वृद्धवाग्भटेन— चित्रकदध्नो नवनीतमाददीत। तच्चित्रकमूलगर्भं सचित्रककल्कतक्रसिद्धम्। इति (अ०सं०चि० १६)। तद् घृतं अग्र्यं श्रेष्ठं श्वयथुघ्नं। तच्च। अर्शांसि। अतिसारः। अनिलगुल्मः वातगुल्मः। मेहश्च। तान् हन्ति। वह्निं दीप्तं करोति दीपयति च। तेन तक्रेण सघृतेन घृतेन च भोज्यानि अन्नानि अद्यात्। अथवा तेन तक्रेण सिद्धां यवागूं अद्यात् ॥ ५७ । ५८ ॥

जीवन्त्यजाजीत्यादि। सह। कारवी अजमोदा। चित्रकः। बिल्वमध्यं बिल्वफल-मध्यं च। तैः वर्त्तमानानि। तैः। जीवन्ती अजाजी जीरकः। शटिः शटी। ह्रस्व-श्छान्दसः। पौष्कराह्वं पुष्करमूलं च। तानि तथोक्तानि। तैः सयावशूकैः यव-क्षारसहितैः। प्रत्येकं बदरप्रमाणैः। बदरं शाणद्वयं। शाणौ द्वौ द्रंक्षणं विद्यात्

५७। तक्रं घृतं इति ग पुस्तके।

अर्शोऽतिसारानिलगुल्मशोफहृद्रोगमन्दाग्निहिता यवागूः।
या पञ्चमूलैर्विधिनैव तेन सिद्धा भवेत् सा च समा तयैव ॥६०॥
कुलत्थयूषश्च सपिप्पलीको मौद्गश्च सव्यूषणयावशूकः।
रसस्तथा विष्किरजाङ्गलानां सकूर्मगोधाशिखिशल्लकानाम् ॥६१॥

कोलं बदरमेव च। इति। कृता। वृक्षाम्लं तिन्तिडीकं। तेन युक्ता। तथा च जीवन्त्यादिवृक्षाम्लान्तानां द्रव्याणां प्रत्येकं द्विशाणकानां क्वाथे साधिता घृततैलाभ्यां यमकेन भृष्टा सन्तलिता यवागूः अर्शोऽतिसारादिषु हिता। या यवागूः पंचमूलैः पंचमूलाभ्यां। इह द्वित्वे बहुत्वं। दशमूलेन तेनैव विधिना सिद्धा भवेत्। दशमूलस्य बदरप्रमाणस्य कषाये सिद्धा घृततैलभृष्टा च भवेत्। सापि तया पूर्वोक्तया जीवन्त्यादिसाधितया यवाग्वा समा तुल्यफला अर्शोऽतिसारादिषु हिता। उक्तं च वृद्धवाग्भटेन—शटीपुष्करमूलकारवीचित्रकाजाजीजीवन्तीविल्वमध्यक्षारवृक्षाम्लैर्दशमूलेन च परिगृहीतानि घृततैलभृष्टानि पेयादीन्यन्नान्यल्पस्नेहलवणान्युपकल्पयेत्। इति (अ० सं० चि० १६) ॥ ५६। ६० ॥

यवागूमुक्त्वा शोथिनां यूषं रसं चाह—कुलत्थयूषश्चेति। सपिप्पलीकः पिप्पलीक्वाथसिद्धः कुलत्थयूषः। एवं सव्यूषणयावशूकः त्रिकटुयवक्षारक्वाथसिद्धः मौद्गः यूषश्च यवागूक्तविधिना उपकल्पितः। तथा सकूर्मगोधाशिखिशल्लकानां विष्किरजांगलानां रसः मांसरसः। विष्किराः लावादयः। जांगलाः हरिणादयः। गोधाशल्लकौ भूमिशयौ। शिखी मयूरः विष्किरभेदः। स च वर्त्तकादिषु पठ्यते। इह द्विविधाः विष्किराः लावादयो वर्त्तकादयश्च। ग्राम्यानूपमिति आब्जमांसनिषेधेऽपि कूर्मविधानमपवादरूपं ॥ ६१ ॥

६०। हृद्रोगमेहाग्निहिता यवागूः इति ग पुस्तके।
६०। सा पंचकोलैर्विधिनैव तेन इति ग पुस्तके।

सुवर्चला गृञ्जनकं पटोलं सवायसीमूलकवेत्रनिम्बम् ।
शाकार्थिनां शाकमिति प्रशस्तं भोज्ये पुराणश्च यवः सशालिः ॥
आभ्यन्तरं भेषजमुक्तमेतद् बहिर्हितं यच्छृणु तद् यथावत् ।
स्नेहान् प्रदेहान् परिषेचनानि स्वेदांश्च वातप्रबलस्य कुर्यात् ॥६
शैलेयकुष्ठागुरुदारुकौन्तीत्वक्पद्मकैलाम्बुपलाशमुस्तैः ।
प्रियंगुथौणेयकहेममांसीतालीशपत्रप्लवपत्रधान्यैः ॥६४॥
श्रीवेष्टकध्यामकपिप्पलीभिः स्पृक्कानखैश्चैव यथोपलाभम् ।
वातान्वितेऽभ्यङ्गमुषन्ति तैलं सिद्धं सुपिष्टैरपि च प्रदेहम् ॥६५॥
इति शैलेयादितैलप्रदेहौ ।

शोथिनां शाकमाह—सुवर्चलेति । सुवर्चला सूर्यभक्तिका । गृञ्जनकं । पटोलं सवायसीमूलकवेत्रनिम्बं । वायसी काकमाची । मूलकं । वेत्रं । निम्बं च । ... शाकं शोथिनां शाकार्थिनां प्रशस्तं । अन्नमाह—भोज्ये इति । शोथिनां भोज्ये : पुराणः यवः सशालिः शालिश्च प्रशस्तः ॥ ६२ ॥

आभ्यन्तरमिति । इति एतत् शोथिनां आभ्यन्तरं अन्तःपरिमार्जनं भेषजं ... अन्तःकोष्ठं प्राप्य यदुपकरोति तत् शमनशोधनरूपं हितमन्नपानादिकं चापि उक्तं बहिर्हितं बहिःपरिमार्जनं बहिर्योगादुपकारकं यत् भेषजं अभ्यंगप्रदेहादिकं यथावत् मया वक्ष्यमाणं शृणु । तत्रादौ वातिकशोथे बहिर्हितं भेषजमाह—... निति । वातप्रबलस्य वातोल्बणस्य शोथिनः स्नेहान् अभ्यंगान् प्रदेहान् प्रलेपान् ... षेचनानि परिषेकान् स्वेदांश्च कुर्यात् ॥ ६३ ॥

शैलेयेत्यादि । वातान्विते शोथे शैलेयः तन्नामकगन्धद्रव्यभेदः । कुष्ठं । अ... दारुः । कौन्ती रेणुका । त्वक् गुडत्वक् । पद्मकं पद्मकाष्ठं । एला । अम्बु वालकं पलाशः । मुस्तश्च । तैः । प्रियंगुः । थौणेयकं स्थौणेयकं ग्रन्थिपर्णं । सक ...

६४ । कुष्ठागुरुदारुदन्ती इति ठ पुस्तके ।

जलैस्तथैरण्डवृषार्कशिग्रुकाश्मर्यपत्रार्जकजैश्च सिद्धैः ।
स्विन्नः कवोष्णै रवितप्ततोयैः स्नातश्च गन्धैरनुलेपनीयः ॥६६॥

सवेतसाः क्षीरवतां द्रुमाणां त्वचः समाञ्जिष्ठलताम्रृणालाः ।
सचन्दनाः पद्मकवालकौ च पैत्ते प्रदेहस्तु सतैलपाकः ॥६७॥

न्दसः । हेम नागकेसरः । मांसी जटामांसी । तालीशपत्रं । प्लवः कैवर्त्तमुस्तः । पत्रं तेजपत्रं । धान्यं धन्याकं च । तैः । श्रीवेष्टकं । ध्यामकं गन्धतृणं । पिप्पली च । ताभिः । स्पृक्का तदाख्यः सुगन्धिशाकभेदः । नखाः व्याघ्रनखाः सुगन्धिद्रव्यभेदाश्च । तैः । शैलेयादिभिर्नखान्तैः द्रव्यैः यथोपलाभं यथालाभं सिद्धं तेषां क्वाथकल्काभ्यां । क्वाथः क्वाथविधिना कृतः तैलाच्चतुर्गुणः । कल्कश्च पादिकः । तैलं अभ्यंगं । तैः शैलेयादिभिः यथालाभं सुपिष्टैश्च प्रदेहं । उशन्ति इच्छन्ति भिषजः । वशेर्लटि रूपं ॥ ६४ । ६५ ॥

जलैरिति । एरण्डः । वृषः वासकः । अर्कः । शिग्रुः शोभांजनः । काश्मर्यः गाम्भारी । पत्रं तेजपत्रं । अर्जकः तुलसीभेदश्च । तेभ्यो जातैः तज्जैः सिद्धैः एरण्डादिसिद्धैः जलैः कवोष्णैः ईषदुष्णैः स्विन्नः तैः परिषेचनात् तत्कोष्ठमध्ये चावगाहनात् । रवितप्ततोयैः आतपतप्तैः जलैः स्नातः वातशोथी गन्धैरुशीरादिभिः अनुलेपनीयः स्यात् ॥ ६६ ॥

पैत्तिकशोथे बहिःपरिमार्जनं भेषजमाह—सवेतसा इति । क्षीरवतां क्षीरिणां द्रुमाणां वृक्षाणां वटोदुम्बराश्वत्थादीनां त्वचः । सवेतसाः समांजिष्ठलताम्रृणालाः सचन्दनाश्च । वेतसमंजिष्ठाम्रृणालचन्दनानि । पद्मकं पद्मकाष्ठं । वालकश्च । तौ । पैत्ते शोथे सतैलपाकः प्रदेहः स्यात् । तथा च क्षीरिवृक्षत्वगादिभिः वालकान्तैः यथालाभं श्लक्ष्णपिष्टैः प्रदेहः । तेषां क्वाथकल्काभ्यां पक्वं तैलमभ्यंगः ॥ ६७ ॥

---

६६ । जलैश्च वासार्ककरंजशिग्रु० इति ङ पुस्तके ।

६७ । समांजिष्ठयलाम्रृणालाः इति ठ पुस्तके ।

आक्तस्य तेनाम्बु रविप्रतप्तं सचन्दनं साभयपद्मकञ्च।
स्नाने हितं क्षीरवतां कषायः क्षीरोदकं चन्दनलेपनञ्च ॥६८॥
कफे तु कृष्णासिकतापुराणपिण्याकशिग्रुत्वगुमाप्रलेपः।
कुलत्थशुण्ठीजलमूत्रसेकश्चण्डाऽगुरुभ्यामनुलेपनञ्च ॥६९॥
विभीतकानां फलमध्यलेपः सर्वेषु दाहार्त्तिहरः प्रदिष्टः।
यष्ट्याह्वमुस्तैः सकपित्थपत्रैः सचन्दनैस्तत्पिडकासु लेपः ॥७०॥
रास्नावृषार्कत्रिफलाविडङ्गं शिग्रुत्वचो मूषिकपर्णिका च।
निम्बार्जकौ व्याघ्रनखः समूर्वा सुवर्चला तिक्तकरोहिणी च ॥७१॥

आक्तस्येति। तेन तैलेन आक्तस्य अभ्यक्तगात्रस्य पैत्तिकशोथिनः स्नाने रविप्रतप्तं आतपतप्तं केवलमम्बु जलं हितं। सचन्दनं साभयपद्मकं। अभयमुशीरं। चन्दनादिसिद्धं वा अम्बु हितं। क्षीरवतां क्षीरिवृक्षाणां उडुम्बराश्वत्थादीनां कषायः हितः। क्षीरोदकं क्षीरमिश्रमुदकं चापि हितं। स्नातस्य च चन्दनलेपनं चन्दनेनानुलेपनं हितं ॥ ६८ ॥

श्लैष्मिकशोथे बहिःपरिमार्जनं भेषजमाह—कफे इति। कफे कफजे शोथे। कृष्णा पिप्पली। सिकता वालुका। पुराणः पिण्याकः तिलखलिः। शिग्रोस्त्वक्। उमा अतसी च। ताभिः श्लक्ष्णपिष्टाभिः प्रदेहः। कुलत्थः। शुंठी च। तयोर्जलं क्वाथः। मूत्रं च। ताभ्यां सेकः स्नानं। स्नातस्य। चण्डा चोरपुष्पी। अगुरु च। ताभ्यां अनुलेपनं स्नानोत्तरलेपनं च ॥ ६९ ॥

विभीतकानामिति। विभीतकानां फलमध्यैः फलमज्जभिः पिष्टैः लेपः सर्वेषु शोथेषु वातिकादिषु दाहार्त्तिहरः प्रदिष्टः उक्तः। तत्पिडकासु शोथपिडकासु दाहार्त्तियुतासु सकपित्थपत्रैः सचन्दनैः यष्ट्याह्वमुस्तैः पिष्टैर्लेपः ॥ ७० ॥

रास्नेत्यादि। रास्ना। वृषः वासकः। अर्कः। त्रिफला। विडंगं च। तत्। शिग्रोः त्वचः। मूषिकपर्णिका मूषिकपर्णी च। निम्बः। अर्जकः तुलसीभेदश्च। तौ। व्या-

७१। सदूर्वा सुवर्चला तिक्तकरोहिणी च इति च पुस्तके।

सकाकमाची बृहती सकुष्ठा पुनर्नवा चित्रकनागरे च।
उन्मर्दनं शोफिषु मूत्रपिष्टं शस्तस्तथा मूलकतोयसेकः ॥७२॥
शोफास्तु गात्रावयवाश्रिता ये ते स्थानदूष्याकृतिनामभेदात्।
अनेकसंख्याः कतिचिच्च तेषां निदर्शनार्थं गदतो निबोध ॥७३॥
दोषास्त्रयः स्वैः कुपिता निदानैः कुर्वन्ति शोथं शिरसः सुघोरम्।
अन्तर्गले घुर्घुरकान्वितञ्च शालूकमुच्छ्वासनिरोधकारि ॥७४॥

नखः सुगन्धिद्रव्यभेदः। समूर्वा। सुवर्चला सूर्यभक्तिका। तिक्तकरोहिणी कटुरोहिणी च। सकाकमाची बृहती। सकुष्ठा पुनर्नवा कुष्ठं पुनर्नवा च। चित्रकः। नागरं शुंठी च। ते। तत् सर्वं यथालाभं मूत्रपिष्टं मूत्रेण गव्येन पिष्ट्वा कल्कयित्वा तेन उन्मर्द्दनं शोफादिषु शस्तं। मूलकतोयेन मूलककाथेन सेकः शोफिषु शस्तः ॥ ७१। ७२॥

शोफास्त्विति। ये तु शोफाः गात्रस्य शरीरस्य अवयवं एकदेशं एकैकमंगं आश्रिताः। ते स्थानं दूष्यं आकृतिः रूपं नाम च। तैः भेदः। तस्मात् स्थानसंस्था-नादिभिर्भिद्यमानाः अनेकसंख्याः भवन्ति। निदर्शनार्थं उदाहरणार्थं तेषां मध्ये कति-चित् कांश्चित् आविष्कृततमान्। असंख्येयतया साकल्येन वक्तुं अशक्यत्वात्। गदतः कथयतः मत्तः मत्सकाशात् निबोध जानीहि। वक्ष्यमाणशालूकादयस्तन्त्रान्तरे पृथक् कृत्वा उक्ताः। अस्मत्तन्त्रे तु उत्सेधसामान्यात् तेषां शोथरूपेण इहैव संग्रहः कृतः। तदुक्तं त्रिशोथीयेऽपि प्राक्—रोगाश्चोत्सेधसामान्याद्धिमांसार्बुदादयः। विशिष्टा नामरूपाभ्यां निर्द्देश्याः शोथसंग्रहे॥ इति ( च० श्लो० १८ )॥ ७३॥

दोषास्त्रय इति। त्रयः दोषाः वातादयः स्वैर्निदानैः कुपिताः सन्तः सुघोरं शिरसः शोथं कुर्वन्ति। ते एव दोषाः कफोल्वणाः सुश्रुते कफसम्भवत्ववचनात् अन्तर्गले गलस्यान्तः अभ्यन्तरे च घुर्घुरिकान्वितं घुर्घुरशब्दयुक्तं उच्छ्वासनिरोधकारि उच्छ्वासमार्गरोधकरं शालूकं नाम शोथं कुर्वन्ति। सुश्रुते तु—कोलास्थिमात्रः कफस-

गलस्य सन्धौ चिबुके गले वा सदाहरागः श्वसनोच्छ्वसोग्रः ।
शोथो भृशार्त्तिस्तु विडालिका स्याद्धन्याद् गले चेद्वलयीकृतासा ७५
स्यात्तालुविद्रध्यपि दाहरागपाकान्वितस्तालुनि सा त्रिदोषात् ।
जिह्वोपरिष्टादुपजिह्विका स्यात् कफादधस्तादधिजिह्विका च ॥७६॥
यो दन्तमांसेषु तु रक्तपित्तात् पाको भवेत् सोपकुशः प्रदिष्टः ।
स्याद्दन्तविद्रध्यपि दन्तमांसे शोफः कफाच्छोणितसञ्चयोत्थः॥७७

म्भवो यो ग्रन्थिर्गले कण्टकशूकभूतः । खरः स्थिरः शस्त्रनिपातसाध्यः तं कण्ठशालूकमिति ब्रुवन्ति ॥ इति ( सु० नि० १६ ) ॥ ७४ ॥

विडालिकामाह—गलस्य सन्धाविति । गलस्य सन्धौ गलवदनसन्धौ । गले । चिबुके वापि । सदाहरागः दाहरागयुतः । श्वसनोच्छ्वसयोः निश्वासोच्छ्वासयोः । उग्रः कृच्छ्रः । भृशार्त्तिः अतिवेदनाकृत् । शोथः विडालिका स्यात् । सा च विडालिका यदि गले वलयीकृता कृत्स्नगलवेष्टनात् वलयाकृतिः स्यात् तदा सा हन्यात् असाध्या । सुश्रुते च—वलास एवायतमुन्नतं च शोफं करोत्यन्नगतिं निवार्य । तं सर्वथैवाप्रतिवार्यवीर्यं विवर्जनीयं वलयं वदन्ति ॥ इति ( सु० नि० १६ ) ॥ ७५ ॥

तालुविद्रधीमाह—स्यात्तालिवति । तालुनि अपि । दाहः । रागः । पाकश्च । तैरन्वितः शोथः तालुविद्रधी स्यात् । सा त्रिदोषात् जायते । उपजिह्विकामाह—जिह्वेति । जिह्वोपरिष्टात् जिह्वाया उपरि कफात् शोफः उपजिह्विका स्यात् । अधिजिह्विकामाह—अधस्तादिति । जिह्वाया अधस्ताच्च अधिजिह्विका स्यात् । यस्य श्लेष्मा प्रकुपितो जिह्वामूलेऽवतिष्ठते । आशु संजनयच्छोफं जायतेऽस्योपजिह्विका ॥ इति ( च० श्लो० १८ ) त्रिशोथीये प्रागुक्तापि उपजिह्विका पुनरिहोच्यते प्रसंगात् ॥ ७६ ॥

यो दन्तमांसेष्विति । दन्तमांसेषु दन्तवेष्टनमांसेषु रक्तपित्तात् यः शोफः भवेत् । यस्य पाकश्च । स उपकुशो नाम प्रदिष्टः उक्तः । सोपकुश इत्यत्र विसर्गलोपेऽपि सन्धिः

गलस्य पार्श्वे गलगण्ड एकः स्याद् गण्डमाला बहुभिस्तु गण्डैः ।
साध्याः स्मृताः पीनसपार्श्वशूलकासज्वरच्छर्दियुतास्त्वसाध्याः॥७८॥
तेषां सिराकायशिरोविरेका धूमः पुराणस्य घृतस्य पानम् ।
स्याल्लङ्घनं वक्त्रभवेषु चापि प्रघर्षणं स्यात् कवडग्रहश्च ॥७९॥

पादपूरणार्थं । सुश्रुतेनाप्युक्तं—वेष्टेषु दाहः पाकश्च तेभ्यो दन्ताश्चलन्ति च । आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः ॥ आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते । यस्मिन्नुपकुशः स स्यात् पित्तरक्तकृतो गदः ॥ इति ( सु० नि० १६ ) । दन्तमांसेषु अपि कफात् शोणितसंचयोत्थः कफरक्तजः शोफः दन्तविद्रधी स्यात् ॥ ७७ ॥

गलगण्डं गण्डमालां चाह—गलस्य पार्श्वे इति । गलस्य पार्श्वे बहिः । अन्तस्तु गलग्रहः । तदुक्तं त्रिशोथीये—यस्य श्लेष्मा प्रकुपितो गलबाह्येऽवतिष्ठते । शनैः संजनयञ्छोफं गलगण्डोऽस्य जायते ॥ यस्य श्लेष्मा प्रकुपितस्तिष्ठत्यन्तर्गले स्थिरः । आशु संजनयञ्छोथं जायतेऽस्य गलग्रहः ॥ इति ( च० श्लो० १८ ) । एकः गलगण्डः स्यात् । बहुभिः गण्डैस्तु गण्डमाला स्यात् । ताः गण्डमालाः पीनसादिरहिताश्चेत् साध्याः स्मृताः । पीनसः । पार्श्वशूलं । कासः । ज्वरः । छर्दिश्च । तभिः । उपद्रवैः युतास्तु असाध्याः स्मृताः ॥ ७८ ॥

उक्तानां चिकित्सामाह—तेषामिति । तेषां गात्रत्रयवाश्रितानां शालूकादीनां सम्बन्धे । सिरा । कायः । शिरश्च । तेषां विरेकः । सिराविरेकः सिराव्यधनं रक्तमोक्षणं । कायविरेकः वमनं विरेचनं च । शिरोविरेकश्च । वमनादीनि यथासन्नं कार्याणि । धूमः । पुराणस्य घृतस्य औषधसाधितस्य पानं शोधनात् प्राक् स्नेहनार्थं । लंघनं । तत्तदौषधैः कल्कितैः प्रघर्षणं च स्यात् । वक्त्रभवेषु मुखभवेषु शोथेषु कवडग्रहश्चापि स्यात् ॥ ७९ ॥

**अङ्गैकदेशेष्वनिलादिभिः स्यात् स्वरूपधारी स्फुरणः सिराभिः ।**
**ग्रन्थिर्महान्मांसभवस्त्वनर्त्तिर्मेदोभवः स्निग्धतमश्चलश्च ॥८०॥**

ग्रन्थिमाह—अंगैकदेशेष्विति । अंगैकदेशेषु क्वचित् अनिलादिभिः वातादिभिः मांसादिकं सन्दूष्य कृतः वृत्तोन्नतः शोफः ग्रन्थिः स्यात् । ग्रथितत्वात् ग्रन्थिसंज्ञा । तथा च सुश्रुतः—वातादयो मांसमसृक् च दुष्टाः सन्दूष्य मेदश्च कफानुविद्धं । वृत्तोन्नतं विग्रथितं तु शोफं कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥ इति ( सु० नि० ११ ) । तत्रैव पश्चात्—व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुर्हि सिराप्रतानं । संपीड्य संकोच्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशुवृत्तम् ॥ इति च (सु० नि० ११) । वातादयस्त्रयो दोषाः असृक् मांसं मेदश्च त्रीणि दूष्याणि सिरा च इति सप्त । तेन सप्तविधो ग्रन्थिः । तत्र अनिलादिभिः त्रिभिर्दोषैः कृतः त्रिविधः ग्रन्थिः स्वरूपधारी वातादीनां यथास्वलक्षणधारी । ग्रन्थेर्वातिकादिलक्षणं यदुक्तं सुश्रुतेन—आयम्यते व्यथ्यत एति तोदं प्रत्यस्यते कृत्यत एति भेदं । कृष्णोऽमृदुर्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छं ॥ दन्दह्यते धूप्यति चोपमांश्च पापच्यते प्रज्वलतीव चापि । रक्तः सपीतोऽप्यथ वापि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रं ॥ शीतो विवर्णोऽल्परुजोऽतिकण्डूः पाषाणवत् संहननोपपन्नः । चिराभिवृद्धिश्च कफप्रकोपात् भिन्नः स्रवेच्छुक्लघनं च पूयं ॥ इति (सु० नि० ११) । सिराभिः कृतः ग्रन्थिः । स्फुरणः स्पन्दमानः । उक्तं च वृद्धवाग्भटेन—पदातेस्तु सहसाम्भोऽवगाहनात् । व्यायामाद्वा प्रतान्तस्य सिराजालं सशोणितं ॥ वायुः संपीड्य संकोच्य वक्रीकृत्य विशोष्य च । निःस्फुरं नीरुजं ग्रन्थिं कुरुते स सिराह्वयः । इति (अ० सं० उ० ३४) । मांसभवो ग्रन्थिः महान् । अनर्त्तिः अल्पवेदनः । स्निग्धश्चापि । मेदोभवस्य स्निग्धतमत्ववचनात् मेदोभवः ग्रन्थिस्तु स्निग्धतमः अतिस्निग्धः । चलश्च । रक्तमांसमेदोभवानां लक्षणानि क्रमात्—दोषैर्दुष्टेऽसृजि ग्रन्थिर्भवेन्मूर्च्छत्सु जन्तुषु । सिरा मांसं च संश्रित्य सस्वापः पैत्तलक्षणः ॥ मांसलैर्दूषितं मांसमाहारैर्ग्रन्थिमावहेत् । स्निग्धं महान्तं कठिनं सिरानद्धं कफाकृतिं ॥ प्रवृद्धं मेदुरैर्मेदो नीतं मांसेऽथवा त्वचि । वायुना कुरुते ग्रन्थिं भृशं स्निग्धं मृदु चलं । श्लेष्मतुल्याकृतिं देहक्षयवृद्धिक्षयोदयं । स विभिन्नो घनं मेदस्ताम्रासितसितं स्रवेत् ॥ इति (अ० सं० उ० ३४) । सिरा मांसं च संश्रित्य सस्वापः

शोथे कृते पाकवशेन शीर्यात्ततः च्तोत्थः प्रसरेद्विसर्पः।
उपद्रवं तं प्रविचार्य तज्ज्ञस्तैर्भेषजैः पूर्वतरैर्यथोक्तैः ॥८३॥
निवारयेदादित एव यत्नाद्विधानवित् स्वस्वविधिं विधाय।
ततः क्रमेणास्य यथाविधानं व्रणं व्रणज्ञस्त्वरया चिकित्सेत् ॥८४॥
विवर्जयेत् कुक्ष्युदराश्रितश्च तथा गले मर्मणि संश्रितश्च।
स्थूलः खरश्चापि भवेद्विवर्ज्यो यश्चापि बालस्थविराबलानाम् ॥८५॥

शोथे कृते इति। शोथे कृते सशोथः अनुद्धृतकोपश्चेत् तदा पाकवशेन शीर्यात् सशोथतया न केवलं पुनः प्रवर्धते कदाचिदपि पच्येत। ततः क्षतोत्थः तत्क्षतजः विसर्पः प्रसरेत्। तज्ज्ञः व्रणोपद्रवज्ञः विधानवित् तच्चिकित्सितविधिज्ञापि जानन् वैद्यः प्रविचार्य स्वस्वविधिं विधाय यथास्वविधिना। विसर्पे विसर्पचिकित्सितोक्तविधिः। व्रणे च व्रणविधिः। पूर्वतरैः यथोक्तैः विसर्पचिकित्सिते प्राक् यथा उक्तैः। इह पूर्वतरैरिति व्रणचिकित्सापेक्षया। व्रणं व्रणज्ञस्त्वरया चिकित्सेदिति। तैर्भेषजैः उपद्रवं उपद्रवभूतं तं विसर्पं। वक्ष्यति च—विसर्पः पक्षघातश्च सिरास्तम्भोऽपतानकः। मोहोन्मादव्रणरुजो ज्वरस्तृष्णा हनुग्रहः॥ कासश्छर्दिरतीसारो हिक्का श्वासः सवेपथुः। षोड़शोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः॥ इति च० चि० २५)। आदितः प्रागेव जातमात्रं यत्नात् निवारयेत्। ततः क्रमेण व्रणज्ञः व्रणचिकित्सितविधिं जानन् सः अस्य व्रणस्य यथाविधानं व्रणचिकित्सितोक्तविधिना तं व्रणं व्रणभूतं पाकेन क्षतत्वात् त्वरया चिकित्सेत् ॥८३। ८४॥

असाध्यं ग्रन्थिमाह—विवर्जयेदिति। कुक्ष्युदराश्रितं। कुक्ष्याश्रितं। उदराश्रितं च। गले संश्रितं। तथा मर्मणि हृदयादिमर्मस्थाने संश्रितं च। ग्रन्थिं विवर्जयेत्। यो ग्रन्थिः स्थूलः खरश्चापि स विवर्ज्यः वर्जनीयः भवेत्। बालः स्थविरः वृद्धः अबला नारी। अबलो दुर्बलो वा। बालादीनां यश्च ग्रन्थिः सोऽपि विवर्ज्यः भवेत्। तथाविधो ग्रन्थिरसाध्यः ॥८५॥

ग्रन्थ्यर्बुदानाञ्च यतोऽविशेषः प्रदेशहेत्वाकृतिदोषदूष्यैः ।
ततश्चिकित्सेद्भिषगर्बुदानि विधानविद् ग्रन्थिचिकित्सितेन ॥८६॥
ताम्रा सशूला पिडका भवेद्या सा चालजी नाम परिस्रुताग्रा ।
रोगोऽक्षतश्चर्मनखान्तरे स्यान्मांसासृग्दूषी भृशशीघ्रपाकः ॥८७॥
ज्वरान्विता वंक्षणकक्षजा या वर्त्तिर्निरर्त्तिः कठिनायता च ।
विदारिका सा कफमारुताभ्यां तेषां यथादोषमुपक्रमः स्यात् ॥८८॥
विस्रावणं पिण्डिकयोपनाहः पक्वेषु चैव व्रणवच्चिकित्सा ॥८-

ग्रन्थेश्चिकित्सितमर्बुदे अतिदिशन्नाह—ग्रन्थ्यर्बुदानां चेति । यतः यस्मात् । प्रदेशः स्थानं । हेतुः निदानं । दोषा वातादयस्त्रयः । दूष्याणि रक्तमांसमेदांसि त्रीणि च । तैः । ग्रन्थ्यर्बुदानां ग्रन्थीनां अर्बुदानां च अविशेषः न विशेषः भेदः तुल्यत्वं । त्रयो दोषाः त्रीणि च दूष्याणि इति षड्विधमर्बुदं । तथा च सुश्रुतः—वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा च । तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति ॥ इति ( सु० नि० ११ ) । ततः तस्मात् विधानवित् भिषक् ग्रन्थेः चिकित्सितेन प्रागुक्तेन अर्बुदानि चिकित्सेत् ॥ ८६ ॥

ताम्रेति । ताम्रा ताम्रवर्णा । सशूला । परिस्रुतं स्रवल्लसीकं अग्रं यस्याः सा तथाविधा । या पिडका सा अलजी नाम । कियन्तःशिरसीये प्रमेहपिडकासु या उक्ता—दहति त्वचमुत्थाने तृष्णामोहज्वरप्रदा । विसर्पत्यनिशं दुःखा दहत्यग्निरिवालजी ॥ इति ( च० श्लो० १७ ) सा अन्यैव । चर्मनखान्तरे, चर्मनखसन्धौ मांसासृग्दूषी मांसशोणितदुष्टिकरः भृशशीघ्रपाकः अतिशीघ्रपाकः अक्षतः क्षिप्योपनखापरनामा रोगः स्यात् । तदुक्तं सुश्रुतेन—नखमांसमधिष्ठाय पित्तं वातश्च वेदनां । करोति दाहपाकौ च तं व्याधिं क्षिप्यमादिशेत् ॥ तदेवाक्षतरोगाख्यं तथोपनखमित्यपि । इति ( सु० नि० १३ ) ॥ ८७ ॥

विदारिकामाह—ज्वरान्वितेति । वंक्षणकक्षजा वंक्षणे ऊरुसन्धौ कक्षे च जाता ज्वरान्विता कठिना आयता च या वर्त्तिः वर्त्तिरिवाकृतिः सा विदारिका नाम कफ-

विस्फोटकाः सर्वशरीरगास्तु स्फोटाः सदाहा ज्वरतर्षयुक्ताः ॥८९॥

यज्ञोपवीतप्रतिमाः प्रभूताः
पित्तानिलाभ्यां जनितास्तु कक्षाः।
याश्चापराः स्युः पिड़काः प्रकीर्णाः
स्थूलाणुमध्या अपि पित्तजास्ताः ॥९०॥

क्षुद्रप्रमाणाः पिड़काः शरीरे सर्वाङ्गगाः सज्वरदाहतृष्णाः।
कण्डूयुताः सारुचिसप्रसेका रोमान्तिकाः पित्तकफात् प्रदिष्टाः॥९१॥

मारुताभ्यां वातश्लेष्मभ्यामधिकाभ्यां पित्तेन हीनेन च सर्वजामिति सुश्रुतवचनात्। जायते। तदुक्तं सुश्रुतेन—विदारीकन्दवद् वृत्तां कक्षावंक्षणसन्धिषु। रक्तां विदारिकां विद्यात् सर्वजां सर्वलक्षणां॥ इति ( सु० नि० १३ )। चिकित्सामाह—तेषामिति। तेषां अलज्यादीनां प्राक् यथादोषं उपक्रमः शोधनरूपः विस्रावणं रक्तमोक्षणं च स्यात्। तेनाप्यशान्तौ पाकार्थं पिण्डिकया उपनाहः पिण्डस्वेदः। ततः पक्वेषु तेषु व्रणवच्चिकित्सा स्यात्॥

विस्फोटकमाह—विस्फोटका इति। सर्वशरीरगाः। एकदेशगाश्चापि। पित्तानिलाभ्यां जनिताः। सदाहाः। ज्वरः। तर्षः तृष्णा च। ताभ्यां युक्ताः। स्फोटाः विस्फोटकाः स्युः। तदुक्तं सुश्रुतेन—अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः। क्वचित् सर्वत्र वा देहे स्मृता विस्फोटका इति॥ इति ( सु० नि० १३ ) ॥८८-८९॥

कक्षामाह—यज्ञोपवीतप्रतिमा इति। पित्तानिलाभ्यां जनिताः ते एव स्फोटाः प्रभूताः बहवः मिलित्वा यज्ञोपवीतप्रतिमाः मण्डलाकाराः कक्षा उच्यन्ते। कक्षासन्नेषु देशेषु जातत्वात्। तदुक्तं सुश्रुतेन—बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनां। पित्तप्रकोपात् संभूतां कक्षामिति विनिर्दिशेत्॥ इति (सु० नि० १३)। प्रकीर्णाः इतस्ततः। स्थूलाणुमध्याः। स्थूलाः महत्यः। अणवः क्षुद्राः। मध्याः नातिस्थूलाः नातिक्षुद्राः। याः अपराः पिडकाः ताः सर्वाः पित्तजाः पित्तप्रकोपात् जायन्ते ॥९०॥

रोमान्तिकामाह—क्षुद्रप्रमाणा इति। सज्वरदाहतृष्णाः। कण्डूभिर्युताः। साष-

८९। स्फोटाः सरागा ज्वरदाहयुक्ताः इति ङ पुस्तके।

याः सर्वगात्रेषु मसूरमात्रा
मसूरिकाः पित्तकफात् प्रदिष्टाः ।
वीसर्पशान्त्यै विहिता क्रिया या
तां तासु कुष्ठे च हितां विदध्यात् ॥६२॥
वृद्धेऽनिलाद्यैर्वृषणे स्वलिङ्गै-
रन्त्रं निरेति प्रविशेन्मुहुश्च ।
मूत्रेण पूर्णं मृदु मेदसा चेत्
स्निग्धश्च विद्यात् कठिनश्च शोथम् ॥६३॥

चयः सप्रसेकाश्च ताः सारुचिसप्रसेकाः । पित्तकफात् जाताः । सर्वांगगाः शरीरे क्षुद्रप्रमाणाः पिड़काः रोमान्तिकाः प्रदिष्टाः रोमान्तिका इत्युच्यन्ते ॥ ६१ ॥

मसूरिकामाह—याः सर्वगात्रेष्विति । सर्वगात्रेषु प्रकीर्णाः सर्वांगगाः पित्तकफात् जाताः सज्वरदाहतृष्णाः याः मसूरमात्राः मसूराकृतयः पिडकाः ताः मसूरिकाः प्रदिष्टाः उक्ताः । सुश्रुते च—दाहज्वररुजावन्तस्ताम्राः स्फोटाः सपीतकाः । गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः ॥ इति ( सु० नि० १३ ) । चिकित्सामाह—वीसर्पशान्त्यायिति । वीसर्पशान्त्यै या क्रिया विहिता उक्ता तां क्रियां तथा कुष्ठे हितां च क्रियां च तासु मसूरिकासु रोमान्तिकासु च विदध्यात् कुर्यात् ॥ ६२ ॥

वृद्धिमाह—वृद्धेऽनिलाद्यैरिति । वृद्धिः फलकोशयोर्वृद्धिः । सा च वातेन पित्तेन कफेन रक्तेन मूत्रेण मेदसा अन्त्रेण च इति सप्तधा जायते । तथा च सुश्रुतः—वातपित्तश्लेष्मशोणितमेदोमूत्रान्त्रनिमित्ताः सप्त वृद्धयः । इति ( सु० नि० १२ ) । अनिलाद्यैः वातादिभिस्त्रिभिः वृद्धे वृषणे मुष्के । जातावेकवचनं । वृषणयोरित्यर्थः । वातिकवृद्धेः सम्प्राप्तिः त्रिशोथीये प्रागुपदर्शिता । तथाच—यस्य वातः प्रकुपितः शोफशूलकरश्चरन् । वंक्षणाद् वृषणौ याति वृद्धिस्तस्योपजायते ॥ इति ( च० सू० १८ ) । स्वलिंगैः वातादीनां स्वलक्षणैरुपलक्षितं शोथं विद्यात् । अनेन दोषजा त्रिविधा वृद्धिरुक्ता । वृद्धेर्वातिकादिलक्षणं यदुक्तं वृद्धवाग्भटेन—वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् । पक्वोदुम्बरसंकाशः पित्ताद्दाहोष्मपाकवान् ॥

विरेचनाभ्यङ्गनिरूहलेपाः पक्वेषु चैव व्रणवच्चिकित्सा।
स्यान्मूत्रमेदःकफजं विपाट्य विशोध्य सीव्येद् व्रणवच्च पक्वम् ॥६४॥

क्रिमेस्तृणादिक्षणनव्यवाय-
प्रवाहणात्युत्कटकाश्वपृष्ठैः।
गुदस्य पार्श्वे पिडका भृशार्त्तिः
पाकप्रभिन्ना तु भगन्दरः स्यात्॥६५॥

कफाच्छीतो गुरुः स्निग्धः कण्डूमान् कठिनोऽल्परुक्। इति ( अ० सं० नि० ११ ) अन्त्रं क्षुद्रं मुहुः निरेति स्वस्थानात् निर्गच्छति। वृषणं प्रविशेच्च। तेनापि वृ वृषणे शोथं विद्यात्। इयमन्त्रवृद्धिः। सा त्वसाध्या। तामन्त्रवृद्धिमसाध्यामित्या चक्षते। इति ( सु० नि० १२ )। वृषणे मूत्रेण मृदु यथा तथा पूर्णं मूत्रेण पूर्णं मृदुमित्यर्थः। मेदसा पूर्णं चेत् स्निग्धं कठिनं च। शोथं विद्यात्। मूत्रजा वृद्धि मृदुः। मेदोजा स्निग्धा। कठिना च। नेह रक्तजायाः पृथग् वचनं ... पित्तवृद्धाववरोधात्॥ ६३॥

वृद्धिचिकित्सामाह—विरेचनाभ्यंगेति। वृद्धयाख्यशोथेषु वृद्धिषु वापि। रोग विशेषवाचो वृद्धिशब्दः पुंस्त्वेऽपि वर्त्तते। वृद्धौ तु मारुतजे ( अ० सं० चि० १५ ) इत्यादिप्रयोगदर्शनात्। आमेषु प्राक् विरेचनं। अभ्यंगः। निरूहः आस्थापनं लेपश्च। ते स्युः। विरेचनं पैत्तिके। वातिके तु निरूहः। तेषु पक्वेषु व्रणवत् ... स्यात्। मूत्रमेदःकफजं पुनः अपक्वं शस्त्रेण विपाट्य विशोध्य अन्तर्दीपं ... सीव्येत्। पक्वं तु व्रणवत् चिकित्सेत्। इति शेषः॥ ६४॥

भगन्दरमाह—क्रिमेरिति। क्रिमिः पिपीलिकादिः। तस्मात् तद्दंशनात्। तृणा दिना क्षणनं। व्यवायः पायौ मैथुनं। प्रवाहणं कुन्थनं। अत्युत्कटकं आसनं। अश्वपृष्ठ इत्यश्वादिपृष्ठे गमनं च। तैः गुदस्य पार्श्वे गुदमभितः अंगुले द्व्यंगुले वा देशे भृशार्तिः अतिवेदनाकृत् पिडका पाकप्रभिन्ना चेत् भगन्दरः स्यात्। तथाच—अपक्वाः पिडकाः। पक्वास्तु भगन्दराः। इति ( सु० नि० ४ )। भगं दारयतीति भगंदरः। ते तु भगगुद-

विरेचनञ्चैषणपाटनञ्च विशुद्धमार्गस्य च तैलदाहः ।
स्यात् क्षारसूत्रेण सुपाटितस्य भिन्नस्य चास्य व्रणवच्चिकित्सा
जङ्घासु पिण्डीषु पदोपरिष्टात् स्याच्छ्लीपदं मांसकफास्रदोषात् ।
सिराकफघ्नश्च विधिः समग्रस्तत्रेष्यते सर्षपलेपनञ्च ॥९७॥

वस्तिप्रदेशदारणाद् भगन्दरा इत्युच्यन्ते। इति ( सु० नि० ४ )। भगन्दराः वातपित्तश्लेष्मसन्निपातागन्तुभिः पंचविधाः। यदाह सुश्रुतः—वातपित्तश्लेष्म-सन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीवपरिस्राविशम्बूकावर्तोन्मार्गिणो यथा-संख्यं पंच भगन्दरा भवन्ति। इति ( सु० नि० ४ )। वृद्धवाग्भटस्तु द्वान्द्विकां-स्त्रीनादाय भगन्दरमष्टविधमाह। तथा च—दोषैः पृथक् द्वयैः सर्वैरागन्तुः सोऽष्टमः स्मृतः। इति ( अ० सं० उ० ३३ )। इह संग्रहेणाभिधानं। प्रपंचस्तु तत्र तत्रानु-सन्धेयः ॥ ९५ ॥

चिकित्सामाह—विरेचनं चेति। विरेचनं। एषणं एषण्या व्रणमार्गानुसारिण्या शलाकया सम्यगवेक्षणं। शस्त्रेण पाटनं च। तत्। तेन विशुद्धमार्गस्य तस्य भगन्द-रस्य,तैलदाहः उष्णतैलेन सेकः। क्षारसूत्रेण सुपाटितस्य सम्यक् पाटितस्य भिन्नस्य गलितस्य च अस्य भगन्दरस्य व्रणवत् चिकित्सा स्यात् ॥ ९६ ॥

श्लीपदमाह—जंघास्विति। जंघासु। पिण्डीषु मांसपिण्डिकासु। बहुवचनं बहुपुरुषापेक्षया। ततः पदोपरिष्टात् जंघापिण्डीतः पादमागतात् मांसं कफः अस्रं रक्तं च। तेषां दोषात् दुष्टत्वात्। श्लीपदं स्यात्। तथा च—मांसशोणितगताः कफो-ल्बणा दोषाः जंघापिण्डिकास्थिताः। ततः पादमागत्य तत्र श्लीपदं जनयन्ति। यदाह सुश्रुतः—कुपितास्तु दोषा वातपित्तश्लेष्माणोऽधः प्रपन्ना वंक्षणोरुजानुजंघास्वव-तिष्ठमानाः कालान्तरेण पादमाश्रित्य शनैः शोफमुपजनयन्ति। तच्छ्लीपदमाच-क्षते। इति ( सु० नि० १२ )। अथवा मांसकफास्रदोषात् जंघासु पिण्डीषु पदो-परिष्टात् पादयोरुपरि च श्लीपदं स्यात्। तदुक्तमन्यत्र—ग्रीवावंक्षणजंघोरुपादकर्ण-

मन्दास्तु पित्तप्रबलाः प्रदुष्टा दोषाः सुतीव्रं तनुरक्तपाकम्।
कुर्वन्ति शोथं ज्वरतर्षयुक्तं विसर्पिणं जालकगर्दभाख्यम् ॥९८॥
विलंघनं रक्तविमोक्षणञ्च विरूक्षणं कायविशोधनञ्च।
धात्रीप्रयोगान् शिशिरप्रदेहान् कुर्यात् सदा जालकगर्दभस्य॥९९
एवंविधांश्चाप्यपरान् परीक्ष्य शोथप्रकारानानिलादिलिंगैः।
शान्तिं नयेद्दोषहरैर्यथास्वमालेपनच्छेदनभेददाहैः ॥१००॥

कराश्रयं। श्लीपदं मांसमेदोभ्यां। इति। तच्चिकित्सामाह—सिराकफघ्न इति। तत्र श्लीपदे। सिराकफघ्नः। सिराघ्नः सिराव्यधनं। कफघ्नश्च विधिः समग्रः। तथा सर्पपलेपनं च। इष्यते ॥९७॥

जालगर्दभमाह—मन्दास्त्विति। प्रदुष्टाः यथास्वं प्रकोपणैः प्रकुपिताः। पित्तं प्रबलं येषु ते पित्तप्रबलाः पित्तोल्वणाः मन्दाः अल्पवृद्धाः। मन्दत्वमिह वातकफयोः। दोषाः वातादयः। सुतीव्रं अतीवदाहकरं। तनुरल्पः रक्तश्च पाको यस्मिन् तं। अनेन वक्ष्यमाणसुश्रुतवचने अपाकशब्देन ईषत्पाको बोद्धव्यः। पित्तकृतत्वेन सर्वथा पाकाभावस्यासम्भवात्। ज्वरः। तर्पः तृष्णा च। ताभ्यां युक्तं। विसर्पिणं विसर्पवत् सिवर्पन्तं जालकगर्दभाख्यं शोथं कुर्वन्ति। सुश्रुतेनोक्तं—विसर्पवत् सर्पति यो दाहज्वरकरस्तनुः। अपाकः श्वयथुः पित्तात् स ज्ञेयो जालगर्दभः॥ इति ( सु० नि० १३ )। पित्तादिति पित्तोल्वणदोषत्रयात्॥ ९८ ॥

तत्र चिकित्सामाह—विलंघनमिति। भिषक् जालकगर्दभस्य जालगर्दभे सदा। विलंघनं। रक्तविमोक्षणं। विरूक्षणं। कायविशोधनं वमनादिकं। धात्री आमलकी। तस्याः प्रयोगाः स्वरसकल्कादिरूपेण। तान्। शिशिरप्रदेहान् शीतवीर्यैः द्रव्यैः श्लक्ष्णपिष्टैः प्रलेपांश्च कुर्यात् ॥९९॥

अनुक्तसंग्रहार्थमाह—एवंविधानिति। एवंविधान् अनुक्तान् अपरांश्चापि शोथ-

९९। विलेपनं रक्तविमोक्षणं च इति क पुस्तके।

प्रायोऽभिघातादनिलः सरक्तः शोथं सरागं प्रकरोति तत्र ।
वीसर्पनुन्मारुतरक्तनुच्च कार्यं विषघ्नं विषजे च कर्म ॥१०१॥

तत्र श्लोकः ।

त्रिविधस्य दोषभेदात् सर्वार्धावयवगात्रभेदाच्च ।
श्वयथोर्विविधस्य तथा लिङ्गानि चिकित्सितश्चोक्तम् ॥१०२॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
श्वयथुचिकित्सितं नाम द्वादशोऽध्यायः ॥ १२ ॥

प्रकारान् नानाविधान् शोथान् अनिलादिलिंगैः परीक्ष्य वातिकत्वादिना अवधार्य यथास्वं दोषहरैः तत्तद्दोषहरणैः कर्मभिः वमनादिभिः । तथा आलेपनं तत्तदौषधैः श्लक्ष्णपिष्टैः प्रदेहः । छेदनं शस्त्रेण । भेदः पाकेन भेदनं । दाहश्च अग्निक्षाराभ्यां । तैः शान्तिं नयेत् प्रापयेत् ॥ १०० ॥

निजस्त्रिविधः श्वयथुरुक्तः । सम्प्रति आगन्तुर्विवक्षितः । स च प्राक् त्रिशोथीये प्रपंचेनोक्तः । स च अभिघाताद् विषादपीति (अ० सं० नि० १३) अभिघातजविषजत्वेन द्विधा संगृह्य इह उच्यते । तत्रादावभिघातजं हेतुलिंगौषधैराह—प्रायोऽभिघातादिति । प्रायः अभिघातात् । छेदनभेदनक्षणनभंजनादीनां त्रिशोथीयोक्तानामिह अभिघातशब्देन संग्रहः । कुपितः अनिलः वायुः सरागं रक्तवर्णं शोफं करोति । तत्र अभिघातजे शोफे विसर्पनुत् मारुतरक्तनुत् वातरक्तहरं च कर्म कार्यं कर्त्तव्यं । विषजे चिकित्सामाह—विषघ्नमिति । विषजे सविषप्राणिपरिसर्पणमूत्रणदंष्ट्रादन्तनखनिपातादिभिर्जाते च श्वयथौ विषघ्नं कर्म कार्यम् ॥ १०१ ॥

अध्यायार्थसंग्रहं करोति—तत्र श्लोक इति । दोषभेदात् वातिकत्वादिना त्रिविधस्य । सर्वं अर्धं अवयवः एकदेशरूपं च गात्रं । तेन भेदः । तस्मात् । सर्वगात्रा-

## अथोदरशोऽध्यायः ।

अथात उदरचिकित्सितं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ॥ १ ॥
सिद्धविद्याधराकीर्णे कैलासे नन्दनोपमे ।
तप्यमानं तपस्तीव्रं साक्षाद्धर्ममिव स्थितम् ॥२॥
आयुर्वेदविदां श्रेष्ठं भिषग्विद्याप्रवर्त्तकम् ।
पुनर्वसुं जितात्मानमग्निवेशोऽब्रवीद्वचः ॥३॥
भगवन्नुदरैर्दुःखैर्दृश्यन्ते छर्दिता नराः ।

श्रितत्वेन अर्धगात्राश्रितत्वेन अवयवाश्रितत्वेन चापि त्रिविधस्य । तथा वि[illegible] शालूकादिभेदात् नानाविधस्य च । श्वयथोः लिंगानि । चिकित्सितं च उक्तं । अस्मिन् श्वयथुचिकित्सिताध्याये भगवता आत्रेयेण पुनर्वसुना ॥ १०२ ॥

इति वैद्यरत्नश्रीयोगीन्द्रनाथविद्याभूषणकृते चरकोपस्कारे चिकित्सितस्थाने द्वादशोऽध्यायः ।

## अथोदरशोऽध्यायः ।

उत्सेधसामान्यात् शोथरूपतया उदरस्य श्वयथुचिकित्सानन्तरमुदरचिकित्सितमभिधीयते—अथात इति । सर्वं पूर्ववद् व्याख्येयं ॥ १ ॥

सिद्धेत्यादि । अग्निवेशः । सिद्धाः । विद्याधराश्च । ते देवयोनिभेदाः । तैः आकीर्णे व्याप्ते । नन्दनोपमे नन्दनतुल्ये । कैलासे गिरौ । तीव्रं कठोरं तपः तप्यमानं । तपस्तपःकर्मकस्यैव इति ( पाणिनि ३ । १ । ८८ ) कर्तुः कर्मवद्भावः । साक्षात् मूर्तं धर्ममिव स्थितं । आयुर्वेदविदां श्रेष्ठं । भिषग्विद्याप्रवर्त्तकं मर्त्यलोके । जितात्मानं । पुनर्वसुं भगवन्तमात्रेयं । अप्रधानं कर्म । प्रधानं च वचः । वचः वचनं वक्ष्यमाणं अब्रवीत् ॥ २ । ३ ॥

शुष्कवक्त्राः कृशैर्गात्रैराध्मातोदरकुक्षयः ॥४॥
प्रनष्टाग्निबलाहाराः सर्वचेष्टास्वनीश्वराः ।
दीनाः प्रतिक्रियाभावाज्जहतोऽसूननाथवत् ॥५॥
तेषामायतनं संख्यां प्रागूरूपाकृतिभेषजम् ।
यथावच्छ्रोतुमिच्छामि भवता सम्यगीरितम् ॥६॥
सर्वभूतहितायर्षिः शिष्येणैवं प्रचोदितः ।
सर्वभूतहितं वाक्यं व्याहर्तुमुपचक्रमे ॥७॥
अग्निदोषान्मनुष्याणां रोगसंघाः पृथग्विधाः ।
मलवृद्ध्या प्रवर्तन्ते विशेषेणोदराणि च ॥८॥

भगवन्नित्यादि । हे भगवन् । हि यतः नराः दुखैः दुःखकरैः कृच्छ्रसाध्यैः उदरैः तदाख्यरोगभेदैः अर्दिताः पीडिताः सन्तः । शुष्कं वक्त्रं मुखं येषां ते । कृशैः गात्रैरुपलक्षिताः । आध्मातोदरकुक्षयः । कुक्षिः पार्श्वदेशः । प्रनष्टाः । अग्निः । बलं शारीरं । अग्निबलं वा । आहारश्च । ते येषां ते तथोक्ताः । सर्वासु चेष्टासु अनीश्वराः अक्षमाः । तत एव दीनाः । प्रतिक्रिया प्रतीकारः । तस्या अभावः । तस्मात् प्रतिक्रियाभावात् । अनाथवत् अनाथाः अशरणा इव । असून् प्राणान् जहतः त्यजन्तः । दृश्यन्ते । ततः तेषामुदराणां । आयतनं कारणं । संख्यां । प्रागूरूपं पूर्वरूपं । आकृतिः रूपं । भेषजं च । तत् प्रागूरूपाकृतिभेषजं । तत् सर्वं भवता गुरुणा यथावत् यथाक्रमं सम्यक् ईरितं उक्तं अहं श्रोतुमिच्छामि ॥ ४–६ ॥

सर्वभूतेति । स ऋषिः शिष्येण अग्निवेशेन सर्वभूतहिताय एवं प्रचोदितः प्रेरितः पृष्टः सन् । सर्वभूतहितं वाक्यं व्याहर्तुं वक्तुं उपचक्रमे आरेभे ॥ ७ ॥

अग्निदोषादिति । अग्निदोषात् अग्निमान्द्यात् । तेन भुक्तस्यासम्यक्पाकात्

८ । मलवृद्ध्याप्रवर्धन्ते इति क पुस्तके ।

मन्देऽग्नौ मलिनैर्भुक्तैरपाकाद्दोषसञ्चयः।
प्राणाग्न्यपानान् संदूष्य मार्गान् रुध्द्वाऽधरोत्तरान् ॥९॥
त्वङ्मांसान्तरमागत्य कुक्षिमाध्मापयन् भृशम्।
जनयत्युदरं तस्य हेतुं शृणु सलक्षणम् ॥१०॥
अत्युष्णलवणक्षारविदाह्यम्लगराशनात्।
मिथ्यासंसर्जनाद्रूक्षविरुद्धाशुचिभोजनात् ॥११॥
प्लीहार्शोग्रहणीदोषकर्शनात् कर्मविभ्रमात्।
क्लिष्टानामप्रतीकाराद्रौक्ष्याद्वेगविधारणात् ॥१२॥

मलवृद्धिः। तया मलवृद्ध्या मनुष्याणां पृथग्विधाः नानाविधाः रोगसंघाः। ...न्ते जायन्ते। तत्र पुनर्विशेषेण उदराणि प्रवर्त्तन्ते ॥ ८ ॥

यथा मलवृद्ध्या उदराणि जायन्ते तद् विवृणोति—मन्देऽग्नावित्यादि। अग्नौ मन्दे सति अग्निमान्द्यात् अपाकात्। तथा मलिनैः मलकरैः अपथ्यैः आहारैः भुक्तैश्च हेतुभिः। दोषाणां संचयः दोषसंचयः संचिताः दोषाः। प्राणाग्न्यपानान्। प्राणं प्राणवायुं। जाठरमग्निं। अपानं अपानवायुं च। सन्दूष्य। अधरोत्तरान् अधश्चोर्ध्वं च मार्गान् रुध्वा अग्नेर्मन्दस्यापि पुनर्दूषणाभिधानं अतिमान्द्यख्यापनार्थं। प्राणापानयोर्दुष्ट्या नोर्ध्वं प्रवर्त्तते। नाप्यधः। अग्नेरतिमान्द्यात् न चाप्यन्नं पच्यते। अतः स दोषसंचयः त्वङ्मांसान्तरं आगत्य त्वङ्मांससन्धिमाश्रित्य। कुक्षिं उदरं भृशमतिशयितं आध्मापयन्। उदरं नाम रोगं जनयति। तस्य उदरस्य हेतुं सलक्षणं हेतुं लक्षणं च प्राक् समासतः शृणु। व्यासतस्तु पश्चादष्टविधस्य तस्य वक्ष्यते ॥ ९। १०॥

/तत्रादावुदरस्य सामान्यतो हेतुमाह—अत्युष्णेति। अत्युष्णः आहारः। लवणः। क्षारः। विदाहि विदाहकरं। अम्लं च अन्नपानं। गरं संयोगजं विषं च। तेषामशनं। तस्मात्। मिथ्यासंसर्जनात् संसर्जनस्य पेयादिक्रमस्य मिथ्याचरणात् अयथाकरणात्। रूक्षं। विरुद्धं। यथा मत्स्यपयसी। अशुचि। अमेध्यमपथ्यं च यत् आहारजातं। तस्य भोजनं। तस्मात्। प्लीहा। अर्शांसि। ग्रहणीदोषः। अध्वभाराध्ययनादिभिः कर्शनं

स्रोतसां दूषणादामात् संक्षोभादतिपूरणात् ।
अर्शोबालशकृद्रोधादन्त्रस्फुटनभेदनात् ॥१३॥
अतिसञ्चितदोषाणां पापं कर्म च कुर्वताम् ।
उदराण्युपजायन्ते मन्दाग्नीनां विशेषतः ॥१४॥
क्षुन्नाशः स्वाद्वतिस्निग्धगुर्वन्नं पच्यते चिरात् ।
भुक्तं विदह्यते सर्वं जीर्णाजीर्णं न वेत्ति च ॥१५॥

च । तत् । तस्मात् । कर्मविभ्रमात् कर्मणां वमनादीनां विभ्रमात् मिथ्याचरणात् । रोगैः क्लिष्टानां अप्रतीकारात् । रौक्ष्यात् रूक्षत्वात् । वेगविधारणात् मूत्रपुरीषादि-वेगधारणात् । स्रोतसां मूत्रपुरीषादिवहानां दूषणात् । आमात् अपक्वाहार-रसात् । अत्यशितस्य यानवाहनादिभिः संक्षोभात् । कुक्षेः अतिप्रपूरणात् अति-भोजनात् । अर्शांसि । बालाः केशाः अन्नेन सह भुक्ताः । तैः बद्धमार्गतया शकृतः रोधः । तस्मात् अर्शोबालशकृद्रोधात् । अयं बद्धगुदोदरस्य हेतुः । अन्नेन सह भक्षितैः शर्करातृणकण्टकादिभिः अन्त्रस्य स्फुटनं भेदनं च तत् । तस्मात् । छिद्रोदरस्य हेतुरयं । अतिसंचितदोषाणां । पापं कर्म कुर्वतां । विशेषतः मन्दाग्नीनां च पुंसां । दोषाणामतिसंचयात् । पापकर्माचरणात् । अग्नेरतिमान्द्याच्च । उदराणि उपजा-यन्ते ॥ ११—१४ ॥

पूर्वरूपमाह—क्षुन्नाश इत्यादि । क्षुधः क्षुधायाः नाशः क्षुन्नाशः । स्वादु मधुरं । अतिस्निग्धं । गुरु च । अन्नं भुक्तं । चिरात् पच्यते चिरेण पाकं याति । भुक्तं सर्वं विदह्यते । भविष्यदुदरः पुमान् जीर्णाजीर्णं जीर्णमजीर्णं वा न वेत्ति न जानाति । अतिसौहित्यं अतितृप्त्या भुक्तं पर्याप्तमाहारं न सहते । पादयोः ईषत् शोफः । शश्वत् सर्वदा बलक्षयः । अल्पेऽपि व्यायामे चेष्टिते स च श्वासं ऋच्छति गच्छति प्राप्नोति ।

१५ । क्षुन्नाशः स्वादुता स्निग्धगुर्वन्नं इति क पुस्तके ।

सहते नातिलौहित्यमीषच्छोफश्च पादयोः ।
शश्वद्बलक्षयोऽल्पेऽपि व्यायामे श्वासमृच्छति ॥१६॥
वृद्धिः पुरीषनिचयो रूक्षोदावर्तहेतुका ।
वस्तिसन्धौ रुगाध्मानं वर्धते पाट्यतेऽपि च ॥१७॥
आतन्यते च जठरं लघ्वल्पभोजनैरपि ।
राजीजन्म वलीनाश इति लिंगं भविष्यताम् ॥१८॥
रुद्ध्वा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि सञ्चिताः ।
प्राणाग्न्यपानान् संदूष्य जनयन्त्युदरं नृणाम् ॥१ ॥

वृद्धिः पुरीषस्य । पुरीषस्य निचयः संचितत्वं । अप्रवृत्तिश्च । वृद्धिर्विबोऽप्रवृत्तिश्च । इति ( अ० सं० नि० १२ ) । वस्तिसन्धौ रूक्षोदावर्त्तहेतुका रुक् शूलं । आध्मानं उदरस्य । लघुभिः प्रकृतिलघुभिः अल्पैः अल्पमात्रैश्च भोजनैरपि जठरमुदरं वर्द्धते उपरि आतन्यते विस्तीर्यते । पाट्यते भिद्यते इव । अतिभोजनाद् यथा भवति । उदरे राजीनां रेखाणां जन्म प्रादुर्भावः । वलीनां नाशश्च । इति एतत् भविष्यतामुदराणां लिंगं । क्षुन्नाशादिकमुदराणां प्रागुत्पत्तिलक्षणं । तदुक्तं सुश्रुतेनापि—तत्पूर्वरूपं बलवर्णकांक्षा वलीविनाशो जठरे च राज्यः । जीर्णापरिज्ञानविदाहवत्यो वस्तौ रुजः पादगतश्च शोफः ॥ इति ( सु० नि० ७ ) ॥ १५–१८ ॥

प्राग्रूपमुक्तं । तत्प्रति रूपं विवक्षुः आदौ सम्प्राप्तिं प्रागुक्तामपि प्रसंगात् पुनराह—रुद्ध्वेति । उक्तैर्हेतुभिः संचिताः दोषाः प्राणाग्न्यपानान् सन्दूष्य त्वङ्मांसान्तरमाश्रित्य कुक्षिमाध्मापयन्तः नृणामुदरं जनयन्ति ॥ १९ ॥

---

१८। लघ्वल्पाभोजनैरपि इति ख ग पुस्तकयोः ।

कुक्षेराध्मानमाटोपः शोफः पादकरस्य च ।
मन्दाग्निश्लक्ष्णगण्डत्वं कार्श्यं चोदरलक्षणम् ॥२०॥
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ।
सम्भवन्त्युदराण्यष्टौ तेषां लिंगं पृथक् शृणु ॥२१॥
रूक्षाल्पभोजनायासवेगोदावर्तकर्शनैः ।
वायुः प्रकुपितः कुक्षिहृद्बस्तिगुदमार्गगः ॥२२॥

रूपमाह—कुक्षेराध्मानमिति । कुक्षेः आध्मानं । आटोपः सवेदनगुडगुडाशब्दः । पादौ करौ च तत् । तस्य पादकरस्य च शोफः । मन्दाग्नित्वं अग्निमान्द्यं । श्लक्ष्णगण्डत्वं मसृणकपोलत्वं । कार्श्यं कृशत्वं च । इति सामान्यतः उदरस्य लक्षणं ॥२०॥

संख्यामाह—पृथग् दोषैरिति । दोषैः वातपित्तश्लेष्मभिस्त्रिभिः पृथग् व्यस्तैः । तैः समस्तैः सन्निपतितैश्च । दोषाः पृथक् त्रयः । सन्निपात एकः । इति चतुर्भिः । प्लीहा । बद्धः गुदः पक्ष्मबालादिभिर्बद्धायनो गुदः । क्षतं अन्नेन सह भक्षितैः शर्करातृणकाष्ठादिभिः अन्त्रच्छिद्रं । उदकं च । तैः प्लीहबद्धक्षतोदकैरिति चतुर्भिश्च । मिलित्वा अष्टाभिः अष्टौ । वातोदरं । पित्तोदरं । श्लेष्मोदरं । सन्निपातोदरं । प्लीहोदरं । बद्धगुदोदरं । क्षतोदरं छिद्रोदरमिति वा । परिस्रावीति तन्त्रान्तरीयाः । उदकोदरं दकोदरापरनाम च इति अष्टौ उदराणि सम्भवन्ति । अष्टोदरीयेऽपि—अष्टावुदराणीति वातपित्तकफसन्निपातप्लीहबद्धच्छिद्रोदकोदराणीति । तेषां वातादिभिः सम्भवतामष्टानामुदराणां पृथक् पृथक् लिंगं सम्भवं चापि शृणु ॥ २१ ॥

तत्रादौ वातोदरस्य निदानपूर्वकसम्प्राप्तिमाह—रूक्षाल्पेत्यादि । रूक्षं अल्पं हीनमात्रं च भोजनं । आयासः श्रमः । वेगः वेगधारणं । उदावर्त्तः । अध्वभारादिभिः कर्शनं च । तैः प्रकुपितः । तेन नानुलोममार्गप्रवृत्तः वायुः । कुक्षिः । हृत् हृदयं । वस्तिः । गुदस्य मार्गश्च । तद्गः कुक्ष्यादिगतः । अग्निं जाठरं हत्वा । कफं उद्धूय

२० । अयं श्लोकः न पठ्यते ङ पुस्तके ।

हत्वाग्निं कफमुद्धूय तेन रुद्धगतिस्ततः।
आचिनोत्युदरं जन्तोस्त्वङ्मांसान्तरमाश्रितः॥२३॥

तस्य रूपाणि। कुक्षिपादवृषणश्वयथुः। उदरविपाटनम्। अनियतौ च वृद्धिह्रासौ। कुक्षिपार्श्वशूलोदावर्त्ताङ्गमर्दपर्वभेदाः। शुष्ककासकार्श्यदौर्बल्यारोचकाविपाकाः। अधोगुरुत्वं। वातवर्चोमूत्रसंगः। श्यावारुणत्वं च नखनयनवदनत्वङ्मूत्रवर्चसाम्। अपि चोदरं तन्वसितराजीसिरासन्ततम्। आहतमाध्मातदृतिशब्दवद्भवति। वायुश्चात्रोर्ध्वमधस्तिर्यक् च सशूलशब्दश्चरति। एतद्वातोदरमिति विद्यात्॥२४॥

स्वस्थानादूर्ध्वं नीत्वा। तेन कफेन रुद्धगतिः ऊर्ध्वं रुद्धमार्गः। ततः त्वङ्मांसान्तरमाश्रितः सन्। जन्तोः प्राणिनः उदरं आचिनोति आध्मापयति॥ २२। २३॥

वातोदरस्य सम्प्राप्तिमुक्त्वा लिंगमाह—तस्य रूपाणीति। तस्य वातोदरस्य रूपाणि लिंगानि। यथा। कुक्षौ पादयोः वृषणयोश्च पाण्योश्चापि श्वयथुः शोथः। उदरस्य विपाटनं पाटनमिव। उदरस्य वृद्धिह्रासौ अनियतौ। वायोश्चलत्वात्। कुक्षेः पार्श्वयोश्च शूलं। उदावर्त्तः। अङ्गमर्दः। पर्वणां भेदः। शुष्कः कासः। कार्श्यं। दौर्बल्यं। अरोचकः। अविपाकश्च। ते। उदरस्य अधोगुरुत्वं। वायोरधःस्थानत्वात्। वातः। वर्चः पुरीषं। मूत्रं च। तेषां संगः। नखाः। नयने। वदनं मुखं। त्वक्। मूत्रं। वर्चश्च। तेषां श्यावारुणत्वं श्यावारुणान्यतरवर्णत्वं। वायोः श्यावारुणवर्णकारित्वात्। अपि च उदरं। तन्व्यः सूक्ष्माः। असिताः कृष्णाश्च। या राजयः रेखाः। सिराश्च। ताभिः सन्ततं व्याप्तं। तथा आहतं सत् आध्मातः वायुपूर्णः दृतिश्चर्मपुटकः। तस्येव शब्दः। तद्वत् भवति। उदरं आहतं आध्मातदृतिवत् शब्दं करोति। अत्र वातोदरे वायुः उर्ध्वं अधः तिर्यक् च सर्वत्र

२४। कुक्षिपाणिपादवृषण इति ख ग ण पुस्तकेषु।

२४। श्यावारुणपरुषत्वं च इति ख ग पुस्तकयोः।

कट्वम्ललवणात्युष्णतीक्ष्णाग्न्यातपसेवनैः ।
विदाह्यजीर्णाध्यशनैश्चाशु पित्तं समाचितम् ॥२५॥
प्राप्यानिलकफौ रुद्ध्वा मार्गमुन्मार्गमास्थितम् ।
निहन्त्यामाशये वह्निं जनयत्युदरं ततः ॥२६॥

तस्य रूपाणि । दाहज्वरतृष्णामूर्च्छातीसारभ्रमाः । कटुकास्यत्वं । हरितहारिद्रत्वञ्च नखनयनवदनत्वङ्मूत्रवर्चसाम् । अपि चोदरं नीलपीतहारिद्रहरितताम्रराजीसिरावनद्धं । दह्यते । दूयते । धूप्यते । ऊष्मायते । स्विद्यते । क्लिद्यते । मृदुस्पर्शं क्षिप्रपाकञ्च भवति । एतत् पित्तोदरमिति विद्यात् ॥२७॥

सशूलशब्दः चरति । इति तस्य रूपाणि भवन्ति । एतत् उक्तैः लक्षणैरुपलक्षितं वातोदरमिति विद्यात् जानीयात् । सुश्रुतेनाप्युक्तं—संगृह्य पार्श्वोदरपृष्ठनाभीर्यद्वर्द्धते कृष्णसिरावनद्धं । सशूलमानाहवदुग्रशब्दं सतोदभेदं पवनात्मकं तत् ॥ इति ( सु० नि० ७ ) ॥ २४ ॥

पित्तोदरस्य निदानपूर्वकसम्प्राप्तिमाह—कट्वम्लेत्यादि । कटु । अम्लं । लवणं । अत्युष्णं । तीक्ष्णं च । आहारजातं । अग्निः । आतपश्च । तेषां सेवनानि । तैः । विदाहि विदाहकरं । अन्नपानं । अजीर्णं । अध्यशनं भुक्तस्योपरि भोजनं च । भुक्तं पूर्वान्नशेषे च पुनरध्यशनं मतम् । इति । तैश्च हेतुभिः आशु समाचितं संचितं पित्तं कर्तृ अनिलकफौ वातश्लेष्माणौ प्राप्य । ताभ्यां मार्गं रुद्ध्वा । मार्गरोधात् उन्मार्गं आस्थितं उन्मार्गगतं । आमाशये वह्निं अग्निं निहन्ति । ततः उदरं जनयति च ॥ २५ । २६ ॥

पित्तोदरस्य लक्षणानि—तस्य रूपाणीत्यादि । दाहः । ज्वरः । तृष्णा । मूर्च्छा ।

अव्यायामदिवास्वप्नस्वाद्वतिस्निग्धपिच्छिलैः।
दधिदुग्धौदकानूपमांसैश्चाप्यतिसेवितैः ॥२८॥
क्रुद्धेन श्लेष्मणा स्रोतःस्वावृतेष्वावृतोऽनिलः।
तमेव पीड़यन् कुर्यादुदरं बहिरन्त्रगः ॥ २९॥

अतीसारः। भ्रमश्च। ते। कटुकास्यत्वं आस्यस्य मुखस्य कटुकरसत्वं। नख ...
हरितहारिद्रत्वं हरितहारिद्रवर्णत्वं। अपि च उदरं नीलाः पीताः हारिद्राः ह... ।
ताम्राश्च ताः नीलाद्यन्यतमवर्णाः राज्यः सिराश्च ताः। ताभिः अवनद्धं भवति। दह्यते
अग्निनेव। दूयते उपतप्यते। धूप्यते सन्तप्यते। ऊष्मायते ऊष्माणमुद्वमतीव। स्विद्यते
क्लिद्यते च स्वेदक्लेदयुक्तं भवति। मृदुस्पर्शं क्षिप्रपाकं शीघ्रपाकं च भवति। इति
पित्तोदरस्य रूपाणि। उक्तैः रूपैर्युक्तं एतत् पित्तोदरमिति विद्यात्। सुश्रुतेनाप्युक्तं—
यच्चोपतृष्णाज्वरदाहयुक्तं पीतं सिरा भान्ति च यत्र पीताः। पीताक्षिविण्मूत्रनखान-
नस्य पित्तोदरं तत्त्वचिराभिवृद्धि ॥ इति ( सु० नि० ७ ) ॥ २७ ॥

श्लेष्मोदरस्य निदानपूर्वकसम्प्राप्तिमाह—अव्यायामेत्यादि। अव्यायामः अचेष्टनं।
दिवास्वप्नः दिवानिद्रा। स्वादु मधुरं। अतिस्निग्धं। अतिपिच्छिलं च। यत् अन्न-
पानं। तच्च। तैरतिसेवितैः। तथा दधि। दुग्धं। औदकं। आनूपमांसं। औदका-
नूपमांसं। उदकं आनूपं च मांसं इति वा। तैश्चापि अतिसेवितैः। एभिर्हेतुभिः क्रुद्धेन
कुपितेन श्लेष्मणा स्रोतःसु आवृतेषु रुद्धेषु सत्सु। आवृतः रुद्धगतिः वायुः बहि-
रन्त्रगः त्वङ्मांसान्तरालगतं बाह्यमन्त्रमाश्रित्य। तं श्लेष्माणमेव पीडयन् उदरं
जनयति। प्रवृद्धश्लेष्मसहकृतेनैव वायुना आरब्धत्वात् श्लेष्मोदरमिदं ॥ २८।२९ ॥

तस्य रूपाणि। गौरवारोचकाविपाकाङ्गमर्दाः। सुप्तिः। पाणिपादमुष्कोरुशोफः। उत्क्लेशनिद्राकासश्वासाः। शुक्लत्वञ्च नखनयनवदनत्वङ्मूत्रवर्चसाम्। अपि चोदरं शुक्लराजीसिरा-सन्ततं। गुरु। स्तिमितं। स्थिरं। कठिनञ्च भवति। एतत्तच्च श्लेष्मोदरमिति विद्यात् ॥३०॥

दुर्बलाग्नेरपथ्यामावरोधिगुरुभोजनैः।
स्त्रीदत्तैश्च रजोरोमविण्मूत्रास्थिनखादिभिः ॥३१॥

श्लेष्मोदरस्य लिंगमाह—तस्य रूपाणीत्यादि। गौरवं गुरुत्वमंगानां। अरोचकः। अविपाकः। अंगमर्द्दः। सुप्तिः स्पर्शाज्ञता। पाण्यादिषु शोफः। उत्क्लेशः। निद्रा। कासः। श्वासश्च। ते। नखनयनादीनां शुक्लत्वं शुक्लवर्णत्वं च। अपि च उदरं शुक्लाभिः राजीभिः रेखाभिः सिराभिश्च सन्ततं व्याप्तं। गुरु। स्तिमितं आर्द्रपटाव-गुण्ठितमिव। स्थिरं। कठिनं च भवति। एतत् उक्तैर्लक्षणैर्युक्तं श्लेष्मोदरमिति विद्यात्। सुश्रुतेनाप्युक्तं—यच्छीतलं शुक्लसिरावनद्धं गुरु स्थिरं शुक्लनखाननस्य। स्निग्धं महच्छोफयुतं ससादं कफोदरं तत्तु चिराभिवृद्धि ॥ इति ( सु० नि० ७ ) ॥३०॥

सन्निपातोदरस्य निदानपूर्वकसम्प्राप्तिमाह—दुर्बलाग्नेरित्यादि। दुर्बलाग्नेः पुंसः। अग्निमान्द्यादित्यर्थः। अपथ्यं अहितं अध्यशनं विषमाशनादिकं। वातोदरादिषु त्रिषु प्रकोपणतया यत् यत् प्रागुक्तं समासतः तत् सर्वं वा। आमः अपक्वाहाररसः। विरोधि विरुद्धं। गुरु च। भोजनं। तैः। स्त्रीदत्तैः स्त्रीभिः दुष्टाभिः अन्नेन सह दत्तैः। रजः। रोम। विट्। मूत्रं। अस्थि। नखश्च। नखादिभिः। मन्दैः विषैः दूषीविषाद्यैः। मन्दैः अन्नैश्चापि दुष्टाम्बुमन्दकदध्यादिभिर्वा। कुपिताः वाताद्याः त्रयः सन्निप-तिताः। दोषाः कोष्ठे शनैः संचयं वृद्धिं प्रकुर्वन्तः। नृणां उदरं जनयन्ति। तदुक्तं सुश्रुतेनापि—स्त्रियोऽन्नपानं नखरोममूत्रविडार्त्तवैर्युक्तमसाधुवृत्ताः। यस्मै प्रय-

---

३०। अविपाकांगसुप्तिः इति ङ पुस्तके।

३०। उत्क्लेशनिद्राश्वासकासास्यवैरस्यं इति ख ग पुस्तकयोः।

विषैश्च मन्दैर्वाताद्याः कुपिताः संचयं त्रयः।
शनैः कोष्ठे प्रकुर्वन्तो जनयन्त्युदरं नृणाम् ॥३२॥

तस्य रूपाणि। सर्वेषामेव दोषाणां समस्तानि लिङ्गा...
पलभ्यन्ते। वर्णाश्च सर्वे नखादिषु। उदरमपि च नानाव...
जीसिरासन्ततं भवति। एतत् सन्निपातोदरमिति विद्यात् ॥३

अत्याशितस्य संक्षोभाद् यानयानातिचेष्टितैः।
अतिव्यवायभाराध्ववमनव्याधिकर्शनैः ॥३४॥

च्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद् वा॥ तेनाशु रक्तं कुपिताश्च दो... कुर्वन्ति घोरं जठरं त्रिलिंगं। तच्छीतवाताभ्रसमुद्भवेषु विशेषतः कुप्यति दह्यते च स चातुरो मूर्च्छति संप्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च। प्रकीर्तितं दूष्योदरं इति (सु० नि० ७)। चिकित्सास्थानेऽपि दूष्योदरिणं प्रत्याख्यायेति (सु० चि० १४)। सुश्रुते सन्निपातोदरस्य दूष्योदरमिति संज्ञा ॥ ३१। ३२ ॥

सन्निपातोदरस्य लक्षणमाह—तस्य रूपाणीति। सर्वेषां दोषाणां वातादी... त्रयाणां लिंगानि यानि वातोदरादिषु त्रिषु पृथक् पृथगुक्तानि। नखादिषु नखनयन वदनादिषु च वर्णाः श्यावारुणहरितहारिद्रादयः ये वातोदरादिषु पृथक् पृथगुक्ताः तानि लिंगानि समस्तानि मिलितानि। ते च वर्णाः सर्वे एव सन्निपातोदरे उपलभ्य न्ते। अपि च उदरं नानावर्णाभिः राजीभिः रेखाभिः सिराभिश्च सन्ततं व्या... भवति ॥ ३३ ॥

प्लीहोदरस्य निदानपूर्वकसम्प्राप्तिमाह—अत्याशितस्येति। अत्या... अतिभोजितस्य अतिभुक्तवतः पुंसः। यानैः अश्वशकटादिभिः। यानानि गमनानि। अतिचेष्टितानि अतिचंक्रमणादीनि च। यानयानादीति पाठे यानयानादीनि चेष्टितानि। तैः संक्षोभात्। तथा अतिव्यवायः अतिमैथुनं। अतिभारः अतिभारवहनं। अध्वा अत्यध्वगमनं। वमनं। व्याधयश्च। तैः कर्शनानि। तैः हेतुभिः स्थानात् च्युतः

वामपार्श्वाश्रितः प्लीहा च्युतः स्थानात् प्रवर्धते ।
शोणितं वा रसादिभ्यो विवृद्धं तं विवर्धयेत् ॥३५॥

तस्य प्लीहा कठिनोऽष्ठीलेवादौ वर्धमानः कच्छप-संस्थान उपलभ्यते । स चोपेक्षितः क्रमेण कुक्षिं जठरमग्न्य-धिष्ठानञ्च परिक्षिपन्नुदरमभिनिर्वर्तयति ॥३६॥

तस्य रूपाणि । दौर्बल्यारोचकाविपाकवर्चोमूत्रग्रहतमःप्रवे-शपिपासांगमर्दच्छर्दिमूर्च्छाङ्गसादकासश्वासमृदुज्वरानाहाग्नि-नाशकार्श्यास्यवैरस्यपर्वभेदकोष्ठवातशूलानि । अपि चोदरमरु-णवर्णं विवर्णं वा नीलहरितहारिद्रराजिमद्भवतीति । एवमेव यकृदपि दक्षिणपार्श्वस्थं कुर्यात् । तुल्यहेतुलिंगौषधत्वात् तस्य प्लीहजठर एवावरोध इति । एतत् प्लीहोदरमिति विद्यात् ॥३७

सन् । वामपार्श्वाश्रितः । एतत् स्वरूपकथनं प्लीह्नो ज्ञानार्थं । एवं दक्षिणपार्श्वस्थ-मिति यकृतः । प्लीहा प्रवर्धते । रसादिभ्यः स्वहेतुभ्यः प्रवृद्धेभ्यः । अतो विवृद्धे वृद्धिं प्राप्तं शोणितं वा तं प्लीहानं स्वाश्रयभूतं विवर्धयेत् ॥ ३४ । ३५ ॥

तस्येत्यादि । तस्य प्लीहा कठिनः । आदौ प्राक् अष्ठीलेव । अष्ठीला दीर्घो लोहमयो ग्रन्थिः । अष्ठीलेव वर्धमानः । कच्छपसंस्थानः कच्छपाकृतिः कूर्मपृष्ठवत् उन्नतः । उपलभ्यते । वर्धमानः स च प्लीहा उपेक्षितः अकृतचिकित्सः क्रमेण कुक्षिं पार्श्वदेशं जठरमुदरं अग्न्यधिष्ठानं ग्रहणीं च परिक्षिपन् परितः क्षिपन् वर्धयन् उदरं तदाख्यरोगं अभिनिर्वर्तयति जनयति ॥ ३६ ॥

प्लीहोदरस्य लक्षणमाह—तस्य रूपाणीत्यादि । दौर्बल्यं । अरोचकः । अविपाकः । वर्चोमूत्रयोः विण्मूत्रयोः ग्रहः संगः । तमःप्रवेशः अन्धकारप्रवेश इव ज्ञानाभावः ।

३६ । तस्य प्लीहा कठिनोऽष्ठीलेवादौ वर्धमानः इति ङ ग पुस्तकयोः ।

पक्ष्मबालैः सहान्नेन भुक्तैर्बद्धायने गुदे।
उदावर्तैस्तथार्शोभिरन्त्रसंमूर्च्छनेन वा ॥३८॥
अपानो मार्गसंरोधाद्धत्वाग्निं कुपितोऽनिलः।
वर्चःपित्तकफान् रुद्ध्वा जनयत्युदरं ततः ॥३९॥

अंगमर्दः। छर्दिः। अल्लादः। कासः। श्वासः। मृदुरल्पः ज्वरः। आनाहः। अ-
नाशः। कार्श्यं। आस्यस्य मुखस्य वैरस्यं विरसता। पर्वभेदः। वर्णभेदेति
वर्णभेदः विविधवर्णत्वं। कोष्ठे वातः। शूलं च। तानि। एवमुदावर्तादीनि च
दोषविज्ञानार्थं उदावर्तरुजानाहैरित्यादिना यानि पश्चाद् वक्ष्यमाणानि। अपि
उदरं अरुणवर्णं। विवर्णं वा। नीलहरितहारिद्रराजिमत् नीलहरितह रिद्रवर्णा-
राजीभिः आततं च भवति। दक्षिणपार्श्वस्थं यकृदपि एवमेव उक्तैर्लक्षणैर्युक्तं उ-
कुर्यात्। प्लीहोदरेण तुल्यहेतुलिंगौषधत्वात् तस्य यकृदुदरस्य इह प्लीहजठरे प्लीहोद
एव अवरोधः अन्तर्भावः कृतः। तुल्यहेतुलिंगौषधतया प्लीहोदरेणैव संग्रहात् न त-
पृथगभिधानं ॥ ३७॥

बद्धगुदोदरस्य निदानपूर्वकसम्प्राप्तिमाह—पक्ष्मबालैरित्यादि। गुदे। अ-
सह भुक्तैः। पक्ष्माणि अक्षिलोमानि। बालाः केशाश्च। तैः। उदावर्तैः। तथा अर्शो-
भिः। तथा पिच्छिलाद्यन्नभोजनेन अन्त्रस्य संमूर्च्छनं मेलनं। तेन वा। बद्धं -
अयनं द्वारं यस्य तस्मिन् बद्धायने सति। अपानः अधश्चरः तदाख्यः अनिलः वात
मार्गसंरोधात् कुपितः अग्निं हत्वा वर्चःपित्तकफान् रुद्ध्वा। ततः उदरं जनयति
सुश्रुतेनाप्युक्तं—यस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वा सहितैः पृथग्वा। संची-
यते तत्र मलः सदोषः क्रमेण नाड्यामिव संकरो हि। निरुध्यते तस्य गुदे पुरीषं
निरेति कृच्छ्रादपि चाल्पमल्पं। हृन्नाभिमध्ये परिवृद्धिमेति यच्चोदरं विट्समगन्धिकं
च। प्रच्छर्दयन् बद्धगुदी विभाव्यः ॥ इति (सु० नि० ७) ॥ ३८। ३९ ॥

---

३७। एतद्यकृत्प्लीहोदरमिति विद्यात् इति क पुस्तके।

तस्य रूपाणि । तृष्णादाहज्वरमुखतालुशोषोरुसादकास-श्वासदौर्बल्यारोचकाविपाकवर्चोमूत्र संगाध्मानच्छर्दिक्षवथुशि-रोहृन्नाभिगुदशूलानि । अपि चोदरं मूढवातं स्थिरमरुणनील-राजीसिरावनद्धमराजिकं वा प्रायो नाभ्युपरि गोपुच्छवदभि-निर्वर्तत इति । एतद्बद्धगुदोदरमिति विद्यात् ॥४०॥

शर्करातृणकाष्ठास्थिकण्टकैरन्नसंयुतैः ।
भिद्येतान्त्रं यदा भुक्तैर्जृम्भयात्यशनेन वा ॥४१॥
पाकं गच्छेद् रसस्तेभ्यश्छिद्रेभ्यः प्रस्रवेद् बहिः ।
पूरयन् गुदमन्त्रञ्च जनयत्युदरं ततः ॥४२॥

बद्धगुदोदरस्य लिंगमाह—तस्य रूपाणीत्यादि । तृष्णा । दाहः । ज्वरः । मुखतालु-शोषः । ऊरुसादः । कासः । श्वासः । दौर्बल्यं । अरोचकः । अविपाकः । वर्चोमूत्रयोः विण्मूत्रयोः संगः । आध्मानं । छर्दिः । क्षवथुः । शिरसि हृदि नाभौ गुदे शूलं च । तानि । अपि च उदरं । मूढः बहिरप्रवृत्तो वातो यस्मिन् तत् मूढवातं वायुनिःसरण-रहितं । स्थिरं । अरुणाः नीलाश्च याः राज्यः । सिराश्च । ताभिः अवनद्धं बद्धं । अराजिकं वा । भवति । तच्च उदरं प्रायः नाभ्युपरि नाभेः उपरि गोपुच्छवत् अभिनि-र्वर्त्तते गोपुच्छाकृति जायते ॥ ४० ॥

छिद्रोदरस्य निदानपूर्वकसम्प्राप्तिमाह—शर्करेत्यादि । अन्नसंयुतैः अन्नेन सह भुक्तैः । शर्करा । तृणं । काष्ठं । कंटकं च । तैः । जृम्भया । अत्यशनेन अतिभोजनेन वापि । यदा अन्त्रं भिद्येत । भिन्नं अन्त्रतः पाकं गच्छेत् पच्येत च । तदा तेभ्यः छिन्न-पक्वान्नस्य छिद्रेभ्यः रसः आमः बहिः प्रस्रवेत् । ततः स रसः गुदं अन्त्रं उदरं च पूरयन् उदरं जनयति । सुश्रुते च—शल्यं यदन्नोपहितं तदन्त्रं भिनत्ति यस्यागतमन्यथा वा । तस्मात् स्रुतोऽन्त्रात् सलिलप्रकाशः स्रावः स्रवेद् वै गुदतस्तु भूयः ॥ नाभेरधश्चोदर-

तस्य रूपाणि । तदधो नाभेः प्रायो वर्धमानमुदकोदरं स्यात् । यथाबलञ्च दोषाणां रूपाणि दर्शयति । अपि च पुरुषः सलोहितनीलपीतपिच्छिलकुणपगन्ध्यामवर्च उपवेपते । हिक्काश्वासकासतृष्णाप्रमेहारोचकाविपाकदौर्बल्यपरीतश्च भवति एतच्छिद्रोदरमिति विद्यात् ॥४३॥

स्नेहपीतस्य मन्दाग्नेः क्षीणस्यातिकृशस्य च ।
अत्यम्बुपानान्नष्टेऽग्नौ मारुतः क्लोम्नि संस्थितः ॥४४॥

मेति वृद्धिं निस्तुद्यतेऽतीव विदह्यते च । एतत् परिस्राव्युदरं प्रदिष्टं ॥ इति ( सु· नि० ७ ) । परिस्रावीति छिद्रोदरस्य संज्ञान्तरं ॥ ४१।४२ ॥

छिद्रोदरस्य रूपमाह—तस्य रूपाणीत्यादि । तत् छिद्रोदरं प्रायः नाभेः अधः वर्धमानं । द्रवस्य निम्नगत्वात् । उदकोदरं स्यात् आशु जलोदरतां प्राप्नोति । न तु छिद्रोदरमेव उदकोदरं भवति । तथात्वे उदकोदरस्य पृथगभिधानमयुक्तमेव स्यात् । छिद्रोदरे दोषसम्बन्धमाह—यथाबलं चेति । तत् छिद्रोदरं दोषाणां यथाबलं रूपाणि दर्शयति । दोषेषु यो यो वातः पित्तं कफो वा बलवान् उद्रिक्तः तस्य तस्य रूपाणि दर्शयति । अपि च आतुरः छिद्रोदरी पुमान् । सलोहितं सरक्तं । नीलं । पीतं वा । पिच्छिलं । कुणपगन्धि शवगन्धि च । तत् आमवर्चः उपवेपते त्यजति । तथा हिक्का । श्वासः । कासः । तृष्णा । प्रमेहः । अरोचकः । अविपाकः । दौर्बल्यं च । तैः परीतः युक्तो भवति ॥ ४३ ॥

साम्प्रतमन्त्यस्योदकोदरस्य निदानपूर्वकसम्प्राप्तिमाह—स्नेहपीतस्येत्यादि । स्नेहपीतस्य पीतस्नेहस्य । आग्न्याहितवत् वैकल्पिकः परनिपातः । मन्दाग्नेः । क्षीणस्य व्याधिभिः अतिकृशस्य मांसहीनस्य च पुंसः । अत्यम्बुपानात् सहसा शीतसलिलपानाच्चापि अग्नौ नष्टे मन्दस्य तस्य पुनरतिमान्द्ये सति । स्रोतःसु अम्बुवाहिषु रुद्ध-

स्रोतःसु रुद्धमार्गेषु कफश्चोदकमूर्च्छितः ।

वर्धयेतां तदेवाम्बु स्वस्थानादुदराय तौ ॥४५॥

तस्य रूपाणि । अनन्नाकांक्षापिपासागुदस्रावशूलश्वासकासदौर्बल्यानि । अपि चोदरं नानावर्णराजीसिरासन्ततमुदकपूर्णदृतिक्षोभसंस्पर्शं भवतीति । एतदकोदरमिति विद्यात् ॥४६॥

मार्गेषु । अत्यम्बुपानात् स्रोतसां दुष्टत्वात् । स्नेहोपलेपाद्वा । क्लोम उदकवाहिस्रोतसां मूलं । तत्र संस्थितः मारुतः वातः कफश्च उदकमूर्च्छितः उदकवाहिस्रोतसां रुद्धतया तैरवहनात् तेनोदकेन मूर्च्छितः मिश्रितः वृद्धिं गतः । तौ मारुतकफौ तदेव अम्बु उदकं स्वस्थानात् उदरं नीत्वा उदराय रोगाय उदरं जनयितुं तत् वर्धयेतां । तदेव उदकं उदरे वृद्धिमागत्य उदरं जनयति । सुश्रुते च—यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढः । पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि ॥ स्नेहोपलिप्तेष्वथवापि तेषु दकोदरं पूर्ववदभ्युपैति । स्निग्धं महत् संपरिवृत्तनाभि भृशोन्नतं पूर्णमिवाम्बुना च ॥ यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत् । इति ( सु० नि० ७ ) ॥ ४४ । ४५ ॥

उदकोदरस्य लक्षणमाह— तस्य रूपाणीत्यादि । अनन्नाकांक्षा अन्ने अनाकांक्षा । अरुचिरित्यर्थः । पिपासा । गुदात् स्रावः । शूलं च । श्वासः । कासः । दौर्बल्यं च । तानि । उदरं नानावर्णाभिः राजीभिः सिराभिश्च सन्ततं व्याप्तं । तथा उदकपूर्णस्य जलपूर्णस्य दृतेश्चर्मपुटकस्येव क्षोभः संचलनं संस्पर्शश्च तौ शब्दश्चापि यस्य तत् तथोक्तं । भवति । दकोदरं उदकोदरं ॥ ४६ ॥

तत्राचिरोत्पन्नमनुपद्रवमनुदकपूर्णमुदरं त्वरमाणश्चिकित्सेत्। उपेक्षितानां ह्येषां दोषाः स्वस्थानादपवृत्ताः परिपाकाद्द्रवीभूताः सन्धीन् स्रोतांसि चोपक्लेदयन्ति। स्वेदश्च बाह्येषु स्रोतःसु प्रतिहतगतिस्तिर्यगवतिष्ठमानस्तदेवोदकमाप्याययति। तत्र पिच्छोत्पत्तौ मण्डलमुदरं गुरु स्तिमितमाकोठितमशब्दं मृदुस्पर्शमपरिगतराजीकमाक्रान्तं नाभ्यामेवोपसर्पतीति ॥४७॥

उदकोदरे आशु प्रतीकारमाह—तत्रेति। तत्र तेषु उदकोदरेषु मध्ये। अचिरोत्पन्नं जातमात्रं। अनुदकपूर्णं अजातोदकं। तेन अनुपद्रवं छर्द्यतीसारादिभिः उपद्रवैः वक्ष्यमाणैः अनुपद्रुतं। सोपद्रवं चेदसाध्यं। उदरं भिषक् त्वरमाणः सन् शीघ्रं चिकित्सेत्। कुतः? हि यतः उपेक्षितानां कृतचिकित्साविलम्बानां एषां उदकोदराणां दोषाः स्वस्थानात् अपवृत्ताः च्युताः परिपाकात् द्रवीभूताः सन्धीन् स्रोतांसि च उपक्लेदयन्ति द्रवाकुर्वन्ति। स्वेदः बाह्येषु स्रोतःसु संवृतमुखत्वात् प्रतिहतगतिः तेन बहिर्गन्तुमसमर्थः तिर्यक् अवतिष्ठमानः प्रवृत्तः तदेव उदकं प्राक् कुक्षौ वृद्धिं गतं आप्याययति। आप्याय्य च पिच्छामुत्पादयति। पिच्छासदृशो भागः पिच्छा। पिच्छा शाल्मलिनिर्यासः। पिच्छोत्पत्तेर्लक्षणमाह—तत्रेति। तत्र पिच्छोत्पत्तौ सत्यां। उदरं। मण्डलं वृत्तं। गुरु। स्तिमितं। आकोठितं आहतं सत् अशब्दं मृदुस्पर्शं अपरिगतराजीकं व्यपेतरेखं नाभ्यामेव आक्रान्तं स्पृष्टं उपसर्पति। उक्तं च—उपेक्षया च सर्वेषु दोषाः स्वस्थानतश्च्युताः। पाकाद् द्रवा द्रवीकुर्युः सन्धीन् स्रोतोमुखान्यपि॥ स्वेदस्तु बाह्यस्रोतःसु विहतस्तिर्यगास्थितः। तदेवोदकमाप्याय्य पिच्छां कुर्यात्तदा भवेत्॥ गुरूदरं स्थिरं वृत्तमाहतं च नशब्दवत्। मृदु व्यपेतराजीकं नाभ्यां स्पृष्टं च सर्पति॥ इति (अ० सं० नि० १२) ॥४७॥

---

४७। स्वस्थाना दपाहृत्ता इपरिपाकात् इति क ख पुस्तकयोः।

ततोऽनन्तरमुदकप्रादुर्भावः । तस्य रूपाणि । कुक्षेरतिमात्राभिवृद्धिः । सिरान्तर्धानगमनम् । उदकपूर्णदृतिसंक्षोभसंस्पर्शत्वञ्च । तदाऽऽतुरमुपद्रवाः स्पृशन्ति छर्द्यतीसारतमकतृष्णाश्वासकासहिक्कादौर्बल्यपार्श्वशूलारुचिस्वरभेदमूत्रसङ्गादयः । तथाविधमचिकित्स्यं विद्यादिति ॥४८॥

भवन्ति चात्र ।

वातात् पित्तात् कफात प्लीह्नः सन्निपातात् तथोदकात् ।
परं परं कृच्छ्रतममुदरं भिषगादिशेत् ॥४९॥
पश्चाद् बद्धगुदन्तूर्ध्वं सर्वं जातोदकं तथा ।
प्रायो भवत्यभावाय च्छिद्रान्त्रञ्चोदरं नृणाम् ॥५०॥

ततोऽनन्तरमिति । ततः पिच्छोत्पत्तेः । अनन्तरं परं । उदकस्य प्रादुर्भावः जन्म । जातोदकस्य लक्षणमाह— तस्य रूपाणीति । कुक्षेरतिमात्रया अभिवृद्धिः । सिराणां अन्तर्धानगमनं । अन्तर्धानमदर्शनं । उदकपूर्णदृतेरिव संक्षोभः संस्पर्शश्च तौ यस्य तस्य भावः तत्त्वं । एवं प्रागुक्तमन्यत् सर्वं अनन्नाकांक्षादिकं चापि । तदुक्तं— तदनूदकजन्म । अस्मिन् कुक्षिवृद्धिस्ततोऽधिका । सिरान्तर्धानम् । उदकजठरोक्तं च लक्षणं । इति ( अ० सं० नि० १२ ) । तदाऽऽतुरमिति । तदा उदकप्रादुर्भावे । छर्दिः । अतीसारः । तमकः श्वासभेदः । तृष्णा । श्वासः । कासः । हिक्का । दौर्बल्यं । पार्श्वशूलं । अरुचिः । स्वरभेदः । मूत्रसंगश्च । तदादयः उपद्रवाः आतुरमुदकोदरिणं स्पृशन्ति विशन्ति । तथाविधं उदकपूर्णमुपद्रवैरुपद्रुतं उदकोदरं अचिकित्स्यं असाध्यं विद्यात् ॥ ४८॥

उदराणामुत्तरोत्तरगरीयस्त्वमाह— वातादिति । भिषक् वातात् पित्तात् कफात् प्लीह्नः सन्निपातात् तथा उदकाच्च जातादुदरात् परं परं उदरं कृच्छ्रतमं आदिशेत् । तथा च वातोदरात् पित्तोदरं कृच्छ्रतरं । पित्तोदरात् कफोदरं । कफोदरात् प्लीहोदरं ।

शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम्।
बलशोणितमांसाग्निपरिक्षीणञ्च वर्जयेत् ॥५१॥
श्वयथुः सर्वमर्मोत्थः श्वासो हिक्काऽरुचिस्तथा।
मूर्च्छा च्छर्दिरतीसारो निहन्त्युदरिणं नरम् ॥५२॥
जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम्।
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥५३॥

प्लीहोदरात् सन्निपातोदरं। सन्निपातोदराच्च उदकोदरं। षण्णामुत्तरोत्तरं कृच्छ्रतरत्वमुक्तं ॥४६॥

पक्षादिति। बद्धगुदं छिद्रान्त्रं च उदरं बद्धगुदोदरं छिद्रोदरं च एतत् ... पक्षादूर्ध्वं पंचदशाहात् परं प्रायः नृणामभावाय मरणाय भवति। तथा जातोदक सर्वमेव उदरं प्रायः नृणां अभावाय भवति। पक्षात् परं बद्धगुदोदरं छिद्रोदरं च ... सलिलं सर्वमेव प्रायेण असाध्यं ॥ ५० ॥

असाध्यान्तरमाह—शूनाक्षमिति। शूने श्वयथुमती स्फीते अक्षिणी यस्य तं शूनाक्षं। कुटिलोपस्थं वक्रोपस्थं। उपक्लिन्ना तन्वी च त्वक् यस्य तं। बलं। शोणितं। मांसं। अग्निश्च। ते परिक्षीणाः यस्य तं। तथाविधमुदरिणं विवर्जयेत्। श्वयथुरिति। सर्वमर्मोत्थः सर्वेषु मर्मस्थानेषु जातः श्वयथुः। श्वासः। हिक्का। तथा अरुचिः। मूर्च्छा। छर्दिः। अतीसारश्च। एते उपद्रवाः। उदरिणं नरं निहन्ति। सोपद्रवस्यासाध्यत्वं प्रागप्युक्तं ॥ ५१। ५२ ॥

जन्मनैवेति। प्रायः सर्वं उदरं जन्मनैव जातमात्रं कृच्छ्रतमं अतिकृच्छ्रसाध्यं मतं। तत् उदरं। बलिनः बलवतः पुंसश्चेत् भवेत्। अजाताम्बु अजातोदकं। नवोत्थितं अचिरोत्पन्नं च। स्यात्। तदा यत्नसाध्यं यत्नेन चिकित्सितं कदाचिदपि उपशाम्यति ॥ ५३ ॥

---

५२। श्वयथुः सवमर्मस्थः इति ख ग पुस्तकयोः।

वातोदरं बलवतः पूर्वं स्नेहैरुपाचरेत् ।
स्निग्धाय स्वेदिताङ्गाय दद्यात् स्नेहविरेचनम् ॥५८॥
हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम् ।
तथास्यानवकाशत्वाद्वायुर्नाध्मापयेत् पुनः ॥५९॥
दोषातिमात्रोपचयात् स्रोतोमार्गनिरोधनात् ।
सम्भवत्युदरं तस्मात् नित्यमेव विरेचयेत् ॥६०॥

वेगं कृत्वा प्रणश्यति । मारुतो हृत्कटीनाभिपायुवंक्षणवेदनाः ॥ सशब्दो निश्चरेद् वायुर्विड्बन्धो मूत्रमल्पकं । नातिमन्दोऽनलो लौल्यं न च स्याद् विरसं मुखं ॥ इति ( अ० सं० नि० १२ ) । एतैः उक्तैः अजातशोथत्वादिभिर्लिंगैः उदरं अजातोदकमिति तत्त्वतः विज्ञाय । दोषः । बलं दोषस्य । व्याधितस्य वा । कालः नित्यगः आवस्थिकश्च । तेषां विशेषवित् । भिषक् तदुदरं साध्यत्वात् उपाक्रामेत् दोषकालयोर्बलाबले पर्यवेक्ष्य उपाचरेत् ॥ ५४—५७ ॥

तत्रादौ वातोदरे चिकित्सामाह—वातोदरमिति । बलवतः । तेन शोधनार्हस्य पुंसः । वातोदरं पूर्ववत् आदौ जातमात्रं स्नेहैरुपाचरेत् । तेन स्निग्धाय । ततः स्वेदितांगाय । तस्मै बलवते-वातोदरिणे स्नेहविरेचनं दद्यात् ॥५८॥

हृते दोषे इति । दोषे विरेचनेन हृते सति परिम्लानं क्षीणं उदरं घनेन वाससा वेष्टयेत् । पश्चादपि वक्ष्यति—तथा वस्तिविरेकाद्यैर्म्लानं सर्वं च वेष्टयेत् । इति । तथा कृते अनवकाशत्वात् एवमलब्धावकाशः वायुः अस्य विरिक्तस्य उदरिणः उदरं पुनर्न आध्मापयेत् ॥ ५९ ॥

दोषातिमात्रोपचयादिति । सर्वमेव उदरं । दोषाणामतिमात्रोपचयः । तस्मात् । स्रोतोमार्गनिरोधनं स्रोतोद्वारनिरोधः । तस्मात् । सम्भवति । तस्मात् उदरिणं नित्यमेव पुनः पुनर्विरेचयेत् । तस्मै विरेचनानि पुनः पुनरुपयुंजीत ॥ ६० ॥

शुद्धं संसृज्य च क्षीरं बलार्थं पाययेत तम्।
प्रागुत्क्लेशान्निवर्त्यं च बले लब्धे क्रमात् पयः॥६१॥
यूषै रसैर्वा मन्दाम्ललवणैरेधितानलम्।
सोदावर्तं पुनः स्निग्धं स्विन्नमास्थापयेन्नरम्॥६२॥
स्फुरणाक्षेपसन्ध्यस्थिपार्श्वपृष्ठत्रिकार्तिषु।
दीप्ताग्निं बद्धविड्वातं रूक्षमप्यनुवासयेत्॥६३॥
तीक्ष्णाधोभागयुक्तोऽस्य निरूहो दाशमूलिकः।
वातघ्नाम्लशृतैरण्डतिलतैलानुवासनम्॥६४॥

शुद्धमिति। शुद्धं विरिक्तमुदरिणं पेयादिभिः क्रमेण संसृज्य पेयादिक्रमं कारयित्वा। बलार्थं बलाधानार्थं। तं क्षीरं पाययेत। उत्क्लेशात् प्राक् कफोपचयात् यावत् उत्क्लेशोपस्थितिर्न स्यात् तावत्। बले लब्धे सति तच्च पयः क्रमात् निवर्त्यं निवर्तनीयं क्रमेण निवर्तयेत्। न तु सहसा॥६१॥

यूषैरिति। मन्दाम्ललवणैः अल्पाम्ललवणैः यूषैः मुद्गादियूषैः। रसैः मांसरसैर्वा। एधितः दीपितः अनलः अग्निर्यस्य तं। सोदावर्तं उदावर्तिनं नरमुदरिणं पुनः स्निग्धं स्विन्नं च कृत्वा स्नेहस्वेदाभ्यामुपपाद्य आस्थापयेत् निरूहयेत्॥६२॥

स्फुरणाक्षेपेति। स्फुरणं। आक्षेपः। स्फुरणाक्षेपौ सन्ध्यस्थ्यादीनां। सन्ध्यस्थिषु अस्थिसन्धिषु पार्श्वयोः पृष्ठे त्रिके च आर्तिर्वेदना च। तासु। सन्ध्यस्थ्यादिशूल-स्फुरणाक्षेपयुक्तमित्यर्थः। दीप्ताग्निं बद्धविड्वातं रूक्षं च उदरिणं अनुवासयेत्॥६३॥

आस्थापनानुवासनयोर्विषयमुक्त्वा सम्प्रति तयोर्द्रव्याण्याह—तीक्ष्णाधोभागेति। तीक्ष्णैः अधोभागैः अधोभागिकैरधोदोषहरैर्द्रव्यैः युक्तः दाशमूलिकः क्वाथः अस्य उदरिणः निरूहः आस्थापनं स्यात्। वातघ्नं वातहरद्रव्यं। अम्लं अम्लद्रव्यं च। ताभ्यां शृते पक्वे एरण्डतिलतैले एरण्डतैलतिलतैले। ताभ्यामनुवासनं च स्यात्॥६४॥

अविरेच्यन्तु यं विद्याद्दुर्बलं स्थविरं शिशुम्।
सुकुमारं प्रकृत्याल्पदोषं वाथोल्वणानिलम् ॥६५॥
तं भिषक् शमनैः सर्पिर्यूषमांसरसौदनैः।
वस्त्यभ्यङ्गानुवासैश्च क्षीरैश्चोपाचरेद् बुधः ॥६६॥
पित्तोदरे तु बलिनं पूर्वमेव विरेचयेत्।
दुर्बलन्त्वनुवास्यादौ शोधयेत् क्षीरवस्तिना ॥६७॥
संजातबलकायाग्निं पुनः स्निग्धं विरेचयेत्।
पयसा सत्रिवृत्कल्केनोरुबूकशृतेन वा ॥६८॥
सातलात्रायमाणाभ्यां शृतेनारग्वधेन वा।
सकफे वा समूत्रेण सवाते तिक्तसर्पिषा ॥६९॥
पुनः क्षीरप्रयोगैश्च बस्तिकर्म विरेचनम्।
क्रमेण ध्रुवमातिष्ठन् युक्तः पित्तोदरं जयेत् ॥७०॥

अविरेच्यमिति। दुर्बलं। स्थविरं वृद्धं। शिशुं। सुकुमारं क्लेशासहं। अल्प अल्पदोषं। अथवा उल्वणानिलं प्रबलवातं। एवंविधं यं अविरेच्यं विरे.. विद्यात्। बुधो विज्ञो भिषक्। तं। सर्पिः। यूषं। मांसं मांसरसः। रसौदनः मांसरस सिद्ध ओदनश्च। तैः। वस्तिः। अभ्यंगः। अनुवासः अनुवासनं च। तैः। एवं ..। उपाचरेत् ॥ ६५ ॥

पित्तोदरे चिकित्सामाह—पित्तोदरे त्विति। पित्तोदरे तु बलिनं बलवन्तमातुरं पूर्वमेव विरेचयेत्। दुर्बलं तु आदौ अनुवास्य ततः क्षीरवस्तिना शोधयेत्। संजातौ बलं कायाग्निः जठराग्निश्च तौ यस्य तं पुनः स्निग्धं कृत्वा पुनः पुनः स्नेहयित्वा सत्रि- वृत्कल्केन त्रिवृत्कल्कशृतेन उरुबूकशृतेन एरण्डबीजकल्कशृतेन वा सातला- त्रायमाणाभ्यां शृतेन वा आरग्वधेन शृतेन वा पयसा। पित्ते सकफे कफसंसृष्ट- पित्तोदरे तु समूत्रेण। एवं सवाते च तिक्तसर्पिषा तिक्तघृतान्वितेन च पयसा।

स्निग्धस्विन्नविशुद्धं च कफोदरिणमातुरम् ।
संसर्जयेत् कटुक्षारयुक्तैरन्नैः कफापहैः ॥७१॥
गोमूत्रारिष्टपानैश्च चूर्णायस्कृतिभिस्तथा ।
सक्षारैस्तैलपानैश्च शमयेत् तु कफोदरम् ॥७२॥
सन्निपातोदरे सर्वा यथोक्ताः कारयेत् क्रियाः ।
सोपद्रवन्तु निर्वृत्तं प्रत्याख्येयं विजानता ॥७३॥

विरेचयेत् । एवं क्रमेण आनुपूर्व्या युक्तः क्षीरप्रयोगैः पुनः पुनः विरेचनं वस्तिकर्म च आतिष्ठन् कुर्वन् आतुरः निश्चितं पित्तोदरं जयेत् । तदुक्तं वृद्धवाग्भटेनापि—संजातबलाग्निं च पुनः क्षीरेण सत्रिवृत्कल्केन । उरुबूकश्रृतेन वा । सातलात्रायमाणाभ्यां वा । आरग्वधेन वा । सश्लेष्मणि पित्ते समूत्रेण । सवाते तिक्तघृतान्वितेन पयसा पुनः पुनर्विरेचयेत् । वस्तिकर्म चाचरेत् । इति (अ० सं० चि०१७) ॥६७—७०॥

कफोदरे चिकित्सामाह—स्निग्धस्विन्नेति । कफोदरिणं आतुरं । स्निग्धः । स्विन्नः । विशुद्धश्च । तं स्निग्धस्विन्नविशुद्धं । स्नेहस्वेदपूर्वकं शोधनं कारयित्वा । शोधनमिह वमनादन्यत्, वमनस्योदरे प्रतिषिद्धत्वात् । कटुक्षारयुक्तैः कफापहैः कफहरैः अन्नैः पेयादिभिः संसर्जयेत् ॥७१॥

गोमूत्रेति । गोमूत्रस्य अरिष्टानां च पानैः । तथा चूर्णायस्कृतिभिः अयश्चूर्णप्रयोगैः । सक्षारैः तैलपानैश्च क्षारसिद्धतैलपानैश्च । कफोदरं शमयेत् ॥ ७२ ॥

सन्निपातोदरचिकित्सामाह—सन्निपातोदरे इति । यथोक्ताः प्राक् वातोदरादिषु त्रिषु याः याः क्रिया उक्ताः ताःस्ताः क्रियाः सर्वाः समस्ताः सन्निपातोदरे कुर्यात् । सोपद्रवं तु निर्वृत्तं । यदा पुनः तत् सन्निपातोदरं सोपद्रवं जातं । उपद्रवाः प्रागुक्ताश्छर्द्यतीसारादयः । तदा तत् विजानता विज्ञेन भिषजा प्रत्याख्येयं त्यक्तव्यं असाध्यत्वात् ॥७३॥

---

७१ । कटुक्षारतिक्तैरन्नैः कफापहैः इति ग पुस्तके ।

७२ । गोमूत्रारिष्टपानैश्च शमयेत्तु कफोदरं इति ङ पुस्तके ।

उदावर्त्तरुजानाहैर्दाहमोहतृषाज्वरैः।
गौरवारुचिकाठिन्यैश्चानिलादीन् यथाक्रमम् ॥७४॥
लिंगैः प्लीह्न्यधिका तृष्णा रक्तञ्च पित्तलक्षणैः।
विद्यात् समस्तैः सर्वैस्तु सन्निपातं तथा भिषक् ॥७५॥
चिकित्सां संप्रकुर्वीत यथादोषं यथाबलम्।
स्नेहं स्वेदं विरेकं च निरूहमनुवासनम् ॥७६॥
समीक्ष्य कारयेद्बाहौ वामे वा व्यधयेत् सिराम्।
षट्पलं पाययेत् सर्पिः पिप्पलीर्वा प्रयोजयेत् ॥७७॥
सगुडामभयां वापि क्षारारिष्टगणांस्तथा।
एष क्रियाक्रमः प्रोक्तो योगान् संशमनाञ् शृणु ॥७८॥

प्लीहोदरं चिकित्सां यथादोषं विवक्षुः आदौ दोषविज्ञानार्थमाह —उदावर्त्तेत्यादि। भिषक् प्लीह्नि प्लीहोदरे। उदावर्त्तः रुजा शूलं आनाहश्च तैः। दाहः मोहः तृषा ज्वरश्च तैः। गौरवं अरुचिः काठिन्यं च तैः। लिंगैः यथाक्रमं अनिलादीन् वातादीन् विद्यात्। तथा च उदावर्त्तादिभिः वातं विद्यात्। दाहादिभिः पित्तं। गौरवादिभिश्च श्लेष्माणं। तथा सर्वैः त्रयाणामुक्तैः लिंगैः समस्तैः सन्निपातं विद्यात्। एवं द्वयोर्द्वयोः लिंगैः संसर्गाश्चापि बोद्धव्याः। अधिका तृष्णा। तृष्णाधिक्येन तथा पित्तलक्षणैरन्यैश्च। रक्तं विवृद्धं विद्यात् च। उक्तं च—शोणितं वा रसादिभ्यो विवृद्धं तं विवर्धयेत्। इति। एवं ज्ञात्वा भिषक् प्लीहोदरे यथादोषं यथाबलं यथादोषोद्रेकं उल्वणतरादोषापेक्षया। सर्वेषां सर्वात्मकत्वात्। चिकित्सां संप्रकुर्वीत कुर्यात्। तदेव विवृण्वन्नाह —स्नेहं स्वेदमिति। भिषक् समीक्ष्य दोषबलं तत्तद्दोषलिंगैः स्नेहं स्वेदं स्नेहस्वेदपूर्वकं विरेकं विरेचनं निरूहमास्थापनं च कारयेत्। तृष्णाधिक्यादिभिः रक्तं विवृद्धं समीक्ष्य तु रक्तमोक्षणार्थं वामे बाहौ सिरां व्यधयेद् वा। षट्पलं महाषट्पलं चापि

पिप्पली नागरं दन्ती चित्रकं द्विगुणाऽभयम् ।
विडंगांशयुतं चूर्णमेतदुष्णाम्बुना पिबेत् ॥७९॥
विडंगं चित्रकं शुण्ठीं सघृतं सैन्धवं वचाम् ।
दग्ध्वा कपाले पयसा गुल्मप्लीहापहं पिबेत् ॥८०॥
रोहीतककृतानान्तु काण्डकानभयाजले ।
मूत्रे वासुनुयात्तच्च सप्तरात्रस्थितं पिबेत् ॥८१॥

सर्पिः पाययेत् । रसायनोक्तविधिना वर्द्धमानाः पिप्पलीः वा । सगुडां तुल्यगुडां अभयां हरीतकीं चापि । तथा क्षारारिष्टगणान् क्षारारिष्टसमूहान् च । प्रयोजयेत् । प्लीहोदरे एष क्रियाक्रमः प्रोक्तः । संप्रति संशमनान् योगान् मया वक्ष्यमाणान् शृणु ॥६४—७८॥

पिप्पलीति । पिप्पली । नागरं शुंठी । दन्ती । चित्रकं । तत् । द्विगुणा अभया हरीतकी यत्र तत् द्विगुणाभयं । विडंगांशयुतं । चूर्णं चूर्णीकृतं । तथा च —पिप्पली-नागरदन्तीचित्रकविडंगानां समभेकैकभागं हरीतक्याश्च भागद्वयं गृहीत्वा एकत्र चूर्णयित्वा एतत् चूर्णं उष्णाम्बुना पिबेत् प्लीहोदरी ॥ ७९ ॥

विडंगमिति । विडंगं । चित्रकं । शुंठीं । सैन्धवं । वचां । कपाले खर्परे दग्ध्वा । तत् सघृतं घृतप्रक्षितं कृत्वा । पयसा पिबेत् । तच्च गुल्मप्लीहापहं गुल्मं प्लीहानं च अपहन्ति ॥८०॥

रोहीतकेति । रोहीतकः प्लीहशत्रुः । रोहीतकलतानां काण्डकान् क्षुद्रान् खंडशः कृतान् काण्डान् । अभयाः हरीतकीश्च । जले गोमूत्रे वा आसुनुयात् सन्धानार्थं स्थापयेत् । एवं सप्तरात्रस्थितं तत् जलं परिस्राव्य पिबेत् । तच्च पीतं । कामला । गुल्मः । मेहः । अर्शांसि । प्लीहा । सर्वाणि उदराणि । क्रिमयश्च । तान् हन्यात्

७९ । दन्ती समांशं द्विगुणाभयं इति ग घ पुस्तकयोः ।
८० । चित्रकं सक्तून् शुंठीं इति ख ग पुस्तकयोः ।

कामलागुल्ममेहार्शःप्लीहसर्वोदरक्रिमीन्।
तद्धन्याज्जाङ्गलरसैर्जीर्णे स्याच्चात्र भोजनम् ॥८२॥
रोहीतकत्वचः कृत्वा पलानि पञ्चविंशतिम्।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥८३॥
पलिकैः पञ्चकोलैस्तु तैः सर्वैश्चापि तुल्यया।
रोहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥८४॥
प्लीहाभिवृद्धिं शमयत्येतदाशु प्रयोजितम्।
तथा गुल्मोदरश्वासक्रिमिपाण्डुत्वकामलाः ॥८५॥

इति रोहीतकघृतम्।

नाशयेत्। अत्र अस्मिन् जीर्णे सति जांगलरसैः भोजनं स्यात् तस्मिन् जीर्णे जां... मांसरसैरन्नमश्नीयात् ॥ ८१ । ८२ ॥

रोहीतकघृतमाह—रोहीतकत्वच इत्यादि । रोहीतकत्वचः पंचविंशतिं पला कृत्वा । कोलद्विप्रस्थसंयुक्तं । कोलं बदरं । कषायं उपकल्पयेत् । तत्र पलिकैः प्रत्ये पलप्रमाणैः पंचकोलैः । तैः पंचकोलैः सर्वैः मिलितैः पंचपलिकैः । पृथक् [illegible] पंच मिलित्वा पंच पलानि भवन्ति । तुल्यया तुल्यमानया पंचपलमितयेत्यर्थः रोहीतकत्वचा सह पिष्टैः कल्कितैः घृतस्य प्रस्थं विपाचयेत् । तथा च—रोहीतकत्वक् पलानि पंचविंशतिं कोलस्य प्रस्थद्वयं अर्थात् द्वात्रिंशतं पलानि च [illegible] ततः अष्टगुणे तोये क्वाथयित्वा पादशेषमवतारयेत् । तस्मिन् क्वाथे पिप्पलीपिप्पली मूलचव्यचित्रकनागराणि पंच प्रत्येकं पलिकानि तैः सर्वैः तुल्यमानां अर्थात् पंच-

---

८२ । प्लीहगुल्मोदरक्रिमीन् इति ख ग पुस्तकयोः ।

८३ । कल्कार्थमुपकल्पयेत् इति च पुस्तके ।

अग्निकर्म च कुर्वीत भिषग्वातकफोल्वणे ।
पैत्तिके जीवनीयानि सर्पींषि क्षीरवस्तयः ॥८६॥
रक्तावसेकः संशुद्धिः क्षीरपानञ्च शस्यते ।
यूषैर्मांसरसैश्चापि दीपनीयरसान्वितैः ॥८७॥
लघून्यन्नानि संसृज्य दद्यात् प्लीहोदरे भिषक् ।
यकृति प्लीहवत् सर्वं तुल्यत्वाद् भेषजं मतम् ॥८८॥
स्विन्नाय बद्धोदरिणे मूत्रं तीक्ष्णौषधान्वितम् ।
सतैललवणं दद्यान्निरूहं सानुवासनम् ॥८९॥
परिस्रंसीनि चान्नानि तीक्ष्णञ्चैव विरेचनम् ।
उदावर्त्तहरं कर्म कार्यं वातघ्नमेव च ॥९०॥

पलिकां रोहीतकत्वचं एकत्र कल्कीकृत्य घृतप्रस्थं साधयेत्। एतद् रोहीतकघृतं प्रयोजितं नित्यं प्रयुक्तं सत्। प्लीहाभिवृद्धिं। तथा गुल्मः। उदरं। श्वासः। क्रिमिः। पाण्डुत्वं पाण्डुरोगः। कामला च। ताः आशु शमयति॥ ८३—८५॥

अग्निकर्मेति। भिषक् एवमप्यनुपशाम्यति प्लीहोदरे वातकफोल्वणे गुल्मोक्तविधिना अग्निकर्म कुर्वीत। पैत्तिके पित्तोल्वणे तु जीवनीयानि जीवनीयैः गणैः जीवकर्षभकादिभिः सिद्धानि सर्पींषि घृतानि क्षीरवस्तयश्च शस्यन्ते। तथा रक्तावसेकः रक्तमोक्षणं। संशुद्धिः। शोधनमिह विरेचनं। क्षीरपाणं च। शस्यते। भिषक् संसृज्य पेयादिक्रमं कारयित्वा ततः दीपनीयरसान्वितैः दीपनीयद्रव्यैरुपसंस्कृतैः यूषैः मांसरसैश्चापि लघूनि अन्नानि दद्यात। प्लीहोदरे चिकित्सितमुक्तं। तुल्यत्वात् तुल्यहेतुलिंगत्वात् यकृति यकृदुदरे प्लीहवत् प्लीहोदरेण तुल्यं प्लीहोदरोक्तं सर्वं भेषजं मतं॥८६-८८॥

बद्धगुदोदरे चिकित्सामाह—स्विन्नायेति। स्विन्नाय बद्धोदरिणे मूत्रं तीक्ष्णौषधान्वितं सतैललवणं च सानुवासनं निरूहं दद्यात्। बद्धगुदोदरिणं प्राक् स्वेदयित्वा

छिद्रोदरमृते स्वेदाच्छ्लेष्मोदरवदाचरेत्।
जातं जातं जलं स्राव्यमेवं तद्यापयेद्भिषक् ॥९१॥
तृष्णाकासज्वरार्त्तन्तु क्षीणमांसाग्निभोजनम्
वर्जयेच्छ्वासिनं तद्वच्छूलिनं दुर्बलेन्द्रियम् ॥९२॥
अपां दोषहराण्यादौ प्रदद्यादुदकोदरे।
मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवन्ति च ॥९३॥

तस्मै सतैललवणमूत्रं तीक्ष्णं निरूहमनुवासनं च दद्यात्। तथा तस्मै परिस्रंसीनि विरेचनानि अन्नानि तीक्ष्णं विरेचनं चापि दद्यात्। उदावर्त्तहरं कर्म तथा वातघ्नं यत् किंचित् वातहरं च स्यात्। तत् सर्वं बद्धगुदोदरे कार्यं कर्त्तव्यं ॥ ८९। ९० ॥

अथ छिद्रोदरे चिकित्सामाह—छिद्रोदरमिति। छिद्रोदरं स्वेदात् ऋते स्वेदं विना श्लेष्मोदरवत् आचरेत्। स्वेदवर्जं श्लेष्मोदरोक्तविधिना उपाचरेत्। श्लेष्मोदरे यत् यत् उक्तं स्वेदं विना अन्यत् सर्वमेव छिद्रोदरेऽपि कार्यं। छिद्रोदरे जातं जातं पुनः पुनः जातं जलं स्राव्यं। भिषक् एवमनेन प्रकारेण जातस्य उदकस्य पुनः पुनः स्रावणेन तत् छिद्रोदरं यापयेत्। यावत् सोपद्रवं न स्यात्। सोपद्रवं चेत् प्रत्याख्येयं ॥ ९१ ॥

सम्प्रति प्रत्याख्येयं छिद्रोदरमाह—तृष्णाकासेति। तृष्णा। कासः। ज्वरश्च। तैरार्तः। तं। क्षीणानि। मांसं। अग्निः। भोजनमाहारश्च। तानि यस्य तं। तथा श्वासिनं। एवंविधं जातोदकं छिद्रोदरिणं वर्जयेत। तद्वत् शूलिनं दुर्बलेन्द्रियं चापि छिद्रोदरिणं वर्जयेत् ॥ ९२ ॥

साम्प्रतमुदकोदरे चिकित्सामाह—अपामित्यादि। उदकोदरे आदौ प्राक् अपां जलानां दोषहराणि दोषहरणार्थं मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवन्ति च औषधानि

---

९१—जलं स्राव्यमेवं दद्यात् पयो भिषक् इति ख पुस्तके।

९३—अपां दोषप्रहराण्यादौ इति च ग पुस्तकयोः।

दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत्।
द्रवेभ्यश्चोदकादिभ्यो नियच्छेदनुपूर्वशः ॥९४॥
सर्वमेवोदरं प्रायो दोषसंघातजं मतम्।
तस्माद् वातादिशमनीं क्रियां सर्वत्र कारयेत् ॥९५॥
दोषैः कुक्षौ हि संपूर्णे वह्निर्मन्दत्वमृच्छति।
तस्माद् योज्यानि भोज्यानि दीपनानि लघूनि च ॥९६॥
रक्तशालीन् यवान् मुद्गान् जाङ्गलांश्च मृगद्विजान्।
पयोमूत्रासवारिष्टान् मधु सीधुं तथा सुराम् ॥९७॥
यवागूमोदनं वापि यूषैरद्याद्रसैरपि।
मन्दाम्लस्नेहकटुभिः पञ्चमूलोपसाधितैः ॥९८॥

द्यात्। दीपनीयैः अग्निदीपनैः कफघ्नैश्च आहारैः तं उदरोदरिणमुपाचरेत्। उदका-दिभ्यः द्रवेभ्यः द्रव्येभ्यः अनुपूर्वशः क्रमशः नियच्छेत् निवर्तयेत् ॥ ९३। ९४ ॥

सर्वमेवेति। सर्वमेव उदरं। प्रायः दोषाणां संघातः सन्निपातः। तस्मात् जायते तत् दोषसंघातजं मतं। तस्मात् कारणात् सर्वत्र सर्वेषु उदरेषु वातादीनां त्रयाणां शमनीं क्रियां कारयेत् भिषक् ॥ ९५ ॥

दोषैरिति। कुक्षौ दोषैः सम्पूर्णे सति। हि यतः वह्निः अग्निः मन्दत्वं ऋच्छति गच्छति। तस्मात् उदरेषु अग्नेः दीपनानि। लघूनि प्रकृत्या मात्रया च। भोज्यानि अन्नानि योज्यानि ॥ ९६ ॥

उदरिणामन्नपानमाह—रक्तशालीनित्यादि। उदरी पुमान्। रक्तशालीन्। यवान्। मुद्गान्। जांगलान् मृगद्विजान् जांगलपशुपक्षिणां मांसानि। पयः क्षीरं। मूत्रं। आसवः। अरिष्टश्च। तान्। मधु। सीधुं पक्वेक्षुरसकृतं। तथा सुरां मद्यं। यवागूं। ओदनं चापि। मन्दाम्लस्नेहकटुभिः अल्पैः अम्लस्नेहमरिचादिकटुद्रव्यैः संस्कृतैः पंचमूलोपसाधितैः पंचमूलक्वाथसाधितैः यूषैः मुद्गादियूषैः रसैः मांसरसैश्च अद्यात् भुञ्जीत ॥९७-९८॥

औदकानूपजं मांसं शाकं पिष्टकृतांस्तिलान् ।
व्यायामाध्वदिवास्वप्नं यानयानञ्च वर्जयेत् ॥९९॥
तथोष्णलवणाम्लानि विदाहीनि गुरूणि च ।
नाद्यादन्नानि जठरी तोयपानञ्च वर्जयेत् ॥१००॥
नातिसान्द्रं हितं पाने स्वादु तक्रमपेलवम् ।
त्र्यूषणक्षारलवणैर्युक्तन्तु निचयोदरी ॥१०१॥
वातोदरी पिबेत् तक्रं पिप्पलीलवणान्वितम् ।
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥१०२॥
यवानीसैन्धवाजाजीव्योषयुक्तं कफोदरी ।
पिबेन्मधुयुतं तक्रं व्यक्ताम्लं नातिपेलवम् ॥१०३॥

उपपत्य —

उदरिणां वर्जनीयमाह —औदकानूपजमित्यादि । जठरी उदरी पुमान् । औदकं । अनूपजमानूपं च । तत् मांसं । शाकं । पिष्टकृतान् तिलान् तिलान् पिष्ट्वा तत्-कृतान् भक्ष्यान् । व्यायामः । अध्वा अध्वगमनं । दिवास्वप्नश्च । तत् । यानैः अश्व-शकटादिभिः यानं गमनं च । वर्जयेत् । तथा जठरी । उष्णलवणाम्लानि । विदाहीनि विदाहकराणि । गुरूणि प्रकृत्या मात्रया च । अन्नानि न अद्यात् न अश्नीयात् । तोय-पानं जलपानं च वर्जयेत् ॥ ९९ । १०० ॥

नातिसान्द्रमिति । नातिसान्द्रं नातिघनं । ईषत्सान्द्रमित्यर्थः । स्वादु मधुरं । सद्यो मथितं । अपेलवं अकोमलं उद्धृतस्नेहं च । तक्रं उदरिणां पाने हितं । तत्र निचयोदरी सन्निपातोदरी । तथाविधं तक्रं । त्र्यूषणं त्रिकटु । क्षारः । लवणञ्च । तैः युक्तं कृत्वा पिबेत् । वातोदरीति । वातोदरी पिप्पलीलवणान्वितं तक्रं पिबेत् । पित्तोदरी शर्करामरिचाभ्यामुपेतं युक्तं । पित्ते सोषणशर्करामिति (अ० सं० चि० १७) ।

---

१०२—शर्करामधुकोपेतं इति क पुस्तके ।

मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः।
युक्तं प्लीहोदरी जातं सव्योषं तूदकोदरी ॥१०४॥
यमानीहवुषाजाजीसैन्धवैर्ग्रथितोदरी।
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम् ॥१०५॥
गौरवारोचकार्तानां समन्दाग्न्यतिसारिणाम्।
तक्रं वातकफार्तानाममृतत्वाय कल्पते ॥१०६॥
शोफानाहार्तितृण्मूर्च्छापीडिते कारभं पयः।
शुद्धानां क्षामदेहानां गव्यं छागं समाहितम् ॥१०७॥

स्वादु मधुरं। तक्रं पिबेत्। यमानीति। कफोदरी। यमानी। सैन्धवं। अजाजी कृष्णजीरकं। व्योषं त्रिकटु च। तैर्युक्तं। तथा मधुना युतं च। व्यक्ताम्लं व्यक्ताम्लरसं। नातिपेलवं च। तक्रं पिबेत्। मधुतैलेति। प्लीहोदरी। मधु। तैलं। वचा। शुंठी। शताह्वा शतपुष्पा। कुष्ठं। सैन्धवं च। तैः युक्तं तक्रं पिबेत्। उदकोदरी तु सव्योषं जातं त्रिकटुयुक्तं कृतं तक्रं पिबेत्। यमानीति। ग्रथितोदरी बद्धगुदोदरी। यमानी। हवुषा हवुषफलं। अजाजी। सैन्धवं च। तैः युक्तं तक्रं पिबेत्॥ छिद्रोदरी तु। पिप्पली। क्षौद्रं मधु च। ताभ्यां संयुतं तक्रं पिबेत्॥१०१—१०५॥

गौरवेति। गौरवारोचकाभ्यामार्ताः। तेषां। सह मन्दाग्निना वर्तमानाः ते समन्दाग्नयः। अतिसारिणश्च। तेषां समन्दाग्न्यतिसारिणां। वातकफार्तानां च। उदरिणां तक्रं अमृतत्वाय कल्पते सम्पद्यते अमृतमिव हितं भवति ॥१०६॥

शोफानाहेति। शोफः। आनाहः। अर्तिर्वेदना। तृट् तृष्णा। मूर्च्छा च। ताभिः पीडिते उदरे। शोफानाहादिमतां। तथा शुद्धानां विरिक्तानां। क्षामदेहानां च।

---

१०४—मधुतैलवचाकुष्ठशताह्वाहिंगुसैन्धवैः इति ख ट पुस्तकयोः।
१०७—दाहानाहार्तितृण्मूर्च्छा इति ट पुस्तके।

देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ।
साश्वकर्णैः सगोमूत्रैः प्रदिह्यादुदरं समैः ॥१०८॥
वृश्चिकालीं वचां कुष्ठं पञ्चमूलीं पुनर्नवाम् ।
वर्षाभ्वं नागरं धान्यं जले पक्त्वावसेचयेत् ॥१०९॥
पलाशं कत्तृणं रास्नां तद्वत् पक्त्वावसेचयेत् ।
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ॥११०॥

उदरिणां । कारभं औष्ट्रं । गव्यं । छागं । समाहिषं माहिषं च । पयः क्षीरं अमृतत्वाय कल्पते । शोफानाहादिमान् विरिक्तः क्षामदेहः उदरी कारभं गव्यमाजं माहिषं वा क्षीरं शीलयेत् ॥ १०७ ॥

देवदार्विति । देवदारु । पलाशः । अर्कः । हस्तिपिप्पलिः गजपिप्पली । हस्व-स्त्वान्दसः । शिग्रुकः शोभांजनश्च । तैः । साश्वकर्णैः । अश्वकर्णः शालभेदः । देवदार्वा-द्यश्वकर्णान्तैः सर्वैः समैः तुल्यभागैः सगोमूत्रैः गोमूत्रेण पिष्टैः सुखोष्णैः उदरिणां उदरं प्रदिह्यात् लिम्पेत् । उक्तं च—लिम्पेच्चोदरिणां तूदरं शिग्रुपलाशार्काश्वकर्णगज-पिप्पलीदेवदारुभिर्मूत्रपिष्टैः सुखोष्णैश्च । इति ( अ० सं० चि० १७ ) ॥१०८॥

वृश्चिकालीमिति । वृश्चिकालीं । वचां । कुष्ठं । पंचमूलीं बिल्वादिं । पुनर्नवां वर्षाभ्वं च श्वेतरक्तपुनर्नवाद्वयं । नागरं शुण्ठीं । धान्यं धन्याकं च । जले पक्त्वा क्वाथयित्वा तेन क्वाथेन अवसेचयेत् । तदुक्तं—वृश्चिकालीकुष्ठषड्ग्रन्थाद्विपुनर्नवा-धान्यनागरपंचमूलक्वाथैर्मूत्रैश्च परिषेचयेत् । इति ( अ० सं० चि० १७ ) ॥१०९॥

पलाशमिति । पलाशं कत्तृणं रास्नां च तद्वत् जले पक्त्वा अवसेचयेत् । अष्टौ मूत्राणि दीर्घंजीवितीयोक्तानि । तथा च—अवीमूत्रमजामूत्रं गोमूत्रं माहिषं च यत् । हस्तिमूत्रमथोष्ट्रस्य हयस्य च खरस्य च ॥ इति । उदरिणां सेके परिषेके पाने च योजयेत् ॥ ११० ॥

---

१०९—कृष्णाम्बु नागरं धान्यं इति ग पुस्तके ।

११०—पलाशं शर्करां रास्नां शताह्वां वावचारयेत् इति ख ग पुस्तकयोः ।

रूक्षाणां बहुवातानां तथा संशोधनार्थिनाम् ।
दीपनीयानि सर्पीं षि जठरघ्नानि वक्ष्महे ॥१११॥
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
सक्षारैरर्धपलिकैर्द्विः प्रस्थं सर्पिषः पचेत् ॥११२॥
कल्कैर्द्विपञ्चमूलस्य तुलार्द्धस्वरसेन च ।
दधिमण्डाढ़कोपेतं तत् सर्पिर्जठरापहम् ॥११३॥

रूक्षाणामिति । रूक्षाणां । बहुवातानां । तथा संशोधनार्थिनां । उदरिणां । दीपनीयानि दीपनीयगणैः साधितानि जठरघ्नानि सर्पींषि वक्ष्महे साम्प्रतमुपदिशामः ॥ १११ ॥

पंचकोलपुनमाह—पिप्पलीत्यादि । पिप्पली । पिप्पलीमूलं । चव्यं । चित्रकः । नागरं शुण्ठी । पंचकोलमेतत् । तैः सक्षारैः यवक्षारैः प्रत्येकं द्विः अर्धपलिकैः द्विगुणार्धपलैः । एकपलिकैरित्यर्थः । तेन षट् पलानि भवन्ति । कल्कैः कल्कितैः । तथा द्विपंचमूलस्य दशमूलस्य तुलार्धस्वरसेन क्वाथतुलार्धेन । तुला शतपलं । तस्याः अर्धं पंचाशत् पलानि तुलार्धं । वृद्धवाग्भटस्तु दशमूलक्वाथाढकमाह । आढकं चतुःषष्टिपलं । तेन द्रव तुलार्धो वा । तथा च—तुलायाः अर्धः किंचिदधिको भागः चतुःषष्टिपलरूपः । अर्धं समभागे क्लीबं । दधिमण्डस्य मस्तुनः आढकं । तेन उपेतं युक्तं सर्पिषः पुनस्य प्रस्थं पचेत् । चक्रपाणिस्तु द्विःशब्दं अर्धपलिकैरित्यत्र प्रस्थमित्यत्र च उभयत्र योजयित्वा व्याख्याते । तेन सर्पिषः प्रस्थद्वयं स्यात् । तच्चिन्त्यं । सर्पिःप्रस्थमिति वृद्धवाग्भटवचनात् । तथा च—यावशूकपंचकोलषट्पलेन वा मस्तुदशमूलक्वाथाढकद्वयेन च सिद्धं सर्पिःप्रस्थं प्रयोजयेत् । इति ( अ० सं० चि० १७ ) । तत् सर्पिः जठरापहं उदरं हन्ति । उपयधूं वातविष्टम्भं गुल्मान् अर्शांसि च नाशयेत् ॥ ११२ । ११३ ॥

११४—अस्माच्छ्लोकादनन्तरं क ख ग घ ङ पुस्तकेष्वधिकः पाठः कफमारुतसंभूते गुल्मे चैतत् प्रशस्यते । इति ।

नागरं त्रिफलाप्रस्थं घृततैलात्तथाढ़कम् ।
मस्तुनः साधयित्वैतत् पिबेत् सर्वोदरापहम् ॥११४॥

इति नागरघृतम् ।

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात् पले ।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥११५॥

इति चित्रकघृतम् ।

यवकोलकुलत्थानां पञ्चमूलरसेन च ।
सुरासौवीरकाभ्याञ्च सिद्धं वापि पिबेद् घृतम् ॥११६॥

इति यवाद्यघृतम् ।

नागराद्यं घृतमाह—नागरमित्यादि । नागरं शुण्ठी । त्रिफला च । तयोः पृथक् प्रस्थं कल्कितं । घृततैलात् यमकात् आढकं । तथा मस्तुनः आढकं च । एकत्र साधयित्वा । एतत् पिबेत् । एतत् सर्वोदरापहं ॥ ११४ ॥

चित्रकघृतमाह—चतुर्गुणेन इति । चतुर्गुणे जले । द्विगुणे मूत्रे च । चित्रकात् पले कल्के । सक्षारं सिद्धं घृतप्रस्थं । घृतात् चतुर्गुणे जले द्विगुणे च गोमूत्रे चित्रककल्कपलं यवक्षारपलं च दत्त्वा साधितं घृतप्रस्थं जठरी उदरी पिबेत् ॥११५॥

यवाद्यं घृतमाह—यवेति । यवः । कोलं बदरं । कुलत्थश्च । तेषां रसेन क्वाथेन पादिकेन । पंचमूलस्य रसेन क्वाथेन पादिकेन । सुरासौवीरकाभ्यां पृथक् पादिकाभ्यां । इत्थं च स्नेहात् चातुर्गुण्यं द्रवस्य भवति । सिद्धं वापि घृतं पिबेत् जठरी । तदुक्तं—यवकोलकुलत्थपंचमूलकषायेण वा सुरासौवीरकयुक्तं सर्पिः । इति ( अ० सं० चि० १७ ) ॥ ११६ ॥

एभिः स्निग्धाय संजाते बले शान्ते च मारुते।
स्रस्ते दोषाशये दद्यात् कल्पदिष्टं विरेचनम् ॥११७॥
पटोलमूलं रजनीं विड़ंगं त्रिफलात्वचम्।
कम्पिल्लकं नीलिनीं च त्रिवृतां चेति चूर्णयेत् ॥११८॥
षड़ाद्यान् कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान्।
कृत्वा चूर्णं ततो मुष्टिं गवां मूत्रेण ना पिबेत् ॥११९॥
विरिक्तो मृदु भुञ्जीत भोजनं जाङ्गलैं रसैः।
मण्डं पेयाञ्च पीत्वा ना सव्योषं षड़हं पयः ॥१२०॥

एभिरिति। एभिरुक्तैः सर्पिर्भिः स्निग्धाय उदरिणे। विरेचनं दद्यादिति परेणान्वयः। सर्पिष्पाणेन बले संजाते। मारुते वाते च शान्ते। दोषाशये स्रस्ते स्नेहेन विमुक्तबंधनतया शिथिले च। सति। कल्पदिष्टं कल्पस्थाने उक्तं इहापि वक्ष्यमाणं च विरेचनं दद्यात्॥ ११७॥

पटोलमूलाद्यं चूर्णमाह—पटोलमूलमित्यादि। पटोलमूलं। रजनीं हरिद्रां। विडंगं। त्रिफला आमलकहरीतकीविभीतकानि। तस्याः त्वक्। तां। कम्पिल्लकं। नीलिनीं। त्रिवृतां च। इति चूर्णयेत्। तेषां मानमाह—षड़ाद्यानिति। तत्र आद्यान् षट् पटोलमूलादित्रिफलान्तान्। पटोलमूलं रजनीं विडंगं आमलकं हरीतकीं विभीतकं च इति षट्। आद्यान् षट् प्रत्येकं कार्षिकान् कर्षमितान्। अन्त्यान् शेषान् त्रीन् कम्पिल्लकं नीलिनीं त्रिवृतां च क्रमात् ततः द्वित्रिचतुर्गुणान्। तथा च कम्पिल्लकस्य द्वौ कर्षौ नीलिन्याः त्रयः। त्रिवृतायाश्चत्वारः। आदाय एकत्र चूर्णं कृत्वा ततः तस्मात् चूर्णात् मुष्टिं पलं गवां मूत्रेण ना उदरी पुमान् पिबेत्। तेन सम्यक् विरिक्तः जांगलैः रसैः भुक्त्वा मृदुभोजनं भुञ्जीत। मण्डं पेयां च पीत्वा वा सव्योषं शृतं पयः षड़हं पिबेत्। जांगलरसमश्नीयात्। मण्डं पेयां च वा पिबेत्। ततः षडहं

शृतं पिबेत् ततश्चूर्णं पिबेदेवं पुनः पुनः ।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ॥१२१॥
कामलां पाण्डुरोगञ्च श्वयथुञ्चापकर्षति ।
पटोलाद्यमिदं चूर्णमुदरेषु प्रपूजितम् ॥१२२॥

इति पटोलाद्यं चूर्णम् ।

गवाक्षीं शङ्खिनीं दन्तीं तिल्वकस्य त्वचं वचाम् ।
पिबेद्द्राक्षाम्बुगोमूत्रकोलकर्कन्धुसीधुभिः ॥१२३॥
यमानी हवुषा धान्यं त्रिफला चोपकुञ्चिका ।
कारवी पिप्पलीमूलमजगन्धा शटी वचा ॥१२४॥

त्र्यूषणं शृतं पयः पिबेत् । ततः सप्तमेऽहनि पुनः तत् चूर्णं पिबेत् । एवं अनेन विधिना पुनः पुनः पिबेत् । एतत् चूर्णं जातोदकान्यपि सर्वाणि उदराणि कामलां पाण्डुरोगं च श्वयथुं च अपकर्षति नाशयति । इदं पटोलाद्यं चूर्णं उदरेषु सर्वेषु प्रपूजितं अत्यादृतं भवति । वृद्धवाग्भटेनाप्युक्तं—पटोलमूलरजनीविडंगत्रिफलाः कर्षांशाः कम्पिल्लकनीलिनीफलत्रिवृतानां क्रमात् द्वित्रिचतुर्भिः कर्षैर्युक्ताश्चूर्णयित्वा मूत्रेण पिबेत् । जीर्णे च पेयायुषो रसौदनाशी वा स्यात् । ततः षड्रात्रं सव्योषेण पयसाऽश्नीयात् । ततः सप्तमेऽहनि पुनश्चूर्णं पिबेत् । अनेन विधिना चूर्णमिदमुदराणि जातोदकान्यपि निवर्त्तयति । इति ( अ० सं० चि० १७ ॥ ११८—१२२ ॥

गवाक्षीमिति । गवाक्षीं शंखिनीं दन्तीं तिल्वकस्य त्वचं वचां च एकत्र चूर्णयित्वा । तच्चूर्णं । द्राक्षाम्बु द्राक्षाक्वाथः । गोमूत्रं । कोलकर्कन्धू वृहदल्पबदरभेदौ । तयोः क्वाथः । सीधुश्च । तैः तेषामन्यतमेन पिबेत् उदरी ॥ १२३ ॥

नारायणचूर्णमाह—यमानीत्यादि । यमानी । हबुषा । धान्यं धन्याकं । त्रिफला । उपकुञ्चिका कृष्णजीरकः । कारवी क्षुद्रजीरकः । जीरकं तु वृहत् । पिप्पली

शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रका।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥१२५॥
विडङ्गञ्च समांशानि दन्त्या भागत्रयन्तथा।
त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा ॥१२६॥
एतन्नारायणं नाम चूर्णं रोगगणापहम्।
नैतत् प्राप्यातिवर्त्तन्ते रोगा विष्णुमिवासुराः ॥१२७॥

मूलं। अजगन्धा। अजमोदा। शटी। वचा। शताह्वा शतपुष्पा। व्योषं। सचित्रका स्वर्णक्षीरी चित्रकः स्वर्णक्षीरी पटुपर्णी च। द्वौ क्षारौ स्वर्जिक्षारयवक्षारौ। पौष्करं मूलं पुष्करमूलं। कुष्ठं। लवणपंचकं सैन्धवं सौवर्चलं विड्मौद्भिदं सामुद्रं च। विडंगं च। एतानि द्रव्याणि समांशानि। दन्त्याः भागत्रयं। त्रिवृत्। विशाला गवाक्षी च। ते द्विगुणे। सातला चर्मकषा च चतुर्गुणा स्यात्। यमान्यादिविडंगान्तानि द्रव्याणि प्रत्येकं तुल्यभागानि। तेषामेकैकभागापेक्षया दन्त्यास्त्रैगुण्यं। त्रिवृद्विशालयोर्द्वैगुण्यं। सातलायाश्चातुर्गुण्यं। तत् सर्वं एकत्र चूर्णयेत्। नारायणं नाम एतत् चूर्णं सर्वरोगापहं। कुतोऽस्य नारायणसंज्ञेति? अत आह—नैतदिति। असुराः नारायणं विष्णुमिव नारायणं प्राप्य यथा न अतिवर्तन्ते एवं रोगाः एतत् चूर्णं प्राप्य न अतिवर्तन्ते अतीत्य गच्छन्ति। किन्तु निवर्तन्ते। नारायणो यथा सर्वासुरनिरोधकः तथा एतत् चूर्णं सर्वरोगनिवर्तकं। एवं नारायणसधर्मित्वात् अस्य नारायणसंज्ञा। रोगगणापहमित्युक्तं। तदेव विवृत्य दर्शयति—तक्रेणेति। एतत् चूर्णं उदरिभिः तक्रेण पेयं। गुल्मिभिः बदराम्बुना बदरक्वाथेन पेयं। आनद्धवाते मूढवाते रोगे सुरया मदिरया पेयं। वातरोगे प्रसन्नया स्वच्छया सुरया पेयं। विट्सङ्गे दधिमण्डेन मस्तुना पेयं। अर्शोभिः अर्शोरोगिभिः दाडिमाम्बुभिः दाडिमक्वाथेन पेयं। परिकर्ते कर्त्तनवत् वेदनाभेदे। सवृक्षाम्लं पेयं वृक्षाम्लक्वाथेन पेयं। अजीर्णमेव अजीर्णकं। तस्मिन् अजीर्णके उष्णाम्बुभिः पेयं। भगन्दरे पाण्डुरोगे श्वासे

तक्रेणोदरिभिः पेयं गुल्मिभिर्वदराम्बुना ।
आनद्धवाते सुरया वातरोगे प्रसन्नया ॥१२८॥
दधिमण्डेन विट्संगे दाड़िमाम्बुभिरर्शसैः ।
परिकर्त्ते सवृक्षाम्लमुष्णाम्बुभिरजीर्णके ॥१२९॥
भगन्दरे पाण्डुरोगे श्वासे कासे गलग्रहे ।
हृद्रोगे ग्रहणीदोषे कुष्टे मन्देऽनले ज्वरे ॥१३०॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।
यथार्हं स्निग्धकोष्टेन पेयमेतद्विरेचनम् ॥१३१॥

इति नारायणचूर्णम् ।

हवुषां काञ्चनक्षीरीं त्रिफलां कटुरोहिणीम् ।
नीलिनीं त्रायमाणाञ्च सातलां त्रिवृतां वचाम् ॥१३२

कासे गलग्रहे हृद्रोगे ग्रहणोदोषे कुष्टे मन्दे अनले अग्निमान्द्ये ज्वरे दंष्ट्राविषे श्वादीनां दंशनजे विषं जांगमे मूलविषे क्षोननकाश्वमारादिमूलविषे । स्थावरे । उभयमेतत् अकृत्रिमं । तथा च—स्थावरं जांगमं चेति विषं प्रोक्तमकृत्रिमं । कृत्रिमं गरसंज्ञन्तु क्रियते विविधौषधैः ॥ इति ( अ० सं० उ० ४० ) । सगरे । कृत्रिमे विषे । कृत्रिमं विषं च द्विविधं निर्विषद्रव्यसंयोगकृतं सविषद्रव्यसंयोगकृतं च । इह गरं सविषद्रव्यसंयोगकृतं । निर्विषद्रव्यसंयोगजन्तु कृत्रिमं विषं । तथा च—संयोगे द्विविधं प्रोक्तं तृतीयं विषमुच्यते । गरं स्यादविषं तत्र सविषं कृत्रिमं मतं ॥ इति । कृत्वा यथार्हं यथायोगं । तक्रादिकमुक्तं । अनुक्तं अन्यच्चापि यत् तत्र तत्र यौगिकं स्यात् तेन पेयं ॥१२३-१३१॥

हवुषाद्यं चूर्णमाह—हवुषामित्यादि । हवुषां । कांचनक्षीरीं स्वर्णक्षीरीं । त्रिफलां । कटुरोहिणीं । नीलिनीं । त्रायमाणां । सातलां । त्रिवृतां । वचां । सैन्धवं ।

सैन्धवं काललवणं पिप्पलीश्चेति चूर्णयेत्।
दाड़िमत्रिफलामांसरसमूत्रसुखोदकैः ॥१३३॥
पेयोऽयं सर्वगुल्मेषु प्लीहि सर्वोदरेषु च।
कुष्ठे श्वित्रे सरुजके सवाते विषमाग्निषु ॥१३४॥
शोथार्शःपाण्डुरोगेषु कामलायां हलीमके।
वातपित्तकफांश्चाशु विरेकात् संप्रसाधयेत् ॥१३५॥

इति हवुषाद्यचूर्णम्।

नीलिनीच्छल्लकं व्योषं द्वौ क्षारौ लवणानि च।
चित्रकञ्च पिबेच्चूर्णं सर्पिषोदरगुल्मनुत् ॥१३६॥

इति नीलिन्याद्यं चूर्णम्।

काललवणं निर्गन्धं सौवर्चलं। विडलवणमित्यन्ये। पिप्पलीं च इति। एतत् सर्वं समभागं एकत्र चूर्णयेत्। अयं चूर्णः सर्वेषु गुल्मेषु प्लीहि सर्वेषु उदरेषु सरुजके सशूले सवाते च कुष्ठे श्वित्रे च विषमाग्निषु शोथार्शःपाण्डुरोगेषु कामलायां हलीमके च। दाड़िमं त्रिफला मांसं च। तेषां रसः। दाड़िमत्रिफलयोः रसः क्वाथः। मूत्रं। सुखोदकं सुखोष्णोदकं च। तैः यथार्हं तेषामन्यतमेन पेयः। एवं पीतः स च विरेकात् विरेकं कारयित्वा वातपित्तकफान् आशु संप्रसाधयेत् शमयेत् ॥१३२—१३५॥

नीलिन्याद्यं चूर्णमाह—नीलिनीमिति। नीलिनीं। निचुलं जलवेतसं। व्योषं त्रिकटु। द्वौ क्षारौ स्वर्जिक्षारयवक्षारौ। लवणानि सैन्धवादीनि पंच। चित्रकं च। तत् सर्वं समभागं एकत्र चूर्णयित्वा तत् चूर्णं सर्पिषा घृतेन पिबेत्। तच्च उदरगुल्मनुत् ॥१३६॥

क्षीरद्रोणं सुधाक्षीरप्रस्थार्धसहितं दधि।
जातं विमथ्य तद् युक्त्या त्रिवृत्सिद्धात् पिबेद् घृतात्॥१३७॥
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत्।
स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन च ॥१३८॥
दधिमण्डाढके सिद्धात् स्नुक्क्षीरपलकल्कितात्।
घृतप्रस्थात् पिबेन्मात्रां तद्वज्जठरशान्तये ॥१३९॥
एषाञ्चानु पिबेदेव पयो वा स्वादु वा रसम्।
घृते जीर्णे विरिक्तस्तु कोष्णं नागरकैः शृतम् ॥१४०॥

क्षीरद्रोणमिति। क्षीरस्य द्रोणं आढकचतुष्टयं। सुधा स्नुही। तस्याः क्षीरं तस्य प्रस्थार्द्धं अष्टपलं। तेन सहितं विपक्वं। ततः दधि जातं दधिभावमापन्नं दधि बीजदानात्। तत् विमथ्य जातं घृतं त्रिवृत्सिद्धं त्रिवृत्कल्केन पादिकेन ... चतुर्गुणे सिद्धं कृत्वा तत् युक्त्या मात्रया पिबेत्॥१३७॥

तथा सिद्धमिति। तथा तद्वत् निष्पादितं घृतप्रस्थं अष्टगुणे पयसि स्नुक्क्षीर पलकल्केन त्रिवृताषट्पलेन च सिद्धं तत्र स्नुहीक्षीरपलं त्रिवृतः षट्पलं च ... दत्त्वा साधयेत्। तथा साधितं तत् युक्त्या पिबेत्॥ १३८ ॥

दधिमण्डाढके इति। तद्वत् स्नुक्क्षीरपलकल्कितात् स्नुहीक्षीररूपं कल्कं दत्त्वा दधिमण्डस्य मस्तुनः आढके चतुःषष्टिपले सिद्धात् घृतप्रस्थात् मात्रां कोष्ठापेक्षया जठरस्य उदरस्य शान्तये पिबेत्॥१३९॥

एषामित्यादि। एषामुक्तानां घृतानां अनु पानात् परं स्वादु मधुरं पयः क्षीरं रसं मांसरसं वा। दोषापेक्षया विकल्पः। पिबेत्। घृतानि पीत्वा पयः मांसरसं वा अनुपिबेत्। तेन विरिक्तः सन् पीते घृते जीर्णे सति नागरकैः शुण्ठीभिः शृतं कोष्णं ईषदुष्णं अम्बु जलं पिबेत्। ततः पेयां पिबेत्। ततः कौलत्थिकं यूषं पिबेत्। प्रथमे

पिबेदम्बु ततः पेयां यूषं कौलत्थिकं ततः ।
पिबेद्रूक्षस्त्र्यहन्त्येवं पयोऽन्नं प्रतिभोजितः ॥१४१॥
पुनः पुनः पिबेत् सर्पिरानुपूर्व्या तयैव च ।
घृतान्येतानि सिद्धानि विदध्यात् कुशलो भिषक् ॥
गुल्मानां गरदोषाणामुदराणाञ्च शान्तये ॥१४२॥
पीलुकल्कोपसिद्धं वा घृतमानाहभेदनम् ।
गुल्मघ्नं नीलिनीसर्पिः स्नेहं वा मिश्रकं पिबेत् ॥१४३॥
क्रमान्निर्हृतदोषाणां जाङ्गलप्रतिभोजनम् ।
दोषशेषनिवृत्त्यर्थं योगान् वक्ष्याम्यतः परम् ॥१४४॥

अहनि नागरैः शृतं अम्बु । द्वितीये पेया । तृतीये च कौलत्थो यूषः । रूक्षः । अनेन एतत् स्नेहविरेचनं रूक्षस्यैव कर्त्तव्यं । न तु स्निग्धस्य । इत्युक्तं भवति । पयोऽन्नं प्रतिभोजितः पयसा सह अन्नं प्रतिभुञ्जानः । एवं अनया रीत्या त्र्यहं घृतं पिबेत् । तयैव आनुपूर्व्या पुनः पुनः सर्पिः पिबेत् यावत् स्निग्धो न स्यात् । न तु त्र्यहात् परं विरमेत् ॥ १४० । १४१ ॥

घृतान्येतानीति । कुशलो भिषक् एतानि उक्तानि सिद्धानि सिद्धफलानि घृतानि गुल्मानां गरदोषाणां उदराणां च शान्तये विदध्यात् ॥१४२॥

पीलुफल्कोपसिद्धमिति । पीलुकल्कोपसिद्धं पीलुकल्केन पादिकेन जले चतुर्गुणे सिद्धं आनाहभेदनं घृतं वा पिबेत् । गुल्मघ्नं नीलिनीसर्पिः नीलिन्याद्यं घृतं । मिश्रकं स्नेहं गुल्मचिकित्सिताध्याये प्रागुक्तं वा । पिबेत् ॥१४३॥

क्रमादिति । एवं क्रमात् निर्हृतदोषाणां उदरिणां जांगलप्रतिभोजनं । विरिक्तमुदरिणं जांगलरसेन भोजयेत् । अतः परं दोषशेषनिवृत्त्यर्थं निर्हृताय शेषदोषशमनार्थं योगान् वक्ष्यामि ॥१४४॥

---

१४३ । अयं श्लोकः न पठ्यते च पुस्तके ।

चित्रकामरदारुभ्यां कल्कं क्षीरेण ना पिवेत्।
मासं युक्तस्तथा हस्तिपिप्पलीविश्वभेषजम् ॥१४५॥
विडङ्गं चित्रकं दन्ती चव्यं व्योषञ्च तैः पयः।
कल्कैः कोलसमैः पीत्वा प्रवृद्धमुदरं जयेत् ॥१४६॥
पिबेत् कषायं त्रिफलादन्तीरोहीतकैः शृतम्।
व्योषक्षारयुतं जीर्णे रसैरद्यात्तु जाङ्गलैः ॥१४७॥
मांसं वा भोजनं योज्यं सुधाक्षीरघृतान्वितम्।
क्षीरानुपानं गोमूत्रेणाभयां वा प्रयोजयेत् ॥१४८॥

चित्रकेति। ना उदरी पुमान् युक्तः नियतः सन् मासं व्याप्य क्षीरेण। चित्रकः। अमरदारुः देवदारुश्च। ताभ्यां तयोरित्यर्थः। कल्कं पिबेत्। तथा क्षीरेण हस्तिपिप्पली चविका। विश्वभेषजं शुण्ठी च। तत् कल्कितं पिबेत्। तदुक्तं—दोषशेषविजयाय च शीलयेच्चविकानागरं क्षीरेण पिष्टं। सुरदारुचित्रकं वा। इति (अ० सं० चि० १) ॥१४५॥

विडंगमिति। विडंगं। चित्रकं। दन्ती। चव्यं। व्योषं त्रिकटु च। तैः कोलसमैः प्रत्येकं द्विशाणिकैः कल्कैः कल्कितैः चतुर्गुणे जले शृतं पयः पीत्वा प्रवृद्धमपि उदरं जयेत् ॥१४६॥

पिबेदिति। त्रिफलादन्तीरोहीतकैः शृतं कषायं त्रिफलादन्तीरोहीतकक्वाथं व्योषक्षारयुतं पिबेत्। त्रिफलादन्तीरोहीतकनिर्यूहं वा व्योषक्षारोपेतं। इति (अ० सं० चि० १७)। तस्मिन् जीर्णे सति जांगलैः रसैः जांगलमांसरसैः आहारं भोजनं अद्यात् भुञ्जीत। सुधाक्षीरघृतं सुधाक्षीरसाधितं घृतं पूर्वोक्तं। तेन अन्वितं युक्तं मांसं भोजनं वा योज्यं। गोमूत्रेण अभयां हरीतकीं क्षीरानुपानं यथा तथा प्रयोजयेत् गोमूत्रेण अभयां पीत्वा क्षीरमनुपिबेत् ॥१४७।१४८॥

सप्ताहं माहिषं मूत्रं क्षीरञ्चानन्नभुक् पिबेत्।
मासमौष्ट्रं पयश्छागं त्रीन् मासान् व्योषसंयुतम् ॥१४६॥
हरीतकीसहस्रं वा क्षीराशी वा शिलाजतु।
शिलाजतुविधानेन गुग्गुलुं वा प्रयोजयेत् ॥१५०॥
शृङ्गवेरार्द्रकरसः पाने क्षीरसमो हितः।
तैलं रसेन तेनैव सिद्धं दशगुणेन वा ॥१५१॥
दन्तीद्रवन्तीफलजं तैलं दूष्योदरे हितम्।
शूलानाहविबन्धेषु मस्तुयूषरसादिभिः ॥१५२॥
सरलामधुशिग्रूणां बीजेभ्यो मूलकस्य च।
तैलान्यभ्यङ्गपानार्थं शूलघ्नान्यनिलोदरे ॥१५३॥

सप्ताहमित्यादि। विरिक्तः अनन्नभुक् सन् अन्नमन्यत् वर्जयित्वा सप्ताहं केवलं माहिषं मूत्रं माहिषं क्षारं च पिबेत्। मासमेकं औष्ट्रं पयः क्षारं पिबेत्। त्रीन् मासान् व्योषं त्रिकटु। तेन संयुक्तं। एतत् पूर्वत्रापि योज्यं। छागं पयः पिबेत् ॥१४६॥

हरीतकीति। क्षीराशी क्षीरमात्रभोजी सन् वर्द्धमानपिप्पल्युक्तविधिना हरीतकी-सहस्रं वा प्रयोजयेत्। शिलाजतुविधानेन रसायनपादोक्तेन शिलाजतु वा। तेनैव विधिना गुग्गुलुं वा प्रयोजयेत् ॥१५०॥

शृंगवेरेति। शृङ्गवेरार्द्रकं अशुष्कनागरं आर्द्रकमित्यर्थः। तस्य रसः स्वरसः क्षीरसमः क्षीरसमभागः पाने हितः। तुल्यार्द्रकरसं क्षीरं पिबेत्। तेनैव रसेन आर्द्रक-रसेन, दशगुणेन सिद्धं तैलं पाने हितं ॥ १५१ ॥

दन्तीद्रवन्तीति। दूष्योदरे सन्निपातोदरे दन्तीद्रवन्त्योः फलजं तैलं पाने हितं। शूलानाहविबन्धेषु तच्च तैलं मस्तुयूषरसादिभिः सह पाने हितम् ॥१५२॥

सरलेति। सरलामधुशिग्रूणां। मधुशिग्रुः रक्तशोभांजनः। तथा मूलकस्य च

---

१४२। अयं श्लोकः न पठ्यते च पुस्तके।

स्तैमित्यारुचिहृल्लासे मन्दाग्नेर्मद्यपस्य च।
अरिष्टान् दापयेत् क्षारान् कफस्त्यानस्थिरोदरे ॥१५४॥
श्लेष्मणो विलयार्थन्तु दोषं वीक्ष्य भिषग्वरः ॥१५५॥
पिप्पलीं तिन्दुकं हिंगु नागरं हस्तिपिप्पलीम्।
भल्लातकं शिग्रुफलं त्रिफलां कटुरोहिणीम् ॥१५६॥
देवदारु हरिद्रे द्वे सरलातिविषे स्थिराम्।
कुष्ठं मुस्तं तथा पञ्च लवणानि प्रकल्प्य च ॥१५७॥
दधिसर्पिर्वसामज्जतैलयुक्तानि दाहयेत्।
अन्नादूर्ध्वमतः क्षाराद् बिडालपदकं पिबेत् ॥१५८॥

बीजेभ्यः जातानि तैलानि अनिलोदरे वातोदरे अभ्यंगः। पानं च। तदर्थं हितानि शूलघ्नानि च ॥ १५३ ॥

स्तैमित्येत्यादि। भिषग्वरः स्तैमित्यारुचिहृल्लासे स्तैमित्यादियुक्ते कफस्त्या-नस्थिरोदरे स्त्याने कठिने घने स्थिरे च कफोदरे श्लेष्मणः विलयार्थं स्व[illegible] मद्यपस्य च। उदरी चेत् स्वल्पाग्निः मद्यसात्म्यश्च तदा तस्य सम्बन्धे दोषं दो[illegible] वीक्ष्य अरिष्टान् क्षारांश्च दापयेत् ॥१५४।१५५॥

पिप्पलीमित्यादि। पिप्पलीं। तिन्दुकं। हिंगु। नागरं शुण्ठीं। हस्तिपिप्पलीं चविकां। भल्लातकं। शिग्रुफलं। त्रिफलां। कटुरोहिणीं। देवदारु। द्वे हरिद्रे। सरला। अतिविषा च ते। स्थिरां शालपर्णीं। कुष्ठं। मुस्तं। तथा पंच लवणानि सैन्धवा-दीनि च। एतानि सर्वाणि समभागानि। दधि। सर्पिर्घृतं। वसा। मज्जा। तैलं च। तैर्युक्तानि म्रक्षितानि प्रकल्प्य कृत्वा दाहयेत्। अन्नात् उर्ध्वं भोजनात् परं उत्तरभक्तं

---

१५७। सरलातिविषे वचामिति ख ग ट पुस्तकेषु।
१५८। तैलयुक्तानि दापयेत्। अन्नादूर्ध्वं ततः इति घ पुस्तके।

मदिरादधिमण्डोष्णजलारिष्टसुरासवैः ।
हृद्रोगं श्वयथुं गुल्मं प्लीहार्शोजठराणि च ॥
विसूचिकामुदावर्त्तं वाताष्ठीलाञ्च नाशयेत् ॥१५९॥
क्षारञ्चाजकरीषाणां श्रुतं मूत्रैर्विपाचयेत् ।
कार्षिकं पिप्पलीमूलं पञ्चैव लवणानि च ॥१६०॥
पिप्पलीं चित्रकं शुण्ठीं त्रिफलां त्रिवृतां वचाम् ।
द्वौ क्षारौ सातलां दन्तीं स्वर्णक्षीरीं विषाणिकाम् ॥१६१॥
कोलप्रमाणां गुडिकां पिबेत् सौवीरसंयुताम् ।
श्वयथावविपाके च प्रवृद्धे च दकोदरे ॥१६२॥

अतः क्षारात् विडालपदकं कर्षं मदिरा प्रसन्ना दधिमण्ड' मस्तु उष्णजलं अरिष्टः सुरा आसवश्च । तैः मदिराद्यन्यतमेन आलोड्य पिबेत् । तथा पीतं तच्च । हृद्रोगं । श्वयथुं । गुल्मं । प्लीहा अर्शांसि जठराणि उदराणि च तानि । विसूचिकां । उदावर्तं । वाताष्ठीलां वातव्याधिभेदं च । तथा च—नाभेरधस्तात् संजातः संचारी यदि वाचलः । अष्ठीलावद् घनो ग्रन्थिरूर्ध्वमायत उन्नतः ॥ वाताष्ठीलां विजानीयात् । इति ( माधवनिदान ) । नाशयेत् ॥१५६-१५९॥

क्षारं चेति । अजकरीषाणां दग्धानां स्रुतं षड्गुणोदकेन एकविंशतिकृत्वः स्रावितं क्षारं क्षारोदकं कार्षिकं कर्षमितं । एतत् परत्रापि यथालिंगवचनं योज्यं । पिप्पलीमूलं । पंच लवणानि सैन्धवादीनि । पिप्पलीं । चित्रकं । शुण्ठीं । त्रिफलां । त्रिवृतां । वचां । द्वौ क्षारौ स्वर्जिक्षारयवक्षारौ । सातलां । दन्तीं । स्वर्णक्षीरीं । विषाणिकां । गवाक्षीं च । तत् सर्वं चूर्णितं गवां मूत्रैः विपाचयेत् यावत् तत् घनमविदग्धं च स्यात् ।

१६२ । गुडिकां कृत्वा कृत्वा त्वम्लेन ना पिबेत् इति ट पुस्तके ।

भावितानां गवां मूत्रैः षष्टिकानान्तु तण्डुलैः।
यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम् ॥१६३॥
पिबेदिक्षुरसञ्चानु जठराणां निवृत्तये।
स्वं स्वं स्थानं व्रजन्त्येव तथा पित्तकफानिलाः ॥१६४॥
शंखिनीं स्नुक्त्रिवृद्दन्तीचिरविल्वादिपल्लवैः।
शाकं पक्त्वा प्रयुञ्जीत प्राग्भक्तं गाढवर्चसि ॥१६५॥
ततोऽस्मै शिथिलीभूतवर्चोदोषाय शास्त्रवित्।
दद्यान्मूत्रयुतं क्षारं दोषशेषहरं शिवम् ॥१६६॥

ततः तेन कोलप्रमाणां वदरप्रमाणां शाणद्वयमितां गुडिकां कृत्वा तां सौवीरसंयुतां सौवीरेण सह। सौवीरं कांजिकभेदः। श्वयथौ अविपाके प्रवृद्धे दकोदरे उदकोदरे च अन्नादूर्ध्वं पिबेत् ॥१६०—१६२॥

भावितानामिति। जठराणां उदराणां निवृत्तये गवां मूत्रैः भावितानां षष्टिकानां तण्डुलैः पयसा सिद्धां यवागूं नरमुदरिणं प्रकामं भोजयेत्। स च अनु पश्चात् यवागू-भोजनात् परं इक्षुरसं पिबेत्। तथा कृते सति पित्तकफानिलाः कोपादुन्मार्गगताः स्वं स्वं स्थानं व्रजन्ति गच्छन्ति प्रशमं यान्ति ॥१६३।१६४॥

शंखिनीति। शास्त्रवित् भिषक् उदरे गाढवर्चसि गाढपुरीषे। शंखिनी। स्नुक् स्नुही। त्रिवृत्। दन्ती। चिरविल्वः करंजश्च। तदादयः। तेषां पल्लवैः शाकं उपकल्प्य प्राग्भक्तं भक्तभोजनात् प्राक् प्रयुंजीत। ततः तेन शिथिलीभूतवर्चोदोषाय अस्मै उदरिणे दोषशेषहरं शिवं शुभं क्षारं मूत्रयुतं दद्यात् ॥१६५। १६६॥

---

१६४। पिबेदिक्षुरसं वातजठराणां इति च पुस्तके।

पार्श्वशूलमुपस्तम्भं हृद्ग्रहश्चापि मारुतः।
जनयेद् यस्य तं तैलं बिल्वक्षारेण पाययेत् ॥१६७॥
तथाग्निमन्थश्योणाकपलाशतिलनालजैः।
बलाकदल्यपामार्गक्षारैः प्रत्येकशः स्रुतैः ॥१६८॥
तैलं पक्त्वा भिषग् दद्यादुदराणां प्रशान्तये।
निवर्त्तते चोदरिणां हृद्ग्रहश्चानिलोद्भवः ॥१६९॥
कफे वातेन पित्ते वा ताभ्यां वाप्यावृतेऽनिले।
बलिनः स्वौषधयुतं तैलमेरण्डजं हितम् ॥१७०॥

पार्श्वशूलमिति। मारुतो वातः यस्य उदरिणः पार्श्वशूलं। उपस्तम्भं हृद्ग्रहं च। जनयेत् तं बिल्वक्षारेण बिल्वक्षाराम्भसा तैलं पाययेत्। तथेति। भिषक्। अग्नि-मन्थः। श्योणाकः। पलाशः। तिलश्च। तेषां नालानि। तेभ्यो जाताः तज्जाः। तैः क्षारैः। तथा बला। कदली। अपामार्गश्च। तेषां क्षारैः स्रुतैः षड्गुणोदकेन एकविंशति वारान् स्राविते। अग्निमन्थाद्यपामार्गान्तानां सप्तानां क्षारोदकैः प्रत्येकशः पृथक् पृथक् तैलं पक्त्वा तत् उदराणां प्रशान्तये उदरिभ्यो दद्यात्। तेन च उदरिणां अनिलोद्भवः वातकृतः हृद्ग्रहः। चकारात् पार्श्वशूलमुपस्तम्भश्चापि। निवर्तते। तदुक्तं—वातकृतेषु पार्श्वशूलोपस्तम्भहृद्ग्रहेषु बिल्वक्षाराम्भसा तैलं पाययेत्। श्योणा-काग्निमन्थतिलकुन्तलकदल्यपामार्गान्यतमक्षारेण वा विपक्वं तैलं। इति (अ० सं० चि० १७)॥ १६७—१६९॥

कफ इति। कफे पित्ते वा वातेन आवृते सति ताभ्यां कफपित्ताभ्यां वा वाते आवृते बलिनः बलवतः उदरिणः स्वौषधयुतं यथास्वौषधसिद्धं एरण्डजं तैलं हितं॥ १७०॥

१६७। पूर्वार्धं न पठ्यते क ग घ पुस्तकेषु।

सुविरिक्तो नरो यस्तु पुनराध्मापितो भिषक्।
सुस्निग्धैरम्ललवणैर्निरूहैस्तमुपाचरेत् ॥१७१॥
सोपस्तम्भोऽपि वा वायुराध्मापयति यं नरम्।
तीक्ष्णैः सक्षारगोमूत्रैर्बस्तिभिस्तमुपाचरेत् ॥१७२॥
क्रियातिवृत्ते जठरे त्रिदोषे चाप्रशाम्यति।
ज्ञातीन् ससुहृदो दारान् ब्राह्मणान् नृपतीन् गुरून् ॥१७३
अनुज्ञाप्य भिषक् कर्म विदध्यात् संशयं ब्रुवन्।
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ॥१७४॥
एवमाख्याय तस्येदमनुज्ञातः सुहृद्गणैः।
पानभोजनसंयुक्तं विषमस्मै प्रयोजयेत् ॥१७५॥

सुविरिक्त इति। यस्तु नरः उदरी सुविरिक्तः वाससा वेष्टनेऽपि पुनः आध्मापितः आध्मापितोदरो भवति। भिषक् तं तथाविधं उदरिणं सुस्निग्धैः अम्ललवणैः निरूहैः आस्थापनैः उपाचरेत् ॥ १७१ ॥

सोपस्तम्भोऽपीति। सोपस्तम्भः वायुर्वापि यं नरमुदरिणं विरिक्तं घनवाससा वेष्टयितोदरमपि पुनः आध्मापयति। तं नरं सक्षारगोमूत्रैः तीक्ष्णैः वस्तिभिः निरूहैः उपाचरेत् ॥१७२॥

क्रियातिवृत्ते इति। जठरे उदरे सर्वस्मिन् विशेषतः त्रिदोषे सान्निपातिके च क्रियामतिवृत्तं अतिक्रान्तं तस्मिन् कृतचिकित्सेऽपि अप्रशाम्यति अनुपशाम्यति सति। भिषक् उदरिणां ज्ञातीन् स्वजनान् ससुहृदः दारान् स्त्रियः ब्राह्मणान् नृपतीन् गुरूंश्च अनुज्ञाप्य संशयं ब्रुवन् कर्म वक्ष्यमाणं विदध्यात् कुर्यात्। अक्रियायां क्रियायाः चिकित्सालक्षणायाः अकरणे मृत्युः मरणं ध्रुवो निश्चितः। क्रियायां कृतायां अपि

यस्मिन् वा कुपितः सर्पो विसृजेद्धि फले विषम् ।
भोजयेत्तमुदरिणं प्रविचार्य भिषग्वरः ॥१७६॥
तेनास्य दोषसङ्घातः स्थिरो लीनो विमार्गगः ।
विषेणाशु प्रमाथित्वादाशु भिन्नः प्रवर्त्तते ॥१७७॥
विषेण हृतदोषं तं शीताम्बुपरिषेचितम् ।
पाययेत भिषग् दुग्धं यवागूं वा यथाबलम् ॥१७८॥
त्रिवृन्मण्डूकपर्ण्योश्च शाकं सयववास्तुकम् ।
भक्षयेत् कालशाकं वा स्वरसोदकसाधितम् ॥१७९॥
निरम्ललवणस्नेहं स्विन्नास्विन्नमनन्नभुक् ।
मासमेकं ततश्चैव तृषितः स्वरसं पिबेत् ॥१८०॥

पुनः जीवने संशयो भवेत्। कृतक्रियोऽपि जीवेदपि न वा । एवं इदमाख्याय तस्य उदरिणः सुहृद्गणैः अनुज्ञातः सन् भिषग्वरः अस्मै उदरिणे पानभोजनसंयुक्तं पानभोजनेषु निक्षिप्तं विषं स्थावरं प्रयोजयेत् । तथा च अश्वमारगुञ्जाकाकादनीमूलकल्कं मद्येन पाययेत् । कुपितः कृष्णसर्पः यस्मिन् फले वल्लीफलादौ विषं विसृजेत् कृष्णसर्पेण फलं दंशयित्वा तत् फलं प्रविचार्य अवचार्य तमुदरिणं भोजयेत्॥१७३—१७६॥

तेनास्येति । विषस्य आशु प्रमाथित्वात् प्रमाथिस्वभावतया तेन विषेण अस्य उदरिणः स्थिरः धात्वादिषु लीनः विमार्गगः उन्मार्गगामी दोषसंघातः भिन्नः सन् आशु बहिः प्रवर्त्तते ॥१७७॥

विषेणेति । भिषक् विषेण हृतदोषं ततः शीताम्बुपरिषेचितं शीतोदकेन परिषिक्तं स्नातं तमुदरिणं दुग्धं यवागूं वा यथाबलं पाययेत् ॥१७८॥

त्रिवृदिति । स च उदरी त्रिवृन्मण्डूकपर्ण्योः त्रिवृतः मण्डूकपर्ण्याश्च शाकं। सयववास्तुकं यवशाकं वास्तुकशाकं च। कालशाकं वा। तस्य तस्य शाकस्य स्वरस एव

एवं विनिर्हृते दोषे शाकैर्मासात् परं ततः ।
दुर्वलाय प्रयुञ्जीत प्राणभृत् कारभं पयः ॥१८१॥
इदन्तु शल्यहर्त्तॄणां कर्म स्याद् दृष्टकर्मणाम् ।
वामं कुक्षिं मापयित्वा नाभ्यधश्चतुरंगुलम् ॥१८२॥
मात्रायुक्तेन शस्त्रेण पाटयेन्मतिमान् भिषक् ।
विपाट्यान्त्रं ततः पश्चाद्वीक्ष्य बद्धक्षतान्त्रयोः ॥१८३॥

उदकं तेन स्वरसोदकाभ्यां वा साधितं निरम्ललवणस्नेहं स्नेहाम्ललवणवर्जितं स्विन्नास्विन्नं किंचित् स्विन्नं किंचिच्च अस्विन्नं एवमुपकल्प्य एकमासं व्याप्य अनन्नभुक् अन्नमन्यद् वर्जयित्वा शाकमात्रवृत्तिः सन् भक्षयेत् । तृषितश्चेत् तस्य तस्य शाकस्य स्वरसं पिवेत् ॥१७६।१८०॥

एवमिति । एवमनेन प्रकारेण मासमेकं शाकभक्षणेन दोषे शाकैः विनिर्हृते सति ततः मासात् परं दुर्वलाय तस्मै आतुराय प्राणभृत् वलकृत् कारभमौष्ट्रं पयः प्रयुञ्जीत ॥ १८१ ॥

अथ शस्त्रचिकित्सितमाह—इदन्त्विति । वहुशः दृष्टकर्मणां शल्यहर्त्तॄणां धन्वन्तरीयाणां बद्धगुदोदरे छिद्रोदरे च इदं वक्ष्यमाणं कर्म स्यात् । तथा च मतिमान् बुद्धिमान् कर्मसु कुशलः भिषक् बद्धक्षतान्त्रयोः उदरयोः बद्धगुदे क्षतान्त्रे छिद्रे च उदरे नाभ्यधः नाभेरधः वामतः चतुरंगुलं मापयित्वा अपहाय वामं कुक्षिं मात्रायुक्तेन तत्तत्कर्मोचितमात्रावता शस्त्रेण पाटयेत् । एवं कुक्षिं विपाट्य ततः पश्चात् अन्त्रं निष्कृष्य वीक्ष्य निरीक्ष्य च बद्धगुदोदरे प्रतिरोधकान् केशादीन् अन्नेन सह भक्षितान् अपमृज्य अपहृत्य दूरीकृत्य तच्च अन्त्रं सर्पिषा अभ्यज्य विमोक्षयेत् त्यजेत् यथास्थानं स्थापयेत् । अन्त्रसंमूर्च्छनेन यत्र बद्धगुदोदरं जातं तत्र यदन्त्रं मूर्च्छनात् उपलेपिभिराहारैः संमूढं जातं तच्चाप्यन्त्रं मलोपलेपमपमृज्य सर्पिषा अभ्यज्य अवमोक्षयेत् । ततः

१८३ । १८४ । इदं श्लोकद्वयं न पठ्यते ङ पुस्तके ।

सर्पिषाभ्यज्य केशादीनवसृज्य विमोचयेत् ।
मूर्च्छनात् यच्च संमूढमन्त्रं तच्चावमोचयेत् ॥१८४

छिद्रां यन्त्रस्य तु स्थूलैर्दंशयित्वा पिपीलिकैः ।
बहुशः संगृहीतानि ज्ञात्वा छित्वा पिपीलिकान् ।
प्रतियोगैः प्रवेश्यान्त्रं प्रेयैः सीव्येद् व्रणं ततः ॥१८५॥

पाटनकृतं कुक्षेः वहिर्व्रणं सीव्येत् । एतत् पश्चात् वक्ष्यमाणं छिद्रोदरे च कुक्षिं पाटयित्वा सच्छिद्रमन्त्रं निष्कृष्य वीक्ष्य च अन्नेन सह भक्षितान् शर्करादीन् अपमृज्य अन्त्रस्रावं विशोध्य च सच्छिद्रस्य तस्यान्त्रस्य तानि छिद्राणि समाधाय स्थूलैः पिपीलकैः बहुशः दंशयित्वा तानि छिद्राणि संगृहीतानि संहितानि ज्ञात्वा पिपीलिकान् छित्वा पिपीलिकानां शिरःसु तत्र लग्नेषु दंशनात् तेषां कायं छित्वा पिपीलिकाशिरोभिः संगृहीतच्छिद्रं तच्च अन्त्रं प्रतियोगैः प्रतियोगकरैः अस्त्रैः ऽन्तः प्रवेश्य यथास्थानं तद्व्रणं कुक्षेः वहिः पाटनकृतं प्रेयैः सूच्यस्त्रैः सीव्येत् । छिद्रान्त्रे बद्धगुदे चाप्युदरे । तदुक्तं सुश्रुतेनापि—बद्धगुदे परिस्राविणि च स्निग्धस्विन्नाभ्यक्तस्याधो नाभेर्वामतश्चतुरंगुलमपहाय रोमराज्या उदरं पाटयित्वा चतुरंगुलप्रमाणान्यन्त्राणि निष्कृष्य निरीक्ष्य बद्धगुदस्य अन्त्रप्रतिरोधकरमश्मानं वालं वाऽपोह्य मलजातं वा ततो मधुसर्पिर्भ्यामभ्यज्यान्त्राणि यथास्थानं स्थापयित्वा बाह्यं व्रणमुदरस्य सीव्येत् । परिस्राविण्यप्येवमेव शल्यमुद्धृत्यान्त्रस्रावान् संशोध्य सच्छिद्रमन्त्रं समाधाय कालपिपीलिकाभिर्दंशयेत् । दष्टे च तासां कायानपहरेत् । न शिरांसि । ततः पूर्ववत् सीव्येत् । सन्धानं च यथोक्तं कारयेत् । यष्टिमधुकमिश्रया कृष्णमृदावलिप्य बन्धेनोपचरेत् । इति (सु० चि० १४)। परिस्राविणि छिद्रोदरे ॥ १८२—१८५ ॥

---

१८५ । प्रतीपोगैः प्रवेश्यान्त्रं भ्रेयैः सीव्येद्व्रणं ततः इति ख ग छ पुस्तकेषु ।

तथा जातोदकं सर्वमुदरं व्यधयेद्भिषक्।
वामभागे त्वधो नाभेर्नाडीं दत्त्वा च गालयेत् ॥१८६॥
निःस्राव्य च विमृद्यैतद्वेष्टयेद्वाससोदरम्।
तथा वस्तिविरेकाद्यैर्म्लानं सर्वञ्च वेष्टयेत् ॥१८७॥
निःस्रुते लङ्घितः पेयामस्नेहलवणां पिबेत्।
अतः परं तु षण्मासान् क्षीरवृत्तिर्भवेन्नरः ॥१८८॥
त्रीन मासान् पयसा पेयां पिबेत् त्रींश्चापि भोजयेत्।
श्यामाकं कोरदूषं वा क्षीरेणाऽलवणं लघु ॥१८९॥
संवत्सरेणैव जयेत् प्रासञ्चैव जलोदरम्।
प्रयोगाणाञ्च सर्वेषामनु क्षीरं प्रयोजयेत् ॥१९०॥

तथेत्यादि। भिषक् जातोदकं सर्वमेव उदरं नाभेः अधः वामभागे तथा चतुरंगुलमपहाय व्यधयेत्। ततः तत्र नाडीं दत्त्वा दोषोदकं गालयेत्। उदरं विमृद्य निःस्राव्य निःशेषं स्रावयित्वा नाडीमुद्धृत्य एतदुदरं वाससा गाढतरं वेष्टयेत्। वाससोदरवेष्टनं न केवलमुदकस्रावणे। विरेचनाद्यैः दोषनिर्हरणेऽपि तत्कार्यमिति। आह—तथेति। तथा वस्तिविरेकाद्यैः दोषनिर्हरणात् म्लानं सर्वमेव उदरं वाससा वेष्टयेत्। तेन वायुः पुनर्नाध्मापयति। एतदुक्तं प्राक्—दोषे हृते परिम्लानं वेष्टयेद्‌ वाससोदरं। तथास्यानवकाशत्वाद्‌ वायुर्नाध्मापयेत् पुनः॥ इति॥ १८६। १८७॥

निःस्रुते इत्यादि। दोषोदके निःस्रुते सति लंघितः स चातुरः नरः। अस्नेहलवणां पेयां पिबेत्। अतः परं षट् मासान् क्षीरवृत्तिः भवेत् केवलं क्षीरं पीत्वा वर्तेत। त्रीन् मासान् पयसा पेयां पिबेत्। शेषान् त्रीन् मासांश्च क्षीरेण श्यामाकं कोरदूषं वा तदन्नं अल्पलवणं लघु भोजयेत्। एवं संवत्सरेण प्राप्तं जातं जलोदरं जयेत्। सुश्रुते

१८८। पेयां सस्नेहलवणां पिबेत् इति ङ पुस्तके।

दोषानुबन्धरक्षार्थं बलस्थैर्यार्थमेव च ।
प्रयोगापचिताङ्गानां हितं ह्युदरिणां पयः ॥१६१॥
सर्वधातुक्षयार्तानां देवानाममृतं यथा ॥१६२॥

तत्र श्लोकौ ।

हेतुं प्राग्रूपमष्टानां लिङ्गं व्याससमासतः ।
उपद्रवान् गरीयस्त्वं साध्यासाध्यत्वमेव च ॥१६३॥

चापि—निःस्रुते च दोषे गाढतरमाविकफौशेयकचर्मणान्यतमेन परिवेष्टयेदुदरं। तथा नाध्मापयति वायुः। षण्मासांश्च पयसा भोजयेत्। जांगलरसेन वा। तत्र त्रीन् मासान् अर्धोदकेन पयसा फलाम्लेन जांगलरसेन वा। अवपिष्टमासत्रयमन्नं लघु हितं वा सेवेत। एवं संवत्सरेणागदो भवति॥ इति (सु० चि० १४) ॥ १८८—१६० ॥

दोषानुबन्धेति। दोषानुबन्धरक्षार्थं दोषानुबन्धनिवृत्त्यर्थं। बलस्थैर्यार्थं बलार्थं धातूनां स्थैर्यार्थं च एव। उक्तानां सर्वेषां प्रयोगाणां अनु पश्चात् क्षीरं प्रयोजयेत्। क्षीरं बल्यं दोषानुबन्धहृत् धातूनां स्थैर्यकृच्च ॥ १६१ ॥

प्रयोगेति। कुतः? हि यतः प्रयोगैः विरेचनादिकर्मभिः अपचितांगानां क्षीणांगानां सर्वधातुक्षयार्तानां उदरिणां पयः क्षीरं देवानां अमृतं यथा अमृतमिव हितं ॥ १६२ ॥

अध्यायार्थसंग्रहं करोति। तत्र श्लोकावित्यादि। उदराणां अष्टानां। व्याससमासतः व्याससमासाभ्यां विस्तरसंक्षेपाभ्यां हेतुं। आदौ उदराणां सामान्यतो हेतुरुक्तः। एकैकशः पश्चादष्टानां। एवं समासतो लिंगं। प्राग्रूपं पूर्वरूपं क्षुन्नाश इत्यादि। अष्टानामित्यनेन संख्याया अपि संग्रहः कृतः। उपद्रवान् छर्द्यतीसारादीन्। गरीयस्त्वं उत्तरोत्तरकृच्छ्रतरत्वं वातात् पित्तात् कफात् प्लीह इत्यादिना

जाताजाताम्बुलिंगानि चिकित्साञ्चोक्तवानृषिः ।
समासव्यासनिर्देशैरुदराणां चिकित्सिते ॥१६४॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
उदरचिकित्सितं नाम त्रयोदशोऽध्यायः ॥१३॥

उक्तं । साध्यासाध्यत्वं साध्यत्वं असाध्यत्वं च । जाताजाताम्बुलिंगानि [illegible] सोदकयोर्लक्षणानि । तत्र जातोदकस्य लक्षणानि अनन्नाकांक्षेत्यादिना [illegible] वृद्धिरित्यादिना च उक्तानि । अजातशोथमरुणमित्यादिना च [illegible] लक्षणानि । समासव्यासनिर्देशैः प्राक् समासतः । व्यासतश्च पश्चात् । [illegible] च । ऋषिः भगवान् आत्रेयः पुनर्वसुः अस्मिन् उदराणां चिकित्सिते अध्याये वान् ॥ १६३ । १६४ ॥

इति वैद्यरत्नश्रीयोगीन्द्रनाथविद्याभूषणकृते चरकोपस्कारे चिकित्सितस्थाने त्रयोदशोऽध्यायः

## चतुर्दशोऽध्यायः ।

अथातोऽर्शसां चिकित्सितं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ॥ १ ॥

आसीनं मुनिमव्यग्रं कृतजाप्यं कृतक्षणम् ।
पृष्टवानर्शसां मुक्तिमग्निवेशः पुनर्वसुम् ॥ २ ॥

प्रकोपहेतुं संस्थानं स्थानं लिंगं चिकित्सितम् ।
साध्यासाध्यविभागञ्च तस्मै तन्मुनिरब्रवीत् ॥३॥

## चतुर्दशोऽध्यायः ।

उदरचिकित्सितानन्तरमर्शसां चिकित्सितमारभते—अथात इति । सर्वं पूर्ववद् व्याख्येयं । अस्माद्ध्यायादारभ्य आ परिसमाप्तेः दृढ़वलः प्रतिसंस्कर्त्ता इति श्रूयते । वचनं च—अखण्डार्थं दृढ़वलो जातः पंचनदे पुरे । कृत्वा वहुभ्यः शास्त्रेभ्यो विशेषाच्च वलोच्चयं ॥ सप्तदशौषधाध्यायसिद्धिकल्पैरपूरयत् । इति (च० सि० १२)। सत्यप्येवं दृढ़वलप्रतिसंस्कारे यदस्य कृत्स्नतन्त्रस्य चरक-संहितेति नाम तत् चरकप्रारब्धतन्त्रस्यैव असंपूर्णस्य दृढ़वलेन शेषैः पूरणात् । सप्तदशौषधाध्यायसिद्धिकल्पैरपूरयत् । इति ॥ १ ॥

असीनमिति । अग्निवेशः कृतजाप्यं कृतमन्त्रादिजपं । ततः अव्यग्रं स्वकृत्य-करणात् स्वस्थं यथा तथा आसीनं उपविष्टं । कृतक्षणं कृतावसरं । गुरोः कृत-कृत्यस्यासीनतया शिष्याणामयमेव प्रश्नावसरः । मुनिं पुनर्वसुं भगवन्तमात्रेयं अर्शसां मुक्तिं प्रशमं । तदुपायमित्यर्थः । पृष्टवान् । अरिवत् विशसन्तीत्यर्शां-सीति (अ० सं० नि० ७)। पृषोदरादित्वात् साधु । अरिवत् शत्रुवत् विशंस-नात् हिंसनात् अर्शांसीत्युच्यन्ते ॥ २ ॥

---

३ । साध्यासाध्यविभागाश्च इति ख ग पुस्तकयोः ।

इह खल्वग्निवेश द्विविधान्यर्शांसि। सहजानि कानिचित्। कानिचिज्जातस्योत्तरकालजानि। तत्र बीजं गुदवलिबीजोपतप्तमायतनमर्शसां सहजानाम्। तत्र द्विविधो बीजोपतप्तौ हेतुः। मातापित्रोरपचारः। पूर्वकृतञ्च कर्म। तथान्येषामपि सहजानां विकाराणाम्। तत्र सहजानि सह जातानि शरीरेणा र्शांसीत्यधिमांसविकाराः॥ ४॥

प्रकोपहेतुमिति। तत् तस्मात् एवं पृष्टत्वात्। मुनिर्भगवानात्रेयः पुनर्वसुः। अर्शसां। प्रकोपहेतुं निदानं। संस्थानमाकृतिं। स्थानमुत्पत्तिस्थानं। लिंगं लक्षणं। पूर्वरूपं चापि। चिकित्सितं। साध्यासाध्यविभागः। साध्यत्वेन असाध्यत्वेन च विभागः। तं च तस्मै अग्निवेशाय अब्रवीत्॥ ३॥

तत्रादौ सहजजातोत्तरकालजत्वेनार्शांसि द्विधा विभजते—इहेत्यादि। अर्शांसि समासतो द्विविधानि। सहजानि जातोत्तरकालजानि च। सहजानि गर्भशरीरेण सह जातानि। जातस्य उत्पन्नस्य उत्तरकालजानि पश्चाज्जातानि। तत्र सहजानां हेतुमाह—तत्रेति। गुदवलिबीजं गुदवल्यारम्भकं बीजं बीजभागः उपतप्तं यस्मिन् तत् तथाविधं बीजं शुक्रार्त्तवरूपं सहजानामर्शसां आयतनं हेतुः। गुदवलिबीजोपतप्तिः सहजानामर्शसां हेतुः। बीजोपतप्तौ पुनः द्विविधो हेतुः। एकः मातापित्रोरपचारः अनुचिताहारविहाररूपः। अन्यः पूर्वकृतं कर्म दैवाख्यं। सहजानामर्शसामिव अन्येषां सहजानां विकाराणामपि तथा आयतनं उपतप्तबीजं। बीजोपतप्तौ च हेतुः पित्रोरपचारः पूर्वकृतं च कर्म। सहजं व्याकरोति—तत्रेति। शरीरेण गर्भशरीरेण सह जातानि इति सहजानि। शरीरे जायमाने ये रोगा जायन्ते ते सहजा उच्यन्ते। अर्शांसि इति अधिमांसविकाराः। अधिकं मांसं अधिमांसं। तदाख्याः विकाराः। अर्शांसि समान्यतः अधिमांसविकारेषु अन्तर्भवन्ति॥ ४॥

४। उत्तरकालजानि तेषां क्षेत्रं गुदवलिं इति च पुस्तके।

सर्वेषाञ्चार्शसां क्षेत्रं गुदस्यार्धपञ्चमांगुलावकाशे त्रिभागान्तरास्तिस्रो गुदवलयः। केचित् तु भूयांसमेव देशमुपदिशन्त्यर्शसामपत्यपथशिश्नगलतालुमुखनासाकर्णाक्षिवर्त्मानि त्वक् च। तदस्त्यधिमांसदेशतया ॥५॥

गुदवलिजानि त्वर्शांसीति संज्ञा तन्त्रेऽस्मिन्। सर्वेषाञ्चार्शसामधिष्ठानं मेदो मांसं त्वक् च॥ ६॥

सर्वेषामर्शसां स्थानमाह—सर्वेषामिति। गुदस्य अर्धं पंचममंगुलं यस्मिन् सः अर्धपंचमांगुलः। चत्वारि अंगुलानि पंचमं चार्धं तेन सार्धचतुरंगुलमितः। तस्मिन् अवकाशे स्थाने। त्रिभागः तृतीयो भागः अन्तरं व्यवधानं यासां ताः त्रिभागान्तराः। सार्धचतुरंगुलस्य तृतीयो भागः सार्धमंगुलं। तेन सार्धांगुलमिताः। तिस्रः वलयः। सुश्रुतेनाप्युक्तं—तत्र स्थूलान्त्रप्रतिबद्धमर्धपञ्चांगुलं गुदमाहुः। तस्मिन् वलयस्तिस्रः। अध्यर्धांगुलसम्मिताः प्रवाहणी विसर्जनी संवरणी चेति। चतुरंगुलमिताः सर्वास्तिर्यगेकांगुलोच्छ्रिताः। इति ( सु० नि० २ )। तास्तिस्रो वलयः सर्वेषामर्शसां सहजानां जातोत्तरकालजानां च क्षेत्रं उत्पत्तिस्थानं। केचित् तन्त्रान्तरीयाः पुनः ततोऽपि भूयांसमधिकतरं देशं। तद्यथा—अपत्यपथः योनिः। शिश्नः। गलः। तालु। मुखं। नासे। कर्णौ। अक्षिणी च। तेषां वर्त्मानि। तथा त्वक् च। इति भूयांसं देशं अर्शसां क्षेत्रमुपदिशन्ति। तेषां मते अपत्यपथादिजातानामपि अर्शःसंज्ञा। सत्यं। तत् पुनः अधिमांसदेशतया अस्ति। तत् सर्वं इह अधिमांसविकाराणां स्थानं। न तु अर्शसां। अस्मिन् तन्त्रे तु गुदवलिजानि अर्शांसीति संज्ञा। अस्मन्मते गुदवलिजानामेव अर्शःसंज्ञा। अपत्यपथादिजातास्तु इह अधिमांसविकारा इत्युच्यन्ते। सर्वेषामर्शसां अधिष्ठानं आश्रयः मेदः मांसं त्वक् च ॥ ५।६ ॥

५। सर्वेषामर्शसां गुदस्यार्धपंचांगुलावकाशे त्रिभागान्तरास्तिस्रो गुदवलयः क्षेत्रमिति देशः। इति स ग घ ङ पुस्तकेषु।

तत्र सहजान्यर्शांसि कानिचिदणूनि। कानिचिन्महान्ति। कानिचिद्दीर्घाणि। कानिचिद्ध्रस्वानि। कानिचिद्वृत्तानि। कानिचिद्विषमविसृतानि। कानिचिदन्तःकुटिलानि। कानिचिद्बहिःकुटिलानि। कानिचिज्जटिलानि। कानिचिदन्तर्मुखाणि। यथास्वं दोषानुबन्धवर्णानि ॥ ७ ॥

तैरभिभूतो जन्मप्रभृति भवत्यतिकृशो विवर्णः क्षामो दीनः प्रचुरविबद्धवातमूत्रपुरीषः शर्कराश्मरीमान्। तथाऽनियतविबद्धमुक्तपक्वामशुष्कभिन्नवर्चा अन्तरान्तरा श्वेतपाण्डुहरितपीतरक्ताऽरुणद्रवसान्द्रपिच्छिलकुणपगन्ध्यामपुरीषोपवेशी नाभिवस्तिवंक्षणोद्देशे प्रचुरपरिकर्त्तिकान्वितः सगुदशूलप्रवाहिकापरिहर्ष-

सहजानां संस्थानमाह—तत्रेति। अणूनि सूक्ष्माणि। महान्ति स्थूलानि। दीर्घाणि आयतानि। ह्रस्वानि क्षुद्राणि। वृत्तानि वर्तुलानि। विषमविसृतानि विषमविस्तृतानि। अन्तःकुटिलानि वक्राणि। जटिलानि त्वङ्मांसप्रतानैर्जटारूपैः युक्तानि। यथास्वं दोषानुबन्धवर्णानि सर्वेषां त्रिदोषजत्वात् यद्यद्दोषस्योल्वणतया अनुबन्धः तत्तदनुरूपवर्णानि। यथा वायोरनुबन्धे श्यावारुणवर्णत्वं। एवं पित्तश्लेष्मणोरूहनीयं ॥ ७ ॥

सहजानां लिंगमाह—तैरभिभूत इत्यादि। तैः सहजैरर्शोभिः अभिभूतः पुमान् जन्मप्रभृति अतिकृश इत्यादि परमालसश्च इत्यन्त एवंरूपः भवति। क्षामः क्षीणः। दीनः कातरः। प्रचुराणि बहूनि विबद्धानि च वातमूत्रपुरीषाणि यस्य सः। शर्कराश्मरीमान् शर्करावान् अश्मरीमांश्च। अश्मरीशर्करयोर्भेदः त्रिमर्मीय-

७। कानिचिदन्तर्मुखाणि कानिचित् तदुन्मुखानि कानिचिद्वक्रमुखानि यथास्वं दोषानुबन्धवर्णानि इति ख ग पुस्तकयोः।

प्रमोहप्रसक्तविष्टम्भाटोपान्त्रकूजोदावर्तहृदयेन्द्रियोपलेपः प्रचुर-
विबद्धतिक्ताम्लोद्गारः सुदुर्बलो दुर्बलाग्निरल्पशुक्रः क्रोधनो
दुःखोपचारशीलः कासश्वासतमकतृष्णाहृल्लासच्छर्द्यरोचकावि-
पाकपीनसक्षवथुपरीतस्तैमिरिकः शिरःशूली क्षामभिन्नसंसक्त-
जर्जरस्वरः कर्णरोगी शूनपाणिपादवदनाक्षिकूटः सज्वरः
साङ्गमर्दः सर्वपर्वास्थिशूली चान्तरान्तरा पार्श्वकुक्षिबस्तिहृदय-
पृष्ठत्रिकग्रहोपतप्तः प्रध्यानपरः परमालसश्चेति । जन्मप्रभृत्यस्य

चिकित्सिते पवनाश्मरीमारुतभिन्नमूर्तिः स्याच्छर्करामूत्रपथात् क्षरन्तीत्यादिना वक्ष्यमाणः । अनियतं यथा तथा विबद्धं मुक्तं पक्वं आमं शुष्कं भिन्नं च वर्चः यस्य सः तथोक्तः । अनियतं न नियतं । कदाचित् विबद्धं । कदाचित् मुक्तं । एवं अनियतत्वं पक्वामयोः शुष्कभिन्नयोश्च बोद्धव्यं । अन्तरा अन्तरा मध्ये मध्ये । न तु सर्वदा । श्वेतं । पाण्डु । हरितं । पीतं । रक्तं । अरुणं च । श्वेत-पाण्डुहरिताद्यन्यतमवर्णं । द्रवं । सान्द्रं । पिच्छिलं । कुणपगन्धि शवगन्धि । आमं च । तत् तथाविधं पुरीषं उपवेष्टुं विस्रष्टुं त्यक्तुं शीलमस्य सः । इह विष्-धातुः । नाभिवस्तिवंक्षणोद्देशे नाभौ वस्तौ वंक्षणयोश्च प्रचुरया परिकर्तिकया कर्त्तनवद् वेदनया अन्वितः । सह गुदशूलं प्रवाहिका परिहर्षः प्रहर्षः प्रमोहश्च तैः वर्तमानः स तथोक्तः । प्रसक्ताः सततं जायमानाः । विष्टम्भः । आटोपः सवेद-नगुडगुडाशब्दः । आध्मानं । अन्त्रकूजः अन्त्रकूजनं । उदावर्त्तः । हृदयस्य इन्द्रियाणां च । उपलेप इव उपलेपः । स च । ते यस्य सः । प्रचुरो विबद्धश्च तिक्तः अम्लश्च उद्गारो यस्य सः । कासः । श्वासः । तमकः श्वासभेदः । तृष्णा । हृल्लासः । छर्दिः । अरोचकः । अविपाकः । पीनसः । क्षवथुश्च । तैः परीतो युक्तः । तैमिरिकः । तिमिरं नेत्रव्याधिभेदः । क्षामः क्षीणः । भिन्नः । संसक्तः ।

हि गुदमार्गोपरोधाद्वायुरपानः प्रत्यारोहन् समानव्या[illegible] दानान् पित्तश्लेष्माणौ च प्रकोपयति। एते सर्व एव प्रकु[illegible] पञ्च वायवः पित्तश्लेष्माणौ चार्शसमभिद्रवन्तस्तान् [illegible] जनयन्ति। इत्युक्तानि सहजान्यर्शांसि ॥८॥

जर्जरश्च। स्वरो यस्य सः। शूनं श्वयथुमत्। पाणी पादौ अक्षिकूटौ च। यस्य सः। सर्वेषु पर्वास्थिषु शूलो शूलवान्। पार्श्वेति। ग्रहशब्दः [illegible] कान्तैः प्रत्येकमभिसम्बध्यते। पार्श्वादिग्रहैः उपतप्तः। प्रध्यानपरः [illegible] शीलः। परमालसश्च। एवंरूपो भवति। जन्मप्रभृत्यस्येति। अस्य सहजैरर्शो भिः परीतस्य पुंसः जन्मप्रभृति अपानो वायुः गुदमार्गोपरोधात् प्रत्यारोहन् [illegible] गच्छन् विलोममार्गप्रवृत्तः। अतः प्रकुपितः समानव्यानप्राणोदानान् अन्यान् [illegible] तथा पित्तश्लेष्माणौ च प्रकोपयति। एते सर्वे एव पंच वायवः प्रकुपिताः तथा पित्त श्लेष्माणौ च प्रकुपितौ ते च सर्वे अर्शसं पुमांसं अभिद्रवन्तः तान् [illegible] जनयन्ति। पंचवातप्रकोपात् सर्वे वातविकाराः प्रायेण भवन्ति। पित्तश्लेष्मणोः प्रकोपात् तत्तद्विकाराश्चापि। उपसंहरति—इत्युक्तानीति ॥ ८ ॥

---

८। अर्शसमभिद्रवन्त एव हि तान् विकाराननुजनयन्ति। विशेषतस्तु प्राणप्रतिपत्तावधिमांसानि श्रवणनयनघ्राणोपूर्ध्वस्रोतःसु सम्भवन्ति। उदानविप्रतिपत्तौ तु गलशोथगलशुण्डिकोप[illegible] ह्विकास्यपिडकापिशितचर्मावितांसकण्ठजविकारादयः गलमुखविकाराः। समानविप्रतिपत्तावष्ठीलिकायकृत्प्लीहगुल्मजठरप्रभृतयोऽन्तर्भागजा विकाराः सलिङ्गानुमेयाः। व्यानविप्रतिपत्तौ तु गण्डगुण्डार्शः शालूकारुंषिकादद्रुकुष्ठकिटिमालजीचर्मकीलमांसोत्सेधाः सर्वशरीरावयवेषु। अपानविप्रतिपत्तौ तु वस्तिशिश्नवृषणगुदस्रोतोनिरोधो भगन्दराश्मरीशर्करामूत्रकृच्छ्रोपदंशादयश्चाधो नाभिगता विकारा इति। एवमेते पंच वायवः विप्रतिपत्ता यमभिद्रवन्तीति विकारास्ते खलु उत्सेधसिरासविपाकनाविशश्च चिकित्सक[illegible]तानि अन्तर्मध्यजातानि च मांसाभिसंश्रयाणि वस्तिनाभिद्रवमूलान्यर्शांसि विकारान् प्रजनयन्ति इत्युक्तानि सहजान्यर्शांसीति। अधिकः पाठः ख ग पुस्तकयोः।

अत ऊर्ध्वं जातस्योत्तरकालजातान्यर्शांसि व्याख्यास्यामः। गुरुमधुरशीताभिष्यन्दिविदाहिविरुद्धाजीर्णप्रमिताशनासात्म्यभोजनाद् गव्यमात्स्यकौक्कुटवाराहमाहिषाजाविकपिशितभक्षणात् कृशशुष्कपूतिमांसपैष्टिकपरमान्नक्षीरदधिमण्डकतिलगुडविकृतिसेवनान्माषयूषेक्षुरसपिण्याकपिण्डालुकशुष्कशाकशुक्तलशुनकिलाटतक्रपिण्डकबिसमृणालशालूकक्रौञ्चादनकशेरुकशृङ्गाटकतरूटविरूढनवशूकशमीधान्याममूलकोपयोगाद् गुरुफलशाकरागहरितकमर्दकवसाशिरस्पदपर्युषितपूतिशीतसङ्कीर्णान्नाभ्यवहारान्मन्दकातिक्रान्तमद्यपानाद् व्यापन्नगुरुसलिलपानादतिस्नेहपानादसंशोधनाद्बस्तिकर्मविभ्रमाद्-

सहजानां हेत्वादिकमुक्तं। संप्रति जातोत्तरकालजानां तद् विवरीतुं प्रतीजानीते—अत ऊर्ध्वमिति। व्याख्यास्यामः हेतुलिंगादिभिः। तत्रादौ जातोत्तरकालजानां समान्यतो निदानपूर्वकसम्प्राप्तिमाह—गुरुमधुरेत्यादि। गुरु। मधुरं। शीतं। अभिष्यन्दि अभिष्यन्दकरं दोषधातुमलादीनां क्लेदजनकं। विदाहि विदाहकरं। विरुद्धं यथा पयसा मत्स्या विरुध्यन्ते। तथाविधं अन्नपानं। अजीर्णप्रमिताशनं अजीर्णे अशनं। प्रमितमशनं प्रमिताशनं। प्रमिताशनं एकरसभोजनं च। असात्म्यं यद् अन्नपानं तच्च। तेषां भोजनं। तस्मात्। गव्यं। मात्स्यं। कौक्कुटं। वाराहं। माहिषं। आजं छागं। अविर्मेषः। तद्भवमाविकं च। पिशितं मांसं। तद्भक्षणात्। कृशं शुष्कं कृशशुष्कशरीरस्य जन्तोः मांसं। पूति च मांसं। पैष्टिकं पिष्टभवं पिष्टकं। परमान्नं। क्षीरं। दधि। मण्डकं दधिमण्डकं। तिलगुडयोः विकृतिश्च। तासां सेवनात्। माषयूषः। इक्षुरसः। पिण्याकः तिलकल्कः। पिण्डालुः वर्तुलाकारालुभेदः। शुष्कशाकं। शुक्तं सन्धानभेदः। लशुनः। किलाटः नष्टक्षीरपिण्डः। तक्रपिण्डकः तक्रकूर्चिका। तक्रस्य घनभागो वा। बिसं स्थूलं। मृणालं सूक्ष्मं। शालूकं पद्मादीनां कन्दः।

व्यायामादव्यवायाद् दिवास्वप्नात् सुखशयनासनस्थानसेवनाच्चोपहताग्नेर्मलोपचयो भवत्यतिमात्रं। तथोत्कटविषमकठिनासनसेवनादुद्भ्रान्तयानोष्ट्रयानादतिव्यवायाद्वस्तिनेत्रासम्यक्प्रणिधानाद् गुदक्षणनादभीक्ष्णं शीताम्बुसंस्पर्शाच्चेललोष्टतृणादिघर्षणात् प्रततातिनिर्वाहणाद्वातमूत्रपुरीषवेगोदीरणात् समुदीर्णवेगविनिग्रहात् स्त्रीणाञ्चामगर्भभ्रंशाद् गर्भोत्पीड़नाद्विषमप्रसूतिभिश्च प्रकुपितो वायुरपानस्तं मलमुपचितमधोगमासाद्य गुदवलिष्वाधत्ते। ततस्तु तास्वर्शांसि प्रादुर्भवन्ति ॥६॥

क्रौञ्चादनः घेंचुलिका। कशेरुकः केशुर इति वंगेषु ख्यातः। शृंगाटकः पानीयफलं। तक्टं कल्हारकन्दः। विरूढं जातांकुरं नवं च शमाधान्यं। आममूलकञ्च। तेषामुपयोगात् भक्षणात्। गुरू फलशाकौ। रागः रागषाडवः। हरितानि आर्द्रकादीनि। करमर्दः करम्चा इति वंगेषु ख्यातः। वसा वपा। मांसार्थं शिरःपदं। पर्युषितं। पूति। शीतलं। संकीर्णं नानाद्रव्यमिलितं मिश्रप्रकृतिकं च। यत् अन्नं। तच्च। तेषामभ्यवहारादाहारात्। मन्दकं मन्दं जातं। मन्दकं दधि वा। अतिक्रान्तं व्यापन्नं च मद्यं। तस्य पानात्। व्यापन्नं गुरु च सलिलं। तस्य पानात्। वस्तिकर्मणः विभ्रमात् अयथाचरणात्। सुखं सुखकरं। शयनं। आसनं स्थानं च। तेषां सेवनात्। उपहताग्नेः पुंसः मलोपचयः अतिमात्रं भवति। उत्कटं विषमं निम्नोन्नतं कठिनं च। आसनं। तस्य सेवनात्। उद्भ्रान्तं विक्षोभकरं यानं। उष्ट्रश्च। तदादिभिः यानात् गमनात्। वस्तिनेत्रस्य असम्यक् प्राणिधानाद् वस्तिशलाकायां असम्यग् योजनात्। गुदे क्षणनात् क्षतात्। चेलं वस्त्रं। लोष्टं। तृणं च। तदादिभिः गुदस्य घर्षणात्। प्रततं सततं अति च निर्वाहणं प्रवाहणं कुन्थनं। तस्मात्। वातमूत्रपुरीषवेगानामनुदीर्णानां उदीरणात्। समुदीर्णानां वेगानां वातादिवेगानां च विनिग्रहात् निरो-

सर्षपमसूरमाषमुद्गमुकुष्टकयवकलायपिण्डटिण्टिकेर-ककेबुतिन्दुककाकणन्तिकाकर्कन्धूबिम्बीकदरकरीरोदुम्बरखर्जू-रजाम्बवगोस्तनांगुष्ठकशेरुकशृङ्गाटकदक्षशिखिशुकतुण्डजिह्वाप-द्ममुकुलकर्णिकासंस्थानानि सामान्याद्वातपित्तकफप्रबलानि ॥ १० ॥

धात् । विशेषतश्च स्त्रीणां आमगर्भस्य अपूर्णगर्भस्य भ्रंशात् पातात् । गर्भस्य गर्भेण प्रवृद्धेन वा उत्पीडनं । तस्मात् । तथा विषमप्रसूतिभिः अकाले प्रसवैः । एवमादिभिः प्रकोपणैः प्रकुपितः अपानः वायुः उपचितं प्रागुक्तैर्हेतुभिः मलं दोषं अधोगं अधोगतं आसाद्य प्राप्य । तं संहृत्य गुदवलिषु आधत्ते । ततः तासु गुदवलिषु वाताहि-तमलतया अभिष्यण्णासु अर्शांसि प्रादुर्भवन्ति जायन्ते । इति जातोत्तरकालजानां सामान्यतो हेतुः सम्प्राप्तिश्चोक्ता । तेषां वातिकादिभेदभिन्नानां पुनर्विशेषतो हेतुः पश्चाद् वक्ष्यते ॥ ६ ॥

तेषां सामान्यतः संस्थानमाह—सर्षपेत्यादि । वातपित्तकफप्रबलानि वाता-द्युल्वणानि अर्शांसि जातोत्तरकालजानि सामान्यतः । सर्षपः । मसूरः । माषः । मुद्गः । मुकुष्टकः वनमुद्गः । यवः । कलायः । पिण्डिः पिण्डाकारः टिण्टि-केरकः मरुजफलविशेषः । केबुः केबुकः । तिन्दुकः । काकणन्तिका काकदन्तिका । कर्कन्धूः बदरं । बिम्बी ओष्ठोपमफला । कदरः श्वेतखादिरः । वर्बूरको वा । तत्फलं । करीरः वंशांकुरः । उदुम्बरः । खर्जूरः । जाम्बवं जम्बूफलं । गोस्तनः द्राक्षा । अंगुष्ठः । कशेरुकः केशुर इति ख्यातः । शृंगाटकः पानीय-फलं । दक्षः कुक्कुटः । शिखी मयूरः । शुकः प्रसिद्धः । दक्षशिखिशुकानां तुंडं मुखं । जिह्वा च । पद्मस्य मुकुलं । कर्णिका च । तत्संस्थानानि सर्षपमसूराद्याकृतीनि भवन्ति ॥ १० ॥

तेषामयं विशेषः। शुष्कम्लानकठिनपरुषरूक्षश्यावानि तीक्ष्णाग्राणि वक्राणि स्फुटितमुखानि विषमविसृतानि शूलाक्षेपभेदस्फुरणचिमिचिमासंहर्षपरीतानि स्निग्धोष्णोपशयानि प्रवाहिकाध्मानशिश्नवृषणवस्तिवङ्क्षणहृद्ग्रहाङ्गमर्दहृद्द्रवप्रवलानि प्रततविबद्धवातमूत्रवर्चांस्यूरुकटीपृष्ठत्रिकपार्श्वकुक्षिवस्तिशूलशिरोऽभितापक्षवथूद्गारप्रतिश्यायकासोदावर्तायामशोषशोथमूर्च्छारोचकमुखवैरस्यतैमिर्यकण्डूनासाकर्णशङ्खशूलस्वरोपघातकराणि श्यावारुणपरुषनखनयनवदनत्वङ्मूत्रपुरीषस्य च पुंसो वातोल्वणान्यर्शांसीति विद्यात् ॥११॥

जातोत्तरकालजानां सामान्यतो हेत्वादिकमुक्त्वा सम्प्रति तेषां वातिकादिभेदभिन्नानां विशिष्य तदभिधातुमाह—तेषामयं विशेष इति। तत्रादौ वातोल्वणानां लिङ्गमाह—शुष्कम्लानेत्यादि। शुष्काणि म्लानानि कठिनानि परुषाणि रूक्षाणि श्यावानि च तानि। तीक्ष्णं अग्रं येषां तानि। स्फुटितं मुखं येषां तानि। शूलं। आक्षेपः। भेदः भेदनवद् व्यथा। स्फुरणं स्पन्दनं। चिमिचिमः सर्षपराजिकाकल्कलिप्तस्येव वेदनाभेदः। संहर्षश्च। तैः परीतानि युक्तानि। स्निग्धेन उष्णेन च उपशयो येषां। वायोः रूक्षशीतस्य स्निग्धोष्णाभ्यां प्रशमात्। तानि। प्रवाहिका कुंथनं। आध्मानं। शिश्नादीनां ग्रहः। अंगमर्दः। हृदयस्य द्रवः द्रुतत्वं च। ते प्रवलाः येषु तानि। प्रततं सततं विवद्धानि वातमूत्रवर्चांसि येषु तानि तथोक्तानि। ऊर्वादिषु शूलं। शिरसः अभितापः। क्षवथुः। उद्गारः। प्रतिश्यायः। कासः। उदावर्तः। आयामः वातव्याधिभेदः। शोषः। शोथः।

---

११। प्रवाहिकाध्मानस्निग्धवृषणवस्ति इति कग पुस्तकयोः।

११। मुखवैरस्यतैमिर्यकण्ड इति ग पुस्तके।

भवतश्चात्र ।

कषायकटुतिक्तानि रुक्षशीतलघूनि च ।
प्रमिताल्पाशनं तीक्ष्णमद्यमैथुनसेवनम् ॥१२॥
लङ्घनं देशकालौ च शीतौ व्यायामकर्म च ।
शोको वातातपस्पर्शो हेतुर्वातार्शसां मतः ॥१३॥

मृदुशिथिलसुकुमाराण्यस्पर्शसहानि रक्तपीतनीलकृष्णानि स्वेदोपक्लेदबहुलानि विस्रगन्धीनि तनुपीतरक्तस्रावीणि रुधिर-वहानि दाहकण्डूशूलनिस्तोदपाकवन्ति शीतोपशयानि संभिन्न-

मूर्च्छा। अरोचकः। मुखस्य वैरस्यं विरसता। तिमिर एव तैमिर्यं नेत्रव्याधि-भेदः। कण्डूः। नखादिषु शूलं। स्वरस्य उपघातश्च। तत्कराणि। श्यावा-रुणानि श्यावारुणान्यतरवर्णानि। वायोः श्यावारुणवर्णकारित्वात्। परुषाणि च। नखाः। नयने। वदनं। त्वक्। मूत्रं। पुरीषञ्च। तानि येषु तानि। एवं-विधानि अर्शांसि। वात उल्वणः प्रबलो येषु। अनेन इतरयोरपि जनकत्वं ख्याप्यते। एवमुल्वणपदेन सर्वत्र बोद्धव्यं। तानि वातोल्वणानि विद्यात् जानीयात्॥ ११ ॥

वातोल्वणानां लिंगमुक्त्वा हेतुमाह—भवतश्चात्रेति। कषायाणि। कटूनि। तिक्तानि च। तानि। रूक्षाणि। शीतानि। लघूनि च। तानि। तथाविधानि अन्नपानानि। प्रमितं अल्पं च अशनं। प्रमिताशनं एकरसभोजनं। तीक्ष्णस्य मद्यस्य मैथुनस्य च सेवनं। लंघनं। शीतौ देशकालौ। व्यायामकर्म। शोकः। वातस्य आतपस्य च स्पर्शश्च। इति वातार्शसां हेतुः मतः॥ १२।१३ ॥

पित्तोल्वणानां लिङ्गमाह—मृदुशिथिलेत्यादि। मृदूनि कोमलानि। शिथि-लानि सुकुमाराणि। तानि। अस्पर्शसहानि स्पर्शं न सहन्ते। रक्तपीतनील-

पीतहरितवर्चांसि पीतविस्रगन्धप्रचुरविण्मूत्राणि ... तमकसंमोहभोजनद्वेषकराणि पीतनखनयनत्वङ्मूत्रपुरी पित्तोल्वणान्यर्शांसीति विद्यात् ॥१४॥

भवतश्चात्र।

कट्वम्ललवणक्षारव्यायामाग्न्यातपप्रभाः।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥१५॥
विदाहि तीक्ष्णमुष्णञ्च सर्वं पानान्नभेषजम्।
पित्तोल्वणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥१६॥

कृष्णानि रक्ताद्यन्यतमवर्णानि। स्वेदः उपक्लेदश्च तौ बहुलौ येषु तानि। ... गन्धीनि आमगन्धीनि। तनु अवनं पीतं च रक्तं स्रोतुं निःसारयितुं शीलं ये तानि। रुधिरवहानि रक्तस्रावीणि। दाहः। कण्डूः। शूलं। निस्तोदः सूची व्यधनवद् व्यथा। पाकश्च। तद्वन्ति। शीतेन उपशयो येषां। पित्तस्योष्णत्वात् सम्भिन्नानि पीतानि हरितानि वा वर्चांसि येषु तानि। पीतं विस्रगन्धं प्रचुरं च विण्मूत्रं येषु तानि। पिपासा। ज्वरः। तमकः श्वासभेदः। संमोहः। भोजनद्वेषः अरुचिश्च। तत्कराणि। पीतनखनयनत्वङ्मूत्रपुरीषस्य पुंसः अर्शांसि पित्तोल्वणानि विद्यात्। नखादीनां पीतत्वमपि पित्तोल्वणेषु लिंगं ॥ १४ ॥

पित्तोल्वणानां हेतुमाह—भवतश्चात्रेति। कटुः। अम्लः। लवणः। क्षारः। व्यायामः। अग्न्यातपयोः प्रभा च ताः। अशिशिरौ उष्णौ देशकालौ। असूयनं असूया। विदाहि विदाहकरं। तीक्ष्णं। उष्णं उष्णस्पर्शमुष्णवीर्यं च। सर्वं पानान्नं अन्नपानं भेषजं च। इति पित्तोल्वणानां अर्शसां प्रकोपे हेतुः विज्ञेयः ॥ १५।१६ ॥

तत्र यानि प्रमाणवन्त्युपचितानि श्लक्ष्णानि स्पर्शसहानि स्निग्धश्वेतपाण्डुपिच्छिलानि स्तब्धानि गुरूणि स्तिमितानि सुप्तसुप्तानि स्थिरश्वयथूनि कण्डूबहुलानि बहुप्रततपिञ्जरश्वेतरक्तशुक्लपिच्छास्रावीणि गुरुपिच्छिलश्वेतमूत्रपुरीषाणि रूक्षोष्णोपशयानि प्रवाहिकातिमात्रोत्थानवङ्क्षणानाहवन्ति परिकर्त्तिकाहृल्लासनिष्ठीवनकासारोचकप्रतिश्यायगौरवच्छर्दिमूत्रकृच्छ्रशोषशोथपाण्डुरोगशीतज्वराश्मरीशर्कराहृदयेन्द्रियोपलेपास्यमाधुर्यप्रमेहकराणि तथा चिरकालानुबन्धीन्यतिमात्रमग्निमार्दवक्लैब्यकराण्यामविकारप्रबलानि शुक्लनखनयनवदनत्वङ्मूत्रपुरीषस्य श्लेष्मोल्वणान्यर्शांसीति विद्यात् ॥१७॥

श्लेष्मोल्वणानां लिंगमाह—तत्र यानीत्यादि। तत्र तेषु मध्ये यानि अर्शांसि प्रमाणवन्ति महाप्रमाणानि बृहन्ति। स्पर्शस्य सहानि स्पर्शसहानि। स्निग्धानि। श्वेतानि। पाण्डूनि। पिच्छिलानि च। तानि। सुप्तसुप्तानि अतीवसुप्तानि स्पर्शज्ञानरहितानि। सुप्तिः स्पर्शाज्ञता। स्थिराः निश्चलाः पीडिता नाधो गच्छन्ति श्वयथवो येषु तानि। बहु प्रततं सततं च यथा तथा पिंजरश्वेतरक्तशुक्लां पिंजराद्यन्यतमवर्णां पिच्छां शाम्ललिनिर्यासवत् स्रोतुं शीलमेषां तानि। गुरूणि पिच्छिलानि श्वेतानि च मूत्रपुरीषाणि येषु तानि। रूक्षेण उष्णेन च उपशयो येषां। श्लेष्मणः स्निग्धशीतस्य रूक्षोष्णाभ्यां उपशमात्। प्रवाहिका कुन्थनं। अतिमात्रं पुनः पुनः उत्थानं वर्चस्त्यागः स्तोकस्तोकातिसरणं। वंक्षणयोरानाहश्च। तद्वन्ति। परिकर्त्तिका गुदे कर्तनवत् पीड़ा। हृल्लासः। निष्ठीवनं। कासः। अरोचकः। प्रतिश्यायः। गौरवं। छर्द्दिः। मूत्रकृच्छ्रः। शोषः। शोथः। पाण्डुरोगः।

---

१७। वस्तिनाभिपरिकर्त्तिका इति ख ग पुस्तकयोः।

१७। छद्वस्तिशूलं इति ख ग पुस्तकयोः। गुदस्य शोफश्च इति ख ग पुस्तकयोः।

भवन्त्यः चात्र ॥

मधुरस्निग्धशीतानि लवणाम्लगुरूणि च ।
अव्यायामो दिवास्वप्नः शय्यासनसुखे रतिः ॥१८॥
प्राग्वातसेवा शीतौ च देशकालावचिन्तनम् ।
श्लैष्मिकाणां समुद्दिष्टमेतत् कारणमर्शसाम् ॥१९॥
हेतुलक्षणसंसर्गाद्विद्याद् द्वन्द्वोल्बणानि च ।
सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणैः समम् ॥२०॥

शीतज्वरः । अश्मरी । शर्करा । हृदयस्य इन्द्रियाणां च उपलेप इव ... आस्यस्य मुखस्य माधुर्यं मधुररसत्वं । प्रमेहश्च । तत्कराणि । तथा ... नुबन्धीनि दीर्घकालानुबन्धीनि । अतिमात्रं अग्निमान्द्यं । क्लैब्यं क्लीवत्वं च तत्कराणि । आमविकाराः आमजाः विकाराः प्रबला येषु तानि । एवं ... यानि अर्शांसि । तथा शुक्लानि नखनयनादीनि यस्य तस्य पुंसः यानि च ... तानि । श्लेष्मोल्बणानि विद्यात् । नखादिषु शुक्लत्वं श्लेष्मोल्बणेषु लिंगं ॥ १७ ॥

श्लेष्मोल्बणानां हेतुमाह—भवतश्चात्रेति । मधुराणि । स्निग्धानि । ... च । तानि । एवं लवणाम्लगुरूणि च । अन्नपानानि । शय्यासनसुखे शय्या ... आसनसुखे आस्यासुखे च रतिः आसक्तिः । प्राग्वातस्य सेवा । शीतौ देशकालौ अचिन्तनं अचिन्ता च इति । एतत् श्लैष्मिकाणां अर्शसां का... ॥ १८।१९ ॥

यथोक्तहेतुलक्षणसंसर्गात् द्वान्द्विकान्याह—हेतुलक्षणेति । हेतुलक्षणानां प्रागुक्तानां संसर्गात् द्वयोर्द्वयोर्मेलनात् त्रीणि द्वन्द्वोल्बणानि वातपित्तोल्बणानि वातश्लेष्मोल्बणानि पित्तश्लेष्मोल्बणानि च विद्यात् । सान्निपातिकान्याह—सर्वो हेतुरिति । त्रिदोषाणां सान्निपातिकानां सहजैर्लक्षणैः प्रागुक्तैः । सहजानां त्रिदोषजत्वात् । समं सहजातोत्तरकालजानां त्रयाणां प्रागुक्तः सर्वो हेतुः । सर्वाणि लिंगानि चापि ॥ २० ॥

विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षेराटोप एव च।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥२१॥
ग्रहणीदोषपाण्डवर्त्तेराशङ्का चोदरस्य च।
पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥२२॥
अर्शांसि खलु जायन्ते नासन्निपतितैस्त्रिभिः।
दोषैर्दोषविशेषैस्तु विशेषः कल्प्यतेऽर्शसाम् ॥२३॥
पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम्।
सर्व एव प्रकुप्यन्ति गुदजानां समुद्भवे ॥२४॥
तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च।
सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥२५॥

पूर्वरूपाण्याह—विष्टम्भोऽन्नस्येत्यादि। अन्नस्य विष्टम्भः। दौर्बल्यं। कुक्षेः आटोपः सवेदनगुडगुडाशब्दः। कार्श्यं कृशत्वं। उद्गारबाहुल्यं। सक्थ्नोः सादः। अल्पा विट् पुरीषं यस्य सोऽल्पविट्कः। तस्य भावः तत्त्वं। ग्रहणीदोषस्य। पाण्डुवर्त्तेः पाण्डुरोगस्य। उदरस्य च। आशंका। स्तोकतत्तल्लक्षणयुक्तत्वात्। अर्शसां अभिवृद्धये उत्पत्तये एतानि पूर्वरूपाणि उद्दिष्टानि ॥ २१।२२ ॥

अर्शांसीति। अर्शांसि त्रिभिः दोषैः असंन्निपतितैः न जायन्ते। किन्तु सन्निपातितैरेव जायन्ते। तेन सर्वाणि त्रिदोषजानि। सर्वेषां त्रिदोषजत्वे कथं वातिकादिव्यपदेशः स्यात् इति? अत आह—दोषविशेषैरिति। अर्शसां विशेषः वातिकादिविशेषः दोषविशेषैः उल्बणतत्तद्दोषैः कल्प्यते ॥ २३ ॥

पंचात्मेति। पंचात्मा प्राणापानव्यानसमानोदानरूपः मारुतः। पित्तं। कफः। गुदवलित्रयं च। सर्वे एव गुदजानामर्शसां समुद्भवे प्रकुप्यन्ति ॥ २४ ॥

अर्शसां कृच्छ्रसाध्यत्वमाह—तस्मादिति। तस्मात् सर्वदोषप्रकोपजन्यत्वात् अर्शांसि दुःखानि दुःखकराणि। बहुव्याधिकराणि सर्वदेहोपतापीनि। प्रायः कृच्छ्रतमानि अतिकृच्छ्रसाध्यानि च भवन्ति ॥ २५ ॥

हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा।
शोथो हृत्पार्श्वशूलश्च यस्यासाध्योऽर्शसो हि सः ॥२६॥
हृत्पार्श्वशूलं संमोहश्छर्दिरङ्गस्य रुग् ज्वरः।
तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम् ॥२७॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तरां वलिम्।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत् ॥२८॥
शेषत्वादायुषस्तानि चतुष्पादसमन्विते।
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा ॥२९॥

अर्शसामसाध्यलक्षणमाह—हस्ते इति। यस्य हस्तपादादिषु शोथः। हृदि पार्श्वयोश्च शूलं। स तथाविधः। अर्शांसि विद्यन्ते अस्य इति अर्शो आदिभ्योऽच् इति ( पा० ५।२।१२७ ) अच्। अर्शसः अर्शोरोगी असाध्यः ॥ २६ ॥

हृत्पार्श्वशूलमिति। हृत्पार्श्वशूलं। संमोहः। छर्दिः। अंगस्य रुक् वेदना। ज्वरः। तृष्णा। गुदस्य पाकश्च। एते गुदजातुरं अर्शोरोगिणं निहन्युः। हृत्पार्श्वशूलादिभिरुपद्रुतः अर्शसो ह्यसाध्यः ॥ २७ ॥

सहजानीति। यानि अर्शांसि सहजानि। यानि त्रिदोषाणि। यानि च अभ्यन्तरां तृतीयां वलिं संश्रित्य जायन्ते। तानि सर्वाणि असाध्यानि निर्दिशेत् ॥ २८ ॥

असाध्यो द्विविधः। याप्यः प्रत्याख्येयश्च। तत्र सहजादीनां सामान्यतः असाध्यत्वमुक्त्वा सम्प्रति विशिष्याह—शेषत्वादिति। आयुषः शेषत्वात् सावशेषत्वात्। अयमपि याप्यत्वे हेतुः। चतुष्पादसमन्विते चतुर्णां पादानां भिषगादीनां समन्विते समन्वये। भावे क्तः। मेलने सति। तथा दीप्तकायाग्नेः पुंसः। जठराग्नौ च प्रबले सति। तानि सहजादीनि याप्यन्ते। अतः अन्यथा आयुषः अनवशेषत्वे चतुर्णां पदानामसम्पत्तौ अग्नौ मन्दे च तानि प्रत्याख्येयानि ॥ २९ ॥

द्वन्द्वजानि द्वितीयायां बलौ यान्याश्रितानि च ।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥३०॥
बाह्यायान्तु बलौ जातान्येकदोषोल्वणानि च ।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥३१॥
तेषां प्रशमने यत्नमाशु कुर्याद्विचक्षणः ।
तान्याशु हि गुदं बद्ध्वा कुर्युर्बद्धगुदोदरम् ॥३२॥
तत्राहुरेके शस्त्रेण कर्त्तनं हितमर्शसाम् ।
दाहं क्षारेण चाप्येके दाहमेके तथाग्निना ॥३३॥
अस्त्येतद् भूरितन्त्रेण धीमता दृष्टकर्मणा ।
क्रियते त्रिविधं कर्म भ्रंशस्तत्र सुदारुणः ॥३४॥

साध्योऽपि द्विविधः । सुखसाध्यः कृच्छ्रसाध्यश्च । तत्रादौ कृच्छ्रसाध्यलक्षणमाह—द्वन्द्वजानीति । यानि अर्शांसि द्वन्द्वजानि द्वन्द्वोल्वणानि । यानि द्वितीयायां बलौ आश्रितानि । यानि च परिसंवत्सराणि संवत्सरातीतानि तानि सर्वाणि कृच्छ्रसाध्यानि आहुः ॥ ३० ॥

अर्शसां सुखसाध्यत्वमाह—बाह्यायां त्विति । यानि अर्शांसि बाह्यायां बलौ जातानि । यानि एकदोषोल्वणानि । यानि न चिरोत्पतितानि अचिरोत्पन्नानि नवानि । तानि सर्वाणि सुखसाध्यानि आहुः ॥ ३१ ॥

तेषामिति । विचक्षणो भिषक् तेषामर्शसां प्रशमने आशु शीघ्रं यत्नं कुर्यात् । हि यतः तानि गुदं बद्ध्वा निरुद्ध्य आशु बद्धगुदोदरं कुर्युः ॥ ३२ ॥

तत्राहुरिति । तत्र अर्शसां प्रशमने एके वैद्याः अर्शसां शस्त्रेण कर्त्तनं छेदनं हितमाहुः । एके क्षारेण दाहं हितमाहुः । तथा एके अग्निना दाहं चापि हितमाहुः । एतत् अस्ति सत्यं । भूरितन्त्रेण बहुशास्त्रज्ञानसम्पन्नेन दृष्टकर्मणा धीमता वैद्येन

पुंस्त्वोपघातः श्वयथुर्गुदे वेगविनिग्रहः।
आध्मानं दारुणं शूलं व्यथा रक्तातिवर्त्तनम् ॥३५॥
पुनर्विरोहो रूढ़ानां क्लेदो भ्रंशो गुदस्य वा।
मरणं वा भवेच्छीघ्रं शस्त्रक्षाराग्निविभ्रमात् ॥३६॥
यत् तु कर्म सुखोपायमल्पभ्रंशमदारुणम्।
तदर्शसां प्रवक्ष्यामि समूलानां निवृत्तये ॥३७॥
वातश्लेष्मोल्वणान्याहुः शुष्काण्यर्शांसि तद्विदः।
प्रस्रावीणि तथार्द्राणि रक्तपित्तोल्वणानि च ॥३८॥

शस्त्रेण कर्त्तनं क्षारेण दाहः अग्निना च दाहः एतत् त्रिविधं कर्म क्रियते। किन्तु तस्य त्रिविधस्य कर्मणः भ्रंशः विभ्रमः अयथाचरणं चेत् स सुदारुणः आत्ययिकः स्यात् ॥ ३३।३४ ॥

तदेव विवृत्य दर्शयति—पुंस्त्वोपघात इत्यादि। शस्त्रक्षाराग्निविभ्रमात् शस्त्रक्षाराग्निकर्मणां विभ्रमात्। पुंस्त्वोपघातः पुरुषत्वहानिः। गुदे श्वयथुः। वेगस्य पुरीषवेगस्य विनिग्रहः। आध्मानं। दारुणं शूलं। व्यथा। रक्तस्य अतिवर्त्तनं अतिप्रवृत्तिः। पुनः विरोहः छिन्नानां शस्त्रक्षाराग्निदग्धानां चापि पुनरुत्पत्तिः। पुनः रूढ़ानां क्लेदः। गुदस्य भ्रंशो वा स्यात्। शीघ्रं मरणं वा भवेत् ॥ ३५।३६ ॥

यत्त्विति। शस्त्रक्षाराग्निकर्मणामेवमात्ययिकतया तान्यनुक्त्वा। यत्तु कर्म सुखोपायं सुखसाध्यं। अल्पभ्रंशं दैवात् भ्रंशेऽपि अदारुणं न दारुणं। तत् तथाविधं कर्म अर्शसां समूलानां निवृत्तये इह प्रवक्ष्यामि ॥३७॥

चिकित्सां विवक्षुः तदुपयोगितया आदौ शुष्कार्द्रभेदेन द्वैविध्येन संग्रहं करोति—वातश्लेष्मोल्वणानीति। वातश्लेष्मोल्वणानि अर्शांसि तद्विदः भिषजः शुष्काणि आहुः। रक्तपित्तोल्वणानीति। यद्यपि पंचात्मा मारुतः पित्तमित्यादौ रक्तं नोक्तं तथापि समानप्रकोपणतया पित्तप्रकोपेणैव तत्प्रकोपोऽप्युन्नेयः। सुश्रुतस्तु दोषवद् रक्तस्यापि

ततः शुष्कार्शसां पूर्वं प्रवक्ष्यामि चिकित्सितम्।
स्तब्धानि स्वेदयेत् पूर्वं शोथशूलान्वितानि च ॥३९॥
चित्रकक्षारबिल्वानां तैलेनाभ्यज्य बुद्धिमान्।
यवमाषकुलत्थानां पुलाकानां च पोट्टलैः ॥४०॥
गोखराश्वशकृत्पिण्डैस्तिलकल्कैस्तुषैस्तथा।
वचाशताह्वापिण्डैर्वा सुखोष्णैः स्नेहसंयुतैः ॥४१॥
सक्तूनां पिण्डिकाभिर्वा स्निग्धानां तैलसर्पिषा।
शुष्कमूलकपिण्डैर्वा पिण्डैर्वा कार्ष्णगन्धिकैः ॥४२॥

पृथक् जनकत्वमाह। तथा च—षडर्शांसि भवन्ति वातपित्तकफशोणितसन्निपातैः सहजानि च। इति (सु० नि० २)। वस्तुतस्तु तदाश्रितदोषैर्जातत्वेन दोषजत्वेनैव संग्रहात् अस्मत्तन्त्रे रक्तजानां न पुनः पृथग् वचनं। इह यत् रक्तपित्तोल्बणानीति रक्तस्य पृथग् ग्रहणं तच्चिकित्सां विशिष्याभिधातुं। इति सर्वमवदातं। रक्तपित्तोल्बणानि अर्शांसि स्राबीणि तथा आर्द्राणि इति वा आहुः तद्विदः ॥३८॥

तत्रादौ शुष्कार्शसां चिकित्सां वक्तुं प्रतिजानीते—ततः शुष्कार्शसामिति। ततः पूर्वं प्राक् शुष्कार्शसां चिकित्सितं प्रवक्ष्यामि। चिकित्सामाह—स्तब्धानीत्यादि। मतिमान् भिषक् स्तब्धानि शोथशूलाभ्यामन्वितानि शुष्कानि अर्शांसि पूर्वमादौ चित्रकक्षारबिल्वानां तैलेन चित्रकादिकल्कसिद्धेन तैलेन अभ्यज्य। यवमाषकुलत्थानां तथा पुलाकानां अज्ञाततण्डुलधान्यानां च पोट्टलैः गवादिशकृत्पिण्डैः तिलकल्कैः तुषैः वा तथा वचाशताह्वापिण्डैः वचाशताह्वाकल्कपिण्डैः स्नेहसंयुतैः सुखोष्णैः स्वेदयेत् ॥ ३९-४१ ॥

सक्तूनामित्यादि। तैलसर्पिषा यमकेन स्निग्धानां सक्तूनां पिण्डिकाभिः वा। शुष्कमूलकपिण्डैः शुष्कमूलककल्कपिण्डैः वा। कार्ष्णगन्धिकैः पिण्डैः वा शोभाञ्जन-

रास्नापिण्डैः सुखोष्णैर्वा सस्नेहैर्हावुषैरपि।
इष्टकस्य खराह्वायाः शाकैर्गृञ्जनकस्य वा ॥४३॥
अभ्यज्य कुष्ठतैलेन स्वेदयेत् पोट्टलीकृतैः।
वृषार्कैरण्डविल्वानां पत्रोत्क्वाथैश्च सेचयेत् ॥४४॥
त्रिफलाया मूलकस्य वेणूनां वरुणस्य च।
अग्निमन्थस्य शिग्रूणां पत्राण्यश्मन्तकस्य च ॥४५॥
जलेनोत्क्वथ्य शूलार्तं स्वभ्यक्तमवगाहयेत्।
कोलोत्क्वथेऽथवा कोष्णे सौवीरकतुषोदके ॥४६॥
विल्वक्वथेऽथवा तक्रे दधिमण्डाम्लकाञ्जिके।
गोमूत्रे वा सुखोष्णे तं स्वभ्यक्तमवगाहयेत् ॥४७॥

त्वक्पिष्टपिण्डैर्वा। एवं रास्नापिण्डैः वा हावुषैः पिण्डैः वा सस्नेहैः सुखोष्णैः स्वेदयेत्। पूर्वं कुष्ठतैलेनाभ्यज्य। इष्टकस्य एरण्डस्य खराह्वायाः यमान्याः गृञ्जनकस्य वा शाकैः पोट्टलीकृतैः सुखोष्णैः स्वेदयेत्। वृषार्कादीनां। वृषो वासकः। पत्रोत्क्वाथैः पत्राणि क्वाथयित्वा क्वाथविधिना तत्क्वाथैः सेचयेत् ॥ ४२—४४ ॥

त्रिफलाया इत्यादि। त्रिफलायाः मूलकस्य वेणुनां वंशानां वरुणस्य अग्निमंथस्य शिग्रूणां अश्मन्तकस्य वा पत्राणि कल्कीकृत्य जलेन उत्क्वाथ्य तस्मिन् क्वाथे। कोलोत्क्वाथे शुष्कबदरक्वाथे। अथवा सौवीरकतुषोदके सौवीरके तुषोदके कांजिकभेदे च। कोष्णे ईषदुष्णे। तत्र तत्र शूलार्तं अर्शसं स्वभ्यक्तं पूर्वं सुष्ठु अभ्यक्तगात्रं कृत्वा अवगाहयेत्। विल्वक्वाथे अथवा तक्रे दधिमंडाम्लकांजिके दधिमण्डे अम्लकांजिके वा गोमूत्रे वा सुखोष्णे तमर्शसं स्वभ्यक्तं कृत्वा अवगाहयेत् ॥४५—४७॥

कृष्णसर्पवराहोष्ट्रजतुकावृषदंशजाम् ।
वसामभ्यञ्जने दद्याद् धूपनञ्चार्शसां हितम् ॥४८॥
नृकेशाः सर्पनिर्मोको वृषदंशस्य चर्म च ।
अर्कमूलं शमीपत्रमर्शोभ्यो धूपनं हितम् ॥४९॥
तुम्बुरूणि विडङ्गानि देवदार्वक्षतं घृतम् ।
बृहती चाश्वगन्धा च पिप्पल्यः सुरसा घृतम् ॥५०॥
वराहवृषविट् चैव धूपनं सक्तवो घृतम् ।
कुञ्जरस्य पुरीषश्च घृतं सर्जरसस्तथा ॥५१॥

कृष्णसर्पेति । कृष्णसर्पः । वराहः । उष्ट्रः । जतुका चर्मचटिका । वृषदंशो विडालश्च । तेभ्यो जातां तज्जां वसां अभ्यञ्जने अभ्यंगे दद्यात् । जतुकेत्यत्र वृद्धवाग्भटे जलौका इति पाठः । तथा च—कृष्णाहिविडालोष्ट्रजलौकःशूकरवसाभिर्वा अभ्यञ्ज्य । इति (अ० सं० चि० १० ) । धूपनं चापि अर्शसां हितं ॥४८॥

धूपनमाह—नृकेशा इत्यादि । नृणां मनुष्याणां केशाः नृकेशाः । सर्पस्य निर्मोकः । वृषदंशस्य विडालस्य चर्म । अर्कस्य मूलं । शमीपत्रं च । घृतं चापि । तदिहानुक्तमपि बोद्धव्यं । पश्चात् सर्वत्र घृतस्य ग्रहणात् । तेन वृद्धवाग्भटेनायमपि योगः सघृत एव पठितः । तथाच—धूपयेच्च सघृतशमीपत्रार्कमूलमानुषकेशाहिनिर्मोकविडालचर्मभिः । इति (अ० सं० चि० १०)। एतत् धूपनं अर्शोभ्यः हितं । इत्येको योगः । तुम्बुरूणि धन्याकानि । विडंगानि । देवदारु । अक्षताः यवतंडुलाः । घृतं च । एतत् धूपनं अर्शोभ्यः हितं । एतत् सर्वत्र योज्यं । इति द्वितीयः । बृहती । अश्वगंधा । शोभांजनः । पिप्पल्यः । सुरसा तुलसीभेदः । घृतं च । इति तृतीयः । वराहवृषयोः विट् पुरीषं । सक्तवः । घृतं च । धूपनं । इति चतुर्थः । कुंजरस्य हस्तिनः पुरीषं । सर्जरसः धूनकः । तथा घृतं च । इति पंचमः ॥४९—५१॥

हरिद्राचूर्णसंयुक्तं सुधाक्षीरं प्रलेपनम्।
गोपित्तपिष्टाः पिप्पल्यः सहरिद्राः प्रलेपनम् ॥५२॥
शिरीषबीजं कुष्ठञ्च पिप्पल्यः सैन्धवं गुड़ः।
अर्कक्षीरं सुधाक्षीरं त्रिफला च प्रलेपनम् ॥५३॥
पिप्पल्यश्चित्रकः श्यामा किण्वं मदनतण्डुलाः।
प्रलेपः कुक्कुटशकृद्धरिद्रागुड़संयुतः ॥५४॥
दन्तीश्यामामृतासङ्गः पारावतशकृद्गुड़ः।
प्रलेपः स्याद् गजास्थीनि निम्बो भल्लातकानि च ॥५५॥

प्रलेपनमाह—हरिद्राचूर्णेत्यादि। हरिद्राचूर्णसंयुक्तं। सुधा स्नुही। तस्याः क्षीरं। स्नुहीक्षीरयुक्तं हरिद्राचूर्णं प्रलेपनं। इत्येको योगः। सहरिद्रा पिप्पल्यः गोपित्तपिष्टाः प्रलेपनं। पिप्पलीः हरिद्रां च गोपित्तेन पिष्ट्वा तेन प्रलेपनं। इति द्वितीयः। शिरीषबीजं। कुष्ठं। पिप्पल्यः। सैन्धवं। गुडः। अर्कक्षीरं। सुधाक्षीरं। त्रिफला च। प्रलेपनं। शिरीषबीजकुष्ठपिप्पलीत्रिफलासैन्धवगुडान् समभागान् एकत्र अर्कक्षीरसुधाक्षीराभ्यां पिष्ट्वा तेन प्रलेपनं। इति तृतीयः। पिप्पल्यः। चित्रकः। श्यामा श्यामालता। किण्वं सुराबीजं। मदनतंडुलाः मदनफलबीजानि। कुक्कुटस्य शकृत्। हरिद्रा। गुडश्च। तैः संयुतः प्रलेपः। पिप्पलीचित्रकश्यामाकिण्वमदनफल-बीजकुक्कुटशकृद्धरिद्रागुडान् एकत्र पिष्ट्वा तत्कृतः प्रलेपः। इति चतुर्थः। दन्ती। श्यामा। अमृतासंगः खर्परतुत्थः। पारावतस्य शकृत्। गुडः। गजस्य अस्थीनि। निम्बः। भल्लातकानि भल्लातकफलानि च। तत् सर्वं एकत्र पिष्ट्वा तेन प्रलेपः

५३। अयं श्लोकः न पञ्चमे च पुस्तके।

५५। निकुम्भा साम्रृतासंगा पारावतशकृद् गुडः इति ख ग पुस्तकयोः।

प्रलेपः स्यादलं कोष्णं वासन्तकवसायुतम् ।
शूलश्वयथुहृद्‌ युक्तश्चुलुकीवसया सह ॥५६॥
अर्कपत्रं सुधाकाण्डं कटुकालाबुपल्लवाः ।
करञ्जो बस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसाम् ॥५७॥
अभ्यङ्गाद्याः प्रदेहान्ता य एते परिकीर्तिताः ।
स्तम्भश्वयथुकण्डूर्त्तिशमनास्तेऽर्शसां हिताः ॥५८॥
प्रदेहान्तैरुपक्रान्ता गुदजाः प्रस्रवन्ति हि ।
सञ्चितं दुष्टरुधिरं ततः सम्पद्यते सुखी ॥५९॥

स्यात् । इति पंचमः । अलं हरितालं । वासन्तकस्य उष्ट्रस्य वसया युतं । कोष्णं ईषदुष्णं । प्रलेपः स्यात् । हरितालं उष्ट्रवसया पिष्ट्वा किंचिदुष्णं कृत्वा तेन प्रदिह्यात् । इति षष्ठः । स च प्रलेपः । चुलुकी शिशुमारः । तस्य वसया सह युक्तः ईषदुष्णः प्रयुक्तः शूलश्वयथुहृत् स्यात् । इति सप्तमः । अर्कपत्रं । सुधायाः स्नुह्याः काण्डं । कटुकस्यालाबुनः पल्लवाः । करंजः । बस्तस्य छागस्य मूत्रं च । अर्कपत्रस्नुहीकाण्डकटुकालाबुपल्लवकरंजैः बस्तमूत्रपिष्टैः कृतं लेपनं अर्शसां सम्बन्धे श्रेष्ठं । इति अष्टमः ॥५२—५७॥

अभ्यंगाद्या इति । अभ्यंगाद्याः प्रदेहान्ता ये एते उपक्रमाः परिकीर्तिताः उक्ताः ते स्तम्भादिशमनाः । तस्मात् अर्शसां हिताः ॥५८॥

कुतस्ते स्तम्भादिशमनाः अर्शसां हिता इति ? अत आह—प्रदेहान्तैरिति । हि यतः प्रदेहान्तैरुपक्रमैः उपक्रान्ताः तेन विशीर्णाः गुदजाः रोगाः अर्शांसि संचितं दुष्टं रुधिरं प्रस्रवन्ति । ततः दुष्टरक्तस्रावात् आतुरः सुखी रुजादिरहितः सम्पद्यते ॥५९॥

शीतोष्णस्निग्धरूक्षैर्हि न व्याधिरुपशाम्यति।
रक्ते दुष्टे भिषक् तस्माद्रक्तमेवावसेचयेत् ॥६०॥
जलौकोभिस्तथा शस्त्रैः सूचीभिर्वा पुनः पुनः।
अवर्तमानं रुधिरं रक्तार्शोभ्यः प्रवाहयेत् ॥६१॥
गुदश्वयथुशूलार्तं मन्दाग्निं पाययेत् तु तम्।
त्र्यूषणं पिप्पलीमूलं पाठां हिंगु सचित्रकम् ॥६२॥
सौवर्चलं पुष्कराख्यमजाजीं बिल्वपेषिकाम्।
विडं यमानीं हवुषां विडङ्गं सैन्धवं वचाम् ॥६३॥

अभ्यंगादिभिरपि यत्र दुष्टरक्तस्य न प्रवृत्तिः तत्र रक्तावसेचनमेव कार्यं। न तु तत्र दोषविपरीतः शीतोष्णस्निग्धरूक्षादिरूपक्रमः इति। आह—शीतोष्णेति। हि यतः रक्ते दुष्टे सति तत्स्रावणं विना केवलं दोषविपरीतैः शीतोष्णस्निग्धरूक्षादिभिरुपक्रमैः व्याधिः अर्शोरूपः न उपशाम्यति। तस्मात् भिषक् तत्र दुष्टं रक्तमेव प्राक् अवसेचयेत् ॥६०॥

तर्हि केनोपायेन तत्र रक्तावसेचनं कुर्यात् इति? अत आह—जलौकोभिरिति। रक्तार्शोभ्यः संचितदुष्टरक्तेभ्यः अर्शोभ्यः अवर्तमानं अभ्यंगादिषु क्रियमाणेष्वपि अप्रवर्तमानं रुधिरं दुष्टं जलौकोभिः शस्त्रैः सूचीभिः वा पुनः पुनः प्रवाहयेत् प्रवर्तयेत् भिषक् ॥६१॥

गुदश्वयथुशूलार्तमित्यादि। गुदश्वयथुशूलार्तं मन्दाग्निं तमर्शसं। गुदशोथशूलार्तौ अग्निसादे च आतुरं। त्र्यूषणं त्रिकटु। पिप्पलीमूलं। पाठां। सचित्रकं हिंगु। सौवर्चलं विडं सैन्धवं च लवणत्रयं। पुष्कराख्यं पुष्करमूलं। अजाजीं कृष्णजीरकं। बिल्वपेशिकां बिल्वमध्यं। यमानीं। हवुषं। विडंगं। वचां। तिन्तिडीकं च। त्र्यूष-

तिन्तिड़ीकञ्च मण्डेन मद्येनोष्णोदकेन वा ।
तथार्शोग्रहणीदोषशूलानाहाद्विमुच्यते ॥६४॥
पाचनं पाययेद्वा तद् यद् वक्ष्याम्यतिसारिणे ।
सगुड़ामभयां वापि प्राशयेत् पौर्वभक्तिकीम् ॥६५॥
पाययेद्वा त्रिवृच्चूर्णं त्रिफलारससंयुतम् ।
हृते गुदाश्रये दोषे गुदजा यान्ति संक्षयम् ॥६६॥
गोमूत्राध्युषितां दद्यात् सगुड़ां वा हरीतकीम् ।
हरीतकीं तक्रयुतां त्रिफलां वा प्रयोजयेत् ॥६७॥
सनागरं चित्रकं वा सीधुयुक्तं प्रदापयेत् ।
दापयेच्चव्ययुक्तं वा सीधुं साजाजिचित्रकम् ॥६८॥

णादितिन्तिड़ीकान्तानि अष्टादश द्रव्याणि चूर्णीकृत्य मण्डेन दधिमस्तुना मद्येन उष्णोदकेन वा पाययेत् । तथा कृते स आतुरः अर्शआदिभ्यो विमुच्यते ॥६२-६४॥

पाचनमित्यादि । पश्चात् अतिसारचिकित्सिते अतिसारिणे यत् पाचनं वक्ष्यामि तत् पाचनं वा पाययेत् आतुरं । सगुडां अभयां हरीतकीं पौर्वभक्तिकीं प्राग्भक्तं प्राशयेत् भोजयेत् वा । त्रिफलारससंयुतं त्रिफलाक्काथसहितं त्रिवृच्चूर्णं वा तं पाययेत् । एभिर्योगैः गुदाश्रये दोषे हृते सति गुदजाः रोगाः अर्शांसि संक्षयं यान्ति॥६५।६६॥

गोमूत्राध्युषितामित्यादि । गोमूत्रे अध्युषितां स्थापितां हरीतकीं सगुडां वा दद्यात् । तक्रयुतां हरीतकीं तक्रयुतां त्रिफलां वा प्रयोजयेत् । हरीतकीं त्रिफलां वा चूर्णयित्वा तत् चूर्णं तक्रेण पाययेत् । एवं सनागरं सशुण्ठीकं चित्रकं वा चूर्णयित्वा तत् सीधुयुक्तं प्रदापयेत् । चव्ययुक्तं साजाजिचित्रकं । अजाजि इत्यत्र ह्रस्वः छान्दसः । अजाजी कृष्णजीरकं । अजाजीचव्यचित्रकचूर्णयुक्तं सीधुं वा प्रदापयेत् ।

सुरां सपाठाहवुषां दद्यात् सौवर्चलान्विताम्।
दधित्थं बिल्वसंयुक्तं युक्तं वा चव्यचित्रकम् ॥६९॥
भल्लातकयुतं वापि प्रदद्यात् तक्रतर्पणम्।
बिल्वनागरयुक्तं वा यमान्या चित्रकेण च ॥७०॥
चित्रकं हवुषां हिंगुं दद्याद्वा तक्रसंयुतम्।
पञ्चकोलयुतं वापि तक्रमस्मै प्रदापयेत् ॥७१॥
हवुषोत्कुञ्चिका धान्यमजाजी कारवी शटी।
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥७२॥
यमानी चाजमोदा च तच्चूर्णं तक्रसंयुतम्।

सपाठां हवुषां सौवर्चलान्वितां सुरां वा दद्यात्। दधित्थं कपित्थं बिल्वसंयुक्तं। युक्तं मिलितं चव्यं चित्रकं च तत्। तयोः चूर्णं वा दद्यात् ॥६७—६९॥

भल्लातकयुतमिति। भल्लातकयुतं तक्रतर्पणं वा प्रदद्यात्। भल्लातकचूर्णयुतं शक्तुमन्थं वा तक्रेण दद्यात्। एवं बिल्वनागरयुक्तं यमान्या चित्रकेण युक्तं वा तक्रतर्पणं प्रदद्यात् ॥७०॥

चित्रकमिति। चित्रकं हवुषां हिंगुं चूर्णीकृत्य तच्चूर्णं वा तक्रसंयुतं दद्यात्। पंचकोलयुतं। पिप्पलीपिप्पलीमूलचव्यचित्रकनागरं पंचकोलं। तच्चूर्णयुतं वा तक्रं अस्मै अर्शोरोगिणे दद्यात् ॥७१॥

तक्रारिष्टमाह—हवुषेत्यादि। विद्वान् भिषक्। हवुषा स्वनामख्याता। उत्कुञ्चिका कृष्णजीरकः। अजाजी जीरकः। कारवी क्षुद्रजीरकः। धान्यं धन्याकं। पिप्पली हस्तिपिप्पली च पिप्पलीद्वयं। पिप्पलीमूलं। चित्रकः। यमानी अजमोदा च। इति द्वादश द्रव्याणि समभागानि चूर्णयित्वा तच्चूर्णं तक्रसंयुतं मन्दाम्लकटुकं

मन्दाम्लकटुकं विद्वान् स्थापयेद्घृतभाजने ॥७३॥
व्यक्ताम्लकटुकं जातं तक्रारिष्टं मुखप्रियम्।
प्रपिबेन्मात्रया कालेष्वन्नस्य तृषितस्त्रिषु ॥७४॥
दीपनं रोचनं वर्ण्यं कफवातानुलोमनम्।
गुदश्वयथुकण्ड्वार्तिनाशनं बलवर्धनम् ॥७५॥

इति तक्रारिष्टः।

त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत्।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥७६॥
वातश्लेष्मार्शसां तक्रात् परं नास्तीह भेषजम्।
तत् प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा ॥७७॥

घृतभाजने घृतभाविते कुम्भे स्थापयेत् यावता कालेन तत् व्यक्ताम्लकटुकं स्यात्। ततः व्यक्ताम्लकटुकं जातं। मुखप्रियं। दीपनं। रोचनं अन्ने रुचिकरं। वर्ण्यं। कफवातानुलोमनं। गुदे श्वयथुः कण्डूः आर्तिः रुक् च तासां नाशनं। बलवर्धनं च। तथाविधं तं तक्रारिष्टं आतुरः तृषितः प्रतिदिनं अन्नस्य त्रिषु कालेषु आदौ मध्ये अन्ते च मात्रया अग्निबलापेक्षया प्रपिबेत् ॥७२—७५॥

त्वचमिति। चित्रकमूलस्य त्वचं पिष्ट्वा कल्कीकृत्य तेन कल्केन कुम्भं अन्तः प्रलेपयेत्। ततः तत्र अन्तश्चित्रकमूलत्वक्कल्कलिप्तशुष्के कुम्भे दधि वा जातं दधिभावमापन्नं दधिवीजदानात् मन्थनात् तक्रं वा जातं। अर्शोहरं तत् पिबेत् आतुरः ॥७६॥

वातश्लेष्मार्शसामिति। वातश्लेष्मार्शसां सम्बन्धे तक्रात् परमुत्तमं भेषजं नास्ति। तच्च तक्रं यथादोषं दोषापेक्षया सस्नेहं रूक्षं वा प्रयोज्यं। वाते सस्नेहं। कफे च रूक्षं ॥७७॥

सप्ताहं द्वादशाहं वा पक्षं मासमथापि वा ।
बलकालविशेषज्ञो भिषक् तक्रं प्रयोजयेत् ॥७८॥
अत्यर्थमृदुकायाग्नेस्तक्रमेवावचारयेत् ।
सायं वा लाजसक्तूनां दद्यात् तक्रावलेहिकाम् ॥७९॥
जीर्णे तक्रे प्रदद्याद्वा तक्रपेयां ससैन्धवाम् ।
तक्रानुपानं सस्नेहं तक्रौदनमतः परम् ॥८०॥
यूषैर्मांसरसैर्वापि भोजयेत् तक्रसंयुतैः ।
यूषै रसेन वाप्यूर्ध्वं तक्रसिद्धेन भोजयेत् ॥८१॥

सप्ताहमित्यादि । बलमातुरस्य । कालः आवस्थिको नित्यगश्च । तयोर्विशेषः । तज्ज्ञः भिषक् । अत्यर्थमृदुकायाग्नेः आतुरस्य सम्बन्धे बलकालाद्यपेक्षया सप्ताहं वा द्वादशाहं वा पक्षमर्धमासं वा अथ मासमपि वा तक्रं केवलं दोषापेक्षया सस्नेहं रूक्षं वा प्रयोजयेत् । तक्रमेव अवचारयेत् अन्नेन सह अवचार्य प्रयोजयेत् । तदुक्तं वृद्धवाग्भटेनापि—तक्रमेव वातिमन्दवह्निः सप्ताहमर्धमासं मासमपि वा कालापेक्षया रूक्षं सस्नेहमम्लं वा सान्नमनन्नं वा शीलयेत् । इति ( अ० सं० चि० १० ) । सायं वा लाजसक्तूनां तक्रावलेहिकां दद्यात् । लाजसक्तून् तक्रेण अवलेह्यं कृत्वा सायं वा दद्यात् । तक्रे जीर्णे सति प्राक् तक्रपेयां तक्रेण कृतां पेयां ससैन्धवां वा प्रदद्यात् । अतः परं पेयानन्तरं सस्नेहं ईषत्स्नेहं तक्रौदनं तक्रसिद्धमोदनं तक्रसंयुतैः यूषैः मांसरसैर्वापि तक्रानुपानं यथा तथा भोजयेत् । तक्रौदनं भोजयित्वा अनु तक्रं पाययेत् । ऊर्ध्वं ततः परं वापि तक्रसिद्धैः यूषैः तक्रसिद्धेन रसेन वा भोजयेत् ॥ ७८—८१ ॥

---

८१—पूर्वार्धं न पठ्यते ख ग पुस्तकयोः ।

कालक्रमज्ञः सहसा न च तक्रं निवर्तयेत्।
तक्रप्रयोगो मासान्तः क्रमेणोपरमो हितः ॥८२॥
अपकर्षो यथोत्कर्षो न त्वन्नादपकृष्यते।
शक्त्यागमनरक्षार्थं दार्ढ्यार्थमनलस्य च ॥८३॥
बलोपचयवर्णार्थमेष निर्दिश्यते क्रमः ॥८४॥
रूक्षमर्धोद्धृतस्नेहं यतश्चानुद्धृतं घृतम्।
तक्रं दोषाग्निबलवित् त्रिविधं तत् प्रयोजयेत् ॥८५॥

कालक्रमज्ञ इति। एवं तक्रप्रयोगः मासान्तः कार्यः। ततो निवर्तयेत्। मासं प्रयुज्य किमेकदैव निर्तयेत् इति? अत आह—कालतक्रमज्ञ इति। कालक्रमज्ञो भिषक् न च सहसा तक्रं निवर्तयेत्। किन्तु क्रमेणेत्याह—क्रमेणेति। क्रमेण उपरमः निवृत्ति हितः। क्रमेण निवर्तयेत्। उत्कर्षापकर्षयोः क्रममाह—अपकर्ष इति। यथा उत्कर्षः तथैव अपकर्षः। तक्रस्य येन क्रमेण वृद्धिः तेनैव क्रमेण ह्रासः कार्यः। ननु तक्रस्यापकर्षे आहारपरिमाणह्रासः स्याद् इति। अत आह—न त्वन्नादिति। न तु अन्नादपकृष्यते। न तु भोजनपरिमाणस्यापकर्षः कार्यः। यथा तक्रस्यापकर्षः तथैव अन्नस्य उत्कर्षः अर्थात् तक्रस्य यावानंशः अपकृष्यते तावान् अर्थान्तरेण पूरणीयः। इत्थं च आहारपरिमाणह्रासो न भवति। क्रमेणोपरमो हितः इत्युक्तं। तदेव विवृत्य दर्शयति—शक्त्यागमनेति। शक्त्येरागमनं प्राप्तिः। तस्य रक्षार्थं। अनलस्य कायाग्नेः दार्ढ्यार्थं स्थैर्यार्थं। बलाद्यर्थं च। एष उक्तः क्रमः निर्दिश्यते। मासं तक्रप्रयोगात् अग्नेरुद्दीपनं बलवर्णादिकं च यत् यत् किंचित् जातं सहसा त्यागे तद्धानिः स्यात्। अतः क्रमेण निवृत्तिः कार्या। इति दिक् ॥ ८२—८४ ॥

रूक्षमिति। रूक्षं निःशेषमुद्धृतस्नेहं। अर्धोद्धृतस्नेहं। तथा यतः यस्मात् तक्रात् घृतं नवनीतं। कारणे कार्योपचारात्। न उद्धृतं अनुद्धृतं। तच्च। तत् त्रिविधं तक्रं दोषाग्निबलवित् भिषक् दोषाग्निबलापेक्षया प्रयोजयेत्। निःशेषोद्धृतस्नेहं अर्धोद्धृतस्नेहं अनुद्धृतस्नेहं च क्रमात् कफे पित्ते वाते अग्नौ मन्दतमे मन्दतरे मन्दे च बले अधमे मध्यमे उत्तमे च प्रयोज्यं ॥ ८५ ॥

हतानि न विरोहन्ति तक्रेण गुदजानि च।
भूमावपि निषिक्तं तद् दहेत् तक्रं तृणोलुपम्।
किं पुनर्दीप्तकायाग्नेः शुष्काण्यर्शांसि देहिनः॥८६॥
स्रोतःसु तक्रशुद्धेषु रसः सम्यगुपैति यः।
तेन पुष्टिर्बलं वर्णः प्रहर्षश्चोपजायते॥८७॥
वातश्लेष्मविकाराणां शतञ्चापि निवर्त्तते।
नास्ति तक्रात् परं किंचिदौषधं कफवातजे॥८८॥
पिप्पलीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम्।
शृङ्गवेरमजाजीञ्च कारवीं धान्यतुम्बुरु॥८९॥

हतानीति। गुदजानि अर्शांसि तक्रेण हतानि न विरोहन्ति प्ररोहन्ति न पुनर्भवन्ति। तत् तक्रं भूमावपि निषिक्तं तृणोलुपं दहेत्। अप्सु अपि च शैवलं। तत् तक्रं यत् दीप्तकायाग्नेः देहिनः शुष्काणि अर्शांसि दहति तत्र किं पुनर्वक्तव्यम्॥ ८६॥

स्रोतःस्विति। देहस्रोतःसु तक्रेण शुद्धेषु विशोधितेषु सत्सु यः रसः अन्नरसः सम्यक् उपैति धातून् अनिरुद्धमार्गत्वात्। तेन पुष्ट्यादिकं आशु उपजायते। तेन वातश्लेष्मविकाराणां शतं चापि। वातस्य अशीतिः। श्लेष्मणश्च विंशतिः। इति शतं। निवर्त्तते। वातकफजे विकारे तक्रात् परं श्रेष्ठं औषधं नास्ति॥ ८७। ८८॥

पिप्पलीमित्यादि। पिप्पलीं। पिप्पलीमूलं। चित्रकं। हस्तिपिप्पलीं। शृङ्गवेरं शुंठीं। अजाजीं जीरकं। कारवीं क्षुद्रजीरकं। धान्यं धन्याकं। तुम्बुरु धन्याकभेदश्च। तत्। बिल्वं बिल्वशलाटु। पाठां च। पिष्ट्वा कल्कीकृत्य तेन पेयां विपाचयेत्। ततः फलाम्लां दाडिमामलकादिरसैरम्लीकृतां यमकस्नेहां घृततैलाभ्यां स्निग्धां गुदजापहां तां पेयां दद्यात्। अर्शसां विनिवृत्तये। एतैरुक्तैः पिप्पल्यादिभिरेव खडान् यूषभेदान् कुर्यात्। एतैरेव जलं विपचेत्। एतैश्चैव घृतं साध्यं पाच्यं। तदुक्तं वृद्धवाग्भटेनापि—
अभयपो वा पिबेच्च शृतशीतमल्पमुदकं। शृतं धान्यनागराभ्यां। लघुना पंचमूलेन वा।

त्रिलवं कर्कटकं पाठां पिष्ट्वा पेयां विपाचयेत् ।
फलाम्लां यमकस्नेहां तां दद्याद् गुदजापहाम् ॥९०॥
एतैरेव खड़ान् कुर्यादेतैश्च विपचेज्जलम् ।
एतैश्चैव घृतं साध्यमर्शसां विनिवृत्तये ॥९१॥
शटीपलाशसिद्धां वा पिप्पल्या नागरेण वा ।
दद्याद् यवागूं तक्राम्लां मरिचैरवचूर्णिताम् ॥९२॥
शुष्कमूलकयूषं वा यूषं कौलत्थमेव वा ।
दधित्थबिल्वयूषं वा सकुलत्थमुकुष्टकम् ॥९३॥
छागलं वा रसं दद्याद् यूषैरेभिर्विमिश्रितम् ।
लावादीनां फलाम्लं वा सतक्रं ग्राहिभिर्युतम् ॥९४॥

पंचकोलकाजाजीकारवीगजशौण्डीबिल्वशलाटुपाठातुम्बुरुधान्यकैर्वा । एभिश्च फलाम्लान् यमकस्निग्धान् पेयायूपरसादीन् कुर्यात् । एभिरेव घृतं साधयेत् । इति ( अ० सं० चि० १० ) । गजशौण्डी हस्तिपिप्पली ॥ ८९—९१ ॥

शटीपलाशसिद्धामित्यादि । अर्शसां विनिवृत्तये शटीपलाशसिद्धां वा पिप्पल्या नागरेण शुण्ठ्या सिद्धां पेयां तक्राम्लां मरिचैः अवचूर्णितां मरिचचूर्णप्रक्षेपयुक्तां कृत्वा दद्यात् । शुष्कमूलकयूपं वा कौलत्थं यूपं वा । सकुलत्थमुकुष्टकं । मुकुष्टको वनमुद्गः । दधित्थबिल्वयूपं कपित्थबिल्वकुलत्थमुकुष्टकयूषं वा दद्यात् ॥ ९२ । ९३ ॥

छागलमिति । एभिरुक्तैर्यूपैः विमिश्रितं छागलं रसं छागलमांसरसं लावादीनां मांसरसं वा ग्राहिभिः मलसंग्राहिभिः बिल्वशलाटुपाठादिभिश्चूर्णितैर्युतं फलाम्लं तक्राम्लं वा कृत्वा दद्यात् ॥ ९४ ॥

---

९१—फलाम्लां शनकैर्भृष्टां इति क पुस्तके ।

रक्तशालिर्महाशालिः कलमो लांगुलः सितः ।
शारदः षष्टिकश्चैव स्यादन्नविधिरर्शसाम् ॥९५॥
इत्युक्तो भिन्नशकृतामर्शसानां क्रियाक्रमः ।
येऽत्यर्थं गाढशकृतस्तेषां वक्ष्यामि भेषजम् ॥९६॥
सगुड़ां पिप्पलीयुक्तामभयां घृतभर्जिताम् ।
त्रिवृद्दन्तीयुतां वापि भक्षयेदानुलोमिकीम् ॥९७॥
सस्नेहैः सक्तुभिर्युक्तां प्रसन्नां लवणीकृताम् ।
दद्यान्मत्स्यण्डिकां पूर्वं भक्षयित्वा सनागराम् ॥९८॥
गुड़ं सनागरं पाठां फलाम्लं पाययेच्च तम् ।
गुड़ं घृतयवक्षारयुक्तं वापि प्रयोजयेत् ॥९९॥

अन्नविधिमाह—रक्तशालिरिति । रक्तः शालिः रक्तशालिः । महान् शालिः महाशालिः महातण्डुलः । कलमः । लांगुलः । सितः गौरः । एते तत्तदाख्यशालिभेदाः । शारदः षष्टिकभेदः । षष्टिकश्च । इति अर्शसां अन्नविधिः स्यात् ॥ ९५ ॥

इत्युक्त इति । इति भिन्नशकृतां अर्शसानां अर्शोरोगिणां क्रियाक्रमः उक्तः । ये च अर्शसाः अत्यर्थं गाढशकृतः सम्प्रति तेषां सम्बन्धे भेषजं वक्ष्यामि ॥ ९६ ॥

सगुडामिति । पिप्पलीयुतां त्रिवृद्दन्तीयुक्तां वापि घृतभर्जितां सगुडां आनुलोमिकीं वातवर्चसोरानुलोम्यकरीं अभयां हरीतकीं भक्षयेत् ॥ ९७ ॥

सस्नेहेति । पूर्वं आतुरं सनागरां मत्स्यण्डिकां सितोपलं भक्षयित्वा ततः तस्मै सस्नेहैः स्नेहाढ्यैः सक्तुभिः युक्तां सैन्धवादिभिः लवणीकृतां प्रसन्नां मदिरां दद्यात् ॥९८॥

गुडमिति । सनागरं गुडं पाठां च फलाम्लं तं पाययेत् । नागरं पाठां च चूर्णयित्वा तच्चूर्णं गुडं च जलेनालोड्य दाडिमादिरसैः अम्लीकृत्य आतुरं पाययेत् । एवं घृतयवक्षारयुक्तं वापि गुडं प्रयोजयेत् ॥ ९९ ॥

---

९५—अयं श्लोको न पठ्यते क पुस्तके ।

यमानीं नागरं पाठां दाडिमस्य रसं गुड़म्।
सतकूलवणं दद्याद्वातवर्चोऽनुलोमनम् ॥१००॥
दुःस्पर्शकेन विल्वेन यमान्या नागरेण वा।
एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजम् ॥१०१॥
प्राग्भक्तं यमके भृष्टान् सक्तुभिश्चावचूर्णितान्।
करञ्जपल्लवान् दद्याद् वातवर्चोऽनुलोमनान् ॥१०२॥
मदिरां वा सलवणां सीधुं सौवीरकं तथा।
सगुड़ामभयां वाथ प्राशयेत् पौर्वभक्तिकीम् ॥१०३॥

यमानीमिति। यमानीं। नागरं। पाठां। दाडिमस्य रसं। गुडं च। तत् सतकलवणं वातवर्चसोरनुलोमनं दद्यात्। यमानीं नागरं पाठां च चूर्णीकृत्य तच्चूर्णं दाडिमरसगुडतकलवणैर्मिश्रयित्वा दद्यात्॥ १००॥

दुःस्पर्शकेनेति। दुःस्पर्शकेन दुरालभया। विल्वेन विल्वशलाटुना। यमान्या। नागरेण शुण्ठ्या च। एकैकेनापि संयुक्ता। दुरालभादिभिश्चतुर्भिर्मिलितैः पृथक् पृथक् वापि संयुक्ता पाठा अर्शसां गाढशकृतां रुजं हन्ति॥ १०१॥

प्राग्भक्तमिति। करंजपल्लवान् सक्तुभिः अवचूर्णितान् सक्तुचूर्णयुक्तान् यमके घृततैले च भृष्टान् कृत्वा तान् वातवर्चोऽनुलोमनान् प्राग्भक्तं भक्तभोजनात् प्राग् दद्यात्। तदुक्तं वृद्धवाग्भटेनापि—यमकस्नेहभृष्टान् वा सक्तुयुक्तान् करंजप्रसवान्। इति (अ० सं० चि० १०)। प्राग्भक्तं वा वितरेदिति पूर्वेणान्वयः॥ १०२॥

मदिरां वेति। मदिरां प्रसन्नां सलवणां सैन्धवादिभिर्लवणीकृतां वा। तथा सीधुं। सौवीरकं काञ्जिकभेदं। अथ सगुडां अभयां हरीतकीं वापि। पौर्वभक्तिकीं प्राग्भक्तं भक्तभोजनात् प्राक् प्राशयेत् भोजयेत्॥ १०३॥

पिप्पलीनागरक्षारकारवीधान्यजीरकैः।
फाणितेन च संयोज्य फलाम्लं दापयेद् घृतम् ॥१०४॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
शृङ्गवेरयवक्षारौ तैः सिद्धं पाययेद् घृतम् ॥१०५॥
चव्यचित्रकसिद्धं वा गुड़क्षारसमन्वितम्।
पिप्पलीमूलसिद्धं वा गुड़क्षारसमन्वितम् ॥१०६॥
पिप्पलीपिप्पलीमूलदधिनागरधान्यकैः।
सिद्धं सर्पिर्विधातव्यं वातवर्चोविवन्धनुत् ॥१०७॥

पिप्पलीति। घृतं। पिप्पली। नागरं। क्षारः यवक्षारः। कारवी क्षुद्रजीरकः। धान्यं धन्याकं। जीरकश्च। तैः चूर्णितैः। तथा फाणितेन क्षुद्रगुडेन च सह संयोज्य फलाम्लं फलैर्दाडिमादिभिरम्लीकृतं। तत् दापयेत् आतुराय। इह अपक्वमेव घृतं। वृद्धवाग्भटेनाप्युक्तं -रुक्षकोष्ठश्चार्शसो नागरक्षारकृष्णाजाजीधान्यकारवीगर्भं फलाम्लं सफाणितं सर्पिः पिबेत्। इति ( अ० सं० चि० १० )। चक्रपाणिरपि अपक्वमेव केचित् घृतमिच्छन्ति इति व्याचष्टे। इत्थं च जल्पकल्पतरुकारः दापयेदित्यत्र साधयेदिति पठित्वा यत् पिप्पल्यादिकल्कैर्घृतस्य पाकमाह तच्चिन्त्यं ॥ १०४ ॥

पिप्पलीति। पिप्पली। पिप्पलीमूलं। चित्रकः। हस्तिपिप्पली चविका। शृंगवेरं शुण्ठी। यवक्षारश्च। तौ। पिप्पल्यादिशृंगवेरान्तं पंचकोलं। तैः सिद्धं। पञ्चकोलयवक्षारकल्कं पादिकं दत्वा चतुर्गुणे जले सिद्धं घृतं पाययेत् ॥१०५॥

चव्यचित्रकसिद्धमित्यादि। चव्यचित्रकाभ्यां कल्किताभ्यां पादिकाभ्यां सिद्धं चतुर्गुणे जले गुडक्षारसमन्वितं गुडयवक्षारप्रक्षेपयुक्तं वा। एवं पिप्पलीमूल-सिद्धं गुडक्षारसमन्वितं वा। वातवर्चोविवन्धनुत् घृतं विधातव्यं। तथा पिप्पल्या-

१०४—फलाम्लं साधयेद्घृतं इति क पुस्तके।

चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च।
यमानीं पिप्पलीमूलमुभे च विड़सैन्धवे ॥१०८॥
चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत्।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे ॥१०९॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम्।
गुदवङ्क्षणशूलञ्च घृतमेतद्व्यपोहति ॥११०॥

इति चव्याद्यघृतम्।

नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यमानिका ॥१११॥
चाङ्गेरीस्वरसे सर्पिः कल्कैरेतैर्विपाचयेत्।
चतुर्गुणेन दध्ना च तद् घृतं कफवातनुत् ॥११२॥

दिभिः सिद्धं। इह दधि द्रवः। शेषाणां कल्कत्वं। तथा सिद्धं वातवर्चोविबन्धनुत् सर्पिः विधातव्यं प्रयोज्यं ॥१०६। १०७॥

चव्याद्यं घृतमाह—चव्यं त्रिकटुकमित्यादि। चव्यं। त्रिकटुकं व्योषं शुण्ठीपिप्पलीमरिचानि। पाठां। क्षारं यवक्षारं। कुस्तुम्बुरूणि आर्द्रधन्याकानि। यमानीं। पिप्पलीमूलं। विडं सैन्धवं च। ते उभे लवणे। चित्रकं। अभयां हरीतकीं च। इति चतुर्दश द्रव्याणि समभागानि पिष्ट्वा कल्कीकृत्य तेन कल्केन पादिकेन चतुर्गुणे जाते दध्नि। शकृद्वातयोरानुलोम्यार्थं घृतं विपाचयेत्। एतत् घृतं। प्रवाहिकां। गुदभ्रंशं। मूत्रकृच्छ्रं। परिस्रवं पिच्छास्रावं। गुदे वंक्षणयोश्च शूलं। व्यपोहति ॥१०८—११०॥

नागराद्यं घृतमाह—नागरमित्यादि। नागरं शुंठी। पिप्पलीमूलं। चित्रकः। हस्तिपिप्पली। श्वदंष्ट्रा गोक्षुरः। पिप्पली। धान्यं धन्याकं। बिल्वं बिल्वशलाटु।

---

११२—नागरं पिप्पलीमूलं व्योषं चव्यं सचित्रकं इति ख ग पुस्तकयोः।

अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम्।
गुदभ्रंशार्तिमानाहं घृतमेतद्व्यपोहति ॥११३॥

इति नागराद्यं घृतम्।

पिप्पलीं नागरं पाठां श्वदंष्ट्राञ्च पृथक् पृथक्।
भागांस्त्रिपलिकान् कृत्वा कषायमुपकल्पयेत् ॥११४॥
गण्डीरं पिप्पलीमूलं व्योषं चव्यञ्च चित्रकम्।
पिष्ट्वा कषाये विनयेत् पूतेऽर्धपलिकं पृथक् ॥११५॥
पलानि सर्पिषस्तस्मिंश्चत्वारिंशत् प्रयोजयेत्।
चाङ्गेरीस्वरसं तुल्यं सर्पिषा दधि षड्गुणम् ॥११६॥
मृद्वग्निना साधयेत्तत् सिद्धं सर्पिर्निधापयेत्।
तदाहारे प्रयोक्तव्यं पाने प्रायोगिके विधौ ॥११७॥

पाठा। यमानिका यमानी च। इति दश द्रव्याणि। तानि समभागानि गृहीत्वा। कल्कीकृत्य एतैः कल्कैः स्नेहपादिकैः। चांगेरी अम्ललोणिका। तस्याः स्वरसे चतुर्गुणे। चतुर्गुणेन दध्ना च। सर्पिः विपाचयेत् साधयेत्। तद् घृतं कफवातनुत्। एतत् घृतं अर्शःप्रभृतींश्च व्यपोहति ॥१११—११३॥

पिप्पल्याद्यं घृतमाह—पिप्पलीं नागरमित्यादि। पिप्पलीं। नागरं। पाठां। श्वदंष्ट्रां च। पृथक् पृथक् प्रत्येकं त्रिपलिकान् भागान् कृत्वा कषायं क्वाथं उपकल्पयेत् क्वाथविधिना। ततः अवतार्य शीते पूते वस्त्रेण परिस्राविते च। तस्मिन् कषाये क्वाथे। गण्डीरं। पिप्पलीमूलं। व्योषं त्रिकटुकं। चव्यं। चित्रकं च। पृथक् प्रत्येकं अर्धपलिकं अर्धपलपरिमितं पिष्ट्वा कल्कीकृत्य विनयेत् प्रक्षिपेत्। तथा

११५—करीरं पिप्पलीमूलं इति ख ग पुस्तकयोः।

११६—पूते द्विपलिकं भिषक् इति क पुस्तके।

ग्रहण्यर्शोविकारघ्नं गुल्महृद्रोगनाशनम् ।
शोथप्लीहोदरानाहमूत्रकृच्छ्रज्वरापहम् ॥११८॥
कासहिक्कारुचिश्वाससूदनं पार्श्वशूलनुत् ।
बलपुष्टिकरं वर्ण्यमग्निसन्दीपनं परम् ॥११९॥

इति पिप्पल्याद्यं घृतम् ।

विड्वातकफपित्तानामानुलोम्येऽथ निर्वृते ।
गुदेऽर्शांसि प्रशाम्यन्ति पावकश्चाभिवर्धते ॥१२०॥
बर्हितित्तिरिलावानां रसानम्लान् सुसंस्कृतान् ।
दक्षाणां वर्तकानाञ्च दद्याद्विड्वातसंग्रहे ॥१२१॥
त्रिवृद्दन्तीपलाशानां चांगेर्याश्चित्रकस्य च ।
यमके भर्जितं दद्याच्छाकं दधिसमन्वितम् ॥१२२॥

तस्मिन् कषाये सर्पिषः चत्वारिंशत् चत्वारिंशतं पलानि सर्पिषा तुल्यं तुल्यमानं चत्वारिंशत्पलमितं चांगेरीस्वरसं सर्पिषः षड्गुणं दधि च प्रयोजयेत् दद्यात् । ततः तत्सर्वं मृद्वग्निना साधयेत् पचेत् । सिद्धं तत्सर्पिः निधापयेत् अवतारयेत् । तत् सर्पिः प्रायोगिके आहारे पाने च विधौ प्रतिदिनमन्नपानविधौ प्रयोक्तव्यं । तत् सर्पिः ग्रहण्यर्शोविकारघ्नं गुल्मादिनाशनं शोथाद्यपहं कासादिसूदनं पार्श्वशूलनुत् बलंपुष्टिकरं वर्ण्यं परमतीव अग्निसन्दीपनं च ॥११४—११९॥

विड्वातेति । विट् । वातः । कफः । पित्तं च । तेषां आनुलोम्ये । गुदे च निर्वृते स्वस्थे निराकुले सति । अर्शांसि प्रशाम्यन्ति । पावकः देहाग्निश्च अभिवर्धते ॥ १२० ॥

बर्हीति । विड्वातसंग्रहे । बर्ही मयूरः । तित्तिरिः । लावश्च । तेषां । तथा दक्षाणां

११९—कासहिक्काज्वरश्वास० इति ख ग पुस्तकयोः ।

उपोदिकां तण्डुलीयं वीरां वास्तूकपल्लवान् ।
सुवर्चलां सलोणीकां यवशाकमवल्गुजम् ॥१२३॥
काकमाचीं रुहापत्रं महापत्रीं तथाम्लिकाम् ।
जीवन्तीं शटिशाकञ्च शाकं गृञ्जनकस्य च ॥१२४॥
दधिदाड़िमसिद्धानि यमकैर्भर्जितानि च ।
धान्यनागरयुक्तानि शाकान्येतानि दापयेत् ॥१२५॥
गोधालोपाकमार्जारश्वाविदुष्ट्रगवामपि ।
कूर्मशल्लकयोश्चैव साधयेच्छाकवद्रसान् ॥१२६॥

कुक्कुटानां वर्तिकानां च रसान् मांसरसान् घृतादिना सुसंस्कृतान् बदरामलकादिना च अम्लान् कृत्वा दद्यात् ॥ १२१ ॥

शाकमाह—त्रिवृद्दन्तीत्यादि । त्रिवृत् । दन्ती । पलाशश्च । तेषां । चांगेर्याः । चित्रकस्य च शाकं । यमके घृततैले भर्जितं दधिसमन्वितं दध्ना युक्तं कृत्वा दद्यात् । एवं उपोदिकां । तण्डुलीयं । वीरां पृश्निपर्णीं । क्षीरकाकोलीं वा । वास्तूकपल्लवान् वास्तूकशाकं । सुवर्चलां सूर्यभक्तां । सलोणीकां लोणीकां च । यवशाकं । अवल्गुजं शाकं । काकमाचीं । रुहापत्रं रुहा छिन्नरुहा । महापत्रं वृहज्जम्बूं । अम्लिकां । जीवन्तीं । शटीशाकं । गृंजनकस्य शाकं च । एतानि शाकानि दधिदाडिमसिद्धानि यमकैः भर्जितानि दध्ना दाडिमरसेन च साधयित्वा घृततैलाभ्यां च भृष्ट्वा धान्यनागर-युक्तानि धन्याकशुंठीचूर्णप्रक्षेपयुक्तानि कृत्वा दापयेत् ॥ १२२—१२५ ॥

---

१२२—१२३—यमके भर्जितं.........वास्तूकपल्लवान् ॥ इति ख ग पुस्तकयोर्न पठ्यते ।
१२२—दधिसरान्वितं इति क पुस्तके ।
१२३—उपोदिकां चुंचुपर्णीं घोरां इति ख ग पुस्तकयोः ।
१२४—अन्लोकां सरुहापत्रीं काकमाचीं रुहां तथा । इति क ख ग च पुस्तकेषु ।

रक्तशाल्योदनं दद्याद्रसैस्तैर्वातशान्तये ।
ज्ञात्वा वातोल्वणं रूक्षं मन्दाग्निं गुदजातुरम् ॥१२७॥
मदिरां शर्कराजातां सीधुं तक्रं तुषोदकम् ।
अरिष्टं दधिमण्डं वा शृतं वा शिशिरं जलम् ॥१२८॥
कण्टकार्या शृतं वापि शृतं नागरधान्यकैः ।
अनुपानं भिषग् दद्याद् वातवर्चोऽनुलोमनम् ॥१२९॥
उदावर्तपरीता ये ये चात्यर्थं विरूक्षिताः ।
विलोमवाताः शूलार्तास्तेष्विष्टमनुवासनम् ॥१३०॥

गोधालोपाकेति । गोधा । लोपाकः शृगालभेदः । मार्जारः । श्वावित् शशकः । उष्ट्रः । गौश्च । तेषां । तथा कूर्मशल्लकयोश्च । रसान् मांसरसान् शाकवत् शाकानीव साधयेत् उपकल्पयेत् । तानपि दधिदाडिमसिद्धान् घृततैलसन्तलितान् धान्यनागरयुक्तान् कृत्वा दापयेत् ॥१२६॥

रक्तशाल्योदनमिति । मन्दाग्निं गुदजातुरं रूक्षं तेन वातोल्वणं ज्ञात्वा वातशान्तये तस्मै तैः रसैः रक्तशाल्योदनं दद्यात् ॥१२७॥

मदिरामित्यादि । भिषक् । शर्कराजातां मदिरां । सीधुं । तक्रं । तुषोदकं सतुषयवकृतकांजिकं । अरिष्टं । दधिमण्डं । शृतं पक्वं ततः शिशिरं शीतीकृतं जलं केवलं वा । कण्टकार्या शृतं वा । नागरधान्यकैः धन्याकशुण्ठीभ्यां सिद्धं वा जलं वातवर्चसोरनुलोमनं अनुपानं दद्यात् ॥१२८।१२९॥

उदावर्तपरीता इति । ये अर्शसाः अर्शोरोगिणः उदावर्तपरीताः । ये अत्यर्थं विरूक्षिताः । ये च विलोमवाताः । शूलार्ताश्च । तेषु अनुवासनं इष्टं ॥१३०॥

पिप्पलीं मदनं बिल्वं शताह्वां मधुकं वचाम्।
कुष्ठं शटीं पुष्कराख्यं चित्रकं देवदारु च ॥१३१॥
पिष्ट्वा तैलं विपक्तव्यं पयसा द्विगुणेन च।
अर्शसां मूढवातानां तच्छ्रेष्ठमनुवासनम् ॥१३२॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम्।
कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणाश्रयम् ॥१३३॥
पिच्छास्रावं गुदे शोफं वातवर्चोविनिग्रहम्।
उत्थानं बहुशो यच्च जयेत् तच्चानुवासनात् ॥१३४॥
आनुवासनिकैः पिष्टैः सुखोष्णैः स्नेहसंयुतैः।
दर्व्या तैरौषधैर्देह्याः स्तब्धाः शूना गुदेरुहाः ॥१३५॥

अनुवासनद्रव्याण्याह—पिप्पलीमित्यादि। पिप्पलीं। मदनं मदनफलं। बिल्वं शताह्वां शतपुष्पां। मधुकं यष्टीमधु। वचां। कुष्ठं। शटीं। पुष्कराख्यं रमूलं। चित्रकं। देवदारु च। तत् सर्वं समभागं पिष्ट्वा कल्कीकृत्य तेन कल्केन तैलात् पादिकेन द्विगुणेन पयसा च तैलं विपक्तव्यं। मूढः नोर्ध्वं नाधो प्रवर्तनात् निष्क्रिय इव स्थितः वातो येषु तेषां। तथाविधानामर्शसां सम्बन्धे तत् तैलं श्रेष्ठं अनुवासनं स्यात्। तच्च तैलं अनुवासनात् गुदनिःसरणं गुदभ्रंशं शूलं मूत्रकृच्छ्रं प्रवाहिकां कट्यूरुपृष्ठदौर्बल्यं वंक्षणाश्रयं आनाहं पिच्छास्रावं गुदे शोफं वातवर्चसोर्विनिग्रहं विबन्धं यच्च बहुशः पुनः पुनः उत्थानं स्तोकस्तोकातिसरणं तच्चापि जयेत् शमयेत् ॥१३१—१३४॥

प्रदेहमाह—आनुवासनिकैरिति। स्तब्धाः। शूनाः श्वयथुमन्तः। गुदेरुहाः गुदजाः। उक्तैरानुवासनिकैरौषधैः पिप्पल्यादिभिः पिष्टैः स्नेहसंयुतैः स्नेहाढ्यैः सुखोष्णैः दर्व्या देह्याः प्रदेह्याः। एवं तैरानुवासनिकैरौषधैः दिग्धाः प्रलिप्ताः ते गुदजाः

दिग्धास्तैः प्रस्रवन्त्याशु श्लेष्मपिच्छां सशोणिताम् ।
कण्डूः स्तम्भः सरुक् शोफः स्रुतानां विनिवर्तते ॥१३६॥
निरूहं वा प्रयुञ्जीत सक्षीरं दाशमूलिकम् ।
समूत्रस्नेहलवणं कल्कैर्युक्तं फलादिभिः ॥१३७॥
हरीतकीनां प्रस्थार्धं प्रस्थमामलकस्य च ।
स्यात् कपित्थाद्दशपलं ततोऽर्धेनेन्द्रवारुणी ॥१३८॥
विड‌ङ्गं पिप्पली लोध्रं मरिचं सैलबालुकम् ।
द्विपलांशं जलस्यैतच्चतुर्द्रोणे विपाचयेत् ॥१३९॥
द्रोणशेषे रसे तस्मिन् पूते शीते समावपेत् ।
गुडस्य द्विशतं तिष्ठेत् तत् पक्षं घृतभाजने ॥१४०॥

आसु सशोणितां पिच्छां स्रवन्ति । स्रुतानां कृतसशोणितपिच्छास्रावाणां तेषां कण्डूः स्तम्भः सरुक् सशूलः शोफश्च विनिवर्तते ॥१३५।१३६॥

निरूहमाह—निरूहं वेति । दाशमूलिकं क्वाथं सक्षीरं समूत्रस्नेहलवणं गोमूत्रघृतादिस्नेहसैन्धवादिलवणैर्युक्तं फलादिभिः मदनफलादिभिः कल्कैः काल्कितैर्वा युक्तं निरूहं प्रयुञ्जीत ॥१३७॥

अभयारिष्टमाह—हरीतकीनामिति । हरीतकीनां निरस्थीकृतानां प्रस्थार्धं अष्टौ पलानि । प्रस्थमामलकस्य प्रस्थं षोडश पलानि । कपित्थात् दशपलं कपित्थमध्यस्य दश पलानि । ततः दशपलात् अर्धेन इन्द्रवारुणी इन्द्रवारुण्याः पंच पलानि । जल्पकल्पतरुकारस्तु पलार्धेनेन्द्रवारुणीति पठित्वा इन्द्रवारुणीपलार्धेन युक्ता इति व्याचष्टे । तद्धेयं वक्ष्यमाणसुश्रुतवचनविरोधात् । विडंगं । पिप्पली । लोध्रं । मरिचं । सैलवालुकं एलवालुकं च । द्विपलांशं प्रत्येकं द्विपलमितं । एतत्

१४० । पलार्धेनेन्द्रवारुणी इति क पुस्तके ।

पश्चादूर्ध्वं भवेत् पेया ततो मात्रा यथाबलम्।
अस्याभ्यासादरिष्टस्य गुदजा यान्ति संक्षयम्॥१४१॥
ग्रहणीपाण्डुहृद्रोगप्लीहगुल्मोदरापहः।
कुष्ठशोफारुचिहरो बलवर्णाग्निवर्धनः॥१४२॥
सिद्धोऽयमभयारिष्टः कामलाश्वित्रनाशनः।
क्रिमिग्रन्थ्यर्बुदव्यङ्गराजयक्ष्मज्वरान्तकृत्॥१४३॥

इत्यभयारिष्टः।

सर्वं कल्कीकृत्य जलस्य चतुर्द्रोणे विपाचयेत् क्राथयेत्। ततः तस्मिन् रसे क्राथे द्रोणशेषे पादावशेषे अवतारिते पूते वस्त्रेण स्राविते शीते च सति तत्र गुडस्य द्विशतं द्विशतपलं तुलाद्वयं समावपेत् प्रक्षिपेत्। ततः तत्सर्वं घृतभाजने घृतभाविते कुम्भे निहितं पक्षं मासार्धं यावत् तिष्ठेत्। पश्चात् ऊर्ध्वं परं ततः तस्मात् यथाबलं मात्रा पेया भवेत्। पश्चात् परं संजातरसगन्धं तमभयारिष्टं प्रतिदिनं मात्रया पिबेत्। अस्य अभयारिष्टस्य अभ्यासात् शीलनात् गुदजाः रोगाः संक्षयं यान्ति। सिद्धः सिद्धफलः अयमभयारिष्टः ग्रहण्याद्यपहः। कुष्ठादिहरः। बलादिवर्धनः। कामलाश्वित्रनाशनः। क्रिम्याद्यन्तकृच्च। तथा च सुश्रुतः—पिप्पलीमरिचविडङ्गैलवालुकलोध्राणां द्वे द्वे पले। इन्द्रवारुण्याः पंच पलानि। कपित्थमध्यस्य दश। पथ्याफलानामर्धप्रस्थः। प्रस्थो धात्रीफलानाम्। एतदैकध्यं जलचतुर्द्रोणे विपाच्य पादावशेषं परिस्राव्य सुशीतं गुडतुलाद्वयेनोन्मिश्र्य घृतभाजने निक्षिप्य पक्षमुपेक्षेत यवपल्ले। ततः प्रातः प्रातर्यथाबलमुपयुञ्जीत। एष खल्वरिष्टः प्लीहाग्निसादार्शोग्रहणीहृत्पाण्डुरोगशोफकुष्ठगुल्मोदरक्रिमिहरो बलवर्णकरश्च। इति (सु० चि० ७)॥ १३८—१४३॥

दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः ।
भागान् पलांशानापोथ्य जलद्रोणे विपाचयेत् ॥१४४॥
त्रिपलं त्रिफलायाश्च दलानां तत्र दापयेत् ।
रसे चतुर्थशेषे तु पूते शीते समावपेत् ॥१४५॥
तुलां गुडस्य तत् तिष्ठेन्मासार्धं घृतभाजने ।
तन्मात्रया पिबन्नित्यमर्शोभ्यो विप्रमुच्यते ॥१४६॥
ग्रहणीपाण्डुरोगघ्नं वातवर्चोऽनुलोमनम् ।
दीपनश्चारुचिघ्नश्च दन्त्यरिष्टमिमं विदुः ॥१४७॥

इति दन्त्यरिष्टः ।

दन्त्यरिष्टमाह—दन्तीत्यादि । दन्तीचित्रकमूलानां दन्तीमूलानां चित्रकमूलानां च । उभयोः पंचमूलयोः ह्रस्वमहतोः । दशमूलस्येत्यर्थः । पलांशान् प्रत्येकं पलपरिमितान् भागान् आपोथ्य संक्षुद्य जलस्य द्रोणे कलसे विपाचयेत् । तत्र त्रिफलाया दलानां निरस्थीकृतानां हरीतकीविभीतकामलकानां प्रत्येकमेकपलमितानां मिलितानां त्रिपलं दापयेत् । तथा च दन्तीचित्रकदशमूलानि हरीतकीविभीतकामलकानि च प्रत्येकं पलमितानि कल्कीकृत्य जलद्रोणे क्वाथयेत् । वृद्धवाग्भटेनाप्युक्तं—दन्तीचित्रकत्रिफलादशमूलानि पलिकान्युदकद्रोणे साधयेदित्यादि ( अ० सं० चि० १० ) । इत्थं च जल्पकल्पतरौ त्रिफलायाः प्रत्येकं त्रिपलमिति वचनं चिन्त्यं । रसे क्वाथे चतुर्थशेषे पादावशेषे अवतारिते पूते शीते च सति तत्र गुडस्य तुलां शतं पलानि समावपेत् प्रक्षिपेत् । तत् सर्वं घृतभाविते भाजने निहितं मासार्धं पक्षं तिष्ठेत् । नित्यं प्रतिदिनं तत् मात्रया पिबन् आतुरः अर्शोभ्यः विप्रमुच्यते । इमं दन्त्यरिष्टं ग्रहण्यादिघ्नं वातवर्चसोरनुलोमनं अग्नेर्दीपनं अरुचिघ्नं च विदुः भिषजः ॥ १४४—१४७ ॥

हरीतकीफलप्रस्थं प्रस्थमामलकस्य च।
विशालाया दधित्थस्य पाठाचित्रकमूलयोः ॥१४८॥
द्वे द्वे पले समापोथ्य द्विद्रोणे साधयेदपाम्।
पादावशेषे पूते च रसे तस्मिन् प्रदापयेत् ॥१४९॥
गुड़स्यैकां तुलां वैद्यः स्थाप्यं तद् घृतभाजने।
पक्षस्थितं पिबेदेनं ग्रहण्यर्शोविकारवान् ॥१५०॥
हृत्पाण्डुरोगं प्लीहानं कामलां विषमज्वरम्।
वर्चोमूत्रानिलकृतान् विबन्धानग्निमार्द्दवम् ॥१५१॥
कासं गुल्ममुदावर्तं फलारिष्टो व्यपोहति।
अग्निसन्दीपनो ह्येष कृष्णात्रेयेण भाषितः ॥१५२॥
इति फलारिष्टः।

फलारिष्टमाह—हरीतकीफलेत्यादि। वैद्यः। हरीतकीफलानां निरस्थीकृतानां प्रस्थं। एवमामलकस्य च प्रस्थं। विशालायाः इन्द्रवारुण्याः दधित्थस्य कपित्थस्य पाठाचित्रकमूलयोश्च द्वे द्वे पले प्रत्येकं द्वे पले। तत् सर्वं समापोथ्य कुट्टयित्वा अपां द्विद्रोणे जलस्य द्रोणद्वये साधयेत् क्वाथयेत्। तस्मिन् रसे क्वाथे पादावशेषे अवतारिते पूते शीते च सति तत्र गुड़स्य एकां तुलां पलशतं प्रदापयेत्। ततः तत् सर्वं घृतभाजने स्थाप्यं स्थापयेत् पक्षं यावत्। पक्षस्थितं जातरसगन्धं एनं फलारिष्टं ग्रहण्यर्शोविकारवान् आतुरः प्रतिदिनं मात्रया पिबेत्। कृष्णात्रेयेण भगवता पुनर्वसुना भाषितः उपदिष्टः एष फलारिष्टः अग्निसन्दीपनः। हृत्पाण्डुरोगं हृद्रोगं पाण्डुरोगं च कामलां विषमज्वरं वर्चोमूत्रानिलकृतान् विबन्धान् विण्मूत्रवातविबन्धान् अग्निमार्द्दवं अग्निमान्द्यं कासं गुल्मं उदावर्त्तं च व्यपोहति॥ १४८—१५२॥

४९। हरीतकीदलप्रस्थं इति ख ग पुस्तकयोः।
४९। विशालापादबिल्वश्च इति ख ग पुस्तकयोः।

दुरालभायाः प्रस्थन्तु चित्रकस्य वृषस्य च ।
पथ्यामलकयोश्चैव पाठाया नागरस्य च ॥१५३॥
दन्त्याश्च द्विपलान् भागान् जलद्रोणे विपाचयेत् ।
पादावशेषे पूते च सुशीते शर्कराशतम् ॥१५४॥
दत्त्वा कुम्भे दृढ़े स्थाप्यं मासार्धं घृतभाविते ।
प्रलिप्ते पिप्पलीचव्यप्रियंगुक्षौद्रसर्पिषा ॥१५५॥
तस्य मात्रां पिबेत् काले शार्करस्य यथाबलम् ।
अर्शांसि ग्रहणीदोषमुदावर्तमरोचकम् ॥१५६॥
शकृन्मूत्रानिलोद्गारविबन्धानग्निमार्दवम् ।
हृद्रोगं पाण्डुरोगञ्च सर्वमेतेन साधयेत् ॥१५७॥

इति शर्करारिष्टः ।

शर्करारिष्टमाह—दुरालभाया इत्यादि । दुरालभायाः प्रस्थं । चित्रकस्य । वृषस्य वासकस्य । पथ्यामलकयोः । पथ्या हरीतकी । पाठायाः । नागरस्य शुण्ठ्याः । दन्त्याश्च । द्विपलान् भागान् चित्रकवृषपथ्यामलकपाठानागरदन्तीनां च प्रत्येकं द्वे पले । तत् सर्वं कल्कीकृत्य जलद्रोणे विपाचयेत् । तस्मिन् पादावशेषे अवतारिते पूते परिस्रुते सुशीते च सति तत्र शर्करायाः शतं पलानि तुलां दत्त्वा तत् सर्वं घृतभाविते दृढे पिप्पलीचव्यप्रियंगुक्षौद्रसर्पिषा घृतमधुपिप्पलीचव्यप्रियंगुकल्कैः अन्तः प्रलिप्ते कुम्भे मासार्धं पक्षं व्याप्य स्थाप्यं स्थापयेत् । ततः जातरसगन्धस्य तस्य शार्करस्य अरिष्टस्य यथाबलं मात्रां काले प्रतिदिनं प्रातः अन्नकाले च पिबेत् । भिषक् एतेन शर्करारिष्टेन अर्शांसि ग्रहणीदोषं उदावर्त्तं अरोचकं शकृत् मूत्रं अनिलः अधोवातः उद्गारश्च तेषां विबन्धान् अग्निमार्द्दवं सर्वं हृद्रोगं पाण्डुरोगं च साधयेत् जयेत् ॥ १५३—१५७ ॥

कासं श्लेष्मामयांश्चोग्रान् सर्वानेवापकर्षति।
वलीपलितखालित्यं दोषजन्तु व्यपोहति ॥१६८॥
इति कनकारिष्टः।

पत्रभंगोदकैः शौचं कुर्यादुष्णेन चाम्भसा।
इति शुष्कार्शसां सिद्धमुक्तमेतच्चिकित्सितम् ॥१६९॥

चिकित्सितमतः सिद्धं स्राविणां संप्रचक्ष्महे।
तत्रानुबन्धो द्विविधः श्लेष्मणो मारुतस्य च ॥ १७० ॥

विट् श्यावं कठिनं रूक्षञ्चाधोवायुर्न वर्त्तते।
तनु चारुणवर्णञ्च फेनिलञ्चासृगर्शसाम् ॥ १७१ ॥

हृद्रोगं पाण्डुतां पाण्डुरोगं शोथं वातवर्चसोर्विनिग्रहं विबन्धं कासं सर्वान् उग्रान् कृच्छ्रसाध्यान् श्लेष्मामयांश्च अपकर्षति। तथा दोषजं न तु वार्द्धक्यादिनिमित्तं वलीपलितखालित्यं व्यपोहति च ॥ १५८—१६८ ॥

पत्रभंगोदकैरिति। पत्रभंगः पत्रच्छेदः। तदुदकैः अर्शोघ्नपत्रक्वाथैः। तथा उष्णेन अम्भसा च। शौचं स्नानादिकं कुर्यात्। उपसंहरति—इतीति। इति एतत् सिद्धं सिद्धफलं शुष्काणामर्शसां चिकित्सितमुक्तं ॥ १६९ ॥

आर्द्राणां चिकित्सां वक्तुं प्रतिजानीते—चिकित्सितमिति। अतः परं स्राविणां आर्द्राणामर्शसां सिद्धं सिद्धफलं चिकित्सितं संप्रचक्ष्महे उपदिशामः॥

तत्रादौ तेषु रक्तपित्तोल्वणेषु वातश्लेष्मणोरनुबन्धं दर्शयति—तत्रानुबन्ध इति। तत्र तेषु आर्द्रार्शःसु रक्तपित्तोल्वणेषु श्लेष्मणः अनुबन्धः मारुतस्य च अनुबन्धः इति द्विविधः अनुबन्धः। सर्वेषां त्रिदोषजन्यत्वात्। रक्तपित्तोल्वणेष्वपि श्लेष्मवातयोर्जनकत्वं यद्यपि तथापि तयोर्यदिहानुबन्धत्वकथनं तत्पश्चादुल्वणतयैव ॥ १७० ॥

तत्रादौ वातस्यानुबन्धे लिंगं हेतुं चाह—विट् श्यावमित्यादि। विट्शब्द इह

कट्यूरुगुदशूलं च दौर्बल्यं यदि चाधिकम् ।
तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् ॥१७२ ॥
शिथिलं श्वेतपीतञ्च विट् स्निग्धं गुरु शीतलम् ।
यद्यर्शसां घनञ्चासृक् तन्तुमत् पाण्डु पिच्छिलम् ॥१७३॥
गुदं सपिच्छं स्तिमितं गुरु स्निग्धञ्च कारणम् ।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥ १७४ ॥
स्निग्धशीतं हितं वाते रूक्षशीतं कफानुगे ।
चिकित्सितमिदं तस्मात् सम्प्रधार्य प्रयोजयेत् ॥१७५॥

नपुंसके । विट् पुरीषं श्यावं कठिनं रूक्षं च । अधोवायुः । न वर्तते न प्रवर्तते । अर्शसां असृक् रक्तं तनु अघनं । अरुणवर्णं । फेनिलञ्च । कट्यूरुगुदशूलं दौर्बल्यञ्च यदि अधिकं स्यात् । तदा तत्र वातस्य अनुबन्धो ज्ञेयः । तत्र यदि रूक्षणं अन्नपानं हेतुः स्यात् ॥ १७१ । १७२ ॥

श्लेष्मणोऽनुबन्धे लिंगं कारणं चाह—शिथिलमित्यादि । यत्र विट् पुरीषं शिथिलं । श्वेतं । पीतं च । स्निग्धं । गुरु । शीतलं च । यदि अर्शसां असृक् घनं । तन्तुमत् । पाण्डु । पिच्छिलं च स्यात् । गुदं सपिच्छं । स्तिमितं च स्यात् । रक्तार्शसां सम्बन्धे तत्र श्लेष्मानुबन्धो बुधैर्विज्ञेयः । तत्र कारणं गुरु स्निग्धं च अन्नपानं ॥ १७३ । १७४ ॥

द्विविधमनुबन्धं हेतुलिंगाभ्यामुक्त्वा सम्प्रति तत्र चिकित्सामाह—स्निग्धशीतमिति । तत्र वाते अनुबन्धे स्निग्धशीतं हितं । वातो रूक्षः । रक्तमुष्णं । स्निग्धशीतयोस्तद्विपरीतत्वात् । कफानुगे कफानुबन्धे रूक्षशीतं हितं । श्लेष्मा स्निग्धः । रक्तमुष्णं । तद्विपर्ययात् रूक्षशीतयोः । तस्मात् इदं चिकित्सितं स्निग्धशीतं रूक्षशीतं च सम्प्रधार्य वातस्यानुबन्धः श्लेष्मणो वा इति प्रागुक्तैस्तत्तल्लक्षणैरवधार्य प्रयोजयेत् भिषक् ॥१७५॥

पित्तश्लेष्माधिकं मत्वा शोधनेनोपपादयेत् ।
स्रवणञ्चाप्युपेक्षेत लङ्घनैर्वा समाचरेत् ॥१७६॥
प्रवृत्तमादावर्शोभ्यो यो निगृह्णात्यबुद्धिमान् ।
शोणितं दोषमलिनं तद्रोगाञ्जनयेद्बहून् ॥१७७॥
रक्तपित्तं ज्वरं तृष्णामग्निसादमरोचकम् ।
कामलां श्वयथुं शूलं गुदवंक्षणसंश्रयम् ॥१७८॥
कण्ड्वरुःकोठपिड़काः कुष्ठं पाण्ड्वाह्वयं गदम् ।
वातमूत्रपुरीषाणां विबन्धं शिरसो रुजम् ॥१७९॥
स्तैमित्यं गुरुगात्रत्वं तथान्यान् रक्तजान् गदान् ।
तस्मात् स्रुते दुष्टाऽस्रे रक्तसंग्रहणं हितम् ॥१८०॥

पित्तश्लेष्माधिकमिति। अर्शसं पित्तश्लेष्माधिकं मत्वा। तं प्राक् शोधनेन उपपादयेत्। लंघनैर्वा समाचरेत् उपाचरेत्। दुष्टरक्तस्य स्रवणं च उपेक्षेत। न तु स्तम्भयेत् ॥ १७६ ॥

दुष्टरक्तस्तम्भने दोषमाह—प्रवृत्तमित्यादि। यो भिषक् आदौ प्रथमं अर्शोभ्यः प्रवृत्तं दोषमलिनं दुष्टं शोणितं निगृह्णाति स्तम्भयति स हि अबुद्धिमान्। कुतः? यतः तत् दुष्टशोणितं निगृहीतं चेत् बहून् रोगान् जनयेत्। कान् तान् रोगानित्याकांक्षायामाह—रक्तपित्तमित्यादि। रक्तपित्तं ज्वरं तृष्णां अग्निसादं अग्निदौर्बल्यं अरोचकं कामलां श्वयथुं गुदवंक्षणसंश्रयं शूलं कण्ड्वरुःकोठपिडकाः कुष्ठं पाण्ड्वाह्वयं गदं पाण्डुरोगं वातमूत्रपुरीषाणां विबन्धं शिरसः रुजं स्तैमित्यं गुरुगात्रत्वं च इत्युक्तान् तथा अनुक्तान् अन्यानपि रक्तजान् गदान् रोगान् जनयेत्। तस्मात् दुष्टरक्ते स्रुते सत्येव रक्तस्य संग्रहणं हितं। न तु आदौ ॥१७७—१८०॥

प्रिन्टर दुलीचंद परवार—जिनवाणी प्रेस ८० नं० लोअर चीतपुर रोडकलकत्ता।